# ॥ अथ श्रीमद्भागवतटिप्पणी चेट्टीत्याख्या प्रारभ्यते ॥

॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ सुखचित्प्रमुखैर्गुणैर्युतो वियुतश्चाखिलदोषसंघतः ॥ नृहरिर्हृदयांबुजेव सन्मम दद्यादखिलेष्टसंचयं ॥ १ ॥ आनंदतीर्थगुरुमादरतो भजामि स्वानंददं स्वचरणौ भजतां जनानां ॥ यद्वक्त्रनिर्गलितवागमृतप्रपूरैस्तापत्रयं शममुपैति विनाऽतियत्नात् ॥ २ ॥ जयतीर्थगुरून्वंदे सर्वाभीष्टप्रदान्मम ॥ विजयध्वजतीर्थादीन् गुरूनन्यांश्च भक्तितः ॥ ३ ॥ श्रीमध्वशास्त्रदुग्धाब्धिविक्रीडनविशारदान् ॥ नरसिंहाचार्यसंज्ञांश्च पितृव्याननिशं भजे ॥ ४ ॥ नत्वा श्रीमद्वेंकटाचार्यसंज्ञान्विद्यागुरूननिशं बुद्धिशुद्ध्यै ॥ कुर्वे चट्टीवेंकटाव्हयोऽहं सद्भ्यः पष्ठः स्कंधटीकां हिताय ॥ ५ ॥ स्वोपादिष्टस्य सर्वस्य तत्त्वस्य हृदि धारणात् ॥ मंदोपदेशसंदेहव्यावृत्त्या बादरायणिः ॥ ६ ॥ हर्षेण महताविष्टः स्वपृष्टं प्रतिवक्ष्यते ॥ इत्यभिप्रेत्य नृपतिः ज्ञापयन् प्रतिभां स्वकां ॥ ७ ॥ अनूद्य पूर्वस्कंधोक्तं वक्तुंप्रार्थयते पुनः ॥ पंचमांत्योक्तनिरयनिवर्तनपटीयसी ॥ ८ ॥ निवृत्तिमार्ग इत्यादि षड्भिः श्लोकैर्विनिष्कृतिं । भगवता सर्वज्ञत्वेन त्वया । आदौ द्वितीयस्कंधे । निवृत्तिमार्गो निवृत्तिधर्मलक्षणो मोक्षमार्गः ।यथा यथावत् । कथितः । गृहात्प्रव्रजतो धीर इत्यादिना तत्फलमाह ॥ यदिति । यत् येन निवृत्तिधर्मानुष्ठानेन । असंसृतिर्मोक्षो भविष्यति । निष्कामं ज्ञानपूर्वंतु निवृत्तमिति चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनमित्युक्तेः । एतच्च ब्रह्मसाक्षात्कारद्वारेणेत्याह ॥ क्रमेति । क्रमेणोपचितैर्योगैः भक्तिज्ञानादिलक्षणोपायैः । उपलब्धेन साक्षात्कृतेन । ब्रह्मणाऽनंतकल्याणगुणपूर्णेन हरिणा निमित्तेनेत्यर्थः । अत्र ब्रह्मोपलंभेनेति वक्तव्ये उपलब्धेन ब्रह्मणेत्युक्तिस्तु कर्तृत्वं करणत्वं च परब्रह्मण एव मुख्यमिति ज्ञापनार्थं । कर्तृकरणयोस्तृतीयेति सूत्रात् ॥ यद्वा ॥ निवृत्तिमार्गो निवृत्तिधर्मेण प्राप्यो मार्गोऽर्चिरादि मार्गः कथितः । वैश्वानरं यातीत्यादिना यद्येन मार्गेण गतानां क्रमयोगोपलब्धेन क्रमयोगोऽर्चिरादि प्राप्तिस्तेनोपलब्धेन प्राप्तेन ब्रह्मणा चतुर्मुखेन सहासंसृतिर्भगवत्प्राप्तिलक्षणो मोक्षो भविष्यतीत्यर्थः ॥ तदुक्तं ॥ ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ॥ परस्यांते कृतात्मानः प्रविशंति परं पदमिति ॥ १ ॥ प्रवृत्तिलक्षणः काम्यकर्मलक्षणो मार्गश्च कथितः । ब्रह्मवर्चसकामस्तु यजेत ब्रह्मस्पतिमित्यादिना । तत्फलमाह ॥ त्रैगुण्येति । त्रैगुण्यं स्वर्गादि सुखं तदेव विषयः । प्राप्यं यस्य स तथा । स्वर्गाद्यर्थं प्रवृत्तं स्यादित्युक्तेः । प्रवृत्तिलक्षण धर्मस्य नित्यसुखसाधननिवृत्तिमार्गाद्वैलक्षण्यमाह ॥ योऽसाविति । यः

प्रवृत्तिधर्मोऽसावलीनप्रकृतेः प्रवृत्तिधर्मस्य प्रक्रांतविलयापादनसामर्थ्याभावेनालीना प्रकृतिर्यस्य तस्य पुंसः पुनः पुनर्गुणसर्गो गुणानां भौतिकदेहानां सर्ग उत्पत्तिर्यस्मात्स तथा । शरीरपरंपरारंभको भवतीति यावत् । क्षीणे पुण्ये मर्त्यलोकं विशंतीत्यादेः । प्रवृत्तिधर्मस्य क्षयिष्णु फलकत्वेन निवृत्तिधर्माद्वैलक्षण्यमिति भावः ॥ यद्वा ॥ प्रवृत्तिलक्षणो मार्गः पितृयानाख्यः कथितस्तृतीये । दक्षिणेन पथ ।ऽ र्यम्णः पितृलोकं यजंति त इत्यादिनेत्यर्थः ॥ २ ॥ अधर्मेण लक्ष्यंते दृश्यंतेऽनुभूयंत इति ते तथोक्ताः । उपवर्णिताः । पंचमस्कंधे । आद्यश्चतुर्दशमन्वंतराणां मध्ये प्राथमिकः स्वायंभुवो मन्वंतरश्च व्याख्यातः । चतुर्थस्कंधस्यादौ । सवप्रमेयं सर्वेष्वपि स्कंधेषु यथा संभवं संक्षेपविस्तराभ्यां निरूपितमिति ज्ञापनायानुवादे स्कंधक्रमोल्लंघनं ॥ ३ ॥ यतो यस्मिन्स्वायंभुवमन्वंतरे जातः प्रियव्रतोत्तानपादौ वंशश्च व्याख्यातः । तयोश्चरितानि च व्याख्यातानि पंचम चतुर्थे च द्वीपादीन् ॥ ४ ॥ भगवतो विभागतो लक्षणतो मानतः परिमाणतश्च धरामंडलस्य संस्थानं च ज्योतिषां विवराणां चेदं संस्थानं च विभुर्यथाऽसृजत् । तदपि व्याख्यातमित्यर्थः ॥ ५ ॥ इह पापिषु नरोऽनुतापवान्पुरुषः । नाना उग्रयातना येषु तान्नरकान्यथा येन साधनेन नेयान्नगच्छेत् । तत्साधनमधुना व्याख्यातुमर्हसि ॥ ६ ॥ तत्र तावन्मन्वादि प्रायश्चित्तं विना नरका दुर्निवारा इत्याह ॥ न चेदिहेति द्वाभ्यां । मनउक्तिपाणिभिर्मनोवाक्कायैः कृतस्यांहसस्तैरेवेहापचितिं प्रायश्चित्तं यथा यथावत् । न कुर्याच्चेत्तर्हि सः पुरुषः प्रेत्य मृत्वा नरकान्ध्रुवमुपैति । ये मया भवतः कीर्तितास्तिग्मा दारुणा यातना येषुते ॥ ७ ॥ यस्मादेवं तस्मात्पापस्य निष्कृतौ प्रायश्चित्ते यतेत । कदा मृत्योर्मरणात्पुरैव । तत्रापि यथाऽऽत्मनः शरीरस्याविपत् रोगादिलक्षणा विपन्नास्ति । तत्राप्याशु । अन्यथाऽतीतकाले तु द्विगुणं व्रतमर्हतीति द्वैगुण्यापत्तेः । तत्र च पापस्य महत्वमल्पत्वं वाऽपेक्ष्य तदनुरूपप्रायश्चित्ते यतेत । रुजां रोगाणां निदानवित् । यथा वैद्यस्तनुरूपं चिकित्सेत्तद्वत् ॥ ८ ॥ प्रायश्चित्तस्य वैकल्यं द्वाभ्यां शंकते नृपः ॥ दृष्टेति । यत् दृष्टं राजदंडादि श्रुतं नरकादि ताभ्यामात्मनः पापमहितं जानन्नपि प्रायश्चित्तानंतरं पुनः पुनः करोति । जानता तत्करणे हेतुः ॥ विवश इति । भगवत्परतंत्रः स कारयेत्पुण्यपापमिति श्रुतेः । रागादि परतंत्रो वा । अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ श्रीभगवानुवाच ॥ काम एष क्रोध एष इत्युक्तं । अतोऽतः कारणात् । मन्वादि विहितद्वादशाब्दादि कथं प्रायश्चित्तं

घटत इत्यर्थः । यद्यनुष्ठितं प्रायश्चित्तं समूलदुरितनिवारकं तर्हि तत्सकलं नरकानिवारकत्वात् । न चैतदस्ति । तथात्वे सवासनदुरितोच्छेदेन कारणाभावेनोत्तरत्र दुरितानुत्पादप्रसंगात् । न चेष्टापत्तिः । लोकप्रायश्चित्तानंतरमपि शतशः क्रियमाणदुरितदर्शनात् । अतः पापस्य दुर्निवारत्वेन नरकपातस्यावश्यं भावित्वान्निरधिकारिकत्वेन धर्मशास्त्रे क्रियमाणं प्रायश्चित्तविमर्शनं व्यर्थमिति भावः ।।९।। उक्तमेव सदृष्टांतं विवृणोति ।। क्वचिदिति । क्वचित् कदाचित् । अभद्रात्पापान्निवर्तते । क्वचित्क्वचित्तदेव पुनराचरति । यथा कुंजरः स्नातोऽपि रजोभिरात्मानं मलिनीकरोति । तथा अथो तस्मात्प्रायश्चित्तमपार्थकं मन्य इत्यर्थः ।। १० ।। प्रायश्चित्ताधिकारी द्विविधः । विद्वानविद्वांश्च । तत्राविद्वत्कर्तृकप्रायश्चित्तस्यात्यंतिकदुरितनिवारकत्वाभावेऽपि विद्वत्कर्तृकस्य तदस्तीति प्रायश्चित्तविमर्शनं सफलमित्यभिप्रेत्य परिहरति ।। कर्मणेति । कर्मणा द्वादशाब्दादि प्रायश्चित्तेन कर्मणा पापस्य निर्हारो नाश आत्यंतिकः समूलो नेष्यते । कुतः । अविद्वदधिकारित्वात् । हि शब्दोऽवधारणार्थः । सन्नेनन संबध्यते । हि हेतावववधारण इत्युक्तेः । अविद्वानधिकारी यस्मिंस्तस्य भावस्तत्त्वं तस्मात् । अज्ञेन क्रियमाणत्वादेवेति यावत् । ज्ञानिना तु क्रियमाणेन तेनैव प्रायश्चित्तेनात्यंतिकनिर्हारो भवत्येव । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुतेरित्यवधारणार्थः । अतोऽधिकारिसंभवात्प्रायश्चित्तस्य विमर्शनविधानमुपपन्नमित्यर्थः ।। ११ ।। नन्वेवं चेदज्ञेन कृतप्रायश्चित्तस्य किं सर्वथा वैयर्थ्यं । नेत्याह ।। नाश्नत इति । पथ्यमेवान्नमश्नतः पुरुषान्व्याधयो न बाधंते । एवं नियमकृन्नियतप्रायश्चित्तकृत् । निषिद्धत्यागेन विहितकृच्च पुरुषोऽविद्वानपि शनैर्विलंबेन क्षेमाय श्रेयसे कल्पते । समर्थो भवतीत्यर्थः । अज्ञानिनोऽपि प्रत्यहं अनुष्ठितेन पंचयज्ञादि कर्मणा दुरितानुरूपप्रायश्चित्ताचरणेन शनैः पापोपमर्दो भवति । अहन्यहन्यनुष्ठानं यज्ञानां मुनिसत्तम । उपकारकरं पुंसां क्रियमाणाघशांतिदमिति विष्णुपुराणोक्तेरिति ।। १२ ।। ज्ञानिनां मन्वादि विहितप्रायश्चित्तानुष्ठानेनात्यंतिकपापनिर्हारो भवतीत्युक्तं । वस्तुतस्तु तेषां स्वभावसिद्धेनैव तपोब्रह्मचर्यादिना सर्वदुरितनिर्हारसिद्धेर्न तत्प्रायश्चित्तापेक्षावश्यकीत्याह ।। तपसेति त्रिभिः । केचित्धीरा ज्ञानिनः । श्रद्धयाऽस्माकं मन्वादि विहितप्रायश्चित्तान्वेषणं किमर्थं स्वभावसिद्धशमादिकेनैव सकलदुरितोन्मूलनसंभवादित्यास्तिक्यबुद्धिः श्रद्धा तयाऽन्विता युक्ताः संतः । तपसा सच्छास्त्रालोचनेन । तप आलोचनं प्रोक्तमिति वचनात् । ब्रह्मचर्येणाष्टांगेन ।।

तदुक्तं ॥ स्मरणं कीर्तनं केलिप्रेक्षणं गुह्यभाषणं । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टांगं प्रवदंति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणमित्युक्तेः । शमेन शत्रुमित्रादि बुद्धिवर्जेन । शमः प्रियादि वैधुर्येत्युक्तेः । दमेन इंद्रियनिग्रहेण । दम इंद्रियनिग्रह इत्युक्तेः । त्यागेनाहंममतात्यागेन । मिथ्याभिमानविरतिस्त्याग इत्यभिधीयत इत्युक्तेः । काम्यकर्मत्यागेन वा । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षण इत्युक्तेः । सत्यं सतां हितवचनं । यत्सतां हितमत्यंतं तत्सत्यमिति कथ्यत इत्युक्तेः । अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिंदितैः । स्वधर्मे च व्यवस्थाने शौचमेतदुदाहृतमित्युक्तलक्षणं शौचं । ताभ्यां । अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ । यमाः शौचं ततस्तुष्टिः स्वाध्यायो हरिपूजनं । नियमा इत्युक्तलक्षणेन यमेन नियमेन च ॥ १३ ॥ देहवाग्बुद्धिजं महदप्यघं । अनलो वेणुगुल्ममिव क्षपयंतीत्यर्थः ॥ १४ ॥ केचिच्च ज्ञानिनो वासुदेवपरायणाः । वासुदेव एव परमयनं आश्रय इति ज्ञानं येषां ते तथा । तदेकशरणा इति यावत् । केवलया सहायांतरानपेक्षया । भक्त्या ज्ञानपूर्वकभगवत्स्नेहेन । ज्ञानपूर्वः परस्नेहो नित्यो भक्तिरितीर्यत इत्युक्तेः । अघं विधुन्वंति परिहरंतीत्यर्थः । ज्ञानिनो द्विविधाः । यमादि योगप्रचुरा भक्तिप्रचुराश्चेति । उभयेषामपि मन्वादि प्रायश्चित्तानपेक्षया स्वभावसिद्धाभ्यामेव भोगभक्तिभ्यां सर्वपापनिवृत्तिर्भवति । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते क्षणात् । न हि ज्ञानेन सदृशं पवित्रमिह विद्यत इति भगवद्वचनादिति भावः ॥ १५ ॥ तथाऽपि शमादि योगापेक्षया भक्तिरेव गरीयसीत्याह ॥ न तथेति । कृष्णेऽर्पिताः प्राणाः श्रोत्रादींद्रियाणि येन स तथोक्तः दृढभक्तिमानिति यावत् । यथा पूयते । तथा तप आदिभिर्न पूयेत न शुध्येत । अत एव पूर्वश्लोके कार्त्स्न्येनेत्युक्तं । कृष्णे भक्तिः केन स्यादत्राह ॥ तदिति । तत्पुरुषाणां तद्भक्तानां महतां सेवया कृष्णार्पितप्राण इत्यन्वयः ॥ १६ ॥ भक्तिवदन्यन्न शोधकमित्यत्र हेतुमाह ॥ सध्रीचीन इति । लोके आलोके आलोचने क्रियमाणे ॥ यद्वा ॥ लोके प्रायश्चित्तादिलक्षणसाधनसमूहोऽयं पंथा भक्तिमार्गः सध्रीचीनो हि यस्मादिति पूर्वश्लोकेनान्वयः । सध्रीचीनत्वे हेतुत्रयं । क्षेमो मोक्षहेतुः । न कुतश्चिद्विघ्नादेर्भयं यस्य स तथा । यत्र यस्मिन्भक्तिमार्गे साधवः प्रवर्तंते । तत्परिगृहीत इति यावत् । ॥ १७ ॥ तप आदीनामपि भक्त्योपचितबलादीनामेव पापनिर्हरणहेतुत्वं न केवलानामित्यतोऽपि भक्तेरेव प्राधान्यमित्याह ॥ प्रायश्चित्तानीति । महतामप्यशोधकत्वे दृष्टांतः ॥ सुराकुंभं नद्य इवेति ॥ १८ ॥

पापानिर्हरणं तप आदाविव चिरसाध्यं न भवति किंतु क्षिप्रसाध्यमित्यतोऽपि भक्तेः प्राधान्यमित्याह ॥ सकृदिति । तस्य कृष्णस्य गुणेषु राग्यनुरागिमन इह चेतनानां वर्गे चीर्णा निष्कृताः कृतपापानुतापपूर्वकं श्रीकृष्णांघ्रिपद्मे सकृन्मनोनिवेशेनैव कृतप्रायश्चित्ताः ॥ १९ ॥ इममर्थमितिहासेनोपपादयति ॥ अत्रेति । इतिहासं कथां मे मत्तः ॥ २० ॥ कन्याकुब्जपुरे दास्याः पतिनाम्नाऽजामिलः ॥ २१ ॥ बंदिग्रहणैरक्षैश्च द्यूतेन । कैतवैरनृतवादैश्च । कितवोऽनृतवादी स्यात्कैतवं तस्य भाषणमित्युक्तेः । वृत्तिं जीविकां । बिभ्रन्पुष्णन् । देहिनं स्वात्मानं यातयामास नरकगमनाभिमुखमकरोत् ॥ २२ ॥ आयुषः संबंधी महान्कालोऽत्यगात् । कियानित्यपेक्षयामाह ॥ अष्टाशीत्येति । अष्टाशीत्या संख्यया युक्ताः समाः संवत्सराः ॥ २३ ॥ प्रवयसो वृद्धस्यावमः कनिष्ठः ॥ २४ ॥ जरठो वृद्धः ॥ २५ ॥ अंतकं मृत्युं ॥ २६ ॥ २७ ॥ वक्राणि तुंडानि मुखानि येषां ते । ऊर्ध्वानि रोमाणि येषां तान् ॥ २८ ॥ प्लावितेन प्लुतत्वान्वितेन । आकुलेंद्रियो दुर्बलेंद्रियः । पुत्रसंकेतितनारायण नामाख्यसंबंध्यनुसंधानेनुद्बुद्धप्राचीनसंस्कारोऽजामिलस्तन्मुख्यवाच्यं भगवंतं स्मृत्वा भक्तिपारवश्येनाकुलितेंद्रियः सन् दूरे ब्रह्मांडाद्बहिरपि वर्तमानं प्लुतेनाव्हानोपपत्त्यर्थमेतत् जगत्सर्जनादि क्रीडासक्तं । बालक्रीडनकैर्यद्वत्क्रीडतेऽस्माभिरच्युत इत्युक्तेः । पुन्नाम नरकात्त्रातारं । त्राता पुत्रस्त्वमेव म इत्युक्तेः । नारायणाव्हयं मूर्तिविशेषं । यत्तस्य व्यापकं रूपं परं नारायणाभिदमित्युक्तेः । आजुहावेत्यर्थोऽपि बोध्यः । न मत्स्वामितया तस्य स्मरणं जायते यतः । अजामिलोऽपि स्मरणाद्भक्त्या मृत्योर्विमुच्यत इत्युक्तेः ॥ २९ ॥ हरिकीर्तनं निशम्यापतन् । यतस्तद्भर्तृनाम ॥ ३० ॥ ओजसा बलेन । ओजोऽवष्टंभबलयोरित्युक्तेः ॥ ३१ ॥ पुरः सरा भृत्याः ॥ ३२ ॥ निषेधत । अस्यानयनेति शेषः । उपदेवा गंधर्वादयः ॥ ३३ ॥ देवाद्युत्तमजातिविषयकसंशयः कुत इत्यतोऽलौकिकरूपदर्शनादित्याहुः ॥ सर्व इति सार्धश्लोकाभ्यां । लसंत्यः पुष्करमाला येषां ते तान् ॥ ३४ ॥ नूनं नवं वयं वयो येषां तान् । निषंग इषुः । धनुनिषंगादिभिः श्रीः शोभा येषां तान् ॥ ३५ ॥ विगतं तिमिरमालोकश्चान्यस्य प्रकाशो याभ्यस्तथा भूता दिशः कुर्वंतः । भवतामेतदनुचितमित्याह ॥ किमर्थमिति ॥ ३६ ॥ अहो दंड्यादिज्ञानशून्या एते चोरा एवास्मद्धिया धर्मराजस्य किंकरा इत्यनृतं वदंतीति विस्मयेन प्रहस्य तान्प्रत्यूचुरित्याह ॥ इत्युक्त इति त्रिभिः ॥ ३७ ॥ धर्मस्याधर्मस्य च तत्त्वं स्वरूपं लक्षणं प्रमाणं ॥ ३८ ॥

कथं स्वित् केन प्रकारेणास्य दंडस्य स्थानं विषयः । ईप्सितमिष्टं । भवतामिति शेषः । नृणां चेतनानां मध्ये किं कतिचिदेव कारिणः क्रूरस्वभावाश्चेतना दंड्याः । आहो स्वित् सर्वेऽपीत्यर्थः ॥ ३९ ॥ ब्रूत धर्मस्य नस्त्वं यच्चाधर्मस्य लक्षणमित्यत्रोत्तरमाहुः ॥ वेदेति । यो वेदेन प्रणिहितः कर्तव्यतया बोधितः । स धर्म इत्यनेन धर्मस्वरूपं निरूपितं । यो धर्मः स वेदप्रणिहित इति व्यत्यासेन योजनायां धर्मप्रमाणं च निरूपितं । यो तद्विपर्ययो वेदेन निषिद्धः सोऽधर्मः । अनेनाधर्मस्वरूपं निरूपितव्यत्यासेन योजनायां धर्मप्रमाणं च निरूपितमित्यर्थः । ननु ऋचः सामानि जज्ञिर इत्यादि श्रुतेर्वेदानां पौरुषेयत्वेन पुरुषनिबंधनदोषशंकायाः संदिग्धप्रामाण्यकानां कथं धर्माधर्मयोः प्रामाण्यमित्यत आह ॥ वेदः स्वयंभूरिति । स्वयमेव कारणमपेक्ष्यैव भवति वर्तत इति स्वयंभूरित्यर्थः । श्रुतिस्त्वभिव्यक्तिविषया । वाचा विरूपनित्ययेत्यादि श्रुतिविरोधादिति भावः । ननूत्पत्तिश्रुतिविरोधान्नित्यत्व श्रुतेरेव ध्रुवात् द्यौरित्यादाविव बहुकालावस्थायित्वमादायोपचारितार्थत्वं किं न स्यादित्यत आह ॥ साक्षादिति । अनुपचारत इत्यर्थः । वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षयेत्यादेरिति भावः । ननु वेदस्यापौरुषेयत्वे पुरुषाभिप्रायप्रवेशमंतरेण वाक्यस्य स्वातंत्र्येण तात्पर्यायोगात् । कथं धर्मादौ प्रमाणत्वमित्यत आह ॥ वेदो नारायण इति । तद्वक्तृक इत्यर्थः । मुनीनां प्रतिभास्यंते भागेनैव न सर्वश इत्यादेस्तपः शक्तिदृष्टैकदेशवक्तृमुनिव्यावृत्त्यर्थं साक्षादिति । मुख्यतः कार्त्स्न्येनेति यावत् । नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः । सर्गे सर्गेऽमुनैवैत उद्गीर्यंते तथैव चेत्यादेः । अनागंतुकं वेदे आगंतुकपुरुषाभिप्रायप्रवेशानुपपत्तेरादाह ॥ नारायणः स्वयंभूरिति ॥ ४० ॥ वेदो नारायण इत्युक्तं । तत्र कोऽसौ नारायण इत्यत आह ॥ येनेति । येन स्वधाम्नि स्वाधारतया रजः सत्त्वतमोमयाः । तदुपादानका अमी प्रत्यक्षादि प्रमाणप्रमिताः । भावाश्चेतनाचेतनाश्च । गुणनामक्रियारूपैः गुणाः शब्दादयः शुक्लपीतादयश्च नामानि ब्राह्मणादीनि घटादीनि च क्रिया अध्ययनादय उत्क्षेपणादयश्च रूपाणि संस्थानविशेषः । तैः । तदनुविद्धतयेति यावत् । विभाव्यंते उत्पाद्यंते । अवस्थाप्यंते संह्रियंते च । सृष्टिस्थितिश्च संहारो भावनं समुदाहृतमित्युक्तेः । स नारायण इत्यर्थः ॥ ४१ ॥ किंवाऽस्य स्थानमीप्सितमिति प्रश्नस्याधार्मिणो दंडस्थानमित्युत्तरं वक्ष्यन् जीवानामनंतत्वेन तत्कृतधर्माधर्मयोर्ज्ञातुमशक्यत्वेन एते

यापिन इति । विविच्य ज्ञानासंभवान्न दंडस्थानत्वमिति शंकापरिहाराय धर्माधर्मसाक्षिणस्तावदाह ॥ सूर्योऽग्निरिति । खमाकाशं गावः स्वर्गभूमिजलानि । स्वर्गेषु पशुवाग्वज्रादिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौर्लिंगं चिन्ह शेफसोरित्यभिधानात् । संध्याद्वयं अहनी अहश्च रात्रिश्च । कालः कालशब्दोदितो देववर्गः । हरिश्च प्रकृतिश्चैव ब्रह्मा वायुस्तथैव च । सुपर्णशेषरुद्राश्च शक्रः सूर्ययमावपि । अग्निर्यमानुजश्चैव काल शब्दोदिताः क्रमात् । इति वचनात् । स्वयं कर्ता जीवः । स्वयं दंडधारी धर्मश्चेति वा । अत्र धर्मस्येत्यपि पदच्छेदः । जडवाचकशब्दैस्तदभिमानिनो ग्राह्याः । एते देवा धर्माधर्मयोः साक्षिण इत्यर्थः ॥ तदुक्तं ॥ आदित्यचंद्रावनिलो नलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तमिति ॥ ४२ ॥ इदानीं दंडस्य स्थानमाह ॥ एतैरिति । यस्मादेतैः साक्षिभिर्न धर्मो यस्य सोऽधर्मो पुरुषो विज्ञातो विज्ञापितस्तस्मात्स दंडस्य स्थानमित्येतद्युज्यत इत्यर्थः । दंड्याः किं कारिणः सर्वे आहो स्वित्कतिचिन्नृणामित्यस्योत्तरमाहुः ॥ सर्व इति । कारिणो जीवाः सर्वेऽपि क्रमानुरोधेन । रौरवोऽथ महांश्चैव वन्हिर्वैतरणी तथा । कुंभीपाक इति प्रोक्तान्यनित्यनरकाणि तु । एतानि क्रमशो गत्वैवारोहाथावरोहणमिति भारतोक्तक्रमानुसारेण दंडमर्हतीत्यर्थः ॥ ४३ ॥ ननु केषांचित्पुण्यकर्तॄणामपि सद्भावात्कथं सर्वेऽपि दंड्या इत्युच्यत इत्यत आह ॥ संभवंतीति । हि यस्मात्सर्वेषामपि कारिणामभद्राणि न तद्विपरीतानि भद्राणि च संभवंति तस्मादिति पूर्वेणान्वयः । संभवेऽपि किं कारणमत्राह ॥ गुणसंग इति । त्रिगुणसंबंध एव कारणमिति भावः । गुणसंगनिमित्तकं कर्मकारणमित्यत्र प्रमाणमाह ॥ देहवानिति । गुणसंबंधदेहवान् । अकर्मकृन्नास्तीत्येतद्धि प्रमाणप्रसिद्धमित्यर्थः ॥ तदुक्तं ॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वप्रकृतिजैर्गुणैरिति ॥ ४४ ॥ कथं स्विद्ध्रियते दंड इत्यस्योत्तरमाहुः ॥ येनेति । समीहितः कृतः । अमुत्र परलोके धर्मो वेति दृष्टांतः । धर्मानुसारेण सुखवान् । अधर्मानुसारेण दंड इत्यर्थः ॥ ४५ ॥ न केवलं सूर्यादीनामेव धर्मादि विषयकं ज्ञानं । किंतु लौकिकानामप्यानुमानिकं तदस्तीति सिंहावलोकन्यायेनाहुः ॥ यथेहेति । हे देवप्रवरा यथेह जन्मानि भृतेषु प्राणिषु सत्त्वादि गुणानां वैचित्र्यात्सात्विकादि कर्मत्रैविध्यं दृश्यते । तथाऽन्यत्र जन्मांतरेऽपीत्यनुमीयते । शरीरत्वावाच्छिन्नशरीरस्य गुणजन्यत्वनियमात् । गुणसंगस्य कर्मकारणत्वादित्यर्थः ॥ ४६ ॥

कथं स्वित् केन प्रकारेणास्य दंडस्य स्थानं विषयः । ईप्सितमिष्टं । भवतामिति शेषः । नृणां चेतनानां मध्ये किं कातिचिदेव कारिणः क्रूरस्वभावाश्चेतना दंड्याः । आहो स्वित् सर्वेऽपीत्यर्थः ॥ ३९ ॥ ब्रूत धर्मस्य नस्त्वं यच्चाधर्मस्य लक्षणमित्यत्रोत्तरमाहुः ॥ वेदेति । यो वेदेन प्रणिहितः कर्तव्यतया बोधितः । स धर्म इत्यनेन धर्मस्वरूपं निरूपितं । यो धर्मः स वेदप्रणिहित इति व्यत्यासेन योजनायां धर्मप्रमाणं च निरूपितं । यो तद्विपर्ययो वेदेन निषिद्धः सोऽधर्मः । अनेनाधर्मस्वरूपं निरूपितव्यत्यासेन योजनायां धर्मप्रमाणं च निरूपितमित्यर्थः । ननु ऋचः सामानि जज्ञिर इत्यादि श्रुतेर्वेदानां पौरुषेयत्वेन पुरुषनिबंधनदोषशंकायाः संदिग्धप्रामाण्यकानां कथं धर्माधर्मयोः प्रामाण्यमित्यत आह ॥ वेदः स्वयंभूरिति । स्वयमेव कारणमपेक्ष्यैव भवति वर्तत इति स्वयंभूरित्यर्थः । श्रुतिस्त्वभिव्यक्तिविषया । वाचा विरूपानित्ययेत्यादि श्रुतिविरोधादिति भावः । ननूत्पत्तिश्रुतिविरोधान्नित्यत्व श्रुतेरेव ध्रुवात् द्यौरित्यादाविव बहुकालावस्थायित्वमादायोपचारितार्थत्वं किं न स्यादित्यत आह ॥ साक्षादिति । अनुपचारत इत्यर्थः । वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षयेत्यादेरिति भावः । ननु वेदस्यापौरुषेयत्वे पुरुषाभिप्रायप्रवेशमंतरेण वाक्यस्य स्वातंत्र्येण तात्पर्यायोगात् । कथं धर्मादौ प्रमाणत्वमित्यत आह ॥ वेदो नारायण इति । तद्वक्तृक इत्यर्थः । मुनीनां प्रतिभास्यंते भागेनैव न सर्वश इत्यादेस्तपः शक्तिदृष्टैकदेशवक्तृमुनिव्यावृत्त्यर्थं साक्षादिति । मुख्यतः कार्त्स्न्येनेति यावत् । नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः । सर्गे सर्गेऽमुनैवैत उद्गीर्यंते तथैव चेत्यादेः । अनागंतुकं वेदे आगंतुकपुरुषाभिप्रायप्रवेशानुपयोगादाह ॥ नारायणः स्वयंभूरिति ॥ ४० ॥ वेदो नारायण इत्युक्तं । तत्र कोऽसौ नारायण इत्यत आह ॥ येनेति । येन स्वधाम्नि स्वाधारतया रजः सत्त्वतमोमयाः । तदुपादानका अमी प्रत्यक्षादि प्रमाणप्रमिताः । भावाश्चेतनाचेतनाश्च । गुणनामक्रियारूपैः गुणाः शब्दादयः शुक्लपीतादयश्च नामानि ब्राह्मणादीनि घटादीनि च क्रिया अध्ययनादय उत्क्षेपणादयश्च रूपाणि संस्थानविशेषः । तैः । तदनुविद्धतयेति यावत् । विभाव्यंते उत्पाद्यंते । अवस्थाप्यंते संह्रियंते च । सृष्टिस्थितिश्च संहारो भावनं समुदाहृतमित्युक्तेः । स नारायण इत्यर्थः ॥ ४१ ॥ किंवाऽस्य स्थानमीप्सितामिति प्रश्नस्याधर्मिणो दंडस्थानमित्युत्तरं वक्ष्यन् जीवानामनंतत्वेन तत्कृतधर्माधर्मयोर्ज्ञातुमशक्यत्वेन एते

त्यर्थः ॥ ५२ ॥ कर्माणि कार्यत इत्यत्रानुभवं प्रमाणयंति ॥ न हीति । गुणैर्गुणकार्यैरागादिभिः स्वाभाविकैः पूर्वजन्मसंस्कारोद्भूतैरित्यर्थः ॥ ५३ ॥ कर्मवशेन च तदनुरूपो देहो भवतीत्याहुः ॥ लब्ध्वेति । अव्यक्तं निमित्तमदृष्टाख्यनिमित्तकारणं । लब्ध्वा व्यक्ताव्यक्तं तदनुरूपं स्थूलं सूक्ष्मं च शरीरं भवति । यथा योनिः मातृसदृशं यथा बीजं पितृसदृशं च । स्वभावो वासना शुक्रशोणितयोरेकरूपत्वेऽपि कर्मवासनया मातापितृदेहसदृशो भवति । शरीराकृतिभेदास्तु भूपते कर्मयोनय इति विष्णुपुराणोक्तेरिति भावः ॥५४॥ संसारक्रममुपसंहरन्मुक्तिप्रकारमाह ॥ एष इति । विपर्ययः संसार ईशसंगात्परमेश्वरभजनात् ॥ ५५ ॥ तदेव सामान्यतो धर्मविनिर्णयमुक्त्वा प्रस्तुतस्याजामिलस्याधर्मं प्रपंचयंतो दंड्यत्वमाहुः ॥ अयं हीति । यावदध्यायसमाप्तिः । तत्र द्वाभ्यां तत्पूर्ववृत्तानुवादोऽन्यायातिरेकप्रदर्शनार्थः । शीलं सुस्वभावः । वृत्तसदाचारो गुणादयः क्षमादयः । तेषामाश्रयः । दांतो निगृहीतेंद्रियो मंत्रविद्वेदज्ञः ॥ ५६ ॥ ५७ ॥ ततो वनात् । आवृत्तः परावृत्तः ॥ ५८ ॥ भुजिष्यया भोगस्त्रिया । दास्या । मैरेयं मधुपैष्टिं पीत्वा मदेन घूर्णिते भ्रांते नेत्रे यस्याः ॥ ५९ ॥ विशेषेण श्लथंती नीवी यस्या विवस्त्रया सह ॥ ६० ॥ कामलिप्तेन कामवशीकृतेन शूद्रेण कामोद्दीपितेन । तदंगरागेण हरिद्रादिना लिप्तेन बाहुनेति वा । हृच्छयः कामः ॥ ६१ ॥ सत्त्वं धैर्यं श्रुतं ज्ञानं । तद्बलेन स्तंभयन्नपि मदनकंपितं मनः । समाधातुं न शक्तोऽभूत् ॥ ६२ ॥ तद्दर्शनमेव निमित्तं । यस्य स्मरव्याजस्य ग्रहस्य । तेन ग्रस्तः । अत एव विचेतनो नष्टशास्त्रजन्यज्ञानः ॥ ६३ ॥ यावता समग्रेण ग्राम्यैः कामभोगसाधनैः । काम्यंत इति कामा विषयास्तैः ॥ ६४ ॥ अप्रौढां बालां । लंभितां परिणीतां ॥ ६५ ॥ कुटुंबिन्या दास्याः । कुटुंबं बंधुपुत्रादिकं ॥ ६६ ॥ स्वैरचारी निरंकुशत्वेन वर्तमानः । अघायुरघनिमित्तमायुर्यस्य स तथा । मलमेतदीयमन्नादिकमत्तीति मलात् । स्नानदानादिरहित एवान्नमत्तीति वा । अस्नात्वाशीमलं भुंक्त इत्युक्तेः ॥ ६७ ॥ अकृतनिर्वेशमकृतप्रायश्चित्तमस्यैव हितार्थं नेष्याम इत्याहुः ॥ यत्रेति । यत्र नीतो यमभटकृतताडनेन शुद्धो भवतीत्यर्थः ॥ ६८ ॥ इति श्रीभागवतटिप्पण्यां चट्टीत्याख्यायां प्रथमोऽध्यायः ॥६--१॥

॥ हरिः ॐ ॥ भक्तिपूर्वं भगवतो नामसंकीर्तनं सतां । सर्वपापहृदित्येतदध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ उपधार्य श्रुत्वा । नयकोविदा न्यायनिपुणाः ॥ १ ॥ धर्मद्रष्टा सभामधर्मः स्पृशति । तदेवि विवृणोति ॥ यत्रेति । यैरिति शेषः । यत्र सभायां

यैर्धर्मदम्भिः । तेषां सतां सभायां ॥ २ ॥ पितरः पितृवत्पालकाः । शास्तारोऽनुशिक्षका वैषम्यमदंड्यदंडनं ॥ ३ ॥ एतत्प्रवर्तितमधर्ममन्योऽपि करिष्यतीति महत्कष्टमभूदित्याहुः ॥ यद्यदिति । श्रेयान् श्रेष्ठः ॥ यद्वा ॥ किं प्रमाणं कुरुते प्रमाणत्वेन ज्ञापयति ॥ ४ ॥ विश्वासघातादपि महत्कष्टमभूदित्याहुः ॥ यस्येति द्वाभ्यां । लोकः परोपदेशमंतरेण स्वयं पशुर्यथा तथा धर्ममधर्मं वा न वेद हियस्मात्तस्मादेव । यस्यांके शिर आधारनिवृत्तो निश्चितः सन्स्वपिति । सर्वभारं तत्र निदधातीति यावत् ॥ ५ ॥ सः सघृणो दयालुरत एव भूतानां प्राणिनां विश्रंभणीयः । अचेतनं ज्ञानशून्यं । अत एव कृतमैत्रं विश्वासो येन स तथा । तं । अत एवार्पित आत्मा मनो येन स तथा तं । कथं दोग्धुमर्हतीत्यन्वयः ॥ ६ ॥ नन्वस्य पापिनो दंडे किमर्थमाक्रोशः क्रियते तत्राहुः ॥ अयं हीति । अयमजामिलो यद्यस्माद्विवशो भक्तिपरवशः सन्नभक्तोदाहृतं नैव फलदातृ भविष्यतीत्युक्तेः । श्रीहरेर्नाम व्याजहारोच्चारितवान् तस्मादित्यन्वयः । निर्वेशो निष्कृतिः । न केवलं प्रायश्चित्तमात्रं श्रीहरेर्नाम । अपि तु स्वस्त्ययनं मोक्षसाधनमप्यापन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ततः सद्यो विमुच्येत । यं बिभेति स्वयंभुव इत्युक्तेः ॥ ७ ॥ ननु कर्मषाड्गुण्यकरं श्रीहरेर्नामेति युक्तं । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमुच्यतमिति स्कांदोक्तेः । स्वातंत्र्येण त्वघनिवर्तकं कथं स्यादित्यत्राहुः ॥ एतेनैवेति । यत् आ इति पदच्छेदः । एषोऽजामिलो नारायणेति चतुरक्षरं यन्नाम जगाद एतेनैव प्रधानेन भगवन्नामोच्चारणेनैव न तु कस्याचिदंगेन । सामीप्ये च प्रधाने च एव शब्दोऽवधारणे इति वचनात् । अघनिष्कृतं हि यस्मात्तस्मादस्याजामिलस्याघः पापं नास्त्येवेत्यन्वयः । सकारांत नपुंसकोयमघशब्दः । कंसशत्रुरघःशत्रुरिति प्रयोगात् ॥ यद्वा ॥ अघमस्यास्तीत्यघः पापी एषोऽजामिलाख्यो ना पुरुषो यन्नाम जगाद । एतेनैवास्याघनिष्कृतं कृतमभूदित्यर्थः । मर्ताऽमर्त्यस्य ते भूरिति नाममनामहे विप्रासो जातवेदसः । अस्य जानंतो नाम चिद्विव वक्तना । अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान्विमुच्यते सद्यः सिंहग्रस्तैर्मृगैरिवेत्यादि श्रुतिस्मृतीनां भगवन्माहात्म्यपराणां स्मरणार्थमकारः । अप्रगृह्य स्मृतौ वाक्ये इत्यमरोक्तेः ॥ ८ ॥ ननु कामकृतानां बहूनां महापातकानां सहस्रश आवार्तितानां द्वादशाब्दादिकोटिप्रायश्चित्तैरप्यनिवर्त्यानां कथमिदमेकमेव प्रायश्चित्तं स्यादित्यत्राहुः ॥ स्तेन इति द्वाभ्यां । स्तेनश्चोरः परद्रव्यापहरणं

चौर्याद्वाऽथ बलेन वा। स्तेयस्तस्यानाचरणः स स्तेयमधर्मसाधनमित्युक्तेः। सुनिष्कृतं श्रेष्ठप्रायश्चित्तमिदमेव। अत्र हेतुर्नामव्याहरणान्मतिस्तद्विषया विष्णुविषया भवतीत्यर्थः॥ यद्वा॥ यतो नामव्याहरणात्। तद्विषया नामोच्चारकपुरुषविषया। मदीयोऽयं मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवतीत्यर्थः॥९–१०॥ भगवन्नामोच्चारणस्य प्रायश्चित्तश्रेष्ठत्वमुपपादयंति॥ नेति द्वाभ्यां। उदाहृतैरुच्चारितैर्हरेर्नामपदैर्यथा विशुद्ध्यति तथा ब्रह्मवादिभिर्वेदवादिभिर्मन्वादिभिरुदितैर्व्रतादिभिर्निष्कृतैः। अघवान्न शुद्ध्यतीत्यन्वयः। वाक्यत्वसंपादकनमामीत्यादि क्रियासंबंधमनपेक्ष्यापि सर्वपापनिवर्तकत्वेनाहो भगवन्नाममाहात्म्यमित्यभिप्रेत्य नामभिरिति वक्तव्ये नामपदैरित्युक्तं। इतोऽपि नामोच्चारणं श्रेष्ठमित्याहुः॥ तदिति। तत् नामोच्चारणं। उत्तमश्लोकः कीर्तिर्यस्य हरेर्गुणानां ज्ञानानंदादीनां। उपलंभकं स्मारकं भवति। न कृच्छ्रचांद्रायणादिवत् पापनिवृत्तिमात्रोपक्षीणमित्यर्थः॥ ११॥ यस्मिन्निष्कृते कृतेऽपि असत्पथे शास्त्रविरुद्धमार्गे मनो धावति चेत् निष्कृतं नैवांतकं नात्यंतशोधकं। तत्तस्मात्कर्मनिर्हारं कर्मणां पापानां निर्हारमात्यंतिकं नाशमिच्छतां हरेर्गुणानुवादो गुणानां नामप्रवृत्तिनिमित्तभूतधर्माणामनुसंधानपूर्वकं वाद उच्चारणमेव प्रायश्चित्तं यतोऽतो सौ सत्त्वभावनाश्चित्तशोधकः खलु प्रसिद्ध इत्यर्थः॥ १२॥ ननु भगवन्नामोच्चारणमात्रं न पापनिवर्तकं। किंतु भक्तिपूर्वकमेव। न चाजामिलस्य तदस्तीत्याशंकां परिहरति॥ अथेति। यद्यस्मादसौ अजामिलो म्रियमाणः सन् भगवन्नाम समग्रहीत् भक्तिपूर्वकमुच्चारितवान्। अथ तस्मात्कृतं। अशेषाणामघानां निष्कृतं येन स तथा। तमेनमपमार्गेण नरकमार्गेण मा नयतेत्यन्वयः। म्रियमाण इत्यनेनांतकाले हरिस्मृतिर्जन्मनः परमो लाभ इति सूचयति॥ तदुक्तं॥ एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया। जन्मलाभः परः पुंसामंते नारायणस्मृतिरिति॥ १३॥ नन्वयं पुत्रनामजग्राह। न तु भगवन्नामेति तत्राहुः॥ सांकेत्यमिति। सांकेत्यं पुत्रादौकृतसंकेतनिमित्तकं। पारिहास्यं भगवत्यो वयं देवस्त्रीस्वभावेन यद्यपि। भगवानसि केन त्वं हेतुना यातु नाशनेत्याद्युक्तप्रकारेण परिहासेन कृतं। स्तोभं गीताविलासपूर्णार्थं कृतं। हेलनं नारायणशब्देन संकेतिते पुरुषेऽवज्ञया सर्वदोषाश्रयस्त्वं कथं नारायणोऽसीत्यादि रूपमपि वैकुंठनामग्रहणमशेषाघहरं विदुरित्यर्थः। सांकेत्यादिषु मध्ये केनापि प्रकारेणोच्चारितभगवन्नाम्नस्तन्मुख्यवाच्यभगवत्स्मारकत्वेन भगवद्भक्तिजनकत्वेन सर्वपापनिवर्तकत्वं युज्यत इति भावः॥ १४॥ नामव्याहरणं न ध्यानादि-

वदासनादि नियमसापेक्षमिति सुलभोपायः । स्मरणं सर्वदा योग्यं ध्यानोपासनमासन इत्यभिप्रेत्याहुः ॥ पतित इति । प्रासादिभ्यः सुपतितो मार्गे भग्नगात्रः संदष्टः सर्पादिभिस्तप्तो ज्वरादिभिराहतो दंडादिना । एतादृशः पुमान् । अवशेन भक्तिपारवश्येन हरिरित्याह । सो यातनां नार्हतीत्यर्थः । पुमानित्यनेन नात्र वर्णाश्रमादि नियम इत्युक्तं ॥ १५ ॥ ननु पापतारतम्येन कृच्छ्रादि तारतम्यवत् महतः पापस्य महदेव प्रायश्चित्तं युक्तं । न त्वल्पनामग्रहणमात्रमिति तत्राहुः ॥ गुरूणामिति । द्वाभ्यां । गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां लघूनि तारतम्यं ज्ञात्वा मन्वादिप्रूक्तानि । अतस्तत्र न तथैव व्यवस्था । श्रीहरिनामस्तुतेरियं व्यवस्थोक्ता । मुच्यते सर्वपातकैरिति वचनात् । न चेदं वचनमपि विश्वसनीयं । सुराबिंदुमात्रपानस्य महापातकत्वाभिधायकवचनस्यापि तथात्वापातादिति भावः । किंच तैस्तपोदानादिभिस्तान्यघानि पूयंते । नश्यंति अधर्माणां बीजमुत्पत्तिस्थानं हृदयं लिंगं मनो न शुद्ध्यति । तदपीशांघ्रिसेवया कीर्तनादि लक्षणया शुद्ध्यतीत्यर्थः ॥१६॥ ॥१७॥ वैवश्येनापि सकृदनुष्ठितभगवन्नामकीर्तनादिना सर्वपापनिवृत्तिद्वारा मोक्षो भवतीत्येतदधिकारिविषयं । शरीराद्वाचकाभ्यासो वाचकान्मनसो भवेत् । मानसाद्विवशान्मुच्येन्नान्यथा मुक्तिरिष्यत इति वचनात् । अजामिलस्य तदानीमेव मुक्त्यभावाच्च । अतो यावदधिकारपरिपाकं तावद्वृत्तिः कर्तव्येत्यभिप्रेत्याह ॥ धर्म इति । यः कीर्तनादि लक्षणो धर्म उपन्यस्तोऽयं यदि पुरुषेणाहरहः क्रियेत । तर्ह्यमत्नोऽतःकरणस्य शुद्धिर्भवति । तत्र दृष्टांतः ॥ वाससो यथेति । निर्णेजनेनेति शेषः ॥ १८ ॥ कीर्तनादि लक्षणभगवद्भजने इतिकर्तव्यतामाह ॥ नेति । कर्तुर्जीवस्य क्रियया कर्मणा । एकांतशुद्धिर्न स्यादित्यतस्तस्माद्धरिमनीहया फलानपेक्षया भजेतेत्यन्वयः । ननु हरिरेव कुतो भजनीय इत्यतः स्वतंत्रत्वादित्याह । यतो न विद्यते कर्ता यस्य तस्यात्मनः परमात्मनः कर्तृतां स्वातंत्र्यं । कर्तृत्वं तु स्वतंत्रत्वमित्युक्तेः । तस्माद्धरिरेव भजेतेत्यर्थः ॥ १९ ॥ ननु तथाऽप्यजामिलेन भगवन्नाम सर्वपापप्रायश्चित्तमिति ज्ञात्वा नोच्चारितमिति चेत्तत्राहुः ॥ अज्ञानादिति । बालकेनाज्ञानात्प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं दहति तद्वदित्यर्थः । भक्तिमता गृहीतमेव नामाघहरमिति ज्ञापनाय दृष्टांते एध इत्युक्तं । अग्नेर्दाहकत्वसामर्थ्ये विद्यमानेऽपि स्वाविषयं काष्ठमेव दहति न त्वविषयं पाषाणं । तथा भगवन्नामापि भक्तिमंतमेव पुनाति न तु तद्रहितमिति भावः ॥ २० ॥ उक्तमर्थं दृष्टांतांतरेण समर्थयति ॥ यथेति । यथा

र्यतममगदमौषधं यदृच्छाया दैवेच्छयोपभुक्तं भक्षितं सत् आत्मगुणं स्वसामर्थ्यमजानतोऽपि पुरुषस्यात्मगुणमारोग्यलक्षणं कुर्यादेव।
गोदाहृत उच्चारितो हरिनामलक्षणमंत्रोऽपि सकार्यं कुर्यादेवेत्यर्थः। पापनिवर्तनस्वभावमपि भगवन्नामज्ञानविशेषेण फलविशेषप्र-
मेति ज्ञापनार्थौषधदृष्टांतः॥ तदुक्तं॥ औषधादिषु चैतस्माद्देवा एव वरप्रदाः। औषधादि स्थिता देवास्तेऽज्ञे दृष्टफलप्रदाः।
निन्यदृष्टदाश्च स्युर्न दैवात्किंचिदिष्यते। यथाऽस्यापि राज्ञस्तु भोजनं क्षिप्तमिष्यते। न त्वविज्ञाय राजानं ग्रामप्राप्तिस्तथा भवेत्।
ा देवा दृष्टफलं दद्युरज्ञस्य चाल्पतः। किंचिदज्ञानकृता दृष्टा तच्च नैवान्यथा भवेत्। अदृष्टाख्यं फलं यत्तु तज्ज्ञस्यैव न चान्य-
मेति॥ २१॥ नास्मद्वाक्यमविश्वसनीयमित्याहुः॥ पतिरिति॥ २२॥ तं विप्रं मृत्योर्देहवियोगलक्षणात्। अमूमुचन्
वयामासुरित्यन्वयः॥ २३॥ प्रत्युदिता निराकृताः। विष्णुदूतैरिति शेषः। या त्वागत्वा यमराज्ञे यमराजाय यथा यथा-
कथयामासुः॥ २४॥ प्रकृतिं सात्विकावस्थां। दर्शनोत्सुकान् स्वदर्शनेन जनानामुत्सवापादकान्॥ २५॥ विवक्षुं वक्तुमि-
तं। अभिप्रेत्य ज्ञात्वा॥ २६॥ कृष्णदूतानां सकाशात्। शुद्धं मोक्षसाधनं भागवतधर्मं भगवत्कीर्तनादि लक्षणधर्मं यमदू-
ां सकाशात्। त्रैविद्यं वेदप्रतिपाद्यं। गुणाश्रयं गुणमयस्वर्गादिविषयं धर्मं च श्रुत्वेति विवेकेन योज्यं॥२७॥ भक्तिमानासीदि-
तरस्यानुषंगः॥२८॥ अनुतापं प्रपंचयति॥ अहो इति चतुर्भिः। येनात्मना मया वृषल्यां पुत्रतया जायमानेन ब्रह्म ब्राह्मणजातिः
वितं नाशितं॥२९॥ दुष्कृतं दोषकर्तारं कुलकज्जलं कुलस्य ब्राह्मणकुलस्य कज्जलं कलंकं॥३०॥ नास्त्यन्यो बंधुः पुत्रादिर्ययोस्तौ
। तपस्विनौ संतप्तौ। अधुना तत्क्षणमेव त्यक्तौ॥ ३१-३२॥ इदानीं तस्य विमर्शपूर्वकं मोक्षक्रममाह॥ किमिदमित्यादिना।
नात्प्रत्यक्षं। इह जाग्रतो दृष्टं॥ ३३॥ ये भुवोऽधो नरकं प्रति नीयमानं मां व्यमोचयन्। ते च क्व गता इत्यन्वयः॥ ३४॥
न्यहमस्मिन् जन्मनि दुर्भगः पापीयान्। तथाऽपि जन्मांतरे नूनं पुण्यवानित्याह॥ अथाऽपीति। विबुधोत्तमदर्शन इति निमित्त-
ी। तेषां दर्शनार्थं पूर्वेण मंगलेन महापुण्येन भवितव्यं। येन दर्शनेनात्मा मनः प्रसीदति। निर्मलं भवति। आत्मा परमात्मेति
॥ ३५॥ अन्यथा पूर्वपुण्यं विना॥ ३६॥ ब्रह्मोज्झस्त्यक्तब्राह्मण्यः॥ ३७-३८॥ कामो राग आत्मवान्वशीकृतमनाः॥३९॥
न्मय्या स्त्रीरूपया। आत्मनो भगवतो मायया बंधकशक्त्या॥ ४०॥ अर्थधीः अर्थे मोक्षाख्यपुरुषार्थे धीर्यस्य सोऽहं

र्थः । एतेनोपादानोपादेयभावापन्नतंतुपटदृष्टांतोपादानेन जगद्ब्रह्मणोरुपादानोपादेयभाव इति शंका परास्ता । कंथपटानां सूत्रस्य
ात्यंतभेदात् ॥ तदुक्तं ॥ यथा कंथापटाः सूत्रे ओताः प्रोताश्च संस्थिताः । एवं विष्णाविदं विश्वमोतं प्रोतं च संस्थितमिति
कांदे । किंच यस्यांशतः स्वरूपांशेभ्यो विष्णुब्रह्मरुद्राख्येभ्यः । अस्य जगतः स्थित्यादयो भवंति ॥ तदुक्तं ॥ ब्रह्मविष्ण्वीशरू-
ाणि त्रीणि विष्णोर्महात्मनः ॥ ब्रह्मणिस्थः सृजेद्विष्णुः स्थित्वा रुद्रेत्वभक्षयन् ॥ १ ॥ पृथक् स्थित्वा जगत्पाति तद्ब्रह्मा
ाह्वयो हरिः ॥ स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः ॥ २ ॥ स्रष्टृत्वादिकमन्येषां दारुयोषावदिष्यत इति च । किंच यस्य
शे लोको वर्तते । तत्र दृष्टांतः ॥ नसीति । नासि नासिकायां प्रोत बलीवर्दवदित्यर्थः ॥ १२ ॥ एतदेव प्रपंचयति ॥ य इति ।
ो निजायां स्वाज्ञारूपायां ॥ १४ ॥ वाचि विधिनिषेधात्मकवेदवाग्रूपायां तंत्यां दामन्यां नामभिर्ब्राह्मणादि नामलक्षणैर्दामाभि-
ावांतरपाशैर्गोस्वामी गा इव जनं बध्नाति । त इमे जीवा नामकर्मभिः । नामभिर्ब्राह्मणादिभिः कर्मभिः शमादिभिः । निबंधैर्दृष्ट-
ष्टसाधनैर्बद्धाश्चकिता भीताः संतो यस्मै बलिं वहंति । गाव इव गोस्वामिने यदधीनाः कर्म कुर्वंति । भीषास्माद्वातः पवत
त्यादि श्रुतेरित्यर्थः ॥ १३-१४ ॥ तस्य च लीलादुर्विभाव्येत्यत आह ॥ अहमिति द्वाभ्यां । अस्पृष्टं रजस्तमश्च यैस्ते तथा ।
त्वप्रधानाः सात्विका अपि । ईहितमभिलाषितं चेष्टितं वा न विदुः । तत्र हेतुः ॥ स्पृष्टमायाः । मायास्पृष्टा भगवदिच्छावृत्ता
ति ततस्तेभ्योऽन्ये न विदुरिति किं पुनर्वक्तव्यमित्यर्थः ॥ १५ ॥ भगवन्मायामोहितबुद्धित्वान्न जानंतीत्युक्तं । इदानीं तस्य
रणाविषयत्वाच्च न विदुरित्याह ॥ यमिति । असुभृतः प्राणिनो गोभिश्चक्षुरिंद्रियैर्मनसा बुध्द्याख्येंद्रियेण । आत्मा मनश्चितनं च
मुषी बुद्धिरित्यपि । एकार्थवाचिका इत्यभिधानात् । हृदा मनइंद्रियेण । स्वांतं हृन्मानसं मन इत्यभिधानात् । गिरा वागिंद्रि-
ण । असुभिः प्राणैरितरेंद्रियैः । सप्तप्राणस्त्वगतः पंचप्राणाश्च कर्मणः । एवं प्राणद्वादशकं मनो बुद्धी तु द्वादशेति वचनात् । यं
विचक्षते न विजानंति । दूरस्थत्वात्किं नेत्याह ॥ आत्मानमिति । आत्मनां सर्वप्राणिनां अंतर्हृदि नियामकत्वेन वर्तमानं ॥
ा ॥ आत्मानं सर्वद्रष्टारं । अन्येषां स्वविषयकज्ञानाभावेऽपि स्वयं सर्वं पश्यतीत्यर्थः । तर्हि कुतो न जानंतीत्यत आह ॥
ा इति । तत इंद्रियेभ्यः परमिंद्रियाविषयं । यतो वाचो निवर्तंते । यद्वाचानभ्युदितमित्यादि श्रुतेरित्यर्थः । तत्र दृष्टांतमाह ॥

चक्षुरिति । तस्य चक्षुर्विषयत्वात् । ननु रूपं चक्षुः प्रकाशयति । चक्षुषो रूपं प्रति विषयत्वाभावात् । एवमेव भगवंतमविषयीकुर्वाणैश्चक्षुरादींद्रियैः सर्वेऽपि न जानंति भगवानेव सर्वं जानातीति भावः । ॥ यद्वा ॥ जीवानां भगवद्विषयकज्ञानाभावे तमेवं विद्वानित्यादि श्रुतिविरोधः स्यादित्यत आह ॥ यमिति । गोभिरिंद्रियाभिमानिभिरिंद्राद्यैः । इंद्राद्या इंद्रियात्मन इत्युक्तेः । मनसा चंद्रेण । मनश्चंद्रः प्रकीर्तित इत्युक्तेः । असुभिर्मुख्यप्राणादि मरुद्भिः । मरुतः प्राणमानिन इत्युक्तेः । हृदांऽतःकरणाभिमानिना रुद्रेण रुद्रोंऽतःकरणात्मक इत्युक्तेः । गिरा वेदाभिमानिन्या लक्ष्म्या सरस्वत्या च । वागाभिमानिन्या पार्वत्या च । उमैव वाक्समुद्दिष्टेत्यर्थः । सर्वज्ञत्वेन प्रसिद्धैरेतैः सहिता असुभृतः सर्वे जीवा यं न विचक्षते विशेषतो न जानंति । तत्र हेतुस्तत उक्तचेतनराशेः परो विलक्षणः । अलौकिकत्वादित्यर्थः । तत्र दृष्टांतः । आकृतयः । रूपाभिमानिरुद्रपुत्रौ व्यानस्ततो व्यानात्परमधिकमहिमोपेतं चक्षुस्तदभिमानिनं सूर्यं न वेद । तद्वदित्यर्थः । साकल्येन भगवद्विषयकज्ञानाभावेऽपि तदनुग्रहेण स्वयोग्यतया जानंतीति न श्रुतिविरोध इति भावः । तथा चोक्तं । ब्रह्माद्या यं न जानंति करणाद्यभिमानिनः । जानंत्यनुग्रहाच्चास्य प्रधानाग्नि यथाऽर्चिषः । अग्निपुत्र नमस्तस्मै यमाह श्रीश्च न स्फुटं । वेदरूपा परं देवं वैलक्षण्यात्समस्तशः । आनंदो नेदृशानंदो इत्युक्तेः लोकतः परं । प्रतिभाति न चाभाति यथावद्दर्शनं विनेति ब्रह्मतर्के । एवं भूतः परमेश्वरो मदन्योस्तीति पूर्वेणान्वयः ॥ १६ ॥ भवत्येवं भूतः परमेश्वरो ये पुनरस्मान्निर्भर्त्स्य पापिनं रक्षितवंतस्ते क इत्यतस्तानाह ॥ तस्येति द्वाभ्यां । तद्रूपगुणस्वभावास्तस्य हरेरिव रूपं श्यामवर्णादि गुणाः प्रभावादयः स्वभावश्च भक्तवात्सल्यादिश्च येषां ते तथा । अत एव मनोहराः श्रीहरेर्दूताश्चरंतीत्यन्वयः आत्मतंत्रस्य स्वतंत्रस्याधीशितुः पूर्णैश्वर्यस्य । परस्य निर्दोषगुणपूर्णस्य मायाधिपतेर्लक्ष्मीपतेः ॥ १७ ॥ श्रीविष्णोर्भूतानि भृत्याः दुर्दर्शानि द्रष्टुमशक्यानि लिंगानि रूपाणि येषां तानि तद्भक्तिमतः श्रीविष्णुभक्तान्परेभ्यः शत्रुभ्यः । परोरिपरमात्मनोरित्यभिधानात् । सर्वतोऽन्यादिभिश्च रक्षतीत्यर्थः ॥ १८ ॥ ननु श्रीविष्णुभक्ताश्चैते कथमधर्मिपक्षपातं कृतवंतस्तत्राह ॥ धर्मं स्विति ॥ १९ ॥ ननु तेऽपि चेन्न जानंति तस्य सत्वे किं प्रमाणमिति तत्राह ॥ स्वयंभूरिति । कुमारः सनत्कुमारो मनुः स्वायंभुवो वैय्यासकिः श्रीशुकः । वयमित्यात्मानमेव बहुमन्यमानो निर्दिशति । न तु भटसाहित्येन बहुवचनं ॥२०॥ हे भटाः ॥ २१ ॥ तमेव धर्ममाह ॥

एतावानात । तस्य हरेर्नामग्रहणादिभिर्भगवति भक्तियोग एतावान्पर उक्तो धर्मः । [illegible]
यद्भक्त्या पुंडरीकाक्षं स्तवैरर्चेन्नरः सदेत्युक्तेरित्यर्थः ॥ २२ ॥ न चात्र प्रमाणं वक्तव्यं । दृष्टत्वादित्याह ॥ नामोच्चारणेति ।
भक्तिपूर्वकनामोच्चारणमाहात्म्यमित्यर्थः । येनैव सहायांतरमंतरेण भक्तिपूर्वकनामोच्चारणेनेत्यर्थः ॥२३॥ येनैवेत्युक्तं विवृणोति ॥
एतावतेति । भगवतो गुणकर्मनाम्नां नारयणेत्यादि गुणनाम्नां मधुसूदनेत्यादि कर्मनाम्नां च गुणानां कर्मणां नाम्नां वा संकी-
र्तनं सम्यक् भक्तिपूर्वकं कीर्तनं पुंसामघनिर्हरणायालं पर्याप्तं । अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यभिधानात् । ननु नैतावन्मु-
क्त्यर्थमपेक्षितं । भक्त्याद्यभावेऽपि पुत्रोपचरितेन नामोच्चारणेनैवाजामिलस्य मुक्तिदर्शनादित्यत आह । विक्रुश्येति । यद्यस्मादघ-
वानजामिलोऽपि म्रियमाणः सन् नारायणेति नाम्ना पुत्रं विक्रुश्याहूयानंतरमेवैतावता नामस्वामिस्मरणाभिव्यक्तभक्ति-
पूर्वककीर्तनेनैव मुक्तिमुपैत्यवाप । तस्मादिति पूर्वेणान्वयः । ॥ यद्वा ॥ यच्छब्दः प्रश्नार्थे च क्वचिद्भवेत् । क्वचित्परा-
मर्शवाची । क्वचिदाक्षेपवाचीत्यभिधानात् । ततोऽजामिलोऽपि पुत्रं विक्रुश्य मुक्तिमगाद्यत् अगात्किं नैव । किंतु
एतावता प्रागुक्तभक्तिपूर्वकसंकीर्तनेनैवेत्यर्थः । यत्तु श्रीधरनामकौमुदीकाराभ्यामुक्तं । अनेन श्लोकेन भक्तिरहित कीर्त-
नस्य कृत्स्नपापक्षयहेतुत्वमेव समर्थ्यते । यदि पर्याप्तिवचनोऽयमलं शब्दस्तर्हि प्रथमाप्रयोगेन भवितव्यं । अलं मल्लो
मल्लायेतिवत् । इह तु तृतीयाप्रयोगो दृश्यते । अतो निवारणवचनोऽयं । अलमिति । प्रसंगेनेतिवत् । ततश्चायमर्थः ।
भगवद्गुणकर्मनाम्नां । सम्यक्कीर्तनमिति यावत् । पुंसामघनिर्हरणायैतावतालमेतावन्नानुष्ठेयं । पापक्षयमात्रस्यातितुच्छत्वात् ।
भगवत्कीर्तनस्यातिगरीयस्त्वात् । तदेव विवृणोति ॥ विक्रुश्येति । आमरणमभ्यस्तमहापापोऽजामिलोऽपि नारायणेति विक्रुश्य न
तु सम्यक्कीर्तयित्वा तच्च पुत्रं विक्रुश्य न तु श्रीहरिं कीर्तयित्वा तदपि न स्पष्टं म्रियमाणत्वेन शिथिलकरणत्वात् । तथाऽपि
दैवगत्या तु पुत्रनाम्नो भगवन्नामत्वान्मुक्तिं समस्तानर्थनिवृत्तिलक्षणां निरतिशयानंदरूपां च प्राप । नानर्थैकदेशस्य पापस्य ॥ ९
निवृत्तिमात्रा । तत्रापि मुक्तिः किल बभूवेति । नैतन्मात्रं किंत्वधुनैव मुक्तिमुपैति । सांगुलिनिर्देशमभिधीयते । धर्मराजेन तत्समये
तस्य जनस्य वर्तमानत्वाद्वेति । तदतितुच्छं । नामाभासस्यैव कृत्स्नपापक्षयहेतुत्वांगीकारे शरीरांभककर्मणामपि नाशावश्यंभावेनानादौ

संसारे कदाचिन्नामाभासमुच्चारयतां तत्सिद्धांतानुवर्तिनां सर्वेषामपि सद्यो मरणापातात्सर्वपुराणेषु श्रद्धाभक्त्याद्दयादेरपि विधानात्केवलनामकीर्तनेन सर्वपापक्षयायोगाच्च । तथाहि । सायंप्रातर्गृणन्भक्त्या दुःखग्राहाद्विमुच्यत इति । अनुदिनामिदमादरेण गृणन्निति । श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः । जन्मकर्मगुणानां च तदर्थोऽखिलचेष्टितमित्यादि अस्मिन्नेव पुराणेषु पठ्यते । तत्र तत्र पुराणांतरे च पापक्षयश्च भवति । स्मरतामहर्निशमित्यादि । अत्रैव च । तस्मात्संकीर्तनं विष्णोर्जगन्मंगलमंहसां महतामपि कौरव्य विध्येकांतविनिष्कृतिमित्यादिना सम्यक्कीर्तनादवगम्यते । किंच तथा सति किमिति मन्वादयो द्वादशाब्दानि प्रायश्चित्तानि स्मरेयुः । तेषामतिक्लेशसाध्यत्वात् । नामाभासस्य च सर्वसौलभ्यात् । नन्वावृत्तिः श्रद्धादि विधयः पापवासनाक्षयार्था इति वाच्यं । तथात्वे वासनाक्षयार्थत्वेनापि भक्त्यादेरावश्यकत्वेन केवलकीर्तनस्य मुक्तिसाधनत्वप्रतिज्ञाव्याकोपात् । तस्माद्भक्तिपूर्वकमेव कीर्तनादिकमघहरं । तथा चोक्तं । सर्वपापहरं विष्णोर्नाम तद्भक्तिपूर्वकं । अभक्त्योदाहृतं नैव फलदातृ भविष्यति । नामस्वामितया तस्य स्मरणं जायते यतः । भक्तस्यातो नामकीर्तिः संकेतादावपीरिता । अजामिलोऽपि स्मरणाद्भक्त्या मृत्योर्विमुच्यतेति नारदीये । न चालं शब्दस्य पर्याप्त्यर्थत्वे एतावतेति तृतीयानुपपत्तिरिति वाच्यं । अस्यास्मदुक्तिप्रकारेणोत्तरार्धेनान्वयात् । न च व्यवधानेनान्वयदोषः । संनिधानापेक्षया योग्यतायाः प्रबलत्वात् ॥ उक्तं च व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदिति ॥ २४ ॥ नन्वेवं भक्तिपूर्वकं भगवन्नामकीर्तनं मुक्तिसाधनं चेत्सर्वे एतत्कुतो नानुतिष्ठंतीत्यत आह ॥ प्रायेणेति । प्रायेण प्राचुर्येणायं महाजनो बहुशो जनो देव्या द्योतमानया मायया भगवदिच्छयाऽलं मोहितमतिरत एव मधुपुष्पिकायां । आपाततः स्वर्गाख्यपुष्पप्रतिपादिकायां त्रय्यां श्रुतौ जडीकृताऽभिनिविष्टा मतिर्यस्य स तथा । आपातप्रतीतिमादाय वेदमुख्यार्थभूतमोक्षतत्साधनज्ञानशून्यः । अत एव महति महायाससाध्यवैतानिके यज्ञसंबंधिनि कर्माणि युज्यमानः संसक्तः सतन्मोक्षाख्यं फलमिदं तत्साधनं भगवदनुस्मरणं च न वेदेत्यर्थः । तथा चोक्तं । मंदाधिकारिणा नित्यं तपसैव प्रतीक्षितुं । मोक्षो न शक्यते धैर्यात्ततः स्वर्गादिकं वदन् । स्वर्गादि पुष्पफलतां ज्ञापयित्वा विमोक्षदं । ज्ञानं वक्तुं तूत्तमानां नित्योवेदः प्रवर्तते । इक्षुदंडं ददानीति यथा भैषज्यरोचनं । एवं मंदेषूत्तमेषु मोक्षमाहात्म्यमुच्यते । न ह्यल्पफलभाग्वेदो वासुदेवैकसंश्रय इति ॥ २५ ॥ प्रायेणेत्यस्य व्यावर्त्य-

माह ॥ एवमिति । ये सुधियो ज्ञानिन एवं भक्तिसहितमेव कीर्तनं मुक्तिसाधनमित्युक्तप्रकारेण विमृश्य सम्यगालोच्य भगवति भावयोगं भक्तियोगं । भावो भक्तिःसमुद्दिष्ट इति वचनात् । विदधते कुर्वंतीत्यर्थः । अमीषां तावत्पातकं न स्यादेव । यदि स्यात् । उरुगायस्य नारायणस्य वादः कीर्तनं तदपि हंति ॥ २६ ॥ तदेव धर्मतत्त्वं विनिर्णीय भृत्याननुशास्ति ॥ त इति । ये भगवंतं प्रपन्नास्ते देवैः सिद्धैश्च परिगीतपवित्रकथा वर्णितपुण्यगाथाः । अतस्तन्नोपसीदत । तत्समीपमपि न गच्छतेत्यर्थः ॥ २७ ॥ के तर्हि दंडार्थमानेया इत्यत्राह ॥ तानिति द्वाभ्यां । असतो दुष्टान् । तानेवाह । मुकुंदपादारविंदयोर्यो मकरंदरूपो रसस्तस्माद्विमुखान् । कथं भूतान् । निष्किंचनैरजस्रं जुष्टात् । तेषां दुष्टत्वज्ञापकमाह । निरयवर्त्मनि नरकद्वारे गृहे भार्यादौ बद्धा तृष्णा यैस्तान् ॥ २८ ॥ किंच यत् येषां जिह्वेत्याद्यन्वयः । अत्र श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं । अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनं । इत्युक्तनवके कीर्तनं स्मरणं वंदनं चेति त्रिकं साक्षादुक्तं । तदितर षट्कं तु विष्णुकृत्यपदेनोच्यत इति ज्ञातव्यं ॥ २९ ॥ दंड्यानुक्त्वेदानीं भगवद्भजनमेवाशेषपापानिवर्तकं न कर्मादिकमित्युपसंहराति ॥ कृष्णेति । श्रीकृष्णांघ्रिपद्मयोर्मधुलिट् आस्वादयतीति तथा । मधुलिहस्तान् तुच्छत्वेन विसृष्टा ये मायागुणा विषयास्तेषु पुनर्न रमते । अन्यस्तु मध्वास्वादनरहितोऽत एव कामाभिभूतः सन् आत्मनो रजः पापं प्रमार्ष्टुमपि कर्मैव प्रायश्चित्तरूपमीहते करोति । यतो यस्मिन्कर्मण्यनुष्ठितेऽपि रजः पापं पुनः स्यादेव । समूलं न निवर्तेत इत्यर्थः । पापपरिहारमार्जनबुध्द्या कृतमपि कर्म भगवद्भक्तिशून्यं न पुनातीति भावः ॥ ३० ॥ भगवंतं क्षमापयति ॥ तदिति । सः भगवान् नः स्वपुरुषैर्यद्यस्मादसत् अन्याय्यं कृतं । तत्तस्मात्स्वयमेव क्षम्यतां सहतां । तदर्थं नास्माभिः प्रार्थनीयमिति भावः । इदानीमस्मत्प्रार्थनयाऽपि क्षम्यतामित्याह ॥ स्वानामिति । स्वानां भक्तानां । अहो आश्चर्यभूतमाहात्म्यं न विदुषामजानतां । किंच भूम्ने पूर्णाय पुरुषाय नम इत्युक्तिपुरःसरं रचतांजलीनां न इति पूर्वेणान्वयः । यद्यपि यमो भगवद्भक्तमाहात्म्यं जानाति । अन्यथा स्वभृत्यान्प्रति पूर्वोक्तोपदेशासंभवात् । तथाऽपि भृत्यकृतापराधं स्वकृतापराधमिति मत्वा न विदुषामित्युक्तवानिति ज्ञातव्यं । क्षांतिरहितपुरुषप्रार्थनाया निष्फलत्वादित्यत आह ॥ क्षांतिरिति ।
नहीयसि महत्तमे भगवति क्षांतिरस्त्वेवेत्यर्थः । अथ महतां ... । ...

ाव्यं ॥ यद्वा ॥ स भगवान्स्वपुरुषैः स्वभृत्यैरस्माभिर्यदसत्कृतं । नस्तदन्याय्यं क्षम्यतां । अत्र हेतुत्रयं । स्वानां स्वकीयानां न
ुषामज्ञानां रचितांजलीनां विहितकरसंपुटानामिति । ननु द्रव्यादि दंडमंतरेण कथं भगवान्क्षमिष्यतीति तत्राह ॥ क्षांतिरिति ।
ाय नम इत्युक्तिमात्रेण वरीयसि क्षांतिरुदेत्यहो आश्चर्यमित्यर्थः ॥ ३१ ॥ जगतोऽपि मंगलरूपं महतां प्रायश्चित्तांतरनिवृत्त्या-
र्यंहसामेकांतविनिष्कृतमात्यंतिकप्रायश्चित्तं ॥ ३२ ॥ तदेवाह ॥ शृण्वत इति । व्रतादिभिस्तथा न सिध्येत् ॥ ३३ ॥ तेन
मतधिय इत्यन्वयः ॥ यद्वा ॥ तेन भगवता निमित्तेन परिशंकमाना अस्मानेवैष हन्यादिति शंकावंतः । अच्युतजनं द्रष्टुमपि
यति स्मेत्यन्वयः ॥ ३४ ॥ कुंभसंभवोऽगस्त्यो मलयपर्वते आसीनः श्रीहरिमर्चयन्पुनः पुनर्विश्वासार्थं श्रीहरेः पादं स्पृशान्नि-
ः ॥ ३५ ॥ इति श्रीभागवताटिप्पण्यां चेट्टीत्याख्यायां तृतीयोऽध्यायः ॥ ६—३ ॥

॥ हरिः ॐ ॥ स्रष्टृत्वं प्राक् प्रतिज्ञातं जन्माद्यस्येति श्रीहरेः प्रपंच्यतेऽस्मिन्नध्याये । तद्राजा तत्र पृच्छति ॥ देवासुरेति
यां । सामासिकः संक्षिप्तः । प्रोक्तस्तृतीयस्कंधे ॥ १ ॥ व्यासं विस्तारं ते त्वत्तो यथा यथावज्ज्ञातुं शक्त्या स्वसामर्थ्येन
सर्गमंडांतरावांतरसृष्टिं । महदाद्यंडपर्यंतः सर्गोऽडे ब्रह्मणस्तु यः । अनुसर्ग इति प्रोक्तः पौरुषश्चेति कथ्यत इति वचनात् ।
ससर्ज दक्षादि रूपेण ससर्जेति वक्तुं दक्षजन्मप्रस्तावनयाऽऽह ॥ यदेत्यादिना । प्राचीनबर्हिषः पुत्राः प्रचेतसो प्रचेतोनामका
ऽतः समुद्रात समुद्रमध्यादुन्मग्ना निर्गतास्तदा गां पृथिवीं द्रुमैर्वृतां ददृशुः । नारदोपदेशतः प्राचीनबर्हिषोनिवृत्त्याऽराजके
कृष्याद्यभावादीत भावः ॥ ४ ॥ तपसा दीपितो मन्युर्येषां ते तथा । तद्दिधक्षया तेषां द्रुमाणां दग्धुमिच्छया ॥ ५ ॥
यां वाय्वग्निभ्यां दह्यमानान् तान् द्रुमानुपलभ्य निरीक्ष्य वनस्पतीनां राजा सोम उवाच ॥ ६ ॥ मा द्रुमेभ्य इति नवभिः ।
हाभागा द्रुमेभ्यो द्रोग्धुं द्रोहं कर्तुं । क्रुधद्रुहेर्ष्येत्यादीनां संप्रदानत्वाच्चतुर्थी । यतो विवर्धयिषवो विशेषेण वर्धयितुमिच्छवः ।
नां पतयः पालकाश्च ॥ ७ ॥ प्रजापालकानां भवतां प्रजाभोग्यदाहोऽनुचित इत्याह ॥ आदाविति त्रिभिः ॥ ऊर्जं पित्रन्नं
देवान्नं । वनस्पत्यादीनूर्जादित्वेन ससर्जेत्यर्थः ॥ ८ ॥ तदेवाह ॥ अन्नमिति ॥ ९ ॥ पित्रा प्राचीनबर्हिषा । देवदेवेन चतु-
॥ १० ॥ तस्मादातिष्ठत आश्रयत । सतां मार्गमुपशमं पित्रादिभिर्जुष्टं ॥ ११ ॥ प्रजानां प्रजापतिरेव बंधुरतस्तज्जीविका-

शो न कर्तव्य इति दृष्टांतपंचकेनाह ॥ तोकानामिति । तोकानां बालानां पितरौ मातापितरौ बंधुपदं सर्वत्रान्वेतव्यं । अज्ञानां
नदो बुध एव सुहृत् ॥ १२ ॥ ईश्वराधिष्ठानत्वाच्च भूतद्रोहो न युक्त इत्याह ॥ अंतर्देहेष्विति । एवं चेत्र वो युष्माभिस्तो-
तो भवति ॥ १३ ॥ आकाशाद्देहे समुत्पतिते । आकस्मिकमित्यर्थः । आत्मजिज्ञासया भगवत एव स्वतंत्रत्वादन्यः कोऽपि
षयो नास्तीति परमात्मविचारेण यो नियच्छेत् । सः गुणान्सत्त्वादीन् । अतिवर्तते अतिक्रांतो भवति । मुक्तो भवतीति यावत्
१४ ॥ शेषाणां द्रुमाणां वो युष्माकं च शिवमस्तु । वः सकाशादिति वा । वृक्षरक्षणार्थं तदीयां कन्यां ददाति वार्क्षीति वृक्षैः
लिता ॥ १५ ॥ आमंत्र्य सांत्वयित्वा वरारोहा नितंबप्रदेशो यस्यास्तां । आप्सरसीं अप्सरसः प्रम्लोचायाः सुतां ॥१६-१७॥
हेतृवत्सल इत्यनेन तस्य कन्यावंश एवेति सूचयति । मम सकाशात् ॥१८॥ मनसा ससर्जेत्युक्तं विवृणोति ॥ मनसेति । प्रजापतिर्दक्षः
१९॥ अबृंहितं असंवृद्धं विंध्यस्य पादान्सान्निहितपर्वतान् ॥२०॥ तत्र तीर्थमस्ति तत्र तीर्थेऽनुसवनं प्रतिसंध्यमुपस्पृश्य स्नात्वा ॥२१॥
गुह्याख्येन स्तोत्रेण कस्य दक्षस्य । यतो येन स्तोत्रेण ॥२२॥ तदेवाह ॥ नम इति द्वादशभिः ॥ अत्र सर्वत्र गुणिनिष्ठगुणाभिधानलक्ष-
याः स्तुतेर्देवतातोषत्वेन मंत्राद्यावृत्तिवन्न पौनरुक्त्यं न वाऽत्यंतसंगत्यपेक्षेति ज्ञातव्यं । पराय परमात्मने नमः । तस्य लक्षणमाह ।
ाय निर्दोषगुणपूर्णाय । निर्दोषगुणपूर्णत्वात्परमाहुर्जनार्दनमित्युक्तेः । परत्वमुपपादयति ॥ अवितथेत्यादिना । अवितथा यथार्था
ाप्यप्रतिहताऽनुभूतिर्यस्य तस्मै सत्यज्ञानाय । सत्यं ज्ञानमिति श्रुतेः । गुणत्रयेणाभासः सृष्टिस्तत्र निमित्तयोः प्रकृतिपुरुषयोर्बंधु-
ाय । तत्र स्थित्वा ताभ्यां सृष्टौ प्रवर्तमानाय गुणत्रयप्रवृत्तिनिमित्ताध्यक्ताश्रयाय वा । स नो बंधुमसति निरविंदन्निति श्रुतेः ।
ृत्तमाने परिमाणे ज्ञानेवाऽवधिर्मर्यादा यस्मात्तथा । सत्यं ज्ञानमनंतमिति श्रुतेः । मानं ज्ञानं लयश्चेति मर्यादा चेति कथ्यत
ाभिधानं ॥ यद्वा ॥ निवृत्तं मानं प्रमाणं यस्मात्स तथा । यतो वाचो निवर्तंत इति श्रुतेः । व्याप्तश्चेत्कुतो नोपलभ्यत इत्यत
ह ॥ अदृष्टेति । गुणेषु शब्दादि विषयेषु तत्त्वबुद्धिः पुरुषार्थबुद्धिर्येषां तैः । विषयलंपटैरिति यावत् ॥ अदृष्टधाम्ने । अज्ञात-
रूपाय । न चक्षुषा पश्यति कश्चिदेनमिति श्रुतिः । स्वयंभुवे स्वतःसिद्धाय । स भगवान् कस्मिंश्चित्प्रतिष्ठित इति । स्वे महीम्नीति
ारित्यर्थः ॥ २३ ॥ अदृष्टधामत्वमुपपादयति ॥ न यस्येति द्वाभ्यां । सखा पुरुषो जीवोऽस्मिन्पुरे देहे वसन्नप्यत्रैव संवसतः

्युर्यस्य सख्यं । शरीरेंद्रियादि प्रवर्तकत्वं लक्षणं न वेत्ति । परस्परसखित्वं त्वेकशरीराश्रयत्वेन । द्वा सुपर्णेति श्रुतेः । तत्र
ांतमाह ॥ गुण इति । यथा कश्चिद्गुणोऽप्रधानः । भृत्य इति यावत् । गुणिनो भृत्यस्वामिनः प्रधानभूतस्य राज्ञः पुरःस्थितोऽपि
ासौ सखेति । गंभीरेण राज्ञा चिंतितमपि न जानाति । यतो व्यक्तदृष्टिः । स्थूलदृष्टिः । अनेंगितज्ञस्तथेत्यर्थः ॥ तदुक्तं ॥ यथा
ाः प्रियत्वं तु भृत्यो न वेद न चात्मनः । तथा जीवो न यत्सख्यं वेत्ति तस्मै नमोऽस्तु त इति स्कांदे ॥ महेशाय । प्रति-
र्थाय । समर्थ ईश इत्युक्त इति वचनात् ॥ २४ ॥ ननु साधारणानां भगवत्ज्ञानाभावेऽपि देवानां तत्स्यादित्यत आह ॥
इति । देहो तदभिमानी कुबेरः ॥ असवः । प्राणाभिमानिनो मरुतः । अक्षमिंद्रियमेषामस्तीति नियम्यत्वेनेत्यक्षाः । इंद्रियाद्य
नेन सर्वत्राभिमानिनो मरुतः । एतेन सर्वत्राभिमानिनो ग्राह्या इति सूचितं । अन्यथा लिंगव्यत्ययापत्तेः । ॥ मनसः । मनो-
ानी रुद्रः । मनसो वृत्तिबाहुल्यात् । बहुवचनःद्भूताभिमानिनो गणपत्यादयः ॥ मात्राः । शब्दाद्यभिमानिनो बृहस्पत्यादयः ।
सर्वेऽप्यात्मानं स्वस्वरूपमन्यं स्वव्यतिरिक्तं प्रपंचं यत्परंब्रह्म तच्च सर्वथा न विदुः। प्रपंचविषयकज्ञानमपि नास्ति किमुत ब्रह्मज्ञान-
ा कैमुत्यप्रदर्शनार्थमात्मानमन्यं चेत्युक्तं ॥ पुमान् । जीवाभिमानी ब्रह्मा तु स्वात्मानमन्यं चेति सर्वं वेद । न केवलं तावदेव
तु गुणान् तद्वस्तुसमवेतान् । च शब्दस्तत्तद्विशेषक्रियादींश्च वेद । सोऽपि भगवंतं न वेदेत्याह ॥ तदिति । तानि सर्वाणि जानातीति
ाऽपि ब्रह्माणं न वेद । तमीड इत्यन्वयः । सर्वतस्तज्ज्ञानाभावेऽधिकार्युत्तमत्वं न स्यादित्यत आह ॥ अनंतमिति । अनंतगुण
साकल्येन न वेद । स्वयोग्यतानुसारेण जानात्येवेति भावः । कस्यापि साकल्येन ज्ञानाभावे गुणानंत्यस्यासत्वमेव स्यादित्यत
ह ॥ सर्वज्ञमिति । भगवत्ज्ञानमेव तत्र प्रमाणमिति भावः ॥ तदुक्तं ॥ देहाभिमानी वै श्रवणो मरुतः प्राणमानिनः ।
द्या इंद्रियात्मानो रुद्रोंऽतःकरणात्मकः । नैते विदंति स्वात्मानं परं चापि विमोहिताः । जीवाभिमानी ब्रह्मा तु सर्वं वेद
ापतिः । सोऽपि वेद हरिं नैव सम्यक् सैव हि सर्वविदिति ॥ २५ ॥ ननु भगवतो दोपित्वेनानुभवासिद्धजीवाभिन्नत्वात् ।
क्तमाहिमा नोपपद्यत इत्याशंक्य तस्य जीवभेदेऽर्थापत्तिं तावत्प्रमाणयति ॥ यदेति । भगवान् यदा यस्मिन्काले नामरूपरूपस्य
रूपात्मकप्रपंचप्रत्यायकस्य मनसः । केवलया सुप्त्यादि जीवेच्छानधीनत्वेन जीवेच्छाविश्लिष्टया स्वसंस्थया स्वेच्छालक्षण-

म्ना उपरामो व्यापारोपरमो भवति । तदा तत्कार्यात् दृष्टिस्मृतिसंप्रमोषात् । दृष्टिरनुभवः । स्मृतिः स्मरणं तयोः संप्रमोषो
यो यस्मिन्स तथा । तस्मात्सुप्त्यादेः प्रबुध्येन पुरुषेण केवलया स्वसंस्थया जीवव्यतिरिक्ततया विद्यमानत्वेनेयते ज्ञायते
हंसाय । नित्यनिर्दोषसाररूपाय शुचिसद्मने । शुचिर्वायुः सद्म मुख्याधिष्ठानं यस्य । नित्यहीनोऽखिलैर्दोषैःसाररूपो यतो
: । हंस इत्युच्यते तस्माद्वायुस्थः शुचिसद्मन इति वचनात् । तस्मै नम इत्यन्वयः । जीवस्य सुप्त्याद्यवस्थासु ज्ञानकरणस्य
उपरतत्वेन जीवव्यतिरिक्ततयाऽवस्थाकारणभगवज्ज्ञानाभावेऽपि प्रबोधानंतरं तदन्यथाऽनुपपत्त्याऽवस्थाप्रबोधादिकारणत्वेन
वान् ज्ञायत इति भावः ॥ २६ ॥ भगवतो जीवभेदे सर्वसाधारणमर्थापत्तिमुक्त्वेदानीं विद्वत्प्रत्यक्षं प्रमाणयति ॥ मनीषिण
। इह जीवराशौ मनीषिणो मनसेषिणो धीराः । विद्वांस इति यावत् । पृषोदरादित्वात्साधुः । अंतर्हृदि हृत्कमलमध्ये ।
द्भिरिच्छाज्ञानाक्रियारूपेण त्रिधा वर्तमानाभिः । विमलोत्कर्ष्याादिभेदेन नवभिः स्वाभिः स्वरूपभूताभिः शक्तिभिः शकनाच्छ-
संज्ञाभिर्मूर्तिभिस्तथा स्वशक्तिभिस्तन्नामसंख्याविशिष्टजीवाख्यस्वाधीनशक्तिभिश्च सह सन्निवेशितं । तथाऽपि ॥ गूढं । अयोग्यै-
लभ्यमानं ॥ पांचदश्यं । दशेंद्रियमनोबुद्धिप्राणप्रधानाख्यानां चतुर्दशतत्वानां नियामकत्वेन स्थितं यं भगवंतं मनीषया
तिभया ॥ निष्कर्षंति । जीवादिभ्यो विविच्य जानंति । स मम प्रसीदतामित्युत्तरेणान्वयः । तत्र दृष्टांतः । अग्निचितो
दारुण्यरण्यादौ गूढं वन्हिं मथनाद्युपायेन ततो निष्कृष्य प्रत्यक्षीकुर्वंति तथेत्यर्थः । अयमर्थ इच्छादित्वेन त्रिविधा इत्यादि
र्योदाहृतप्रमाणप्रसिद्धः ॥ २७ ॥ नन्वंतर्हृदिसन्निवेशितमित्युक्तं तर्हि दुर्भगशरीरप्रविष्टस्य जीवदुःखादिदोषलेपः स्यादित्यत
॥ अशेषेति । अशेषेषु गुणेषु विशेषः । इयत्तालक्षणपरिच्छेदो माया प्रकृतिस्तयोर्निषिद्धो यस्य स चासौ निर्वाणसुखानुभूतिश्च
र्णं नित्यं यत्सुखं तस्यानुभूतिः पूर्णगुणोऽप्राकृतो नित्यसुखानुभवरूपश्चेत्यर्थः । पूर्णगुणत्वं कथमित्यत । आह ॥ सर्वनामेति ।
णि नामानि मुख्यतो वाचकत्वेन यस्य स तथा । सर्वनाम्नां प्रवृत्तिनिमित्तस्य भगवति मुख्यत्वात्पूर्णत्वं युज्यत इति भावः । ॥ १२ ॥
दीन्विहाय भगवानेव कुतः प्रसाद्यत इत्यतो ब्रह्मादि जगतो भगवत्प्रतिबिंबत्वेन बिंबस्यैव प्रधानत्वादित्याह ॥ सर्वरूप इति ।
जगद्रूपं प्रतिबिंबं यस्य सः तथा । दुर्भगशरीप्रविष्टस्यापि दोषलेशो नास्तीत्युक्तं । तत्कुत इत्यतः पूर्णशक्तित्वादित्याह ॥

अनिरुक्तेति । अनिरुक्ता वेदैः साकल्येनानिरूपिता स्वरूपभूता शक्तिर्यस्य स तथा । एतादृशः स भगवान् प्रसीदतामित्यन्वयः । अयमर्थ इयत्ता तु विशेषः स्यादानंदावित्यादि प्रमाणादवगंतव्यः ॥२८॥ स च विश्वरूप इति ब्रह्म जगतो बिंबप्रतिबिंबभावोक्त्या सूचितं भेदं स्पष्टमाह ॥ यद्यदिति । वचसा घट इत्यादि रूपेण निरुक्तं प्रतिपादितं यच्च धियाऽक्षिभिरक्षैर्मनसा च निरूपितं ज्ञातं तत्सर्वं यस्य हरेः स्वरूपं मा भूत् । न भवत्येव तस्य लोकप्रमाणाविषयत्वादिति भावः । वै इत्यनेनालौकिकत्वान्नो विष्णुर्निरुक्तोऽतो निरूपितः। तथापि वेदेषूक्तत्वादुक्तो रूपी स एव चेति स्मृतिसिद्धं दर्शयति । लौकिकत्वालौकिकत्वाभ्यां भेद इति भावः । इतोऽपि भेद इत्याह ॥ गुणेति । गुणपूगबृंहितं सत्त्वादिगुणबद्धं । स हरिस्तु गुणापायनिसर्गलक्षणः । गुणानां सत्त्वादीनां । आपायराहित्यमेव निसर्गलक्षणं स्वाभाविकलक्षणं यस्य स तथा । विरुद्धधर्माधिकरणयोरेतयोर्भेद इति भावः ॥ २९ ॥ ब्रह्मणो जगत्कारणत्वेनापि तस्माद्भेद इत्याह ॥ यस्मिन्निति । यस्मिन्नधिकरणे यतोऽपादानात् । येन करणेन यस्य संबंधि । यस्मै संप्रदानाय । यः कर्ता कुरुते । यदीप्सिततमं यः कर्ता कुरुते स्वतंत्रः कार्यते वाऽन्येन प्रयोज्यकर्ता तेषां सर्वेषां ब्रह्म हेतुरिति । प्रत्येकं संबंधः । प्रातिपदिकार्थकर्मत्वकर्तृत्वकरणत्वसंप्रदानत्वापादानत्वस्वस्वामिभावाद्याधाराधेयभावादिरूपस्येत्यादि सप्त विभक्त्यर्थस्य कुरुत इत्यादि तिङर्थभूतस्य भूतभविष्यद्वर्तमानकालस्य सुप्तिङर्थेषु एकत्वद्वित्वबहुत्वरूपाणां यथेत्युक्तप्रकाराणां च ब्रह्मैव कारणमिति भावः । ननु चतुर्मुखादीनां सृष्ट्यादौ कुलालादीनां च घटादौ कर्तृत्वदर्शनात्कथं ब्रह्मैव सर्वकारणमित्युच्यत इत्याशंक्य तदपि भगवदधीनमेव तस्यैव स्वतंत्रत्वादित्याह ॥ परावरेषां परमामिति । ननु न ब्रह्मणो जगत्कारणत्वमुपपद्यते । ब्रह्मव्यतिरेकेणान्यस्य सृज्यस्याभावात् । एकमेवाद्वितीयं ब्रह्मेति श्रुतेरित्यत आह ॥ अनन्यदिति । न विद्यतेऽन्यत्सदृशं यस्येति तथा । श्रुतिस्तु सदृशद्वितीयपरेति भावः । ननु नरसिंहादीनां संहारकारणत्वदर्शनात् । ब्रह्मैव सर्वहेतुरित्ययुक्तमित्यत आह ॥ एकमिति । सर्वावताराभिन्न इत्यर्थः । सर्वकारणत्वोपयोगिपूर्वभावित्वमाह ॥ प्रागनादितोऽपिस्वत एव सिद्धमिति । तस्मै नम इत्युत्तरेणान्वयः । अयमर्थः सप्तविभक्त्यर्थस्य कालस्येत्यादि प्रमाणादवगंतव्यः ॥३०॥ अनिरुक्तात्मशक्तिरित्येतद्विवृणोति । यच्छक्तय इति वदतां । ब्रह्म निर्गुणं सगुणंवेति विवदतां वादो विवादः संप्रोक्त इति वचनात् । वादिनां यच्छक्तयो यस्य हरेः शक्त्यादि गुणा विवादसं-

वादभुवो विप्रतिपत्तिसंप्रतिपत्तिस्थानानि । तद्विषया इति यावत् । भवंति । केचिद्भगवतो गुणानंगीकुर्वंतीत्यर्थः । उभयेऽपि तत्र मुह्यंतीत्याह ॥ कुर्वंतीति । तेषामुभयेषामपि यच्छक्तय आत्ममोहं स्वविषयकाज्ञानं कुर्वंति जनयंति । उभयेऽपि न जानत इति यावत् । तत्र हेतुमाह ॥ अनंतगुणायेति । योग्या गुणानामानंत्यात्साकल्येन न जानंति । अयोग्यास्तु सर्वथा न जानंतीति भावः । भूम्ने सर्वोत्तमाय ॥ ३१ ॥ विवादसंवादविषयत्वमेवोपपादयाति ॥ अस्तीति । यद्भिन्नयोर्विरुद्धयोर्धर्मयोरपेक्षितं विषयः । किमाकारयोर्मदन्य इश्वरोऽस्ति नास्तीति वादिभिः प्रतिपाद्यमानयोर्भिन्नत्वविरुद्धत्वे कथमत्राह ॥ वस्त्विवाति । भिन्नवस्तुनिष्ठत्वादेकस्मिन्स्थितयोरित्यंगीकारे विरुद्धयोः । यद्यप्येकस्य स्वरूपेण सत्वं पररूपेणासत्वमिति द्वौ धर्मौ स्तः । तथाऽपि नैऽदृश्येते सत्वासत्वे किंतु स्वरूपस्यैवेति द्योतनाय वस्तुनिष्ठयोरेकस्थयोरिति पदद्वयं । यच्च किंचन । अलौकिकं यच्च सांख्ययोगयोःसमं । एकवाक्यतया प्रतिपाद्यं । यच्चानुकूलं । उभयविधज्ञानानुसारेण फलदं तत्परं बृहत् परं ब्रह्म । प्रसीदतामित्युक्तस्यानुषंगः । जीवभिन्न इश्वरोऽस्तीति पक्ष एव श्रेयान् सांख्यादि शास्त्रेषु तथा प्रतिपादितत्वादित्यभिप्रेत्य सांख्ययोगयोः सममित्युक्तं । हि शब्देन तु मदन्यो नास्ति सर्वेश इत्यादि प्रमाणप्रसिद्धिं दर्शयाति ॥ ३२ ॥ ननु पूर्णकामत्वेनोदासीनस्य प्रार्थने को लाभ इत्यत आह ॥ य इति । योऽनंतो भगवान् अनामरूपोऽन्यैर्दृष्टप्रवृत्तिनिमित्तान्यल्पानि वा नामान्यैर्दृष्टानि रूपाणि रुग्मवर्णादीनि च न विद्यंते यस्य स तथा । मूलरूपेण तादृशोऽपि स्वपादमूलं भजतामनुग्रहार्थं जन्मकर्मभिर्जन्माभिरवताररूपैः रूपाणि भेजे व्यक्तो भवति । कर्मभिरुदरे दामबंधनादि कर्मभिर्नामानि दामोदरादीनि भेजे लोकानां ज्ञापयति । स परमः प्रसीदतामित्यर्थः । हि शब्देन तत्कर्मणाम दृष्टत्वादित्यादि प्रमाणसिद्धतामुक्तार्थस्य दर्शयाति ॥ ३३ ॥ यच्छक्त्या विवादसंवादभुव इत्युक्तं स्पष्टयाति ॥ य इति । देहगतो यो भगवान् ज्ञानपथैः सदागमैः प्राकृतैर्दुरागमैश्च ज्ञानकरणैर्निमित्तैर्जनानां यथाऽऽशयमनादिवासनावासितांतःकरणानुसारेण विभाति विविधतया ज्ञानविषयो भवतीत्यर्थः । तत्र दृष्टांतमाह ॥ यथेति । पार्थिवं भौतिकं गुणं देहमाश्रितोऽनिलः प्राणः । यथा जनानां यथाऽऽशयमंतःकरणानुसारेण विभाति तथेत्यर्थः ॥ तदुक्तं ॥ स्वदेहस्थं हरिं प्राहुरधमा जीवमेव तु । मध्यमाश्चाप्यनिर्णीतं जीवाद्भिन्नं जनार्दनं । पूर्णानंदादि गुणकं सर्वजीवविलक्षणं । उत्तमास्तु हरिं प्राहुस्तारतम्येन तेषु च । बुद्धिशुध्द्यनु-

सारेण यथाप्राणं शरीरगं । श्वासमात्रं जनाः प्राहुरनिर्णीतं च मध्यमाः । देवदेवेश्वरं सूत्रमानंदं प्राणवेदिन इति ॥ ३४ ॥ संस्तुवतो दक्षस्य स भगवान्प्रत्यक्षोऽभूत् ॥ ३५ ॥ तं वर्णयाति ॥ कृतपाद इत्यादि सार्धचतुर्भिः । सुपूर्णस्यांसे स्कंधे कृतौ पादौ येन स तथा । प्रलंबा दीर्घा अष्टौ महांतो भुजा यस्य । चक्राद्यष्टायुधधरः ॥ ३६ ॥ प्रसन्नं वदनमीक्षणे च यस्य वनमालया । निवीतं कंठादिपादांतं व्याप्तमंगं यस्य लसंतौ श्रीवत्सकौस्तुभौ यस्य ॥ ३७ ॥ महांति किरीटकटकानि यस्य स्फुरती मकरकुंडले यस्य कांच्यादिभिर्विभूषितो वलयमत्र पादभूषणं दृष्टव्यं । कटकस्योक्तत्वात् ॥ ३८ ॥ सुरयूथपैः सुरयूथपालैः ॥ ३९ ॥४०॥ ह्रदिन्यो नद्यो निर्झरैरिव प्रवाहैः । यथाऽऽपूर्यंते । एवमेव तीव्रयाऽनर्गलया मुदाऽऽपूरितानि मनोद्वाराणींद्रियाणि यस्य स तथा । वागींद्रियाणां महानंदपूर्णत्वेनावृत्तिकत्वान्न किंचिद्वक्तुं शक्तोऽभूत्तदित्यर्थः । यद्यप्यसौ नावोचत्तथाऽपि चित्तज्ञ इदं वक्ष्यमाणमाह ॥ ४१ ॥ ४२ ॥ भावं भक्तिं गतः प्राप्तः ॥ ४३ ॥ यद्यतस्ते तपो बृंहणं प्रजावृद्धिकरं । अतस्तेऽहं प्रीतो मत्त-पसो लोकसमृत्थ्यर्थत्वे त्वत्प्रीतेः किं कारणमत्राह ॥ ममेति । भूतानां विभूतयः समृद्धयो भूयासुरिति यत् । एष एव मम कामः। अतो मत्कामपूरणादेवाहंप्रीतोऽस्मीत्यर्थः ॥ ४४ ॥ भूतविस्तारप्रयत्नश्च तवोचित एवेत्याह ॥ ब्रह्मेति । भवंतः प्रजापतयो मम विभूतयो विशेषाभिव्यक्तस्थानानि । एता विभूतयो भूतैरुद्भवस्य हेतवः ॥ ४५ ॥ विश्वसृष्ट्यर्थत्वेन त्वत्तपसाऽहं प्रीत इत्युक्तं । तदेव तपः स्तुवन् प्रसंगादन्यान्यपि लोकवृद्धिकराणि विद्यादीनि स्तौति ॥ तप इति । अत्र तप आदि शब्दः प्रसिद्धतप आद्या-स्तदभिमानिनो देवाश्च ग्राह्याः । ब्रह्म पूर्णं तपो मे हृदयं प्रियं कुतः । तपोऽभिमानी रुद्रो मम हृदयाज्जातस्तदाश्रितश्चेत्येवं व्याख्येयं । विद्या तदभिमानिन्युमा तनुस्तनोर्जाता तदाश्रिता च । क्रिया क्रियाऽभिमानींद्र आकृतिः शृंगाराद्याकृतेर्जातस्तदाश्रि-तश्च सर्वे क्रतवो यज्ञास्तदभिमानिनो देवाश्चांगान्यंगेभ्यो जातास्तदाश्रिताश्च । शिरो वैतद्यज्ञस्य यत्प्रवर्ग्यो ग्रीवोपसदश्चक्षुष्याद्यभागा-वित्यादि श्रुतेः । धर्मस्तदभिमानी धर्मराजश्चात्मा मध्यदेहाज्जातस्तदाश्रितश्च । असवः प्राणाः सुरास्तदभिमानिनो ब्रह्माद्याश्चा-सवः प्राणेभ्यो जातास्तदाश्रिताश्चेत्यर्थः । एतत्सर्वं तपोऽभिमानी रुद्र इत्यादि प्रमाणादवगंतव्यं ॥ ४६ ॥ तपसः संतानवृद्धि-हेतुत्वं दर्शयितुं द्वितीयतृतीययोरनुक्तमितिहासमाह ॥ अहमेवेत्यादि चतुर्भिः । आंतरं सर्वांतःस्थितं बाहिः सर्वस्माद्बहिरपि स्थितं

संसारप्रवाहपतितानां निर्गमस्थानं तपोविद्यादि । तस्यांते समीपे वेगिता निर्गमप्रतिबंधाय कामक्रोधादिजननलक्षणो वेगो यस्य तां मायां भगवदिच्छालक्षणसामर्थ्यं प्रतिमत्तस्य तद्विषयश्रवणादिशून्यपुंसः । तदविज्ञानात् जननमरणलक्षणसंसारापादकभगवदिच्छाभिमुखीकरणोपायज्ञानाभावात् । असद्भिः कामक्रोधादिकलुषितैस्तप आदिभिः कर्मभिः ॥ १६ ॥ पंचपंचेत्यस्यार्थमाह ॥ पंचविंशतीति । एकादशेंद्रियाणि पंच भूतानि पंच तन्मात्राः प्रकृतिमहदहंकारा जीवश्चेति पंचविंशतिसंख्यानां तत्वानां पुरुषः पूर्णषड्गुणत्वात्पुरुषनामा भगवान् । आश्रय इति शेषः । कीदृशोऽद्भुतदर्शनोऽद्भुतमाश्चर्यं दर्शनं ज्ञानं यस्मात्सः पंचविंशतितत्वाश्रयत्वेन जीवदेहे स्थित्वा ज्ञानप्रद इत्यर्थः ॥ तदुक्तं ॥ अंतस्थः पुरुषो नाम ज्ञानदः सर्वदेहिनां । बहिस्थ ईश्वरो नाम ज्ञानादि फलदो हरिरिति मात्स्ये । अध्यात्मं नियामकत्वेन देहेंद्रियाद्यधिष्ठातारं तं । अबुधस्याविदुषः । असद्भिर्मिथ्यास्वातंत्र्यकृतैः कर्मभिः । अयं श्लोको जीवपरत्वेनाप्यूहनीयः ॥ १७ ॥ क्वचित्ध्वंसमित्यस्यार्थमाह ॥ ऐश्वरमिति । ऐश्वरमीश्वरप्रतिपादकं । विविक्तं विविच्य ज्ञापितं पदं परापरतत्त्वाख्यं वस्तु येन तत्तथा । पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यभिधानात् । अनेन हंसपदं व्याख्यातं । हंसस्यापि क्षीरनीरविवेचकत्वात् । बंधमोक्षावनुदर्शयतीति तथा । अनेन चित्राः कथा यस्येति व्याख्यातं । तच्छास्त्रमुत्सृज्यानभ्यस्य । अत एवाज्ञात्वाऽसद्भिर्बहिर्मुखैः कर्मभिः ॥ १८ ॥ क्षुरांतं च स्वयं भ्रामिमित्यस्यार्थमाह ॥ कालचक्रमिति । भ्रमिमित्येतद्भ्रममित्यनेनानूद्य सर्वजगन्निष्कर्षयेद्भ्रमयेदिति व्याख्यातं । क्षुरांतमित्यस्यार्थस्तीक्ष्णमिति । क्षुरस्यांतो धारा तद्वत्तीक्ष्णमित्यर्थः । स्वयमित्यस्यार्थः स्वतंत्रमिति । भगवदितरेणाप्रवर्त्यमित्यर्थः । एतादृशं कालचक्रमरस्थानीयद्वादशमासोपेतत्वाच्चक्रत्वव्यपदेशः । तत्स्वरूपमजानतः पुंसोऽसत्कर्मभिः स्वर्गादि फलेषु नित्यताबुध्याऽनुष्ठितैः काम्यकर्मभिः । कर्मोचितकालज्ञानाभावादकाले कृतकर्मभिरिति वा ॥ १९ ॥ स्वपितुरादेशमित्यस्यार्थमाह ॥ शास्त्रस्येति । स्वपितुर्द्वितीयजन्महेतोस्तदनुरूपाय निवृत्तिमार्गार्हाय निवर्तकमादेशं यो न वेद स केवलं गुण विश्रंभिगुणमयप्रवृत्तिमार्गविश्वासवान्कथं निवृत्तिमार्गमुपक्रमेत् । अनुतिष्ठेतेत्यर्थः । निवृत्तिमार्गार्हेण पुरुषेण निवर्तकशास्त्रतात्पर्यं ज्ञात्वा भगवानेव भजनीयो न तु सृष्ट्यादिरूपे प्रवृत्तिकर्माणि प्रवाततव्यमिति भावः ॥ २० ॥ इति व्यवसिता एवं नारदोक्तं निश्चितवंतः । एकमेधस एकमत्ययुक्तास्तं नारदं परिक्रम्य प्रद-

क्षणीकृत्यानिवर्तकमपुनरावृत्तिमार्गं प्रययुः ॥ २१ ॥ स्वरब्रह्मणि । षड्जादि स्वरलक्षणि ब्रह्मणि गांधर्वे निर्भाते प्रकाशिते । अखंडमिति क्रियाविशेषणं । मुनिर्नारदः ॥ २२ ॥ नाशमर्दनं । नश अदर्शनेति धातोः । प्रजावृद्धिलक्षणस्वधर्मभ्रंशं वा । शीलेन सत्स्वभावेन सद्वृत्तेन वा शीलंते शोभंत इति तथोक्तास्तेषां । शीलं स्वभावे सद्वृत्त इत्यमरः । को दक्षः सुप्रजास्त्वं सुपुत्रवत्त्वं शुचां शोकानां पदं स्थानं हीति शुकोक्तिः ॥ २३ ॥ अजेन चतुर्मुखेन । सहस्रं संख्या एषामस्तीति सहस्रिणः ॥२४॥ ॥२५॥ परमं ब्रह्म परब्रह्मप्रतिपादकं प्रणवं वक्ष्यमाणमंत्रं वा । तेपुश्चक्रुः ॥ २६ ॥ अभ्यसंत इडस्पतिं । इडां वाचां मंत्राणां पतिं । श्रीविष्णुमाराधयन् आराधयामासुः ॥ २७ ॥ ॐ नामकं भगवंतं धीमहि ध्यायेम इत्यन्वयः । चतुर्थ्यंतानां नमः शब्देनान्वयः । एतदुपासनं न जीवब्रह्माभेदेन कर्तव्यं । किंतु स्वामिभृत्यन्यायेनेति ज्ञापनाय नम इत्युक्तिः ॥ तदुक्तं ॥ मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च । इति ध्येयःसर्वदैव भगवान्विष्णुरव्यय इति । ॐ सकलगुणपरिपूर्णं । ओतस्मिन्जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः । इत्योमिति सदोपास्योऽक्षरः पुरुषोत्तम इति वचनात् । इतरत्सर्वमोंकारव्याख्यानरूपं । देहोऽयं मे सदानंदो नायं प्रकृतिनिर्मितः । परिपूर्णश्च सर्वत्र तेन नारायणः स्मृत इति वचनात् । नारायण शब्दार्थो ज्ञातव्यः । पुरुषेषु सर्वशरीरेषु नियामकत्वेन शेते वर्तत इति शेषः । तस्मै । स वाऽयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनासंवृतमितिश्रुतेः । महान् सर्वोत्तमत्वादिगुणकः । तस्मै । यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिति । यच्चास्य संततो भावस्तस्मादात्मेति भण्यत इति भारतोक्तेः । विशुद्धं निर्दोषं सत्त्वं बलज्ञानादिगुणराशिस्तस्य धिष्ण्याय । आश्रयाय । बलज्ञानसमाहारः सत्त्वमित्युच्यते बुधैरिति वचनात् । महाहंसाय । प्राप्यं प्राप्तं यतो नित्यं पूर्णं सर्वोत्तमं मया । अतः परमहंसोऽहमिति भगवद्वचनात् । ॐ आदि शब्दवाच्याय भगवते । नमो धीमहि । नमस्कुर्म इति वा । इति मंत्रमभ्यस्यंत इति पूर्वेणान्वयः ॥ २८ ॥ प्रजासर्गे धीर्येषां तान् । वाचः कूटान्यदृष्ट्वा तं भुव इत्यादीनि पूर्वोक्तानि प्राह ॥ २९ ॥ पुनरन्यदपि प्राह ॥ दाक्षायणा इति । हे दाक्षायणा निगममुपदेशं पदवीमन्विच्छत । अवलोकयत ॥ ३० ॥ प्रापणं प्रकृष्टं गमनं पुण्यमेव बंधुर्यस्य स तथा । मरुद्भिर्दैवैर्वृंदारकानिर्जराश्च मरुतो बुधवोऽमराः इत्याभिधानात् ॥ ३१ ॥ अमोघदेवदर्शनं यस्य स तथा । हे मारिष आर्य । आर्यस्तु मारिष इत्यभिधानात् ॥ ३२ ॥

सध्रीचीनं समीचीनं प्रत्यग्दृष्टिभिर्गम्यं । परस्य परमात्मनः । अनुपथमनुगुणं पंथानं स्वानुगुणं । भगवन्मार्गमिति यावत् । पश्चिमा यामिनीरतीतराज्य इव ॥ ३३ ॥ प्रजापतिर्दक्षः पुत्राणां पारमहंस्यनिष्ठामुपश्रुत्य दक्षोऽपि प्रायशो निरुक्तःस्यादिति । तदनुग्रहार्थं नारदस्तत्पार्श्वे गतः ॥ ३४ ॥ तदा तमुपलभ्य दक्ष आह ॥ अहो असाधु इति । साधोरिव लिंगं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणामसाध्वकारि कृतं तदेवाह ॥ ३५ ॥ साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्यो मार्गः स प्रदर्शितः ॥ ३६ ॥ ननु संन्यासिनां मार्गः साधुरेव । मोक्षहेतुत्वादिति चेत् । सत्यं । ऋणत्रयापकरणं विना तु महानर्थ एवेत्याह ॥ ऋणैरिति । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणी वा जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वाऽनृणो यः । पुत्री यज्वा ब्रह्मचारीति श्रुत्युक्तप्रकारेण त्रिऋणैरमुक्तानां । तत्र हेतुः । न मीमांसितानि विचारितानि कर्माणि यैस्तेषामिति । अमीमांसितकर्मणां तावद्धयेण यो विमोक्षो नास्ति । ततश्च तदुत्तरकालभाविनोः पुत्रोत्पादनयज्ञानुष्ठानयोरप्यभावेन पितृदेवऋणमुक्तिश्च नास्ति । अतः पापविषयभोगत्यागादिह लोके श्रेयसो विघातः कृतः । मोक्षानधिकारित्वाच्च परलोकेऽपि श्रेयसो विघातः कृत इत्यर्थः ॥ तथा च मनुः ॥ ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षंतु सेवमानः पतत्यध इति ॥ ३७ ॥ बालादीनां मतिं पुत्रादि विषयां भिनत्तीति तथा । एवं निरनुक्रोशो निर्घृणः श्रीहर्यशोनाशकःसन् । तत्पार्षदानां मध्ये चरसि । अतो निरपत्रपो निर्लज्जः ॥ ३८ ॥ निर्लज्जत्वमुपपादयति ॥ नान्विति । ननु त्वामृते भागवताः सर्वेऽपि भूतानुग्रहपरवशाः । त्वं तु भूतविप्रियं कुर्वन् कथं न लज्जस इति भावः ॥ ३९ ॥ ननु वैराग्ये उपशम उपशमे च स्नेहपाशच्छेदनं भवति । न च विरक्तस्य ऋणत्रयापकरणमावश्यकं । यदहरेव विरजेत्तदहरेव प्रव्रजेत् । यदि वेतरं या ब्रह्मचर्यादेव प्रव्रजेदिति श्रुतेः । अतो वैराग्योपदेशेन तेषां मयाऽनुग्रह एव कृत इति चेत्तत्राह ॥ नेत्थमिति । विनेत्यनंतरं विषयानुभवमिति शेषः । यद्यपि त्वमेव मन्यसे तथाऽपि केवलिना ज्ञानाभावेऽपि केवलं वेषमात्रधारिणा त्वया इत्थं मतिचालने कृते विषयानुभवं विना पुंसो विरागो नैव स्यात् । न च विरागं विनोपशमः । न च तेन विना स्नेहपाशनिकृंतनमित्यर्थः ॥ ४० ॥ विषयानुभवं विना पुंसो विरागो न जायते । इत्येतद्दृष्टिणोति ॥ नानुभूयेति । नानुभूय विष-

याणां तीक्ष्णतां । दुःखहेतुत्वं न जानाति । तस्माद्विषयानुभवेन तीक्ष्णत्वज्ञानात् । पुमान्स्वयमेव यथा निर्विद्येत विरक्तो भवति
तथेतरैर्भिन्नधीश्चालितबुद्धिः । न निर्विद्येतेत्यन्वयः ॥ ४१ ॥ अतस्त्वयाऽस्माकमप्रियमेव कृतं यत्तथाऽप्यस्माभिः क्षांतमित्याह
यदिति । कर्मणि प्रजावृद्धिलक्षणभूतानां नियुक्तानां नो दुर्मर्षं दुःसहं यद्विप्रियमहितं कृतवानासि तन्मर्षितं सोढव्यं ॥ ४२
तथाऽपि द्वितीयापराधादभद्रं भविष्यत्येवेत्याह ॥ तंतुकृदिति । हे तंतुकृत् । संतानच्छेदककृती छेदनेति धातोः । यद्वा । तंतुकृ
नयानामित्येकं पदं वा । तंतुकृतां संतानवृद्धिकराणां तनयानामभद्रं स्थानभ्रंशं पुनर्द्वितीयवारं यद्यस्मादचरस्तस्माद्धे मूढ लो
भ्रमतस्ते पदं स्थानं न भवेदिति । मृदुच्छलेन शापः ॥ ४३ ॥ बाढं तथेति । प्रतिजग्राह स्वीकृतवान् । ननु नारदः समर्थो
किमर्थं न प्रतिशप्तवानित्यतः साधूनां स्वभावस्तादृश इत्याह ॥ एतावानिति । ईश्वरोऽपि स्वयं प्रतिशप्तुं समर्थोऽपि तितिक्षेत
यदेतावान्साधूनां वादः । हीत्यनेन साधूनां भूषणं क्षमेति स्मृतिप्रसिद्धिं दर्शयति ॥ ४४ ॥ इति श्रीभागवताट्टिप्पण्यां पंचा
ध्यायः ॥ ६-५ ॥

॥ हरिः ॐ ॥ प्राचेतसो दक्षः । अनुनीतः सांत्वितः । नारदात्पुत्राणां नाशमाशंकमानो दुहितॄर्जनयामासेति भावः ॥
कालस्य नयने ज्ञापने ॥ २ ॥ ताक्ष्यीयारिष्टनेमिसंज्ञायापरा अवशिष्टाश्चतस्रः । ददाविति सर्वत्रानुषंगः । सापत्यानामपत्यस
तानां । मे मत्तः ॥ ३ ॥ प्रसूतिप्रभवैः पुत्रपौत्रादिभिः ॥ ४ ॥ ततो विद्योतान् स्तनयित्नवः । यतः संकटात् । कीकटस्त
जातः । भुवो भुमेर्दुर्गाण्यगम्यस्थानानि तदभिमानिनो देवा जामेयास्ताभ्यः पुत्राः स्वर्गः स्वर्गाभिमानी देवोऽपि जामिपुत्रस
स्वर्गान्नंदिः ॥ ६ ॥ अप्रजान्पुत्ररहितान्। तत्सुतः साध्यानां सुतः ॥ ७ ॥ ८ ॥ मौहूर्तिका दिनावयवभूतमुहूर्ताभिमानिनो देवा
स्वस्वकालजं स्वस्वमुहूर्तानुष्ठितकर्मजन्यफलं । यथा स्वनामानुसारेण प्रयच्छंति ॥ ९ ॥ वसोर्वंशस्य भूयस्त्वादंते निर्देशः
मत्तः ॥ १० ॥ विभावसुरिति तेषां नामानीति शेषः । द्रोणस्याभिमान्यभिमानाभिमानित्वादभिमतिनाम्नी पत्नी आसी
हर्षादयो हर्षाद्यंतःकरणधर्मदेवताः । तस्याः पुत्रा इति शेषः । सह आदयस्त्रय ऊर्जस्वत्याः पुत्राः ॥११॥ पुरः पुराणि । तद
मानिनो देवान् ॥ १२ ॥ अग्नेर्भार्या वसोर्धारा नाम्नी ॥ १३ ॥ स्कंदश्च कृत्तिकासु जातोऽग्नेः पुत्रः षण्मातुर इति । अग्निभा

प्रसिद्धेः । ततः स्कंदाच्छर्वरी नामभार्या ॥ १४ ॥ आंगिरसी नामभार्या कृती कर्मसु निपुणः ॥ १५ ॥ पतिः शिल्पाचार्यः कृत्या देव्याः पतिरित्येकं पदं वा । ततो विश्वकर्मण उषा भार्या । अथातपात् । पंचयामो दिवसो जातः । अत एव रात्रिस्त्रियामप्रदोषप्रत्यूषयोर्दिवसावयवत्त्वात् । अत्र सर्वत्र तप आदि शब्दैरभिमानिनस्तदभिमन्यमानाश्च ग्राह्याः । येन दिवसेन भूतानि प्राणिनः कर्मसु विषयेषु जाग्रति जागरं प्राप्नुवंति ॥ १६ ॥ भूतस्य द्वे भार्ये तयोर्वंशमाह ॥ सुरूपेति । सुरूपा नाम्नी भार्या कोटिशो रुद्रानसूत ॥ १७ ॥ तत्र प्रधानानां नामान्याह ॥ रैवत इति । महानित्येकादशरुद्राः । प्रधाना इति शेषः । रुद्रपार्षदान्घोरान्प्रेतादींश्च । अन्यान् अन्यस्यां भार्यायां जातान् । विद्धीति शेषः ॥ १८ ॥ आंगिरसः स्वधा सती चेति द्वे भार्ये । तयोर्वंशमाह ॥ प्रजापतेरिति । स्वधा नामपत्नी पितॄन्पुत्रत्वेऽकरोत् । अथ सती अथर्वांगिरसं नाम वेदं पुत्रत्वेऽकरोदित्यन्वयः । ॥ १९ ॥ कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये । तयोर्वंशमाह ॥ कृशाश्व इति । वेदशिर इति कृशाश्वस्य नामांतरं ॥ २० ॥ यामिनीति चतस्रो भार्या इति शेषः । विवक्षाधीनत्वात्संधेस्तदभावादभावः । तासां वंशमाह ॥ पतंगीति । अनूरुं वरुणं च विनतासुतेत्यन्वयः ॥ २१ ॥ २२ ॥ रोहिण्यामेव प्रेमातिशयेनान्यासामुपेक्षणात् । कुपितस्य दक्षस्य शापाद्यक्ष्मग्रहार्दितः । क्षयरोगपीडितः सन् तास्वपत्योऽभूत् ॥ २३ ॥ तं दक्षं प्रसाद्य केवलं कला एव लेभे नत्वपत्यानि । कथंभूताः क्षयेधिताः कृष्णपक्षे क्षये सति शुक्लपक्षे पुनरेधितास्तेनैव विवर्धिताः सतीः । वध्यभावार्षः । शंकराणि सुखकराणि ॥ २४ ॥ २५ ॥ अल्पत्वेन सुगमत्वाद्यथायथं व्युत्क्रमेण तासां वंशमाह ॥ तिमेरित्यादिना ॥ २६ ॥ २७ ॥ भूरुहा वृक्षाः । सौरसाः सुरसायाः पुत्राः ॥ २८ ॥ द्विशफेतरा एकशफास्तेषां मध्ये प्राधानिकं प्रधानविषयसंख्यानं शृणु ॥ २९ ॥ दुर्जय इत्येतेऽष्टादशप्रधाना इति शेषः ॥३०॥३१॥३२॥ वैश्वानरो दनोः पुत्रस्तस्य सुताया उपदानवीत्यादयश्चतस्रस्तासां मध्ये उपदानवी हिरण्याक्षमुपयेमे । इत्यादिरन्वयः ॥ ३३ ॥ दानवी परिण्यायने हेतुर्ब्रह्मणाचोदित इति ॥ ३४ ॥ तयोः षष्टिसहस्राणि पौलोमकालेयानां मानः । निवातकवचाः पुत्रा जाताः ॥ ३५ ॥ ते च स्वर्गं गताः सन् ते पितुरभिमन्योः पिताऽर्जुनो जघान ॥ ३६ ॥ शतमेकं चाजीजनत् । तदेव विवृणोति ॥ राहुज्येष्ठमिति । राहुर्ज्येष्ठो यस्य तत्केतुशतमजीजनत । इत्युरुक्रम इत्येते द्वादश अदितेः । पुत्रा इति शेषः ॥ ३८ ॥ संज्ञा नाम्नी

भार्या श्राद्धदेवं वैवस्वतं मनुं ॥ ३९ ॥ ४० ॥ भुविवर्तमाना भार्या विवस्वतः । अपरा भार्या सौवर्णे नामराजानं ॥ ४१ ॥ मातृका नामपत्नी ॥ ४२ ॥ ४३ ॥ कुपितं । हरिमिति शेषः । विवृतद्विजः प्रकटितदंतः सन् ॥ ४४ ॥ तया रचनया । यत् यदा विमतेनावज्ञातेन गुरुणा बृहस्पतिना परित्यक्ताः । तदा द्विषतां शत्रूणां स्वस्त्रियं भागिनेयमपि तं विश्वरूपं वव्रिरे । पौरोहित्ये व्रतवंत इत्यन्वयः ॥ ४५ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ६-६ ॥

॥ हरिः ॐ ॥ गुर्ववज्ञाऽनर्थकरी महतामपि यत्ततो गुरुः संपूज्य इत्येतदध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ यस्य हेतोः । आचार्येणात्मनः शिष्याः सुराः परित्यक्ताः । आत्मन आचार्येणेति वा । एतदाचक्ष्व । तस्यैव विवरणमक्रममाचक्ष्वेति । अक्रममपराधं ॥ १ ॥ इंद्रो यदा संप्राप्तं वाचस्पतिं नाभ्यनंदितवान् । तदांऽगिरसः कविः सर्वज्ञोंऽगिरसो बृहस्पतिस्ततो निर्गत्य तूष्णीं स्वगृहमाययावित्यष्टमेनान्वयः । अनादरे हेतुं मदं दर्शयितुं तं विशिनष्टि ॥ त्रिभुवनेत्यादिना । त्रिभुवनैश्वर्यमदोल्लंघितः सतां पंथा येन स तथा । परिश्रितो ललितमिति क्रियाविशेषणं । आस्थानसभा तस्मिन्नध्यासनं सिंहासनं तदास्थितः । पारमेष्ठ्यैर्महाराजचिन्हैः । आसनार्धे स्थितया पौलोम्या सह विराजमानः । प्रत्युत्थानादिभिः । नाभ्यनंदत न चोच्चचाल । आसन एव स्थितोऽपि किंचिन्न चलितवान् । एकैकमपि पूज्यत्वे हेतुरिति ज्ञापनाय वाचस्पतिमित्यादि विशेषणबाहुल्यं । श्रीमदेन या विक्रिया विकारस्तां विद्वान् जानन् ॥ २-९ ॥ हेलनमवज्ञां । प्रतिबुध्यानुस्मृत्य ॥ १० ॥ आत्मानं गर्हयामासेत्युक्तमेव विवृणोति ॥ अहो इति । मया कृतं कर्म अहो असाधु यद्यस्माददभ्रबुद्धिनाऽल्पबुद्धिना मया काकृतः तिरस्कृतः ॥ ११ ॥ त्रिविष्टपपतेरपि लक्ष्मीं कःपंडितो गृध्येत् अभिकांक्ष्यते । गृध अभिकांक्षायामिति धातोः । विबुधानां सात्विकानां देवानामीश्वरोऽप्यहं ॥ १२ ॥ ननु सिंहासनास्थितो राजा प्रत्युत्थानं न कुर्यादिति वृद्धा वदंतीति चेत्तत्राह ॥ य इति द्वाभ्यां । पारमेष्ठ्याधिषणं राजासिंहासनं ॥१३ ॥ कुपथं दिशंत्युपदिशंतीति कुपथे द्रष्टारस्तेषां वचोऽश्ममयः पाषाणमयः प्लवो येषां ते यथा मज्जंतं प्लवमनुमज्जंति तद्वत् ॥ १४ ॥ यत एवमनर्थोऽथ तस्मात् । अगाधा गंभीरा धिषणा बुद्धिर्यस्य तं । विशठः शाठ्यरहितः सन् ॥ १५ ॥ अध्यात्ममायया योगगसामर्थ्येन । अदृष्टां गतिमदृश्यलक्षणां स्थितिं ॥ १६ ॥ गुरोःसंज्ञां ज्ञानोपायं परीक्षमाणोऽपि नाधिगतोऽप्राप्तः सन् ॥ १७ ॥

आततायिन उद्यतास्त्राः ॥१८॥ निर्भिन्नान्यंगान्युत्तमांगानि शिरांस्युरवो बाहवश्च येषां ते तथोक्ताः ॥१९॥ वो कृतं कर्म महदभद्रं ॥ २० ॥ तदेवाह ॥ ब्रह्मिष्ठमिति । नाभ्यनंदथ नाभिनंदितवंतः ॥२१॥ परेभ्यः शत्रुभ्यः समृद्धानामपि वः पराभव इति । यदयं तस्या नयस्य संबंधिफलरूप आसीदित्यन्वयः । कीदृशेभ्यः । स्वयमेव देवा एव वैरिणो हंतारो येषां तेभ्यः ॥ २२ ॥ गुरुतिरस्कारसत्कारावेवापचयोपचयकारणमित्यसुरदृष्टांतेनाह ॥ मघवन्निति । द्विषतः शत्रून् काव्यं शुक्रं गुरुमेवाराध्योपचितान् ॥ २३ ॥ उपचितत्वमेवाह ॥ आददीरन्निति । भृगुः शुक्रो देवता येषां ते । मम निलयनं सत्यलोकमप्याददीरन् गृह्णीयुः । मंत्रा इति । मत्वर्थीयाच् प्रत्ययांतः शब्दः । मंत्रा भृगूपदेशमंत्रवतो भृगूणामनुशिक्षितार्थः । अन्येषाममेयमपि शिष्याः स्वर्गं गणयंति लक्ष्मीं न गणयंत्येवेत्यर्थः । यतो विप्रा गोविंदो गावश्चेश्वरा अनुग्राहका येषां तेषामेवाभद्राणि न भवंति । अन्येषां तु भवंति ॥ २४ ॥ तत्तस्मादनंतरमेव विश्वरूपं भजतां कीदृशमात्मवंतं वशीकृतमनसं त्वाष्ट्रं त्वष्टुः पुत्रं । अस्य विश्वरूपस्य यदसुरपक्षपातिरूपं कर्म तत्क्षमध्वं । यदि क्षमिष्यथ तर्हि स विश्वरूपः सभाजितः प्रीत्या सेवितः सन् । सभाजनप्रीतिसेवनयोरिति धातोः ।। अर्थानभीष्टानि विधास्यते । करिष्यतीत्यन्वयः । ॥ २५॥ ते देवा उदिता उक्ता विगता ज्वरा गतसंतापाः ॥२६॥ पितॄणामस्माकं विश्वरूपापितुस्त्वष्टुर्देवत्वात्समयोचितः एतत्कालयोग्यः ॥२७॥ सतां पुत्राणां पितृशुश्रूषणं परो धर्मः पुत्रोत्पादनेन पितृऋणनिवृत्तावपि पितृशुश्रूषणं न हातव्यमित्याह ॥ पुत्रवतामिति । पुत्रविशेषणमेतत् । ब्रह्मचारिणां पितृशुश्रूषणं परमो धर्म इति किमु वक्तव्यं । पुत्रोत्पादनाभावेन ऋणविमोचनस्यैवाभावादिति भावः ॥२८॥ अतिथीनां पितॄणां च प्रशंसनार्थमाह ॥ आचार्य इति । आचार्य उपनीय वेदाध्यापकः ॥ तदुक्तं ॥ शिष्यमध्यापयति यः कृत्वोपनयनादिकं । सहकल्परहस्याभ्यामाचार्यः स निगद्यत इति ॥ ब्रह्मणश्चतुर्मुखस्य मूर्तिरधिष्ठानं । प्रजापतेः रुद्रस्य । प्रजापतिः शिवः स्थाणुरुमेशो वृषवाहन इत्यभिधानात् । मरुत्पतेरिंद्रस्य ॥२९॥ दयाया दयाभिमानिदेवतायाः । धर्मस्य धर्मराजस्याज्ञातकुलगोत्रस्तत्क्षणमेव समागतोऽतिथिः स्वयं साक्षान्मूर्तिर्मुख्याधिष्ठानं ज्ञातकुलगोत्रो ग्रामांतरादागतोऽभ्यागतः । आत्मनः परमात्मनः सर्वभूतानि मूर्तिरधिष्ठानं । एकोदेवः सर्वभूतेषु गूढ इति श्रुतेः । आचार्यादीनां पूजनेन तत्सन्निहिता ब्रह्मादयो देवाः प्रीणंतीति भावः ॥३०॥ परेभ्यः पराभव एवेति ॥३१॥ तां संदेशमेवाहुः ॥ वृणीमह इति । त्वा त्वां ॥३२॥ ननूपाध्या-

यत्त्वे कनिष्ठस्य ममाभिवंदनं करिष्यथ । तच्च गर्हितमिति चेत्तत्राहुः ॥ नेति । अर्थेषु प्रयोजनं निमित्तं । यविष्ठांश्च्याभिवादनं न निदंति । किंच छंदोभ्योऽन्यत्र मंत्रेभ्योऽन्यत्र वयो ज्येष्ठस्य कारणं न भवति । किंतु वेदा एव मुख्यं कारणं तत्साम्ये तु वयः । अतो वेदज्ञत्वात्त्वमेव ज्येष्ठ इत्यर्थः ॥३३॥ पौरोहित्यार्थं । श्लक्ष्णया मधुरया ॥३४॥ निंदितमपीदं युष्मद्याच्ञाभंगभयेन करिष्यामी-त्याह ॥ विगर्हितामिति सार्धश्लोकेन । अपि गर्हितं पौरोहित्यं । धर्मशीलैरधर्महेतुत्वात्किंच ब्रह्मवर्चं उपव्ययं ब्रह्मवर्चसव्ययकरं । प्रत्याख्यातुं च मादृशोनार्हतीत्याह ॥ कथंन्विति । हे नाथाः । तच्छिष्यस्तेषां लोकेशानां शिष्यः शिक्षणार्हः । परकार्यत्वेन निरा-कार्यमिति तत्राह ॥ स एवेति । स एव प्रत्याख्यानाभाव एव हि शिष्यस्य स्वार्थ उच्यते ॥ ३५ ॥ ननु पौरोहित्येन धनलाभो धर्मः सिध्येत् । अन्यथा निर्धनस्य कुतो धर्मः । अत एव तेन लोको हृष्यतेति चेत्तत्राह ॥ आकिंचनानामिति । अकिंचनानां शिलोंछनं हि धनं । क्षेत्रस्वाम्युपेक्षितकणिशोपादानं शिलाहस्तादापतितव्रीह्याद्युपादानं । तच्छांतेनैव निवर्तिता निष्पादिताः । साधूनां सत्क्रिया येन स तथोक्तः ॥ ३६ ॥ कियदेतत्प्रार्थनं । अल्पमेवात्यधिकमपि करिष्यामीत्याह ॥ भवतामिति ॥ ३७ ॥ परमेण समाधिना । परमोद्यमेन ॥ ३८ ॥ औशनस्या शुक्रसंबंधिन्या विद्यया गुप्तामप्याच्छिद्याहृत्य वैष्णव्या विष्णुदेवताकया नारायणकवचाख्यया मायया विद्यया ॥ ३९ ॥ असुरचमूर्दैत्यसेनाः ॥ ४० ॥ कक्ष्यां कवचलक्षणां रक्षां ॥४२॥ इति श्रीभा-गवतटिप्पण्यां सप्तमोऽध्यायः ॥ ६-७ ॥

॥ हरिः ॐ ॥ मुमुक्षूणां कामिनां च समस्तपुरुषार्थदं । नारायणाख्यकवचमध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ सैनिकान् सेनानायकान् । त्रैलोक्यां त्रिलोकसंबंधिनीं ॥ १ ॥ वर्म शब्दापेक्षया तदिति नपुंसकलिंगप्रयोगः । वर्म स्वरूपं दृष्ट्वा जयप्रकारं पृच्छति ॥ यथेति । आततायिन उद्यतशस्त्रान्येन वर्मणा गुप्तो रक्षितः । यथा येन प्रकारेणाजयत् । तं प्रकारं चाख्याहि ॥ २ ॥ ॥ ३ ॥ धौतेत्यारभ्य विष्णवे नम इत्यंतेन ग्रंथेनैतद्वर्मधारणे इत्थं भावमाह ॥ मंत्राभ्यां । नारायणाष्टाक्षरवासुदेवद्वादशाक्षराभ्यां कृतस्वांगेषु करयोश्च न्यासो येन स तथा । वाग्यतो मौनी । ॥ दैवभूतात्मकर्मभ्यः । दैवेभ्योऽनावृष्ट्यादि लक्षणेभ्यो भये आगते सति । पुमान्नारायणमयं नारायणपरं वर्म संनह्येत् बध्नीयादित्यन्वयः । कीदृशः सन् । नारायणमयो भगवान्सर्वोत्तम इति ज्ञान-

वान् ॥ तदुक्तं ॥ मयं प्रधानमुद्दिष्टं प्राधान्यं यैर्हरेर्मतं । भगवन्मयास्ते विज्ञेयास्ते मुच्यंते न चापर इति ॥ ५ ॥ तत्राष्टाक्षरस्व रूपं दर्शयन्पादाद्यंगेषु तदक्षरन्यासमाह ॥ पादयोरिति सार्धश्लोकेन । प्रणवसंपुटितमोंकाराद्येकैकमक्षरं पादाद्यष्टांगेष्वानुपूर्व्यात । यथा यथा क्रमं विन्यसेत् । संहारन्यासं कुर्यादित्यर्थः । विपर्ययं यथा भवत्येवं वा । शिर आदि पादांतं वा विन्यसेत् । उत्प- त्तिन्यासं वा कुर्यादित्यर्थः । अथाऽपीत्यनेन स्थितिन्यासमपि समुच्चिनोति । वा शब्दो न विकल्पार्थः । किंतु समुच्चयार्थः । सर्वाश्रमिणामपि न्यासत्रयस्य कर्तव्यत्वात् ॥ तदुक्तं तंत्रसारे ॥ सृष्टिस्थितिलयन्यासाः प्रतिलोम्यानुलोमतः । स्थित्यंता एव वर्णानां श्रेष्ठा एव चतुर्दश । संहृत्यंता मोक्षिणां च एकविंशतिरेव वेति । अंगन्यासमुक्त्वा करन्यासमाह ॥ करन्यासमिति । विद्यया मंत्रेण द्वादशाक्षरमुच्चरन् । करन्यासमेवाह ॥ प्रणवादिति । अंगुल्योर्दश । अंगुष्ठयोः पर्वाणि द्वे । एवं द्वादशस्थानानि । तत्र प्रणवसंपुटितमेकेकमक्षरं दक्षिणांगुष्ठमारभ्य वामांगुष्ठपर्यंतमंगुलिषु । अवशिष्टं वर्णद्वयमंगुष्ठपर्वणोश्च क्रमेण न्यसेदित्यर्थः । केचित्तु । एकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यंतमंगुलिषु परिशिष्टमक्षरचतुष्टयं । अंगुष्ठयोराद्यंतपर्वसु संन्यसेदित्याहुः ॥ ६ ॥ ७ ॥ मंत्रांतरन्यासमाह ॥ न्यसेदिति । प कार ण कारयोर्विश्लेषेण प्रणवादि षडाक्षराणि हृदयादिषु न्यसेत् । अनु ओंकारमनुगतमिति विकारमित्यादि द्वितीयांतैः प्रत्येकमन्वयः ॥ ८ ॥ शिखया शिखायां ॥ ९ ॥ मकारमस्त्रमुद्दिश्यास्त्रत्वेन ध्यात्वा मंत्रमूर्तिः । मंत्रदेवतासंनिहितशरीरो भवेदिति न्यासफलकथनं । बुध इत्यनेन मंत्रवर्णदेवताऽनुस्मरणं सूचयति । मकार- मस्त्रमुद्दिश्येत्युक्तं विवृणोति ॥ सविसर्गेति । विसर्गेण सहितं सविसर्गं फट् कारः । अंते यस्य तत् फडंतं तत् मकारास्त्रं सर्वदिक्षु । विनिर्दिशेत् मः अस्त्राय फडित्येवं दिग्बंधे विनिर्दिशेदित्यर्थः ॥ १० ॥ मंत्रोद्धारणपूर्वकं मंत्रदेवताध्यानमाह ॥ ॐ विष्णवे नम इति । एतन्मंत्रप्रतिपाद्यं परमात्मानं ध्यायेत् । कीदृशं षट्शक्तिभिर्भगवच्छब्दवाच्याभिः । ऐश्वर्यादिभिर्युतं । इमं वक्ष्यमाणं श्रीनारा- यणकवचाख्यं मंत्रं । तत्फलमाह ॥ विद्येति । विद्यातेजस्तपसो मूर्तिः पात्रं भवति । यद्वा । एतद्विद्यायामधिकारिणमाह ॥ विद्येति । ईश्वरस्यात्मनश्चापि ज्ञानं विद्येहोच्यत इत्युक्तलक्षणा विद्या । तेजो ब्रह्मवर्चसं । श्रुतमध्ययनं शीलं तप इत्युच्यते बुधैरित्युक्तलक्षणं तपः । तेषां मूर्तिराश्रयः सन् । इमं मंत्रमुदाहरेदित्यर्थः ॥ ११ ॥ हरिर्विदध्यादित्यारभ्य स्वतेजसा ग्रस्तसमस्ततेज इत्यंतं कवच-

स्वरूपं । हरिर्हयाख्यमूर्तिः सर्वरक्षां सर्वेषु देशेषु सर्वेषु कालेषु सर्वापद्भ्यश्च रक्षामष्टगुणोऽणिमाद्यष्टैश्वर्ययुक्तः । सृष्ट्याद्यष्टगुणो वा । अष्टा व्याप्ताः पूर्णा गुणा यस्येति वा । अशू व्याप्ताविति धातोः ॥ १२ ॥ यादांसि जलजंतव इत्यतो वरुणपाशस्य यादोगणांतर्भूतत्वेऽपि तद्ग्रहणस्य मरणाविनाभूतत्वेन तत्परिहारार्थं पृथग्गृहणं ॥ १३ ॥ मायया स्वेच्छया वटुरूपो वामनः ॥ १४ ॥ विश्वरूपो व्याप्तरूपः । अटवी आजिमुख्यं । संग्रामोपक्रमश्चादिर्येषां तेषु दुर्गेषु संकटस्थानेषु । असुरस्त्रीणां गर्भाः असौ प्रसिद्धो वराहो मामध्वनि रक्षतु । यज्ञान्स्वावयवैः कल्पयतीति यज्ञकल्पः । उन्नीता उद्धृता धरा येन सः ॥ १५ ॥ अद्रिकूटेषु गिरिशिखरेषु । रामो जामदग्न्यः । विप्रवासे विविधप्रवासे भरताग्रजो दाशरथी रामः । उग्रधन्वाऽखिलादिति संध्यभावः छंदःसाम्यद्योतनाय । नारायणः । प्रमादाद्भगवद्विस्मृतिः सदा विष्णोरन्यथाज्ञानवर्जनं । शास्त्राभ्यासःसदोद्योगाच्छ्रवणाच्च विचारतो निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदाऽप्रमाद इति प्रोक्त इति । नरोनरांतःस्थो भगवान् विष्णोर्वायोरनंतस्य त्रिभिरंशैर्नरः स्मृत इति वचनात् । योगनाथोऽष्टांगयोगप्रवर्तको दत्तो दत्तात्रेयोऽयोगाद्योगभ्रंशात् । गुणेशो गुणमयबंधननिवर्तनसमर्थः ॥ १६ ॥ सनत्कुमारस्तन्नामा भगवान् कामदेवात्कामदेवकृतायोग्यकामनादवतु ॥ तदुक्तं ॥ सनत्कुमारनामा तु ब्रह्मचर्यवपुर्हरिः । सनत्कुमारमपरं ब्रह्मपुत्रं विवेश यः । स मां योग्येतरात्कामात्पातु विश्वेश्वरः प्रभुरिति । पथि यद्देवानां हेलनं नमस्कारमकृत्वा गमनं तस्मात् । देवर्षिवर्यो देवानां ब्रह्मादीनां ऋषीणां च वर्यः श्रेष्ठः । अनेन महिदास उक्तः । महितो महांतो ब्रह्मादयो दासा यस्येत्यनेन समानार्थकत्वात् । पुरुषांतरार्चनाद्भगवत्परिवारतां विना प्राधान्येन भगवदितरब्रह्मादि पुरुषपूजनात् । इदमुपलक्षणं । भगवदनर्पितकर्मभ्यस्तद्विस्मरणतश्चेत्यपि ग्राह्यं ॥ तदुक्तं ॥ विष्णोरपरिवारत्वदृष्ट्या देवांतरार्चनात् । महिदासो देवऋषिः पातु मां विष्णुरव्ययः । तदनर्पितकर्मभ्यस्तदस्मरणतस्तथेति ॥ १७ ॥ ऋषभो ऋषभनामा भगवान् । द्वंद्वात् शीतोष्णादेर्भयात् । यज्ञो यज्ञनामको भगवान् । लोकाज्जनापवादान्नोऽस्मान् । तत्कृतात् लोककृतोपघातात् बलो बलभद्राविष्टो भगवान् ॥ तदुक्तं ॥ शंखचक्रभृदीशेशः श्वेतवर्णो महाभुजः । आविष्टः श्वेतकेशात्मा शेषांशं रोहिणीसुतामिति माहावाराहे । अहींद्रः शेषाविष्टो भगवान् । क्रोधवशाद्गणात्सर्पगणात् ॥ १८ ॥ संप्रमोहो मिथ्याज्ञानं । मोहश्चैव विपर्ययमिति भारतोक्तेः । अधर्मेच्छावासं प्रमोहो धर्मकामितेति वचनात् ।

पाषंडगणात्प्रमादात् । पाशुपतादि दुःशास्त्रसमूहः पाषंडगणस्तच्छ्रवणादिप्राप्तात्प्रमादात् । बौद्धपाशुपताद्यास्तु पाषंडा इति कीर्तिता इति वचनात् । कालमलात् कालस्य मलभूत्कलेः कलिकधर्मावनाय धर्मरक्षणाय । उरुर्महान्कृतोऽवतारो येन स तथोक्तः ॥ १९ ॥ ॥ २० ॥ अत्रान्हो भागा मुनिमतभेदेन पंचधा विकल्पंते ॥ तदुक्तं कालमाधवीये ॥ द्विधा त्रेधा चतुर्धा पंचधा पंचदशधा वा । अहर्विभज्यत इति । पंच मतभेदा इति । तत्र द्वेधा विभागःस्कांदे दर्शितः । आवर्तनात्तु पूर्वाण्हो ह्यपराण्हस्ततः पर इति च । आवर्तनं मध्यान्हस्त्रेधाविभागोऽपि तत्रैवोक्तः । ऊर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्तानां च पंचकं । पूर्वाण्हः पंचकः प्रोक्तो मध्यान्हस्तु ततः परं । अपराण्हस्ततः प्रोक्तो मुहूर्तानां च पंचकमिति । चतुर्धा विभागस्तु गालवेनोक्तः । पूर्वाण्हः प्रहरं सार्धं मध्यान्हः प्रहरं तथा । आतृतीयादापराण्हः सायान्हश्च ततः परमिति । पंचधा विभागो व्यासेनोक्तः । मुहूर्तात्त्रितयं प्रातस्तावानेव तु संगवः । मध्यान्हस्त्रिमुहूर्तं स्यादपराण्हश्च तादृशः । सायान्हस्त्रिमुहूर्तस्तु सर्वकर्मसु गर्हित इति ॥ पंचदशधा विभागश्च शंकेनोक्तः ॥ शास्त्रश्चैत्रश्च मैत्रश्च तथा सालकटः स्मृतः। सावित्रश्च जयंतश्च गांधर्वः कुतपस्तथा। रोहिणश्च विरंचश्च विजित्यो नैर्ऋदस्तथा । महेंद्रो वरुणश्चैव भेदाः पंचदशस्मृता इति । एवं च द्वेधेत्यादि मुनिमतचतुष्टयग्रहणाभिप्रायेणान्हो भागेषु रात्रौ च प्रदोषादि संज्ञकेषु भागेषु रक्षा प्रार्थना क्रियते । मां केशव इति त्रिभिः । गदयायुक्तः केशवः प्रातः सूर्योदयमारभ्य मुहूर्तत्रयात्मके कालेऽव्यात् । आत्तशक्तिरात्ता गृहीता शक्तिरायुधं येन स नारायणः प्राण्हे मुनिमतभेदेन त्रिविधे पूर्वाण्हेऽव्यात् । अरींद्रश्चक्रश्रेष्ठः पाणौ यस्य स विष्णुर्मध्यंदिने त्रिविधे मध्यान्हे पातु । मधुं हंतीति मधुहा । हंतेः क्विप् ।ब्रह्मभ्रूणवृत्तेषु क्विबिति नियमस्य प्रायिकत्वात् । यथा हन्या सकारः। प्रायिकश्चायं नियमः । क्वचिदन्यस्मिन्नप्युपपदे दृश्यते । मधुहेति प्रायिकत्वं च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यत इति । मधुसूदनो देवोऽपराण्हे चतुर्विधेऽव्यात् । अनंतासनवैकुंठश्वेतद्वीपाख्यानि त्रीणि धामानि यस्य । स माधवः सायंकाले चरममुहूर्तत्रयात्मकेऽवतु। यत्तु श्रीधरेण व्याख्यातं । दिनस्य बहुभागेषु क्रमेण प्रातरादि संज्ञकेषु रक्षाप्रार्थनमिति। तन्न। तदुक्तप्रकारेण षोढा विभागस्य कुत्राप्यदर्शनादिति । दोषे हृषीकेशोऽवतु । अर्धरात्रपर्यंते काले निशीथे उत निशीथे च एक एव पद्मनाभोऽवतु ॥ २१ ॥ अपरात्रौ ईशः समर्थः श्रीवत्सलक्ष्मा श्रीवत्सो लक्ष्म्याभिमन्यमानो लक्ष्म चिन्हं यस्य स तथा । श्रीधर इत्यर्थः ।

प्रत्यूषे ईशोजनार्दनोऽनुसंध्यं प्रतिसंध्यं । कालमूर्तिः सर्वगुणात्मकदेहो विष्णुः । सर्वगुणोद्रेकात्काल इत्यभिधीयत इति वचनात् । विष्णुर्वासुदेवः । विष्णुर्योनिं कल्पयत्वित्यत्र योनिकपिवासुदेवादिति विष्णुशब्दस्य वासुदेवपरत्वेन भगवत्पादैर्व्याख्यातत्वात् । मध्यंदिने विष्णुरिति विष्णुरूपस्य प्रागुक्तत्वाच्च । प्रभाते सूर्योदयकालेऽव्यात् । नारायणः पातु । सदाऽऽत्तशक्तिरिति क्वचित्पाठः । तत्र मुनिमतभेदेन दिनविभागविवक्षायां क्लेशो नास्ति । नारायणो मध्यंदिने विष्णुरपराण्ह इत्यादिरव्ययः । एकोऽवतु पद्मनाभ इत्यत्रैकः सर्वोत्तम इति व्याख्येयं । अन्यत्समानं ॥ २२ ॥ युगांतानलवत्तिग्मा तीक्ष्णा नेमिर्यस्य । तच्चक्रं भगवता प्रयुक्तं सत् । अरिसैन्यं दंदग्धि अतिशयेन दहाति । तस्यायं स्वभावः । एवं न तु तत्प्रार्थनीयमित्यर्थः । यद्वा । दंदग्धीति लोण्मध्यमपुरुषः । तत्र त्वमेवंभूतं चक्रामिति स्वरूपमुक्त्वा संबोध्य प्रार्थ्यते ॥ आतिशयेन दहदहेति । कक्षं शुष्कतृणं ॥ २३ ॥ अशनिवत्स्पर्शो येषां ते विष्फुलिंगा यस्यास्तस्याः संबोधनं । हे गदे । त्वमजितस्य विष्णोः प्रियाऽसि । अहं च तस्य दासोऽतः कूष्मांडादीन्निष्पिंडि निष्पिंडि । चूर्णय चूर्णय । अरींश्चूर्णय । सर्वत्र वीप्सा अतिशीघ्रत्वया ॥ २४ ॥ हे दरेंद्र पांचजन्य त्वं यातुधानादीन् विद्रावय । विप्रग्रहा ब्रह्मराक्षसा येऽन्ये च घोरदृष्टयः । तांस्तिग्मधारा यस्य हे तिग्मधारा असिवर खड्गश्रेष्ठ ममारिसैन्यं छिंधि छिंधि ॥ २५ ॥ शतं चंद्राकारानि मंडलानि यस्मिन् हे शतचंद्रचर्मन् । द्विषतां चक्षूंषि छादय । नोऽस्माकमघं हरेत्यन्वयः । अत्र चक्राद्यायुधेषु स्थितश्चक्रादि नामको भगवानपि ग्राह्यः । तस्यैव तत्र तत्र स्थितत्वात्तत्तच्छक्त्युद्बोधकत्वेन मुख्यतः फलदातृत्वात् ॥ तदुक्तं ॥ चक्रं चंक्रमणाद्विष्णुर्वर्जनाद्वज्र उच्यते । खंडनात्खड्ग इत्युक्तो हेति नामा स्वयं हरिः । तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् । एक एव महाशक्तिः कुरुते सर्वमंजसेति च ॥ २६ ॥ यद्येभ्यो भयं नोऽस्माकं माभूत् । एतानि सर्वाणि भगवन्नामरूपास्त्रकीर्तनात् । सद्यः संक्षयं प्रायांत्वित्यन्वयः । येभ्य इति तस्यैव विवरणं ग्रहेभ्य इत्यादि । ग्रहेभ्यः केतुभ्य उत्पातेभ्यः । केतुर्द्युतौ पताकायां ग्रहोत्पातलक्ष्मसु इत्यभिधानात् । भूतेभ्य इतरप्राणिभ्यः । अघेभ्यः पापेभ्यः श्रेयःप्रतीपका इष्टविघातकाः ॥ २७ ॥ २८ ॥ स्तोत्राणि बृहद्रथंतरादीनि । स्तोमः सामाधारभूतो ऋक् स्तोमः । छंदांसि वेदास्तन्मयस्तत्प्रतिपाद्यस्तदभिमानी च । विष्वक्सेनो नाम भगवत्पार्षदः स्वनामभिः स्वांतर्यामिणो हरेर्नामभिरनुस्मृतैर्निमित्तेन सर्वापभ्द्यो रक्षतु ।

॥ २९ ॥ हरेर्नामानि रूपाणि च यानानि वाहनानि च पार्षदभूषणाः पार्षदमुख्याः । पार्षदाश्च विभूषणाश्चेति वा । लिंगव्यत्ययः छांदसः । नो बुध्यादीन्पांतु ॥ ३० ॥ यथा सदसच्च मूर्त्तं चामूर्त्तंच यत्तत्सर्वं जगत् । वस्तुतः पारमार्थ्येन भगवानेव भगवन्नियम्यमेव । तथैव ज्ञातेन सत्येन कारणेनोपद्रवा नाशं यांत्वित्यर्थः ॥ तदुक्तं ॥ सदसन्नियामकतया सदसद्रूप उच्यते । सत्येनानेन मां देवः पातु विष्णुश्चतुर्भुज इति । व्याख्यातश्चैतत्समानन्यायो रथेश्वरश्च जीवश्च सत्यभेदौ परस्परं । तेन सत्येन मां देवास्त्रायंतु सह केशवा इति भाष्योदाहृतश्लोके जयतीर्थचरणैः । यथा सत्यभेदौ तथैव ज्ञातेन तेन सत्येन कारणेनेति ॥ ३१ ॥ हरिः स्वयं विकल्परहितः स्वगतभेदशून्योऽप्यैकात्म्यानुभावेन एकश्चात्मा च एकात्मा मुख्यः स्वतंत्रस्तस्य भाव ऐकात्म्यं तदेवानुभावः । तेन मुख्यतंत्रत्वादिति यावत् । स्वमायया स्वेच्छयैव । भूषणायुधलिंगाख्या भूषणादिष्वभिव्यक्तत्वात्तच्छब्दवाच्याः शक्ती रूपाणि धत्ते ॥ ३२ ॥ तेन तत्प्रकारविषयकेण सत्यमानेन यथार्थज्ञाननिमित्तेन सर्वगः सर्वज्ञश्च भगवान् सर्वस्वरूपैः सदा सर्वेषु कालेषु सर्वत्र देशेषु नः पात्वित्यन्वयः । अनेन भूषणादीनां जडत्वात्फलदानानुपपत्तेस्तत्प्रार्थनं व्यर्थमिति शंका परास्ता ॥ तदुक्तं ॥ एक एव परो विष्णुर्भूषा हेति ध्वजेष्वजः । तत्तच्छक्तिस्वरूपेण स्वयमेव व्यवस्थितः । सत्येनानेन मां देवः पातु सर्वेश्वरो हरिरिति ॥ ३३ ॥ दुर्गेष्विति श्लोके प्रार्थितोऽपि श्रीनृसिंहोऽखिलदुरितपटुपाटनपटुत्वात् । पुनरपि प्रार्थयते ॥ विदिक्ष्विति । पात्वित्यनुषंगः ॥ प्रहापयन्निति । स्वार्थिको णिच् । परिहरदित्यर्थः । स्वतेजसा ग्रस्तानि अभिभूतानि समस्तानि तेजांसि सूर्यादीनि यस्य स तथा ॥ ३४ ॥ दंशितः कवचितः ॥ ३५ ॥ सोऽपि साध्वसाद्भयाद्विमुच्यते । तस्य तु भयं न भवेदेव ॥ ३६ ॥ ३७ ॥ एतद्विद्याप्रभावमितिहासेनाह ॥ इमामिति सार्धैस्त्रिभिः । कौशिकः कुशिकगोत्रे उत्पन्नः । योगधारणया योगाभ्यासेन । मरुधन्वनि निरुदके देशे । अनेन विद्यायाः क्षेत्रतीर्थानपेक्षत्वं दर्शितं ॥ ३८ ॥ यत्र द्विजस्य क्षयो देहत्यागः । ॥ ३९ ॥ तस्योपरि । सद्यस्तत्क्षणमेव सांगनोऽगनाभिः सहितः सन् । गगनान्न्यपतत् । वालिखिल्योपदेशात्तस्यास्थीनि प्राश्य प्रक्षिप्य विस्मितः सन् ॥ ४० ॥ स्वधाम गंधर्वलोकं जगाम ॥ ४१ ॥ अधिगतः प्राप्तः सन् मृधे युद्धेऽसुरान्निर्जित्य त्रैलोक्यलक्ष्मीं बुभुजे । एतद्विद्यानुष्ठानेऽपि क्वचित्फलादर्शनमंगवैकल्यात् । न तु विद्याया दुर्बलत्वात् । गुरुशिष्ययोरयाग्यत्वाद्गुरुभक्तेर-

पूर्तितः । अप्रसादाद्गुरोर्विद्या न यथोक्तफलप्रदा । विद्या कर्माणि च सदा गुरोः प्रीत्याः फलप्रदाः । अन्यथा नैव फलदाः प्रसन्नोक्ताः फलप्रदा इति ॥ ४२ ॥ इति श्रीभागवतटिप्पण्यामष्टमोऽध्यायः ॥ ६-८ ॥

॥ हरिः ॐ ॥ विश्वरूपेंद्रविमृतिर्वृत्रोत्पात्तिः सुरस्तुतिः । हरेरभयसंप्राप्तिश्चाध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ सोमस्य पीथः पानं यस्मिंस्तत्तथा । एवं सुरापीथं । अन्नमत्तीत्यन्नादं । अत्र विश्वरूपो वै त्वाष्ट्रः । पुरोहितो देवानामासीदित्यादिश्रुतिरनुसंधेया ॥ १ ॥ तस्यासुरपक्षपातमाह ॥ स इति द्वाभ्यां । स इति विश्वरूपः । बर्हिषि यज्ञे । प्रत्यक्षं प्रकटं यथा भवति तथा संप्रश्रयं सविनयं देवेभ्यो भागं हविर्भागमिंद्रायेदमग्नय इदमित्यादौ ह्युच्चैरवदत् । तत्र हेतुर्यस्य पितरो देवा इति ॥ २ ॥ असुरेभ्यस्तु परोक्षं गुप्तं भागं ददौ । तदेवाह । यजमानो देवान्भजमानोऽप्यसौ असुरान्प्रति भागमवहत् । केनाप्युपायेन प्रापयामास । यतो मातृस्नेहवशेनासुराननुगच्छतीत्यर्थः ॥ ३ ॥ देवहेलनं देवानामश्रेयस्करं तत् । धर्मालीकं कपटधर्ममालक्ष्य ॥४॥ कपिंजलः कलबिंकस्तित्तिरश्च पक्षिविशेषः ॥ ५ ॥ यदपि यद्यपीश्वरस्तां वारयितुं समर्थः । तथाऽपि जग्राह । संवत्सरं तथैव स्थित्वा संवत्सरांते भूताक्रोशभीतः सन् भूताशंसाविशुद्धये लोकापवादपरिहाराय हरिरिंद्रो भूम्यादिभ्यस्तदघं चतुर्धा व्यभजाद्विभज्य ददौ ॥ ६ ॥ तुरीयं चतुर्थं भागं खातस्य गर्तस्य पुरः पूरणं तेन वरेण यदि खातपूरणं स्वत एव भविष्यति । तर्हि गृहिष्यामीत्येवं भाषाबंधेन जग्राहेत्यर्थः । ईरणमूषरं लवणोपरक्तरस इत्यर्थः । अत एवोषरेऽध्ययनादि निषिध्यते ॥ ७ ॥ छेदेऽपि पुना रोहप्ररोहो भवत्विति वरेण । तेषां तेष्वत एव निर्यासो न भयः ॥ ८ ॥ शश्वत्कामवरेण यावत्प्रसवं गर्भा उत्पद्यंते नैव संभोगवरेण । अत एव रजोदर्शने तत्संगादि न कार्यं ॥ ९ ॥ द्रव्याणां पंचानां भूतानां मध्ये स्वभूयस्त्वलक्षणेन वरेण । तापापनोदभूयस्त्वमंभसो व्रत्तयस्त्विमामित्युक्तेः । यद्वा । यस्मिन्द्रव्ये क्षीरादावापो मिश्रा भवेयुस्तस्य भूयस्त्वमाधिक्यं स्यादिति वरेण । यद्वा । स्वस्यैव निर्झरोद्गमनादिना भूयस्त्वं वरेण । हरिकिल्बिषमिन्द्रपापं ॥ ११ ॥ इंद्रायेन्द्रं हंतुं शत्रवे शत्रूत्पत्यै । तदेवाह ॥ इंद्रशत्रो विवर्धस्वेति । अत्र चेंद्रशत्रु पदस्याद्युदात्तत्वाद्बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्मृतेः बहुव्रीहिलक्ष्णापत्त्या इंद्र एव तस्य शत्रुरभूत् ॥ तदुक्तं ॥ श्रुत्वा यदब्रवीत्स्वाहेंद्रशत्रुर्वर्धस्वेति । तस्मादस्येंद्रः शत्रुरभवदिति । तथा च शिक्षायां । मंत्रे-

हीना: स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स्ववाग्वज्रो यजमानं हिनस्ति । तथेंद्रशत्रुः स्वरतोऽपराधादिति । अन्वाहार्यवचनादक्षिणाग्नेः ॥ १२ ॥ तं वीक्ष्य त्रस्ता लोकाः । दशदिशो विदुद्रुवुरिति पंचमेनान्वयः । कथं भूतं विष्वक्समंततः । इक्षुविक्षेपमात्रं प्रतिदिनं वर्धमानं ॥ १३ ॥ दग्धशैलप्रतीकाशं कृष्णवर्णं संध्याकालाभ्रमालावत् कपिशं वासो यस्य तं । तप्तताम्रवच्छिखाश्मश्रूणि च यस्य तं माध्यान्हार्कवदुग्रलोचने यस्य तत् ॥ १४ ॥ तिस्रः शिखाः शिरांसि यस्मिन् शूले ॥ १५ ॥ दरीगंभीरवक्त्रेण गुहावदगाधमुखेन ॥ १६ ॥ रौद्ररूपे दंष्ट्रे यस्य तेन महता विस्तीर्णेन मुखेन जृंभयंतं व्याददानं ॥ १७ ॥ निरुक्तिपूर्वकं निर्दिशति ॥ येनेति । येन कारणेन त्वाष्टमूर्तिना त्वाष्ट्रा त्वष्ट्रोदिता मूर्तिः शरीरं यस्य तेन । तमसा तमोगुणमयेनासुरेणेमा लोका आवृताः । तेन कारणेन स वृत्र इति प्रोक्त इत्यनेन विवृणोति । आवृणोति व्याप्नोतीति वृत्रः । वृञ् आवरण इति धातोः । इत्युक्तं भवति । तथा च श्रुतिः । स इमांल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वामिति ॥ १८ ॥ अग्रसद्भक्षितवान् ॥ १९ भ्रष्टचेतसः कर्तव्यविषयकज्ञानशून्याः । प्रत्यंचांतर्यामिणं । उपतस्थुरुपासीतवंतः । त्रिभुवनस्य तेन व्याप्तत्वात् क्वापि गमनासंभवात् । तत्रैव स्थित्वा तुष्टुवुरिति भावः ॥ २० ॥ महाभयपरित्राणामन्यतो न भवेदिति हरिमेव प्रपद्यंते सुराः शरणमातुराः । वाय्वादीनि पंचमहाभूतानि तैर्निमित्ताश्च त्रयो लोकाश्च तेषामधिपतयो ब्रह्मादयस्ततोऽर्वाचीना वयं सर्वे यस्मा अंतकाय दुर्गारूपेण सर्वसंहर्तृत्वादंतकशब्दवाच्याय श्रीतत्त्वाय । कालोंऽतकः प्रधानश्चेत्यादि वचनात् । उद्विजंतः संतो बलिं वहामः । असावप्यंतको यस्माद्बिभेति तदधीनत्वाद्बिभेति वा । ततः परमेश्वरादेव नोऽस्माकमरणं रक्षणमस्तु ॥ २१ ॥ तत एवारणमित्यवधारणे हेतुमाहुः ॥ अविस्मितमिति । अविस्मितं निरहंकारं । कुतूहलशून्यं वा कुतः प्रशांतं वागादिशून्यं । तत्कुतः स्वेनैव लाभेन स्वरूपानंदानुभवेनैव परिपूर्णकामं । सममंतर्याम्यादि सर्वरूपेष्वेकप्रकारं । एवंभूतं परमेश्वरं विनाऽपरं यः शरणार्थमुपसर्पति स हि बालिशोऽज्ञः । यतोऽसौ शुनोर्लांगूलेन पुच्छेन दीर्घाभावस्त्वार्षः । समुद्रमतिपिपर्ति तर्तुमिच्छतीत्यर्थः यथाऽनेन समुद्रतरणं न संभवति तथाऽनीश्वराश्रयणेन व्यसनार्णवतरणं न भवतीति भावः ॥२२॥ भयवता पुरुषेण एव रक्षक इति दृष्ट इत्याहुः ॥ यस्येति द्वाभ्यां । यस्य मत्स्योरुशृंगे जगतीं पृथ्वीमेव स्वां नावमाबध्वा सम्यक् बध्वा मनुः सत्यव्रतो यथावद्दुर्गं

संकटं ततार । स एव वारिचरो मत्स्यावतारो नोस्मानप्याश्रितान्सतो नूनं त्राता रक्षिष्यति ॥२३॥ न केवलं मनुरपि तु स्वयंभूरपि पुराऽऽदिसृष्टावुदीर्णवातैः प्रपंचवायुभिरुद्धूता ये ऊर्मयस्तेषां रवैः कराले भयंकरे संप्लवांभसि प्रलयोदके विद्यमानादरविंदात्पतिंत उद्भूत एक एकाकित्वेन भयोपेतः । तस्मादेकाकी बिभेतीति श्रुतः । तस्माद्भयाद्येन ततार। स एव नः पारः पारकोऽस्त्वित्यर्थः । यद्वा । संप्लवांभस्युदीर्णवातोर्मिरवैः कराले भयजनके सति । अरविंदान्निपतितः स्वयंभूस्तस्माद्भयाद्येन ततारेत्यर्थः । भगवन्मुख्यानुग्रहपात्रत्वेन चतुर्मुखस्य वस्तुतो भयाद्यभावेऽपि स्वस्य भगवत्पारतंत्र्यज्ञापनाय तत्प्रदर्शितमित्यविरोधः तदुक्तं ॥ जनिष्यतां जनानां त्वित्यादि ॥ २४ ॥ किंच वयं भगवतैव सृष्टाः पालिताश्च बहुशः । अतस्तमेव पितरं शरणं व्रजेम इत्याहुः ॥ य एक इति त्रिभिः । यच्छद्बानां तमेवेति तृतीयश्लोकस्थतच्छद्बेनान्वयः । य ईशो निजमायया स्वेच्छया नोऽस्मान्ससर्ज। वयं येनानुग्रहीताः संतो विश्वं सृजामः । यस्य पुरोऽग्रतः स्थिताः समेता संगता अपि वयं लिंगं पूर्णानंदत्वादि ज्ञापकं जगत्सृष्टत्वादि लक्षणमेव पश्यामः । न तु पूर्णानंदादि स्वरूपं । अदर्शने कारणमाहुः ॥ ईशमानिन इति । स्वस्वातंत्र्याभिमानिनः । अभिमानोऽपि न सर्वेषामेकप्रकार इत्याहुः ॥ पृथगिति । तारतम्येनेत्यर्थः ॥ तदुक्तं ॥ कदाचिद्भिमानस्त्वित्यादि ॥ २५ ॥ यो नित्य एव कृतादि युगेषु स्वमायया स्वेच्छया देवर्ष्यादिषूपेंद्रव्यासादि तनुभिः कृतावतारः सन् सपत्नैः शत्रुभिरत्यंतपीड्यमानान्नोऽस्मान् आत्मसात्कृत्वा पाति च ॥ २६ ॥ तमेव शरणं व्रजामः । स इह महात्मा भगवान् स्वानां स्वभक्तानां नोऽस्माकं शं सुखं दास्यतीत्यन्वयः ॥ २७ ॥ प्रतीच्यां दिशि । प्रत्यग्देशे । हृत्पद्ममध्य इति यावत् । प्रथममाविरभूत् ॥ २८ ॥ पुनश्च तं पुरतो दृष्ट्वेक्षणाल्हादेन विवशा अवनौ दंडवत्पतिताः संतः शनैरुत्थाय तुष्टुवुरित्यन्वयः । कथंभूतमात्मतुल्यैरात्मना मूलरूपेण तुल्यैरात्मभिः स्वरूपभूतैस्तुल्यैः परस्परं समानैश्च केशवादयोद्वादश वासुदेवश्चत्वार इति षोडशभिः रूपविशेषैः पर्युपासितं । परित आवर्णत्वेनोपासितं । ननु मूलरूपस्यानादिनित्यत्वादवताराणांचौत्पत्त्यादि दोषत्वात्कथं तुल्यत्वमित्यत आह ॥ विनेति । श्रीवत्सकौस्तुभौ तदभिमानिनौ प्रकृतिपुरुषौ विना तदतीतत्वादित्यर्थः । प्रकृतिपुरुषातीतत्वेन तदनिर्मितशरीरत्वात्तुल्यत्वमुपपद्यत इति भावः ॥ तदुक्तं ॥ श्रीवत्स इत्यादि । उन्निद्रशरदंबुरुहवदक्षिणी यस्य तं ॥ ३० ॥ प्राचीना स्तुतिर्भगवदप-

रोक्षायेदानीं स्वाभीष्टसिद्ध्यै स्तुवंति ॥ नम इति। यज्ञवीर्याय यज्ञस्य विहितकर्मणो वीर्यं सामर्थ्यं यस्माज्जाता स तथा । तस्मै । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुतेः । यद्वा । यज्ञोत्पादकाय । सकारयेत्पुण्यमिति श्रुतेः । वयसे-जगद्बंधकाय । वय बंधन इति धातोः । ॥ तदुक्तं ॥ वय सर्वस्य वयनाद्भगवान्पुरुषोत्तम इति । उत शब्दो विशेषणसमुच्चये । आत्तचक्राय दुष्टनिग्रहार्थं स्वीकृतचक्राद्यायुधाय । नमस्तेस्तु चक्रायेति पाठे । चक्रमस्यास्ती चक्रः । तस्मै । पुरुहूतये । अनंत-नाम्ने । नामानि सर्वाणि यमाविशंतीति श्रुतेः ॥ ३१ ॥ ईशितुस्ते वयं तिसृणां जगतीनां देवलोकापितृलोकनिरयसंज्ञानां सका-शात् । परममुत्कृष्टं वैकुंठादि स्थानं तद्धातुश्चतुर्मुखस्य विनिसर्गस्य विशिष्टसृष्टेर्देवादेः सकाशादार्वाचीनो नीचोऽज्ञ इति यावत् । वेदितुं लब्धमाप्तं नार्हति । विद्वानेव त्वत्पदप्राप्तियोग्य इति भावः ॥ ३२ ॥ पद्यैर्मिताक्षरैः स्तोतुं न शक्यते हरेर्गुणा इति पद्यैर-तुष्यंतो देवा गद्येन तुष्टुवुः । भक्त्युद्रेकेण बहुधा संबोधयंतो दुर्ज्ञेयत्वमाहुः ॥ भगवन्नित्यादिना । हे भगवन् षड्गुणपूर्ण । ऐश्वर्यं च तथा वीर्यं तेजः शक्तिरनुत्तमा । ज्ञानं बलं यदेते षण्णां भग इतीरिणः । एभिर्गुणैः पूर्तिमान्यः स एव भगवान्हरीति वच-नात् । वासुदेव व्याप्त्यादिगुणक । छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहमिति वचनात् । आदिपुरुष आदिः सर्वं जगतः पुराख्यशरीरेष्ववस्थानात्पुरुषः । पुरुषः पूर्षु शयनादिति वचनात् । कुटीजकबहूदकहंसपरमहंस-भेदेन चतुर्विधेषु ये परमहंसाख्याः परिव्राजकास्तैः परमेणोत्तमेनात्मयोगेन यः परमात्मध्यानेन समाधिश्चित्तैकाग्र्यं तेन परिभावितः प्रव-र्धितः परिस्फुटितः प्रकाशितश्च यः पारमहंस्यः परमहंससंबधिधर्मो ज्ञानाख्यस्तेन । कीदृशेनोद्घाटितं तमोऽज्ञानाख्यं कवाटं येन स चासौ द्वारं मोक्षसाधनं च तादृशेन परमहंस्यधर्मेणापद्वृते प्रकाशिते आत्मलोके वैकुंठादि धाम्नि स्वयमुपलब्धोऽप्रयत्नेन दृष्टो यो भवान्स्वरूपसुखानुभवरूपस्तस्य तव विहारयोगो जगत्सृष्ट्यादि लक्षणक्रीडोपायो दुःखबोधो ज्ञातुमशक्यः । तदनुग्रहेण यथा-योग्यं ज्ञायमानत्वादेवमुक्तिः । कुतोऽबोध इत्यत आह ॥ यदिति ॥ यद्यस्मादशरणोऽधिष्ठानरहितोऽशरिरः प्राकृतदेहस्तद्देहरहितः । ॥ २३
अगुणः सत्त्वादि गुणलेपरहितः । त्वं वाऽनपेक्षितोऽस्माकं समवायो मेलनं सहाय्यं येन तादृशःसन्नेव सगुणत्वं सत्त्वादि गुण-मयमिदं जगदविक्रियमाणेन विकारमनुपगच्छतः । अनेन ब्रह्मण उपादानत्ववादो निराकृतो भवति । आत्मना स्वभावेनैव न तु

स्वप्रयोजनमपेक्ष्य सृजासि पासि हंसि । तस्माल्लोकविलक्षणकर्तृत्वाद्दुःखबोध इत्यर्थः । आत्मयोगसमाधिना परिभावित ध्यातेति सबोधनं च ॥ ३३ ॥ ननु सृजसीत्यादिनोक्तं सृष्ट्यादि कर्तृत्वमनुपपन्नं । भगवतः कर्तृत्वे कर्तृदेवदत्तस्यैव पारतंत्र्येण शुभाशुभ भोगापत्तोरित्याशंकां परिहर्तुमज्ञानिनां संशयरूपं पूर्वपक्षं तावदनुवदाति ॥ अथ अत्र भगवानिति । अथ यथेह देवदत्तो गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते । एवं भगवान् गुणविसर्गपतितः। गुणैः सत्त्वादिभिर्विसर्गो विविधसृष्ट्यादिस्तत्र पतितः प्रवर्तमानः पारतंत्र्येणस्वकृतकुशलाकुशलफलं । कुशलं सृष्ट्यादि फलं लक्षणमकुशलं संहारादि लक्षणं च यत्कर्म तयोः फलं सुख-दुःखलक्षणमुपादत्तेऽनुभवति किं । अथवाऽऽत्मारामः स्वमहिम्निस्थित उपशमशीलः पूर्णानंदानुभवः समंजसदर्शनः शुद्धज्ञानश्च यत-स्तस्मादुदास्ते नोपादत्ते इति ह्वाव न विदामो न निश्चिनुमः । ननु कः संशयः स्वातंत्र्यं पारतंत्र्यं चेत्युभयमपि भगवति स्वीक्रि-यतामित्यत आह ॥ नहीति । विरोधे सहानवस्थानलक्षणे विद्यमाने सति उभयं न ह्यंगीकर्तुमुचितं । न ह्येकैवकोटिनिर्धारयितव्योति चेन्न । किमनंतगुणपरिपूर्णत्वाद्भगवतस्तद्विरोधिपारतंत्र्यासंभवेन स्वातंत्र्यमेकमेवांगीकार्यं । उत दुर्घटघटनासमर्थत्वादुभयमपीति पुनः संशयानिस्तारादित्याहुः ॥ भगवतीति । अपरिगणिता अनंता ये गुणाः स्वातंत्र्यादयस्तेषां । अत एवानवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् । तदेवाह ॥ अर्वाचीनेति । विकल्प एवं वा एवं वेति । किमत्र युक्तामिति विचार इत्थमेवेति । तत्र ये प्रमाणाभासा-स्तदनुग्रहाः कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयो येषु शास्त्रेषु तैर्दुरागमैः कलिलं व्याकुलं यदंतःकरणं । तदाश्रितो यो दुःखग्रहो दुराग्रहस्तेन वदंति प्रतिपादयंति ॥ अभिलषितार्थमिति । तथोक्तस्तेषां विवादानवसरे विरुद्धधर्मवादागोचरे केवलस्वात्म-मायां केवलामद्वितीयां स्वात्ममायां स्वरूपसामर्थ्यमंतर्धायावष्टभ्योपरतसमस्तमायामये उपरतं नित्यनिवृत्तं समस्तमायामयं प्रकृति-गुणकार्यं यस्मिन्नीश्वरेऽघटितघटनासमर्थ ईश इत्युक्तस्तत्परत्वात्त्वमीश्वर इति वचनात् । भगवति को नु धर्मः पारतंत्र्यादि लक्षणो दुर्घटो भवतीत्यर्थः । अनवगाह्यमाहात्म्यादिति पारतंत्र्यासंभवाद्दुर्घटघटनाशक्तिमति तत्संभवाच्च संशय इति भावः । दुर्घटो भव-तीत्यनंतरं इत्यज्ञानिनो वदंति । तदयुक्तमिति शेषः । कुत इत्यत आहुः ॥ स्वरूपेति । स्वातंत्र्यपारतंत्र्यभेदेन ब्रह्मणि द्वैविध्य-स्याप्रमाणत्वादित्यर्थः । ननु तथा प्रतिपत्तॄणां प्रतीतिरेव द्वैविध्ये प्रमाणं भविष्यतीत्याशंक्य सा भ्रांतिरित्याहुः ॥ समेति । सममती-

नां ज्ञानिनां विषममतीनामज्ञानिनां च मतं मतिमनुसरासि । ज्ञानिनां यथार्थज्ञानविषयो भवासि । अज्ञानिनां तु मिथ्याज्ञानविषयो भवसीत्यर्थः । तत्र दृष्टांतः ॥ यथेति । रज्जुखंडः सर्प इति रज्जुखंड इति च धीर्येषां तेषां मतिं यथाऽनुसरति तथेत्यर्थः । भगवान् ज्ञानिनां सम्यग्ज्ञाने विषयो भवतीत्युक्तं । किं प्रकारावच्छिन्नो विषयो भवतीत्यतस्तत्स्वरूपं निरूपयंति ॥ स एव हीति । स एव सृष्ट्यादि कर्ता भगवान् । सर्ववस्तुषु सृष्टेषु वर्तमानो वस्तुषु वस्तुस्वरूपोऽप्रतिहतः स्वरूपस्तद्विकारेण विकाररहित इति यावत् । वासनाद्वासयेद्वस्तु नित्याप्रतिहतत्वत इत्यादेः । विकारवस्तुनिष्ठस्य । विकाराभावः कुत इत्यत आह॥ सर्वेश्वर इति । पूर्णशक्तिरित्यर्थः । पूर्णशक्तित्वं च सर्वजगत्कारणत्वान्यथाऽनुपत्त्या सिद्धमित्याह ॥ सकलेति । ननु ब्रह्मादीनां जगत्कारणात्वात्कथं सर्वकारणत्वं भगवत इत्यत आह ॥सर्वेति। सर्वांतर्यामित्वादित्यर्थः। न भगवतो जगत्कारणत्वं प्रयोजनापेक्षं पूर्णत्वादित्याह ॥ सर्वगुणेति। सर्वे पूर्णागुणा आनंदादयस्तेषामाभासोऽनुभवस्तेनोपलक्षितो युक्तः। जगत्कारणत्वोपयोगिपूर्वभावित्वमाह॥ एक एव प्रलये पर्यवशेषित इति। यद्वा । नेति नेतीत्यादिश्रुतिभिः पर्यवशेषित इत्यर्थः ॥३४॥ अतस्त्वद्भक्तिरेव परमपुरुषार्थ इत्याहुः॥ अथेत्यादिना । संसारः परिवर्तत इत्यंतेन । हे मधुमथन मधुसूदन । यस्मादेवं भूतस्त्वं अथ हवाव अत एव परमभागवता एते त्वच्चरणांबुजानुसेवां कथं मुहुः पुनर्विसृजंतीत्यन्वयः । हि यस्मात्स्वार्थे पुरुषार्थे कुशला निपुणा अत एवात्मा त्वमेव प्रियः सुहृच्च येषां ते साधवो रागादिशून्याः। अत्र हेतुः । तव महिमैवामृतरसमयः समुद्रस्तस्य विप्लुषा बिंदुमात्रेण सकृदपि लीढया स्वादितया स्वमनसि निष्पंदमानमातिशयेन स्रवद्यदनवरतं सततं सुखं तेन विस्मारिता दृष्टश्रुता ये विषयजन्याः सुखलेशाभासा अत्यल्पसुखानि येषां ते। अत एव भगवति त्वय्यनवरतं सततं निवृत्तं सुखितं मनो येषां ते । यत्र यस्यामनुसेवायां कृतायां सत्यां परिवर्तः परिभ्रमणं। प्रस्तुतं विज्ञापयंति ॥ त्रिभुवनेत्यादि यावत्सापिः । हे त्रिभुवनात्मभवन त्रिभुवनस्यात्मा स्वामी भवनं च । यद्वा । त्रिभुवनस्यात्मा मुख्यप्राणः स एव भवनं । मुख्याधिष्ठानं यस्य । परमब्रह्म धामेति श्रुतेः। त्रिभुवनमात्मनः स्वस्य भवनं यस्येति वा । अनेन त्रिभुवनोपद्रवोऽवश्यं परिहरणीय इति सूचितं । इतरविशेषणान्येवमेवाभिप्रायगर्भाणीति ज्ञातव्यानि । त्रिषु वेदेषु प्रतिपाद्यो विक्रमो यस्य । त्रिरित्येवं त्रयो वेदाः कीर्तिता मुनिसत्तमैः । क्रमन्नेतांस्तु सर्वांस्त्रिविक्रमोऽस्ति जनार्दन इति वचनात् । त्रयो विक्रमो यस्येति वा । त्रेधा निदधे पदामिति

श्रुतेः । त्रीणि नयनानि यस्य त्रिनयन । नृसिंहरूपिन् । विष्णोर्नृसिंहनामानि त्रिनेत्रोग्रादिकानि चेति वचनात् । त्रयाणां लोकानां मनोहरोऽनुभावो यस्य । एवं चतुर्धा संबोध्याहुः ॥ तवैवेति । विविधं विविधगुणप्रयोजिका भूतिः सत्ता एषु ते विभूतयः । विविधं भावपात्रत्वात्सर्वे विष्णोर्विभूतय इति वचनात् । अपि शब्देन स्वरूपविभूतित्वं गर्हयति । उपक्रमो विक्रमः । उपक्रमस्तु प्रारंभे चिकित्सायां च विक्रम इत्यभिधानात् । नोपक्रमोऽनुपक्रमः । पराजय इति यावत् । ततश्च हे भगवन् ये विभूतिशब्द-वाच्या दितिजादयोऽभवन् । तेषामनुपक्रमसमयः पराजयकालोऽयमिति मत्वा पूर्वं स्वात्ममायया । शुक्रशोणितसंबंधमंतरेण स्वसामर्थ्येनैव मुख्यतो विष्णुमाहात्म्यं मायाशब्दोदितं भवेदित्युक्तेः । प्रकटिताभिः सुरनरमृगमिश्रितजलचराकृतिभिः । उपेंद्रकृष्णनृसिंहमत्स्याद्याकृतिभिः । यथाऽऽपराधं त्रैलोक्यहरणादि लक्षणापराधमनुसृत्य बल्यादीनां दंडं तदर्थो धृतवानसि ॥३५॥ एवमेनं त्वाष्ट्रमपि जहि । यदि मन्यसे हंतुं यदिच्छसि हे अनघ । प्रथमं तावत् । त्वदीयानामस्माकमंतस्तापं शमयितुमर्हसि । तावकानामित्यत्र हेतुः । तव चरणनलिनयुगलध्यानेनैवानुबंधो हृदयो मनः सनिगडः शृंखलो येषां । स्वालिंगानां शंखचक्रादि लांछनानां धारणेनात्मसात्कृतानां स्वकीयत्वेन परिग्रहीतानां केन तापोपशम इत्याहुः ॥ अनुकंपया । कृपया । अनुरंजितं सानुरागं च तद्विशदं निर्मलं च रुचिरं मनोहरं च । शिशिरमतिशीतलं च यत्स्मितं मंदहासस्तत्सहितेनावलोकनेन कटाक्षवीक्षणेनानुकंपयैव विगलितं निर्गलितं मधुरं मुखरितं मंद्रं च यद्वचस्तल्लक्षणयाऽमृतकलया च । किंचास्मदभिप्रायस्त्वया ज्ञायत एव किमत्रास्माभिर्विज्ञापनीयमित्याहुः ॥ अथेति । अथ हे भगवन् । तत्रास्माभिरिह कियान्वाऽर्थविशेषो विज्ञापनीयः स्यादित्यन्वयः । यथा हिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिंगादिभिः प्रकाशो न क्रियते । तथा तवास्माभिः कार्यार्थः प्रकाशो न कार्य इत्यर्थः । तत्र हेतुगर्भाणि विशेषणानि अखिलजगतामुत्पत्त्यादिषु निमित्ताय मनोदिव्यमायया स्वरूपेच्छया विनोदो लीला यस्य तस्य । सर्वजीवराशीनामंतर्हृदयेषु । प्रत्यगात्मस्वरूपेणांतर्यामिरूपेण स्थित्वा सुरनरादि देहविशेषं जाग्रदाद्यवस्थाविशेषं बहिरपि ब्रह्मस्वरूपेण । व्यक्तरूपेण देशविशेषं कालविशेषं च । तदुपादानोपलंभकतया तेषां देहादीनामुपादानं प्रकृतिस्तस्या उपलंभकतयोद्बोधकत्वेन तथा । यथावत् । साक्षादनुभवतः साक्षात्कुर्वत इति बुध्याविवेकेनान्वयः । सर्वप्रत्ययसाक्षिणं सर्वेषां जीवानां ये प्रत्यया ज्ञानानि । तेषां साक्षादीक्षितुः । आकाशशरीरस्याकाश-

वज्राप्तं निर्लेपमतींद्रियं च शरीरं यस्य स तथा तस्य । अत एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कार्यस्य कामेनोपसादिताः प्रापितास्तदस्माकं कार्यं स्वयमेवोपकल्पय संपादय । कीदृशानामस्माकं विविधैर्वृजिनैर्दुष्कर्मभिर्यः संसारपरिश्रमस्तस्योपशमनीमुपशमनकरीं तव चरणमेव शतपलाशं कमलं तस्य छायामुपसन्नानां प्राप्तानां ॥ ३६ ॥ स्वकामं कथयंति ॥ अथो इति । अथोऽनंतरमेव । अविलंबेनेति यावत् ॥ ३७ ॥ शीघ्रं तद्वधाय पुनः प्रणमंति ॥ हंसायेति । हंसाय शत्रुहंत्रे । हंतृत्वाद्धंसनामाऽसाविति वचनात् । दभ्रनिलयाय दभ्रं सूदनं हृदयाकाशं निलयो निवासस्थानं यस्य तस्मै । तस्यांते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितमिति श्रुतेः । अत एव निरीक्षाय सर्वबुद्धिसाक्षिणे । कृष्णाय सदाऽऽनंदरूपाय । कृषिर्भूवाचकशब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्याभिधीयत इति निरुक्तेः । मृष्टयशसे मृष्टं शुद्धं यशो यस्य तस्मै । निरुपक्रमाय श्रमजनकप्रयत्नमंतरेणजगत्कर्त्रे । निरुपक्रमो हरिर्नित्यमप्रयत्नो ह्युपक्रमेदिति वचनात् । सद्भिः संगृह्य इति सत्संग्रहस्तस्मै । भवपांथनिजाश्रयाय संसाररूपे पथि वर्तमानानां नित्याश्रयाय । निजमात्मीयनित्ययोरित्यभिधानात् । शश्वद्वरिष्ठगतये शश्वत्पुनरावृत्तिशून्याऽत एव वरिष्ठा स्वर्गाद्युत्तमा गतिर्मोक्षलक्षणा यस्मात्स तथा । तस्मै हरये आर्तिहराय तुभ्यं नम इत्यर्थः ॥ ३८ ॥ स्वमुपस्थानं स्वाविषयां स्तुतिं । अभिनंदितः संतोषितः ॥ ३९ ॥ मदीयमुपस्थानं स्तोत्रं तल्लक्षया विद्यया यया विद्यया पुंसामात्मैश्वर्यस्मृतिः । आत्मनो ममैश्वर्यस्य माहात्म्यलक्षणस्य स्मृतिर्ज्ञानं भवति । मयि भक्तिश्च भवति ॥ ४० ॥ भक्तिमभिनंदन्नेवैकांतिनामस्माकं भगवद्भक्तिकामानां विहाय शत्रुहननलक्षणवरकामना कथं युज्यते । एकांतानां न कस्यचित् । अर्थे नारायणो देवः सर्वमन्यत्तदर्थकमित्युक्तेरिति देवानां लज्जां परिहरति ॥ किमिति । मयि प्राप्ते भक्त्या वशीकृते साति किं दुरापं किं दुर्लभं । न किमपि । सर्वं सुलभमेव । तथाऽपि सौलभ्येऽपि । तत्त्ववित् । विष्णुनाऽर्थेष्वीरितानि मन आदीनि सर्वशो वर्ततेऽन्यो न स्वतंत्र इति जानन् हि तत्त्वविदित्युक्तलक्षणस्तत्त्वज्ञानी । अत एवैकांतमतिर्भगवदेकनिष्ठः । उत्तमाधिकारीति यावत् । अन्यत्तत्प्रीतिविषयादन्यत् । मत्तो न वांछंति । किंतु मत्प्रियमेव वांछंति । अतो युष्मत्कामो मत्प्रिय एव । अन्यथा न दद्यामिति भावः ॥ तदुक्तं ॥ विष्णोः प्रियमित्यादि ॥ ४१ ॥ उत्तमाधिकारिणां स्थितिमुक्त्वा प्रसंगादनुत्तमाधिकारिणामाह ॥ न वेदांति । गुणेषु शब्दादि विषयेषु

वस्तुदृक् नित्यत्वज्ञानवान् । अत एव कृपणोऽवशीकृतेंद्रियः । विषयेष्वदोषबुद्धिः सन्निंद्रियाणां वशे स्थितः । कृपणः स तु संप्रोक्त इति वचनात् । अत एवात्मनः स्वस्य श्रेयो मोक्षलक्षणं न वेद । अत एवेच्छतो मदप्रियकामानप्याकांक्षमाणस्य तस्य तान्कामान् । यच्छे प्रयच्छामि । सोऽभिलाषुकः । तथा विधो यदि । अनुत्तमाधिकारी चेत्यर्थः । सोऽपि तथाविध इत्यनेन यद्यपि केषांचिदुत्तमाधिकारिणामपि प्रारब्धवशादश्वत्थाम्नो दुर्योधनक्षेत्रेऽपत्योत्पादनकामवदसत्कामः संभवति । तथाऽप्यहं न ददामि । हितकारित्वादित्युक्तं भवति । तथा चोक्तं ॥ यद्यप्रियमित्यादि । उत्तमानां मदप्रियकामं न प्रयच्छामि । अनुत्तमानां तु प्रयच्छामीत्युक्तं ॥ ४२ ॥ तत्र दृष्टांतावाह ॥ स्वयमिति । विद्वानित्येतदावर्तनीयं । ईहमानायेति शेषः । यथा विद्वान् ज्ञानी स्वयं निःश्रेयसं मोक्षसाधनं विद्वान् जानन्नपि कर्मभिरीहमानायाज्ञायाज्ञानिने न वक्ति नोपादिशति । प्रत्युत तमेवानुसरति । न बुद्धि-भेदं जनयेदज्ञानां कर्मसंगिनां । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्निति वचनात् । एवमहमप्यनुत्तमं मदाप्रियकामान्न निव-र्तयामि । यथा च भिषक् वांछितोऽपि रोगिणोऽपथ्यं न राति न ददाति । एवमेवाहमप्युत्तमाधिकारिणं मदाप्रियकामान्निवर्तया-मीत्यर्थः ॥ ४३ ॥ वृत्रहननलक्षणकामस्य स्वप्रियत्वज्ञापनाय तदुपायं कथयति ॥ मघवन्नित्यादिना । विद्यया व्रतैस्तपसा च सारं दृढं गात्रं शरीरं याचध्वं ॥ ४४ ॥ तत्र तदीयं वीर्यातिशयमाह ॥ स वा इति द्वाभ्यां । एवं ह्यत्र प्रसिद्धा कथा निशम्याथर्वणं दक्षं प्रवर्ग्य ब्रह्मविद्ययोः । दध्यंचं समुपागम्य तमूचतुरथाश्विनौ ॥ १ ॥ भगवन् देहिनौ विद्यामिति श्रुत्वा स चाब्रवीत् । कर्म-ण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतां ॥ २ ॥ तयोर्निगदतोरेव शक्र आगत्य तं मुनिं । उवाच भिषजोर्विद्यामावादीरश्विनोर्मुने ॥ ३ ॥ यदि मद्वाक्यमुल्लंघ्य ब्रवीषि सहसैव ते । शिरसंधानसंदेह इत्युक्त्वा स ययौ हरिः ॥ ४ ॥ इंद्रे गते तदाभ्येत्य नासत्या-वूचतुर्द्विजं । तन्मुखादिंद्रगदितं श्रुत्वा तावूचतुः पुनः ॥ ५ ॥ आवां तव शिरश्छित्वा पूर्वमश्वस्य मस्तकं । संधास्यावस्ततो ब्रूहि तेन विद्या द्विजोत्तमः ॥ ६ ॥ तस्मिन्निंद्रेण च पुनः पुनः संधायमस्तकं । निजं ते दक्षिणां दत्वा गमिष्यावो यथागतं ॥ ७ ॥ एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः । प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतो गत शंकित इति ॥ ८ ॥ ततश्चायमर्थः । स दध्यङ् ब्रह्मपरं नारायणकवचं निष्कृतं नितरां कृतं भवति । येन तं प्रवर्ग्यं चाधिगतो ज्ञातवान् । ततोऽश्विभ्यामुभयमुपदिदेशेति शेषः ।

कथंभूतं ब्रह्म यद्वै अश्वशिरसा प्रोक्तत्वादश्वशिरं नाम प्रसिद्धं । तयोरमरतां मृतिराहित्यं व्यधात् । वेत्यनेनाश्वस्य शीष्मा प्रयदीमुवाचेति श्रुतिप्रसिद्धिं सूचयति । किंचाथर्वणेन दधीच्या त्वष्ट्रे विश्वरूपपित्रे प्रोक्तत्वादाथर्वणं त्वाष्ट्रं चेति प्रसिद्धं । मदात्मकं मत्परं । अत एवाभेद्यं यन्नारायणकवचं कृत्स्नं सांगोपागं त्वष्टा विश्वरूपस्वपुत्राय प्रादात् । उपदिदेश । यत्कवचं ततो विश्वरूपात् । त्वमधा धृतवानसि । तदेवं विद्यया सारं गात्रं याचध्वमित्यर्थः ॥ ४५ ॥ ४६ ॥ ननु श्रेष्ठं देहं कथं दास्यतीति चेत्तत्राह ॥ युष्मभ्यमिति । युष्मभ्यमंगान्यस्थीनि याचितः सन् दास्यति यतो धर्मज्ञः । विशेषतोऽश्विभ्यां शिष्यप्रीत्या दास्यति । अश्विभ्यामिति स्थाने दध्यङिति क्वचित्पाठः । अस्थिनीत्यनेन हेयत्वं दर्शितं । तैरस्थिभिर्विश्वकर्मणा निर्मितः । आयुधेषु श्रेष्ठो वज्रो भविष्यतीति शेषः ॥ ४७ ॥ येन भवान् वृत्रस्य शिरो हर्ता हरिष्यति । मम तेजसोपबृंहितः सन् । तेजश्चास्त्राणि चायुधानि च संपदश्च भूयः प्राप्स्यथ महाकायस्त्रिभुवनग्रासि स एवास्मान् हन्यादिति शंकाकुलचित्तान् प्रत्याह ॥ नेति । मत्परांश्च न हिंसति केऽपीति शेषः । अतो युष्माकं भद्रमेवेति । अत्र समर्थानामपि देवानां हर्याज्ञया नीचमुन्यादि याचनं न विरुद्धं ॥ तदुक्तं ॥ समर्था अपीत्यादि ॥ ४८ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ६–९ ॥ ॥ ॥

॥ हरिः ॐ ॥ संवादव्याजतो धर्मस्वरूपं च निरूप्यते ॥ १ ॥ मोदमान एव तन्मुखाद्धर्मं श्रोतुकामः । प्रत्याचक्षाणमिवोच ॥ १ ॥ २ ॥ अपीति द्वाभ्यां । हे वृंदारकाः । अपि किं संस्थायां मर्त्यौ योऽभिद्रोहो दुःखं तन्न जानीथ चेतनापहो बुद्धिभ्रंशकरः ॥ ३ ॥ आत्मा देहो न केवलमीप्सितः किं त्विह प्रियसमस्तवस्तुषु श्रेष्ठोऽतिशयेन प्रियः । वयं जानीम एव । किंतु विष्णुरस्मन्मुखेन ब्रूत इति चेत्तत्राह विष्णवेऽपि दातुं क उत्सहेत ॥ ४ ॥ पुण्यश्लोकैरीड्यानि कर्माणि येषां ते तथा ॥ ५ ॥ याचको यदि न वेद तर्हि न याचेत । यदीश्वरो दानसमर्थो भवेत्तर्हि सोऽपि नेति नाह । अतो यथा तव संकटं वयं स्वार्थपरा न जानीमः । एवं प्रत्याचक्षाणस्त्वमप्यस्मत्संकटं वयं स्वार्थपरा न जानासीति भावः । उत्तमानामपि देवानां दैन्यवचनपूर्वकं नीचप्रार्थनेऽपि न तेजोभंगः । विष्ण्वाज्ञामूलत्वात् ॥ तथा चोक्तं ॥ आज्ञयैव महेत्यादि ॥ ६ ॥ वः सकाशात् । धर्मः श्रोतुकामेन मया प्रत्युदाहृताः प्रत्युक्ताः । एषोऽहं त्यजंतं मां त्यक्त्वाऽऽयातमात्मानं देहं ॥ ७ ॥ अध्रुवेणानित्येनात्मना देहेन हे नाथा

नहेत न संपादयाति ॥ ८ ॥ यो भूतानां शोचेनानुशोचयति । हर्षेण हृष्यति । तस्य यो धर्म एतावानेवाव्ययः ॥ ९ ॥ पारक्यैः सृगालादि भक्ष्यैः । अस्वार्थैरात्मोपयोगशून्यैः स्वज्ञातिविग्रहैः । ज्ञातयःपुत्रादयः । विग्रहो देहस्तेनोपकुर्यादियत् । तत्कष्टं ॥१०॥ कृतं व्यवसितं निश्चयो येन स तथा । आत्मानं मनो ब्रह्मणि सन्नयन्सम्यक् स्थापयन् । यद्वा । आत्मानं स्वांतर्यामिणं ब्रह्मणि व्याप्तरूपे सन्नयन् एकीकुर्वन् । हरौ हरेर्भवेन्नीतिस्तदेकत्वस्य चिंतनादिति वचनात् । तनुं जहौ ॥ ११ ॥ यता नियता इंद्रिय-मनोप्राणबुद्धयो येन स तथा । तत्त्वं शश्वदेकप्रकारं भगवंतं पश्यतीति तथा । अतीतानागते काले यत्तादृशमुदीर्यते । कुताश्चिदन्यथा नेयात्तत्त्वं न त्वनो विदुरिति वचनात् । ध्वस्तानि गतानि बंधनानि पुत्रादिस्नेहलक्षणानि यस्य स तथा ॥ १२ ॥ अथेंद्रोऽ शोभतेत्युत्तरेणान्वयः । अस्थिभिर्निर्मितं । उत्सिक्त ऊर्जितः ॥ १३ ॥ १४ ॥ असुरानीकानां यूथपैः पर्यस्तं परिवृतं ॥ १५ ॥ अंतरे वर्तमाने वैवस्वतमन्वंतरे प्रथमे चतुर्युगे । त्रेतायुगस्य मुखे । आरंभे नर्मदायां नर्मदातीरे । रण आसीदिति शेषः ॥ १६ ॥ मरुत्पतिं मरुतां देवानां पतिं नामृष्यन्नासहंत ॥१७-२१॥ कार्तस्वरपारिच्छदाः सुवर्णालंकाराः ॥२२॥२३॥ शतघ्नी तु चतुर्हस्ताल्लो-हकंटकसंचिका । भृसुंडी सर्वतो लोहकंटकानुक्रमात्रतेत्यभिधानात् ॥ २४ ॥ पुंखो मूलदेशस्तस्य पुंखमनु तत्सलग्नोपरस्य पुंखा यथा भवति तथा । आसमंतात्पतितैरित्यर्थः । प्रावृषि वर्षाकाले ॥२५॥ शस्त्राणामस्त्राणां च यानि वर्षाणि तेषां मोघा लघुहस्तैः शीघ्रवे-धिभिः सिद्धपथे आकाशे । स्वप्राप्तेः पूर्वमध्यमार्ग एवछिन्नाः संतो नासेदुर्न प्रापुः ॥ २६ ॥ क्षीणा अस्त्राणां शस्त्राणां चोघो येषां ते गिरिशृंगैर्द्रुमैरुपलैश्च ॥२७॥ वृत्रो नाथो येषां ते दैत्यास्तान्सुरेंद्रस्य सैनिकान् । शस्त्राणां पूगैः समूहैः । द्रुमैर्दृषद्भिः पाषाणैः। विविधाद्रि-शृंगैश्चाक्षतान्क्षतशून्यान् । स्वास्तिमतः सुखिनश्च निशम्य निरीक्ष्य। अथानंतरमपि तत्सुरेंद्रसैनिकेष्वस्त्रशस्त्रादीन् अक्षिपन्नित्यन्वयः ॥ ॥ २८ ॥ कृताः कृताः पुनः पुनः कृताः । कृष्णोऽनुकूलो येषां तेषु देवगणेषु । रुशती रुशत्यो हिंसत्यः । रु हिंसायामिति धातोः । रूक्षा परुषा वाचो यथा महत्सु क्षोभकार्यो न भवति ॥ २९ ॥ हतो युद्धदर्पो येषां । अस्तसारा निर्धैर्यास्तेऽतिप्रसिद्धा अपि दैत्या आजिमुखे युद्धारंभे पतिं विसृज्य पलायनाय मनो दधुर्यतो हरावभक्ता इत्यन्वयः ॥ ३० ॥ प्रधावतः पलायमानान्प्रे-क्ष्यादावेव तीव्रेण भयेन पलायितं भग्नं च यद्बलं सैन्यं च प्रेक्ष्यैतद्वक्ष्यमाणं बभाषे ॥ ३१ ॥ तदेव विशिनष्टि ॥ कालेति । कालो-

पपन्नामवसरोचितां मनस्विनां रुचिरां । हे मय । हे अनर्वन् मे वाचं शृणुध्वं ॥३२॥ ततो मृत्योरिह यशो लोकः स्वर्गश्च यदि स्यादथ तर्ह्यमुं मृत्युं युक्तं । समीचीनं वा प्राप्तं वा को नाम न वृणीत ॥ ३३ ॥ ब्रह्मसधारणया परब्रह्मध्यानेन कलेवरं जह्यादिति यत्स एको मृत्युर्वीरशये रणभूमावनिवृत्तोऽपराङ्मुखो जह्यादिति यत्स चैकः । तौ द्वाविह शास्त्रसंमतौ । तथा च स्मृतिः । द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ । परिव्राज्यात्मयुक्तश्च रणे चाभिमुखे हत इति ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ६–१० ॥

॥ हरिः ॐ ॥ शंसतः कथयतः पत्युर्वचः । धर्मादनपेतं धर्म्यं । अचेतसोऽमनस्विनः ॥ १ ॥ कालो भगवान् । कालः कालितसंपूर्णसद्गुणत्वाज्जनार्दनः । संहारात्सर्ववित्त्वाद्वा सर्वविद्रावणेन चेति वचनात् । सोऽनुकूलो येषां तैः । काल्यमानां विद्राव्यमाणां । दृष्ट्वेति शेषः ॥ २ ॥ अमर्षितोऽसहमानः । ओजसा राजन्दीप्यन् वृत्रस्तां काल्यमानां स्वसेनां निवार्य देवान्निर्भर्त्स्येदं वक्ष्यमाणमुवाच ॥ ३ ॥ यदेवाह द्वाभ्यां ॥ मातुरुच्चरिताः पुरीषप्राया इति । देवानां संबोधनं । पृष्ठतो हतैर्दैत्यैर्वः किं न किंचित् । न यशो नापि धर्मः । तदेवाह ॥ नहीति ॥ ४ ॥ प्रधने संग्रामे । सारं धैर्यं । हे क्षुल्लकाः क्षुद्रा मात्रं क्षणमात्रं मेऽग्रे तिष्ठत न चेदिह लोकभोगे स्पृहाऽस्ति ॥ ५ ॥ सुरगणान् रिपून् । महान्प्राणो बलं यस्य । येन नादेन विचेतसो बभुवुरिति शेषः ॥ ६ ॥ तदेव विवृणोति ॥ तेनेति । वृत्रस्य विस्फोटनेन नादेन ॥ ७ ॥ उद्यतं शूलं येन स तथा । नलानां तृणविशेषाणां । पद्मानां वा संबंधि वनं । उद्धतो मदो यस्य स यूथपतिर्गजो यथा मर्दयति तथेत्यर्थः ॥ ८ ॥ अभिद्रुवतेऽभ्यागच्छतीत्यर्थः । महेंद्रवाहमैरावतं । कुंभस्थले जघान ॥ १० ॥ अभिमृष्टोऽभिहितः सप्तधनुः प्रमाणं देशं । अपासरदर्वाग्गतः ॥ ११ ॥ स वृत्रः सन्नवाहाय सन्नोऽवसन्नो वाहो यस्य तस्मा इंद्राय पुनः गदां न प्रायुंक्त । यतो महात्मा धर्मिष्ठोऽमृतस्यंद्यमृतस्रवीयः करस्तेनाभिमर्शनः । तेन वीतव्यथो गतदुःखः । क्षतवाहो यस्येंद्रस्य स तथा भूतोऽभितस्थे । अभिमुखेन स्थितवान् ॥ १२ ॥ स वृत्रः । हे नृपेंद्र । आहवकाम्यया युद्धेच्छया । अवास्थितामिति शेषः । भ्रातृहणं भ्रातरं विश्वरूपं हतवंतं नृशंसं क्रूरं तदेवांहः पापं तस्य कर्म स्मरन् ॥ ॥ १३ ॥ यो ब्रह्महा ब्राह्मणं हतवान् । विशेषतः स्वगुरुं मम च भ्रातरं भवान् अग्रतः समुपस्थितः । तद्दिष्ट्या भद्रं जातं । दि-

ष्ट्येत्यव्ययमानंदार्थे । दिष्ट्या समुपजोषंतेत्यानंदेत्यमरः । हे असत्तम मम शूलेन निर्भिन्नं दृपत्तुल्यं हृत् हृदयं यस्य तेन त्वया निमित्तभूतन । अद्याचिरादेव भ्रातुरनृणो हंस्यां । एतच्च दिष्ट्या ॥ १४ ॥ विस्रस्य पौरोहित्यवरणेन विश्वास्य स्वर्गकामो यो भवानवृश्चत । स्वर्गकामो याज्ञिकपशोरिव ॥ १५ ॥ श्रीः त्रिवर्गसंपत्तिः । लक्ष्म्यां त्रिवर्गसंपत्तौ श्रीरिति विश्वः । ऱ्हीर-कार्यकरणे लज्जा । ह्रीरकार्यनिवर्तनमिति वचनात् । दया प्राणिनां सुखप्रार्थनं । दया सर्वसुखैषित्वमिति वचनात् । कीर्तिश्च ताभिरुज्झितं । स्वकर्मणा गुरुवधलक्षणेन पुरुषादैरपि निंद्यं । त्वामस्पष्टवन्हिः । अदग्धदेहमित्यनेन वन्हिप्रदाभावोक्त्या निःशेषसुरसंहारं करिष्यामीति सूचयति । समदंतु भक्षयंतु ॥ १६ ॥ अन्येऽप्यज्ञास्त्वा त्वां नृशंसं घातकमनु अनुसृत्य मह्यमुद्य-तास्त्राः संतो यदि प्रहरंति तैर्भूतनाथान् भैरवादीन् वक्ष्यामि । कथंभूतैः । निशातं तीक्ष्णीकृतं । यन्मम त्रिशूलं तेन निर्भिन्नो गलो येषां तैः ॥ १७ ॥ अथोऽथवा । हे हरे इंद्र । यदि भवानेव। इह युद्धे प्रमथ्य मां निष्पीड्य मम शिरो हर्ता हरिष्यति । तत्र तथाऽसि । अनृणो विमुक्तकर्मबंधः सन् । बलिं विधाय मनस्विनां पादरजः प्रपत्से । धीराणां पदं प्राप्स्यामि ॥ १८ ॥ जीवि-तादपि मृत्युरेव ममाभिमत इत्याशयवानाह ॥ सुरेंद्र इति । भगदेव कीर्त्यादिगुणशालिन् । भग ऐश्वर्यमाहात्म्यज्ञानवैराग्ययो-निषु वीर्यप्रयत्नेषु श्रीधर्मरविमुक्तिष्वित्यभिधानात् । न हिनोषि न निक्षिपासि । कृपणादर्थः प्रयोजनं यस्याः सा याच्ना यथा निष्फला तथा वज्रं निष्फलं स्यात् । तदिति मा शंसयिष्ठाः संशयं मा कार्षीरित्यर्थः ॥ १९ ॥ अमोघत्वे हेतुं वदन्प्रोत्साह-यति ॥ नन्विति । हे शक्र । एषः तव वज्रो हरेस्तेजसा दधीचेस्तपसा च तेजिनस्तीक्ष्णीकृतो ननु । शत्रुं मां जहि । हनने शक्तिर्न शंकनीयेत्याह ॥ विष्णुना यंत्रितः प्रेरित इति । यतो यत्र ततस्तत्र ॥ २० ॥ हननेन मम पीडा स्यादित्यपि मा शंसयिष्ठा इत्याह ॥ अहमिति । संकर्षणो मत्पतिर्यथाऽऽहोपदिदेश । तथा तस्य चरणारविंदे मनः समाधाय तव वज्रस्य रंहसा वेगेन लुलि-तच्छिन्नो ग्राम्यपाशो विषयभोगलक्षणो यस्य । अपविद्धलोकस्त्यक्तदेहः । तिरस्कृतः स्वर्गादिलोको वा मुनेर्योगिनो गतिमहं यास्यामि ॥ २१ ॥ ननु भगवता दीयमानस्वर्गादिसंपदोऽपरिहार्यत्वात्कथमपविद्धस्वर्गादिलोकत्वमित्यत आह ॥ पुंसामिति । स्वर्गे भूमौ रसातले च याः संपदस्ताः किल निश्चितं । न राति न ददाति । तत्र हेतुः । यस्मात्संप्रदानाद्भयादयो भवंति ॥२२॥

ताह स्वभक्तस्य किं विधत्त इत्यतस्तदाह ॥ त्रैवर्गिकेति । त्रैवर्गिको । धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते । तेनायासोपरमेणैव भगवत्प्रसादोऽनुमेयः । न त्वैश्वर्यादिना । यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहमित्यादेरित्यर्थः ॥ २३ ॥ एवमिंद्राय स्वाभिप्रायं निवेद्य भगवंतं प्रार्थयते ॥ अहमिति । तव पादावेवैकं मूलं मुख्याश्रयो येषां तेषां दासानामनुदासो भूयो भवितास्मि भविष्यामि । भवेयं । असुपतेः प्राणनाथस्य ते तव गुणान् मम मनः स्मरेत स्मरतु । वागपि तानेव गृणीत कीर्तयतु । कायस्तवैव कर्म करोतु ॥ २४ ॥ ननु किं दास्ये न किंतु तुभ्यं महाफलानि दास्यामीति चेत्तत्राह ॥ नेति । नाकपृष्ठं स्वर्गं तदुपरितनमहरादिलोकं च पारमेष्ठ्यं च सत्यलोकं सार्वभौमं भूमंडलाधिपत्यं रसातलस्वामित्वं । योगसिद्धिं योगलभ्या अणिमादिसिद्धीः । अपुनर्भवं मोक्षं वा । हे हरे समंजसं निखिलसौभाग्यनिधिं त्वां विहरय्य विहाय नाकांक्षे नेच्छमीति । नञः प्रत्येकं क्रिययाऽन्वयः । ननु मोक्षस्य प्रधानफलत्वात् । सर्वसाधनं च तदर्थत्वात् । तदनाकांक्षणं कथमिति चेत् । इत्थं । मोक्षो हि द्विविधः सम्यक् स्वरूपाभिव्यक्तिरभावो जननस्य चेति वचनात् । तत्र सम्यगानंदाभिव्यक्तिलक्षणमोक्षापेक्षया पुनरुत्पत्तिराहित्यमात्रलक्षणस्य नीचत्वात्तथोक्तिर्युज्यत इति ॥ २५ ॥ ननु पारमेष्ठ्यादिकंनेच्छसि चेत्तर्हि किमिच्छसीत्यत आह ॥ अजातपक्षा इति । अजातपक्षाः खगा यूकादिभिः पीडिता यथा मातरं । यथा च दाम्ना बद्धा वत्साः स्तन्यं । तथा चाध्युषितं दूरदेशं गतं प्रियं कामेन विषण्णाः प्रियास्तथा मे मनस्तापत्रयपीडितं कर्मभिर्बद्धं च कामादिभिर्विषण्णं च प्रियं परमप्रेमास्पदं त्वां दिदृक्षते द्रष्टुमिच्छतीत्यर्थः ॥ २६ ॥ हे नाथ । उत्तमश्लोकस्य तव जनेषु भक्तेष्वेव सख्यं मम भूयात् । त्वन्मायया त्वच्छक्त्या देहादिष्वासक्तं चित्तं येषां तेषु भगवद्विमुखेषु न भूयात् ॥ २७ ॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ६–११ ॥ ॥ ॥

॥ हरि ॐ ॥ श्रीविजयादिकं मृत्युं । वरं श्रेष्ठं महापुरुषं श्रीविष्णुं । अप्सु प्रलयोदकेषु ॥ १ ॥ युगांताग्निवत्कठोरा जिव्हाः शिखा यस्य तत आविद्ध्य भ्रामयित्वा विनद्य सिंहनादं कृत्वा ॥ २ ॥ वज्रींद्रः । खे आकाशे । आपतंतमागच्छंतं । ज्वालितमत एव महोल्कवद्दुष्प्रेक्ष्यं । तत् शूलं निरीक्ष्य । अजातविप्लवोऽभ्रांतः सन् । शतं पर्वाणि यस्य तेन । उरगराजो वासुकिस्तस्य भोगो देहस्तदाकारं ॥ ३ ॥ संरब्धःकुपितो हनौ कपोलप्रांते ॥ ४ ॥ ५ ॥ हे हरे इंद्र । स्वशत्रुं मां ॥ ६ ॥ कुत्र-

चित्कुत्रापि । आततायिनां शस्त्रपाणिनां । युयुत्सतां योद्धॄणां जयः सदा नियमेन न वै नैव स्यात् । किं त्वेकत्रैकदा । कदाचादति यावत् । पराजयोऽपि स्यात् । उक्तस्यापवादमाह ॥ विनेति । परमपुरुषस्य विष्णोरेकस्यैव सर्वदा जय इति भावः ॥ ७ ॥ स भगवत एव सार्वकालिको जयोऽन्येषां तु कदाचिदित्येतत्कुत इत्याशंक्य तस्य स्वतंत्रत्वादन्येषां तदधीनत्वाच्चेत्याह ॥ लोका इति सप्तभिः । यस्य वशे स्थिता एव स्वयं विवशा भगवदधीनत्वमजानंतः संतः श्वसंति चेष्टंते । द्विजाः पक्षिणः । शिचा जालेन कालः कलयति । भगवानिह जयादौ कारणं ॥ ८ ॥ ननु भगवतो जयादिकारणत्वं न युज्यते । जितोऽहं पराजितोऽहमिति जीवस्यैव तद्धेतुत्वोपलंभादित्याशंक्य सा भ्रांतिरित्याह ॥ ओज इति । प्राणं पूर्णानंदमोज आदि शयंतं भगवंतं जयादिहेतुमाविज्ञाय जन आत्मानं स्वात्मानं हेतुं मन्यते । यतो जडोऽज्ञ इत्यर्थः ॥ ९ ॥ भूतानां भगवदधीनत्वं दृष्टांताभ्यामाह ॥ यथेति । ईशतंत्राणि भगवदधीनानि ॥ १० ॥ ननु भूतानां प्रकृतिपुरुषादि परतंत्रजन्मादिमत्त्वात्कथमीशतंत्राणीत्युच्यत इत्यत आह । पुरुषो हिरण्यगर्भः प्रकृतिश्चेतनो व्यक्तः शेष आत्मा वायुर्भूताभिमानिनश्चेंद्रियाभिमानिनश्चाशय इंद्रश्च ॥ तदुक्तं ॥ हिरण्यगर्भः पुरुष इत्यादि । एते हिरण्यगर्भादयो यस्य भगवतोऽनुग्रहं विनाऽस्य जगतः सर्गादौ न शक्नुवंति । ॥ तदुक्तं ॥ द्रव्यं कर्म च कालश्चेत्यादि ॥ ११ ॥ ननु यदुक्तं हिरण्यगर्भादयो न शक्नुवंतीति । तदयुक्तं । तेषां भगवदभिन्नत्वादित्यत आह ॥ अविद्वानिति । एवमुक्तप्रकारेणात्मानं सर्वांतर्यामिणमीश्वरमनीशं जीवाभिन्नं यो मन्यते सदाऽविद्वान्मिथ्याज्ञानीत्यर्थः । जीवेश्वराभेदे विरोधस्फुरणायानीशमीश्वरमिति चोक्तं । तथा चोक्तं । अनीशं जीवरूपेण परमात्मानमीश्वरं । ये मन्यंते तान्समीक्ष्य स्नेहान्निरयभाग्भवेदिति । ननु पित्रादयः स्रष्टारो दृश्यंते । व्याघ्रादयश्च हंतारो दृश्यंते । अतः कथं भगवानेव सर्वं कारणमित्यत आह ॥ भूतैरिति । स्वयमीश्वरः ॥ १२ ॥ ननु त्वया॰ पराजितस्य मम जयादि शंकैव नास्ति । किंतु बलाद्युद्धे प्रवर्तयसीत्यत आह ॥ आयुरिति । काले जयादिकाले यथा विपर्यया अकीर्त्यादयः ॥ १३ ॥ यस्मादेवं सर्वमीश्वराधीनं तस्मात्समस्यात् हर्षविषादहीनो भवेत् ॥ १४ ॥ समदृष्टावुपायमाह ॥ सत्त्वमिति । सत्त्वादि गुणाः प्रकृतेः स्वरूपभूता नात्मनो जीवस्य । तस्य चिदानंदमयत्वात् । तत्र गुणत्रयातीते जीवे साक्षित्वेन वर्तमानमात्मानं परमात्मानं यो वेद सः हर्षादिभिर्न बद्ध्यत इत्यर्थः ॥ १५ ॥ हर्षविषादानि-

वृत्तेन चाहमेव गुरुरित्याह ॥ पश्येति । वृकूणमायुधं शूलं भुजश्च यस्य तं ॥ १६ ॥ जयपराजययोरनित्यत्वं द्यूतरूपेणोपसंहराति ॥ प्राणग्लह इति । प्राणा एव गूलहायनो यस्मिन् । इषव एवाक्षा यस्मिन् वाहनान्येव । ततश्चाल्यमानान्यासनानि पलका यस्मिन् ॥ ॥ १७ ॥ गतालीकं निष्कपटं । गतविस्मयो गताहंकारः ॥ १८ ॥ सिद्धो जीवन्मुक्तः । जीवन्मुक्ते जाति भेदे सिद्धः स्यात्साधितेऽपि चेत्यभिधानात् । आत्मानं परमात्मानं भक्तः सेवितवानसि । भज सेवायामिति धातोः ॥ १९ ॥ वैष्णवीं विष्णुपत्नीं ज्ञानमोहिनीं भगवत्प्रसादाभावे ज्ञानविलोपकरीं मायां प्रकृतिगुणप्रवर्तकत्वेन तच्छब्दवाच्यां श्रीभूदुर्गारूपिणीं चित्प्रकृतिं भगवानतार्षीत् भगवदनुग्रहं संपाद्याभिमुखीकृतवानसीत्यर्थः । वै शब्दस्तूक्तार्थस्य प्रमाणप्रसिद्धिद्योतकः ॥ तदुक्तं ॥ श्रीभूदुर्गेति या भिन्नेत्यादि । महापुरुषतामुत्तमभक्तत्वं ॥ २० ॥ रजः प्रकृतेरसुरजातेः सर्वात्मनि सर्वांतर्यामिणि ॥ २१ ॥ खातकोदकैर्गर्तादि जलोपमैः । स्वर्गादिभिः किं ॥ २२ ॥ युधं संग्रामाणां पती मुख्यौ ॥ २३ ॥ आविद्ध्य भ्रामयित्वा । कार्ष्णायसं लोहमयं । हे मारिष श्रेष्ठराजन् ॥ २४ ॥ करभोपमं करिकरसदृशं । करिकाये तु करभः करिपोतेऽपि तत्करमित्यभिधानात् ॥ २५ ॥ उत्कृंतं छिन्नमूलं ययोस्ताभ्यां रक्तं स्रवतीति तथा । छिन्नपत्रः छिन्नपक्षः । गोत्रः पर्वतः ॥ २६ ॥ अधरां हनुं अधरोष्ठं भूमौ कृत्वा । उत्तरां हनुमूर्ध्वोष्ठं दिवि कृत्वा नभोवद्गंभीरेणागाधेन वक्त्रेण कालकल्पाभिर्मृत्युतुल्याभिर्दंष्ट्राभिश्च जगत्त्रयं ग्रसन्निव दृश्यमानो दैत्य उल्बणया जिव्हया हनुद्वयं लिलेहेत्यन्वयः ॥ २८ ॥ अतिमात्रोऽत्युच्छ्रितो महान्कायो यस्य स वृत्रः । तरसा वेगेनाक्षिपन् चालयन् निर्दरयन् विदारयन् जग्रास निजगार ॥ २९ ॥ महाप्राणो महाबलो महावीर्यो महाप्रभावः । महासर्पोऽजगरः ॥ ३० ॥ ॥ ३१ ॥ महापुरुषेण कवचरूपेण श्रीनारायणेन सन्नद्धो दंशितः । योगमायाबलेनाणिमादि योगमहिमावलेन ॥ ३२ ॥ बलाभिदिंद्रः । उच्चकर्त चिच्छेद ॥ ३३ आशुवेगोऽतिवेगवान् । वज्रस्तस्य वृत्रस्य कंधरं समंतात्परितः परिवर्तमानश्चक्रवद्भ्रमन् कृंतन् छिंदन् सन् ज्योतिषां सूर्यादीनामयने दक्षिणोत्तरगतिरूपे संवत्सरे योऽहर्गणः । षष्ठ्युत्तरशतत्रयात्मकः । तावताऽहर्गणेन वार्त्रहत्ये वृत्रहत्यायोगे काले न्यपातयत् । यद्वा । स्वार्थे तद्धितः । वृत्रहत्यायां वृत्रहननार्थं परिवर्तमान इत्यर्थः ॥ तथा चोक्तं ॥ संबंधितः समयेनेंद्र इत्यादि ॥ ३४ ॥ वार्त्रघ्नलिंगैर्वृत्रहंतृवीर्यप्रकाशकैर्मंत्रैः । वारहत्याय श्रवसे पृतना सहाय्याय चेत्याद्यैः । तमिंद्र-

माभिष्टुवाना अभितः स्तुवंतः । आत्मज्योतिर्जीवाख्यं तेजः स्वलोकं स्वेनाधिकृतं विद्याधरलोकं ॥ ३५ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ६-१२ ॥ ॥

॥ हरिः ॐ ॥ ॥ क्षपयेन्महदप्यंहो हरिभक्तैः कृताक्रिया । अश्वमेधो यथेंद्रस्येत्यध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ हे भूरिदार्थिनां बहुप्रद । निवृत्तेंद्रियाः स्वच्छचित्ताः ॥ १ ॥ ततः समुद्रतीरात् ॥ २ ॥ येन इंद्रेण तस्य हरेरिंद्रस्य । अर्कमर्कटमंडूकविष्णुवासववायवः । तुरंगसिंहशीतांशुयमाश्वहरयो दशेत्यभिधानं ॥ ३ ॥ दुःखहेतुं वक्तुं प्रस्तावकथामाह ॥ वृत्रविक्रमेत्यादिना । अर्थयन्प्रार्थयन् । ब्राह्मणवधात् । भीतः सन्नैच्छत् । हंतुमितिशेषः ॥ ४ ॥ ननु विश्वरूपं हतवतो तव वृत्रहनने का भीतिरित्यत आह ॥ भूरिति । अनुगृण्हद्भिर्मय्यनुग्रहं कुर्वाद्भिः स्त्यादिभिः । विश्वरूपवधोद्भवमेनः पापं विभक्तं विभज्य गृहीतं वृत्रहत्या क्व मार्ष्मि शोधयामि । सोऽब्रवीदिति शेषः ॥ ५ ॥ मा स्म भैर्भयं मा कार्षीः स्म ॥ ६ ॥ ७ ॥ यस्य हरेर्नामसंकीर्तनादेव ते शुध्यंति किं पुनस्तद्यजनेनेति भावेनाहुः ॥ ब्रह्मेति । श्वादः श्वपचः । यस्येत्यस्य तमित्यनेनान्वयः । इष्ट्वेति शेषः ॥ ८ ॥ अनुष्ठितेन कारितेन । स ब्रह्मेति ब्राह्मणजातेश्चरात्पृथग्ग्रहणं तद्वधस्य दोषाधिक्यज्ञापनार्थं ॥ ९ ॥ रिपुं वृत्रं । तस्मिन्वृत्रे । वृषाकपिमिंद्रं । वृषाकपिर्हरौशक्रेहरीतक्यांजनार्दन इत्यभिधानात् । तया ब्रह्महत्यया । नात्र तेजस्विन इंद्रस्य हत्यालेपस्तस्याः श्रेष्ठापराधत्वाभावात् । किंतु प्रारब्धसूचकत्वमेवेति इममर्थं प्रसिद्धिवाचकेन स्म हेति निपातसमुदायेन सूचयाति ॥ तथा चोक्तं । प्रारब्धकर्मणैवैषां क्लृप्तदुःखस्य सूचकमित्यादि । ननु धैर्यादि गुणयुक्तस्य कुतो न निवृत्तिरित्यत आह ॥ ह्रीमंतमिति । लोकनिंद्येति शेषः ॥ ११ ॥ रूपिणीं मूर्तिमतीं यक्ष्मग्रस्तां । असृक् पटां रक्तरंजितवस्त्रां रजस्वलामिव ॥ १२ ॥ मीनस्य गंधो यस्य स मीनगंधी । स चासावसुश्च निःश्वासवायुस्तस्य गंधेन ॥ १३ ॥ प्रागुदीचीमैशानीं मानसं नाम सरः ॥ १४ ॥ स इंद्रः । सहस्रवर्षाणि पुष्करनालस्य पद्मनालस्य तंतुष्ववसत् । उपान्वध्याङ्वस इति तंतूनां कर्मत्वं । कथं भूतः । अलब्धो भोगो येन सः । कुतः । यद्यस्मादिह जले वसन् । अग्निदूतश्च स्वयमग्निश्च स्वदत्तस्य हविर्भागनेतुर्जले प्रवेशाभावात् । न लब्धभोग इत्यर्थः । पाठांतरे न लब्धो यज्ञभोगो येन सः । अद्भिर्देवैरलक्षितोऽज्ञातो देवानामप् शब्दवाच्यत्वं च । आप इत्येव देवानां

सर्वेषां प्रददौ हरिः । स्वकीयमेवमन्यानि पृथक् पृथगदात्प्रभुरिति प्रमाणसिद्धं । अद्भिरावृतत्वादलक्षित इति वा । ब्रह्मवधात्तज्जन्यात्पापान्विमोक्षं विमोक्षोपायं ॥ १५ ॥ त्रिनाकं न अकं दुःखं यस्मिन्निति नाकः पुण्यलोको भूलोकापेक्षया तृतीयं स्वर्गलोकं । त्रिदिव शब्दवदयं शब्दो ज्ञातव्यः । यद्वा । त्रि शब्दवाच्यैर्देवैरधिष्ठितं । नाकं स्वर्गं ॥ तदुक्तं ॥ आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः । मरुतश्चैव विश्वे च साध्याश्चैव तु तद्गताः । अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृता इति स्कांदे । यद्वा । त्रिनाकं लोकत्रयं । त्रि शब्दस्थाने च शब्दं केचित्पठंति । स चावधारणार्थस्तावदित्यनेन संबध्यते । तावदेवेंद्रागमनपर्यंतमेव शशास न सर्वकालमित्यर्थः । यद्वा । नहुष एव शासनदेवाः । तेषां तादृश व्रतसद्भावादित्यर्थः ॥ तथा चोक्तं ॥ नान्यस्य पदमाप्स्यंति तद्देवानां व्रतं परं । तस्मात्तं नहुषं शक्रपदे निदधुरीश्वरा इति । ननु मनुष्यस्य कुतः स्वर्गराज्यमित्यत आह ॥ विद्येति । विद्यादिभिरनुभावः स्वर्गपालनसामर्थ्यं यस्य सः । तर्हि तस्मिन्सति कथमिंद्रस्य पुनः स्वर्गप्राप्तिरित्यत आह ॥ स इति । स नहुषः संपदैश्वर्याभ्यां यो मंदस्तेनांधबुद्धिर्यस्य सः । इंद्रपत्न्या च शच्या तिरश्चां गतिं सर्पयोनिं नीत उपायेन प्रापितः । अत्रेयमनुसंधेया कथा पौराणिकी बुधैः । कदाचिन्नहुषः प्राह शचीमैश्वर्यगर्वितः । इंद्रमां भज कल्याणीत्यथ शच्याऽतिभीतया । समावेदितवृत्तांतो बृहस्पतिरुवाच तं । शिबिकां ब्राह्मणैर्वाह्यामारुह्य त्वां समागतं । भजिष्यामीति तं ब्रूहि ततोऽसौ कुपितैर्द्विजैः । शप्तः पतिष्यति क्षिप्रमित्युक्ता सा ययौ नृपं । तयोक्तं नहुषः श्रुत्वा प्रतिजग्राह सादरं । वाहयामास शिबिकामगस्त्यादीन्महामुनीन् । तदा क्षिप्रं सर्प सर्पेत्यगस्त्यं स्वपदाऽहनत् । सर्पो भवेति तं शप्तो मुनिना नहुषः क्षणात् । पापात्माऽजगरो भूत्वा जनानां पश्यतामिति ॥ १६ ॥ तत इंद्रः स्वर्गं गतः प्राप्तः । कथं भूतः । ब्रह्मगिरा ब्राह्मणवाक्येनोपहतः सन् । ऋतं भर ध्यानानिवारितांहः । श्रीहरिः सर्वगत इति प्रल्हादोक्तवचनं सत्यं कर्तुं स्तंभादाविर्भूतत्वादृतंभरः सत्यपालकः श्रीनृसिंहः । तस्य ध्यानेन निवारितमघं येन सः । उपमर्दितप्रारब्ध इत्यर्थः ॥ तथा चोक्तं ॥ स्मरणात्तु नृसिंहस्य शक्रोमुक्तो बृहद्वधादिति । इंद्रस्य प्रारब्धोपमर्द एव तदन्यस्याश्लेषात् । श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्णयोऽयं हि शास्त्रमित्युक्तेरिति भावेनाह ॥ पापास्विति । पापो ब्रह्महत्याभिमानी पुरुषस्तमिंद्रं नाभ्यभूत् तस्याभिभवं नाकरोत् । कुतः । दिग्देवतया प्रागुदीच्यां दिशि स्थिते रुद्रेण तदंतर्या-

मिणा श्रीनरसिंहेन च । विष्णुपद्या श्रीविष्णुपादावलंबिन्या महालक्ष्म्या मानससरे मिलितया गंगया चावितं रक्षितं संतमत एव पापपुरुषो हतौजा नष्टबलः ॥ १७ ॥ अधिकार्युत्तमस्य त्रिलोकरक्षणे भगवता नियुक्तस्येंद्रस्य तत्कंटकोद्धारेण पापलेपाभावेऽपि लोकसंग्रहार्थं तत्प्रायश्चित्तत्वेनाश्वमेधानुष्ठानप्रकारमाह ॥ तमित्यादिना । ब्रह्मर्षयो ब्रह्मज्ञानसंपन्नाः । मुनयः । ब्रह्मपदस्य ऋषिपदेन संध्यभावो वा । तत्सद्भावेऽपि तत्सप्ताक्षरपादत्वं छांदसं । न वा एकेनाक्षरेण छंदांसि वियंति न द्वाभ्यामिति श्रुतेः । पुरुषस्य हरेराधानं यस्मिन् ॥ १८ ॥ सर्वदेवानां प्रधानश्चांतर्यामी च तस्मिन् । मयं प्रधानमुद्दिष्टमिति वचनात् । सर्वभूतमयात्मनीति पाठेऽप्ययमेवार्थः । ब्रह्मवादिभिर्विततेऽनुष्ठितेऽश्वमेधे महेंद्रेणेज्यमाने पुरुषे सति ॥ १९ ॥ तेनैव पुरुषेणैव शून्यापनीतो नाशित इत्यर्थः ॥ २० ॥ मरीचिमिश्रैर्मरीचिमुख्यैरधियज्ञं सर्वयज्ञभिरुत्कृष्टत्वप्रवर्तकत्वादेरधियज्ञ शब्दवाच्यं । सर्वांतर्यामिणं । प्राणिनां देहगो विष्णुरधियज्ञ इतीरित इति वचनात् । नात्राव्ययीभावः किंत्वधिगतो यज्ञामिति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अतो न कश्चित्क्षुद्रोपद्रव इति बोध्यं । इंद्रो महानासेत्यनेन इंद्रो वै वृत्रं हत्वा महानभवदित्यादि श्रुतिरुक्तार्थसंवादिनीति सूचयति ॥ २१ ॥ पाठादि विधातुमाख्यानं स्तौति ॥ इदमिति । प्रक्षाल्यतेऽनेनेति प्रक्षालनं । तीर्थपदस्यानुकीर्तनं यस्मिन् । भक्तेरुच्छ्रयो यास्मिन् यस्माद्वा भक्तजनानामनुवर्णनं यस्मिन् । महेंद्रस्य मोक्षो यस्मिन् । मरुत्वत इंद्रस्य विशेषेण जयो यास्मिन् । इंद्रियं तत्पाटवकरं । इंद्रियसंबंधीति वा । आयुषमायुष्यं । अनेनेंद्रोपाख्यानश्रोतॄणामपि सर्वानिष्टनिवृत्त्युक्तत्वान्महात्मन इंद्रस्य न पापलेपोऽस्ति । किंतु लोकसंग्रहायैव प्रायश्चित्तानुष्ठानमित्येतद्दृढीकृतं वेदितव्यं ॥ तथाचोक्तिः । इंद्रोऽप्यवाप स्वस्थानमिष्ट्वा विष्णुं विपापकः । धर्मवृद्ध्यर्थमेवैतत्पापमासीच्छचीपतेः । न हि लोका वनं प्राप्तं त्रैलोकेशस्य वज्रिणः । वृत्रं हत्वा महानासेत्यादि वेदपदं च यत् । क्वचित्पापं च पुण्यानां वृद्धये भवति स्फुटं । वृत्रं हत्वा यथेंद्रस्य जना धर्माभिवृद्धये । देवानां वा मुनीनां वा भवेदेवं न वै नृणां । पापं यत्पुण्यमेतच्चासुराणां विलोमतः । एवं हि स्कांदवचनं न पापं तच्छचीपतेरिति ॥ २२ ॥ २३ ॥

इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ६–१३ ॥ ॥ ॥

॥ हरिः ॐ ॥ चित्रकेतुप्रसंगोक्तिरितोऽध्यायचतुष्टये । पुत्रादि ममता चित्रकेतोरिव शुचां पदं ॥ तस्माद्भूभुजा

त्याज्येत्यध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ नन्वहं हरे तव पादैकमूलदासानुदासो भवितास्मभूय इत्यादि वृत्रवाक्यपर्यालोचनया तस्य भगवद्भक्तत्वं प्रतीयते । भक्तत्वं च द्विविधं । नारायणायनत्वं नारायणपरायणत्वं चेति । वृत्रस्यासुरजातित्वेन नोभयमपि संभवतीति भावेन राजा पृच्छति ॥ रजस्तमःस्वभावस्येति सप्तभिः । तत्र तावन्नारायणपरायणत्वासंभवं कैमुत्येनाह द्वाभ्यां ॥ १ ॥ शुद्धं सत्त्वं शरीरोपादानत्वेन येषामत एवामलात्मनामदुष्टमनसामेतादृशानामपि देवानामृषीणां च मुचकुंदचरणे भक्तिर्नारायणपरयणत्वं नोपजायते । ब्रह्मादीनां केषांचिन्नारायणपरायणत्वात्तद्व्यावृत्त्यर्थं ॥ प्रायेणेति । रजस्तमःस्वभावो यस्यासुरजातेरित्यर्थः । अत एव पाप्मनो दुष्टस्य वृत्रस्य नारायणे दृढामतिरखंडितभक्तिः । नारायणपरायणत्व कथमभूत् । न युज्यत इत्यर्थः । नारायणपरायणत्वाभावेऽपि नारायणायनत्वं भविष्यतीत्याशंक्य नारायणपरायणत्ववत्तदपि दुर्लभमित्याह ॥ रजोभिरिति त्रिभिः । पार्थिवै रजोभिः परमाणुभिः समा असंख्याता अनंता इत्यर्थः । जंतवो जीवास्तेषां मध्ये ये केचन कतिपया मनुजादय एव श्रेयो धर्ममीहंते कुर्वंति । असुरादीनां धर्मविमुखत्वादिति भावः ॥ २ ॥ ३ ॥ प्रायो मुमुक्षव इत्यत्र स आत्मा तत्त्वमसीत्यत्रेवाकारप्रश्लेषेणापि पदच्छेदोऽभिप्रेतः । मुमुक्षु शब्देन चापरोक्षज्ञानित्वलक्षणजीवन्मुक्तीच्छा विवक्षिता । ततश्चायमर्थः । तेषां मनुजादीनां मध्येऽमुमुक्षवः प्रायो बाहुल्येनामुमुक्षवस्तु केचनैव । मनुजानां प्रायः प्रवृत्तिधर्मरुचित्वादिति भावः । मुमुक्षूणां जीवन्मुक्तेच्छूनां सहस्रेषु कोचिदेव प्रयतते । प्रयतमानेष्वपीति वाक्यशेषः । कश्चिदेव मुच्यते जीवन्मुक्तो भवति ॥ ४ ॥ मुक्तानां जीवन्मुक्तानां सर्वेषामपि सिद्ध्यति । सिद्धिपदोदिता स्वयोग्यानंदप्राप्तिलक्षणा मुक्तिर्भवति । सिद्धिं गताः सर्वेऽपि नारायणायनाः । शांतात्मानश्चेति मध्ये ग्राह्यं । प्रेत्युपसर्गस्वारस्यात् । नारायणविषयकमयनं ज्ञानं येषां ते तथोक्ताः । शांतो भक्तिपूर्णः । आत्मा मनो येषां ते तथोक्ता इत्यर्थः । सिद्धानामुक्तविशेषणद्वयोपेतमुक्तानां कोटिष्वपि नारायणपरायणः प्रशांतात्मा सुदुर्लभः । क्वाचिदेव ब्रह्माद्याः केचिदेव नारायणपरायणाः प्राशांतात्मानश्चेति यावत् ॥ तथा चोक्तं गीताया ॥ मनुष्याणां सहस्रेषु कश्चिद्यततीत्यादि ॥ ब्राह्मे च ॥ अनंतानां तुऽजीवानां यतंतं केचिदेव तु । मुक्त्यै तेषु च मुच्यन्ते कोचिन्मुक्तेषु स्फुटं । केचनैव हरिं सम्यक् ब्रह्मरुद्रादयो विदुः । अन्येषां यावता मुक्तिस्तावत्ज्ञानं हरौ परमिति ॥ सत्तत्त्वे च ॥ सर्वे मुक्ता हरौ भक्तास्तेषु ब्रह्मैव मुख्यतः । विष्णोः परमभक्तस्तु

तस्माज्जीवघनो मत इति ॥ तात्पर्ये च ॥ नव कोट्यस्तु देवानामित्यादि । नारायणायना देवा इत्यादि । एतान्निर्धार्य मनसि निधायैव व्याख्यातं च गीतातात्पर्यटीकायां जयतीर्थचरणैः । जीवन्मुक्तानां सर्वेषामपि सिद्धिपदोदिता मुक्तिर्भवति । सिद्धिं गताः सर्वेऽपि नारायणायनास्तज्ज्ञानादिमत्त्वात् । नारायणपरायणस्तु सुदुर्लभ इत्यर्थः । अनुव्याख्याने मुक्तानां वैराग्यभक्त्यादि साधनतारतम्यपरत्वेनोदाहृतोऽयं श्लोकः । सुधायां प्रकारांतरेण व्याख्यातः । मुक्तानां शरीराद्यभिमानरहितानां सिद्धानां ज्ञानिनां कोटिष्वपि नारायणपरायणः प्रशांतात्मा सुदुर्लभः क्वचिदेव । नारायणायनाः शांतात्मानस्तु सर्वेऽपीति स्फुटं । तारतम्यं प्रतीयते । अत्र विशेषणद्वयेन वैराग्यभक्ती कथ्येते इति ॥ सन्न्यायरत्नावल्यां तु । मुक्तानां मध्ये ये उद्योगातिशयेन सम्यगाविर्भूतस्वयोग्यानंदासिद्धास्तेषां कोटिष्वपि नारायणैकायनत्वेन नारायणपरायणो यः सुदुर्लभः स च ब्रह्मादिरेव भवितुमर्हति । अन्येतु नारायणायना एव । एषः श्लोको जीवन्मुक्तानामपि ज्ञानादीनां तारतम्यप्रतिपादकत्वेन योजितव्य इति । अत्र गतासूनगतासूंश्च नानुशोचंति पंडिता इतिवद्यथा सिद्धेषु नारायणपरायणो दुर्लभः । एवं चेतनेषु नारायणायनोऽपि दुर्लभ इति बुद्ध्या विविच्य दृष्टांतिकदार्ष्टांतिकभावेन व्याख्येयं । अन्यथा देवानामिति श्लोकेनैव नारायणपरायणदौर्लभ्यस्योक्तत्वेन पौनरुक्त्यापातात् । प्रकृतानुपयोगाच्च ॥ ४ ॥ ५ ॥ उपसंहरति ॥ वृत्र इति । तु शब्देनात्यंतानुपपत्तिं सूचयति । तामेवाह ॥ पाप इत्यादि विशेषणद्वयेन । दृढमतित्वोपपादनार्थमुल्बणे संग्राम इति । अल्पाधिकारिणो महापदि भगवद्विस्मरणसंभवादिति भावः ॥ ६ ॥ न चेंद्रभिया श्रीकृष्णं शरणं गत इत्याह । पौरुषेण पराक्रमेण । यद्वा । परमात्मविषयकस्नेहेन । अहो दानवसिद्धोऽसीत्युक्तत्वात् ॥७॥ वृत्रस्य शापवशेनासुरदेहस्य संभवेऽपि स्वभावतो देवत्वेन नारायणायनत्वलक्षणं भक्तत्वं युज्यत एव ॥ ८ ॥ देवाः शापाभिभूतत्वात्प्रल्हादाद्या बभूविरे । अतस्तद्व्यतिरेतेषां नान्यथा व्यत्ययो भवेदित्याशयवान् शुकस्तस्य पूर्वजन्मवृत्तांतमाह ॥ शृणुष्वेत्यादिना । यथा यथा तच्छ्रुतं ॥९॥१०॥ भार्यासह सहस्राणां दशसहस्राणि कोटिरित्यर्थः । सांतानिकः स्वयं संतानार्होऽपि तासु संततिं न लेभे । सर्वास्ता वंध्या एव । दैवयोगेन मिलिता इति भावः ॥११॥ तदेवाह ॥ वंध्यापातिरिति ॥ १२ ॥ १३ ॥ १४ ॥ उपासीदत्तत्समीपे उपविवेश । समाहितः संशयतः ॥१५॥१६॥ तथा शब्दः समुच्चये । ते तवात्मनो भवतः प्रकृतीनां चानामयमारोग्यं स्वस्ति शुभं । अपि

किं प्रकृतिविषयककुशलप्रश्नेन किं प्रयोजनमित्याशंक्य प्रकृत्यधीनमेव हि राज्यमिति सदृष्टांतमाह ॥ यथेति । यथा महदहंकारपृथिव्यादिभिः सप्तभिः पुमान् जीवो नित्यं गुप्तो भवति । न तु तद्व्यतिरेकेण क्षणमपि तिष्ठति । एवं राजा च । सप्तभिः स्वाम्यामात्योजनपद-दुर्गं द्रविणसंचयः । दंडो मित्रं च तस्यैता सप्तप्रकृतयो मता इत्युक्तलक्षणाभिर्नित्यं गुप्तः सन् आत्मानं प्रकृतिष्वद्धा साक्षान्निधाय तदंतर्वर्तिनं कृत्वा श्रेयो राज्यसुखं प्राप्नुयादित्यर्थः । स्वामी गुरुः स्वयं वा मंत्रसहायो मंत्री कर्मसहाय आमात्य इति भेदः ॥ ॥ १७ ॥ प्रकृतीनामपि राजानुवर्तनमेव श्रेयः साधनमित्याह ॥ राज्ञ इति । हे नरदेव प्रकृतयोऽपि राज्ञ आसमंतात्प्रीति हेतवो भवंति चेच्छ्रेयः । आप्नुयुरित्यस्यानुकर्षणार्थस्तथा शब्दः ॥ १८ ॥ दाराश्च सुताश्च आमात्याश्च श्रेण्यो राज्ञः समानवयसः श्रेणयस्त्वंगरक्षका इत्युक्तलक्षणाः पौराः पुरवासिनः । जनपदस्तत्तद्देशाधिकारिणः । आत्मा मनः । एते सर्वे वशवर्तिनोऽपि ।किं मनोजयप्रश्ने किं कारणमित्यत आह ॥ यस्येति । यस्यात्मा मनोऽनुवशोऽनुवर्ति आधीनं स्यात्तथा चेत् । इमे सर्वे तस्य वशगा भवंति । क्रोधलोभाद्यभिभूतत्वेन मनोजयशून्यस्य सर्वे भूत्यादयः प्रतिकूला भवंतीति भावः । किंच सपालाः साधिपतयः । लोकाः प्रजा अतंद्रिता अप्रमुक्ताः संततस्तस्य बलिं करं प्रयच्छंति ॥ १९ ॥ २० ॥ आत्मा भवान् आत्मनो न प्रीतये भवति न तुष्यति । तत्किं परतो वा स्वतोवा किंचालब्धकामं त्वां लक्षये । कुतः । येन चिंतया शबलं विच्छावं मुखं लक्षये ॥ २१ ॥ विदुषा सर्वज्ञेनापि त्वया विकल्पितः पृष्ठः ॥ २२ ॥ अलब्धकामत्वं कथयन् पुत्रं याचते ॥ भगवन्निति चतुर्भिः ॥ २३ ॥ आत्मानि मनसि ॥ २४ ॥ अप्रजमपुत्रं । क्षुतृड्भ्यामन्नपानकामं । अपरे स्रक्चंदनादयो यथा न सुखयंति तथा तत्तस्मान्नः पाहि ॥ २५ ॥ तदेवाह ॥ पूर्वैरिति । पूर्वैः पित्रादिभिः सहागतं प्राप्तं तमो नरकं प्रजया यथा तरेम तत्तथा विधेहि ॥ २६ ॥ त्वाष्ट्रं त्वष्टृदेवताकं ॥ २७ ॥ ज्येष्ठा प्रथमोढा श्रेष्ठा गुणैः । यज्ञोच्छिष्टं यज्ञशेषं ॥ २८ ॥ जन्मना हर्षं मरणेन शोकं प्रददातीति तथा इति । एवमुक्त्वा ययौ ॥ २९ ॥ शूरसेनस्य शूरसेनाधिपतेः । तेजसा वीर्येण यो गर्भः स ववृधे ॥ ३० ॥ ३१ ॥ शूरसे-नानां शूरसेनविषस्थानां प्रजानां ॥ ३२ ॥ जातकं जातकर्म ॥ ॥ ३४ ॥ कीदृशं जातकर्म । धन्यं धनकरं यशस्यं यशस्करं । आयुष्यं आयुष्यकरं ॥ ३४ ॥ ३५ ॥ निःस्वस्य दरिद्रस्य ॥ ३६ ॥ मोहस्य सम्प्लवो यस्मिन्प्रजाकामरूपो ज्वरस्तापः ॥३७॥

प्रजावति पुत्रसंपन्ने । दार इत्येकवचनमार्षं । अनपत्येनापुत्रत्वनिमित्तेन ॥ ३८ ॥ ॥ ३९ ॥ गृहिण्येव गृहं दारेष्वपि गृह इत्यमरः । पतिसंमता न भवतीत्याग्रहसंमता तां ॥ ४० ॥ स्वामिनः स्नेहाभावे दासित्वमप्रयोजकमित्याह ॥ दासीनामिति । दास्या दासी यथा तथा वयं दुर्भगाः ॥ ४१ ॥ न संमता वृत्तिर्जीवनं यासां तास्तथोक्तास्तासां वंध्यत्वादिति भावः ॥ ४२ ॥ विद्वेषेण नष्टा मतिर्यासां ताः क्रूरचित्तत्वेन हेतुः स्त्रिय इति । गरं विषं । दुर्मर्षा असहमानाः ॥ ४३ ॥ ॥ ४४ ॥ धात्रीं स्तनपायिनीं ॥ ४५ ॥ उद्धततारे कनीनके ययोस्ते लोचने यस्य तं ॥ ४६ ॥ विभ्रष्टः शिरोरुहा अंबरे च यस्याः सा तथा ॥ ४७ ॥ ताश्च सपत्न्योऽपि व्यलीकं मृषैव रुरुदुः ॥ ४८ ॥ न लक्षितोऽ ज्ञातोऽतको मृत्युहेतुर्यस्य तं । अनुगताश्च ते प्रकृतय आमात्या द्विजाश्च तैर्वृतः । अनुप्रकृतिरिति पाठेऽनुगताः प्रकृतयो यस्य ॥ ४९ ॥ बाष्पकलाभिरश्रुबिंदुभिरुपरोधतः संवृतत्वेन निरुद्धो कंठो यस्य ॥ ५० ॥ उरुशुचार्पितं बहुशोकेन व्याप्तं । एकसंतितिमेकमेव संततिरूपं ॥ ५१ ॥ विमलास्रजो येषु तान्केशान् ॥ ५२ ॥ शोकप्रकारमेवाह ॥ अहो इति । हे विधातः । जगत्कारणपरमेश्वर । त्वमात्मन् । तव सृष्टेरप्रतिरूपमननुरूपमीहसे चेष्टसे । तदेवाह । अनु परे वृद्धे जीवति सति । अपरस्य बालस्य वा मृतिस्तथा हि । वृद्धस्य सृष्टिसामर्थ्याभावे बाले च मृते सति तव सृष्टिर्नष्टा स्यादित्यर्थः ॥ ५३ ॥ सांप्रतं स्वसृष्टेर्विपरीतोऽस्ति चेत्तत्राह ॥ विपर्यय इति । विपर्ययो विपरीतोऽस्ति चेत्तर्हि । त्वं प्राणिनामतिदुःखकारित्वात् । ध्रुवं परः शत्रुरसि । न तु कृपालुरित्यर्थः । यद्वा । अननुरूपमीहमानत्वादतिबालिशो जडादपि जड इत्युक्तं । कथं तर्हि बालिशो न स्यामित्यत आह ॥ विपर्यय इति । विपर्ययश्चेदुक्तादन्यथा चेत् । पूर्वतनस्य पूर्वमृतिः पश्चात्तनस्य पश्चान्मृतिश्चेदिति यावत् । तर्हि तं ध्रुवं निश्चितं । परो बालिशादन्यः प्राज्ञोऽसि । स्वसृष्टिप्रातिकूल्यनाचरणादित्यर्थः । अत्र परमविवेकिनो भवतः पुत्रशोकवशादापद्यमानं बालिशत्वादिकं न वास्तवं मंतव्यमिति विशेषणं तु शब्देन सूचयति ॥ तथा चोक्तं ॥ संतापक्रोधेत्यादि । ननु जीवकर्मानुसारेण जन्मादि कुर्वतो मम कोऽपराध इत्यत आह ॥ नहीति । पुत्रे जीवत्येव पिता म्रियते । पितरि जीवत्येव पुत्रो जायत इति क्रमो नास्ति । कर्माधीनत्वादिति चेत्तर्ह्यात्मकर्मभिरेव तज्जन्मादिकमस्तु । किं त्वया कृत्यं । ननु मयेश्वरेण विना जीवैः कर्मभिः कथमिदं सिद्ध्येदिति चेत् । भवतु नाम । तथाऽपि निजसर्गवृद्धये ते त्वया यः स्नेहपाशः कृतस्त-

मिममेव स्वयं विवृश्चसि भिनत्सि । इत्याक्रोश इति । न ह्येवंविधदुःखं दृष्ट्वा कश्चिदपि पुत्रादिषु स्नेहं करिष्यतीति भावः ॥ ५४ ॥ अप्रजानां पुत्राणां दुस्तरमकरुणेन यमेन सह । यद्वा । दूरं न याहि । कुतोऽकरुणेन यमेन यस्य यमस्याकरुणत्वादित्यर्थः ॥ ५५ ॥ अशनया क्षुधात्तनूज हे पुत्र । नाहं प्रथमं त्वत्पार्श्वमागता सती तव मुग्धं सुंदरं स्मितं यस्मिन् । मुग्धः सुंदरमूढयोरिति विश्वः । मुदिते प्रसन्ने वीक्षणे यस्य तद्वक्त्रं ददृशे दृष्टवत्यास्मि ॥ ५६ ॥ इदानीमपि कला अव्यक्तमधुरा गिरो न शृणोमि । ध्वनौ तु मधुरास्फुटे इत्यमरः । तर्हि किमपुनरन्वयं पुनरागमनं यथा न भवति तथाऽन्यलोकं गतोऽसि । कीदृशोऽघृणेन यमेन नीतः सन् ॥ ५७ ॥ अचेतनं बुद्धिशून्यं । अनायकं बोधकरहितं ॥ ५८ ॥ ५९ ॥ ६० ॥ इति श्रीभागवत टिप्पण्यां चतुर्दशोऽध्यायः ॥ ६-१४ ॥ ॥

॥ हरिः ॐ ॥ सत्संगतिश्चित्रकेतोरिव संतापहारिणी । संसारदावदग्धस्येत्यध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ तत्रांगिरो नारदावागत्य किं चक्रतुरित्यत आह ॥ ऊचतुरिति । मृतकोपांते शवसमीपे ॥ १ ॥ यमनुशोचस्ययं तव कः कीदृशो बंधुः स्यात् । त्वं चास्य बंधूनां मध्ये कतमः सृष्टौ प्रवाहरूपायां । अयं च मम पुत्रोऽहं चास्य पितेति चेत्तत्राहतुः ॥ पुरेति । ये पूर्वे जन्मनि यं पित्रादिरूपेण संयुक्ता आसन् । त एव मरणेन ततो विमुक्ताः संतो वर्तमानजन्मनि कदाचित्तस्यैवान्यस्य वा पुत्रादयो भवंति । अतो नायं नियम इति भावः ॥ २ ॥ तमेवाभिप्रायं प्रकटयतः ॥ यथेति । स्रोतसः प्रवाहस्य वेगेन वालुका वियुज्यंते । संयांति संयुज्यंते । यथा कालेन कालवेगेन तत्प्रेरकेण श्रीहरिणा च निमित्तेन देहिनो जीवा अपीत्यर्थः ॥ ३ ॥ तथाऽप्येतावंतं कालं मम पुत्रो नाभूत् । वार्धिके च जातो मृत इति दुःखमिति चेत्तत्राहतुः ॥ यथेति । धानासु बीजेषु धाना बीजांतराणि भवंत्युत्पद्यंते । कासुचित्कदाचिन्न भवंति नोत्पद्यंते नश्यंति च । न तु भवंत्येवेति वा नियमः । एवमेव भूतानि पुत्रादि रूपाणि भूतेषु पित्रादिषु । अतो धानानां जन्यजनकभावेऽपि यथा पितृपुत्रादि भावो नास्ति । एवमत्रापीत्यतो न शोकः कार्य इति भावः ॥ ४ ॥ पितृपुत्रादि भावाभावमेव स्पष्टयतः ॥ वयमिति । भो राजन् । तुल्यकाला वर्तमानकालीना अस्मदादयो जन्मनः प्राक् मृतेः पश्चाच्च यथा न पित्रादि भावापन्ना एवमधुनाऽपीति विद्धीत्यर्थः ॥ ५ ॥ यद्येवं तर्ह्यहमस्य जनकः पालक

इत्यभिमानो भूतानां कथमुपपद्यत इत्याशंक्य भगवता निमित्तेन स्वीकृतत्वादित्याहतुः ॥ ॥ भूतैरिति । नन्वीश्वरस्य सृष्ट्यादिभिः साध्यमस्ति चेदपूर्णकामता प्राप्ता । नास्ति चेत्कुतस्तत्र प्रवृत्तिरित्यत्राहतुः ॥ अनपेक्षोऽपीति । निरपेक्षो बाल इव लीलाः करोतीत्यर्थः । एवं सर्वकारणाद्भगवत एव भजनीयो न शोकेन प्रयोजनमिति भावः ॥ तथा च श्रुतिः ॥ नाना ह्येनं व्यपदिशंति पितेति पुत्रेति भ्रातेति ॥ वाराहे च ॥ पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः । बहुधा गीयते देवै जीवांशस्तस्य च त्विति । ॥ ६ ॥ ननु भूतैर्भूतानि भूतेशः सृजतीत्याद्युक्तं । चेतनानां नित्यत्वान्नित्यो नित्यानां चेतनश्च चेतनानामित्यादि श्रुतेरित्याशंक्यायं जन्मादि व्यवहारो देहनामेव न त्वात्मन इत्याहतुः ॥ देहेनेति । देहिनः पितुर्देहेनैव देहिनः पुत्रस्य देहो मातुर्देहादभिजायते । यथा बीजादेव बीजं जायते । देही तु शाश्वत एव । अर्था भूम्यादिर्यथा तद्वदित्यर्थः ॥ ७ ॥ ननुजन्मादि व्यवहारो देहानामेव न त्वात्मन इत्येतदयुक्तं । देहव्यातिरिक्तस्यात्मनोऽभावात् । न च तं स्वशरीरात्प्रवृत्तिरिति श्रुतिविरोधः । स्थूलोऽहं कृशोऽहमिति देहात्मैक्यग्राहिप्रत्यक्षविरोधेन तस्या उपचारसंभवादित्याशंक्यैक्यप्रतीतिर्भ्रांतिरित्याहतुः ॥ देहीति । देहदेहिनोरविभागोऽभेदोऽविवेककृतोऽज्ञानकल्पितः । नायं शुक्तिरूप्यवदागंतुक इत्याह ॥ पुरेति । पुरा पुरातनोऽनादिरित्यर्थः । अविभागापरो विभागारोपं दृष्टांतमाहतुः ॥ जातीति । अत्रजाति शब्दो गुणादेरप्युपलक्षकः । यथा वस्तुनि गवादिलक्षणे गोत्वादि जात्यादेर्गवादि व्यक्तिश्च विभागो भेदोऽसन्नपि कणादीनामज्ञानेन कल्पितस्तथेत्यर्थः ॥ तथा चोक्तं ॥ गुणप्रिया जातिपूर्वधर्माः सर्वेऽपि वस्तुनः । रूपमेव द्विधं तच्च यावद्वस्तुनि खंडितमिति । कुतो भस्मत्वयात्यस्य नरत्वं पुनरिष्यत इति वचनाच्च ॥ ८ ॥ देहदेह्यविभागप्रतीतेरेव देहधर्मा नानात्वादय आत्मन्यारोपितव्यमित्याहतुः ॥ नानात्वमिति । क्रियाफलं जीवगतपुण्यपापलक्षणं कर्मफलं नानात्वं सुरनरत्वादि लक्षणं जन्मादयश्चातद्धर्मा अपि अनात्मधर्मा अपि द्रष्टुर्देहाभिमानिन आत्मनो भांति । यथाऽग्निना दाह्यस्य तृणादेर्विक्रिया विकारा अग्नेर्भांति तद्वदित्यर्थः ॥ ९ ॥ उक्तमेव विशदयतः ॥ त इम इति । ते देहनिष्ठत्वेन प्रसिद्धा इमे जन्मादयो देहसंयोगनिमित्तान् । आत्मन्याभांति तन्निष्ठत्वेन प्रतीयंते । देहसंयोगसद्भावेऽपि ज्ञानिनां तथा प्रतीत्यभावात्तत्र मुख्य कारणमाह ॥ असद्ग्रहादिति । देहोऽहमिति दुराभिमानत्वादित्यर्थः । तत्र दृष्टांतः ॥ स्वप्न इति ।

यथा स्वप्नावस्थायां जाग्रत्वमाभाति तथेत्यर्थः। मिथ्याज्ञानस्य फलं वदंतौ तन्निषेधतः ॥ नेति । यदन्यद्वस्तुस्वरूपादन्यथाभूतं देहात्मैक्यादिकं तत्सर्वं न ध्यायेन्न जानीयात् । यतो भयं भयप्रदमित्यर्थः ॥ तथा चोक्तं ॥ यत्किंचिदन्यथा संस्थमन्यथा ध्यातमंजसा । अनर्थकारणं लोके किमु सर्वेश्वरो हरिरिति ॥ १० ॥ एवमभिमानस्यानर्थकारणत्वेन योऽवश्यं परिहरणीय इति बोधयितुं तत्परिहारफलं तावत्सदृष्टांतमाहतुः ॥ सुप्तस्येति । यथा सुषुप्त्यवस्थापन्नस्य पुरुषस्याहामित्याभिमानाभावाद्विषयव्याप्तिलक्षणा संसृतिर्नाभाति । तद्वदेव जीवस्य जीवतो देहावच्छिन्नस्य सतोऽप्यनहंमतेरहमभिमानशून्यस्यात एव जीवन्मुक्तस्य घोरासंसृतिर्नाभातीत्यर्थः ॥ ११ ॥ एवमभिमानत्यागस्य संसारनिवृत्तिफलकत्वादभिमानं त्यक्त्वा श्रीहरिं भजस्वेति बोधयतः ॥ तस्मादिति । तस्मादभिमानत्यागस्य संसारनिवृत्तिफलकत्वादन्यत्पुत्रादि विषयं। मनोमात्रं रागद्वेषदुष्टमनःकारणं । अहं ममताभिमानत्वलक्षणं तमो जहि परिहर । तत्परिहारे उपायमाहतुः ॥ वासुदेव इति। अत्र देहदेह्यविभागोऽयमविवेककृतः। पुरेत्यारभ्य तत्र तत्र देहात्मैक्यप्रतीत्युक्तः स्फुटतरविवेकाभावादित्यभिप्रायः। मम देह इति भेदस्यैव सर्वैरनुभूयमानत्वेनैक्यप्रतीतेः कस्याप्यभावादिति ज्ञातव्यं ॥ तदुक्तमनुव्याख्याने ॥ मम देह इति ह्येव न देहोऽहमिति भ्रमः ।इत्यारभ्य व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् । भेदज्ञानेऽपि चांगारवन्हिवत्स्वाविविक्तवत् । भवं च व्यवहारश्च न हि प्रत्यक्षगानपि अर्थान्यथाऽनुभवतः प्रतिपादयितुं क्षमा इति ।॥ सुधायां च ॥ भेदे ज्ञानेऽप्यात्मनो देहे व्याप्तत्वादंगारवन्हिवल्लोकानां व्यवहारेष्वपाटवादत्यंतविविक्तवेदनेष्व सामर्थ्यात्पुरादि व्यवहारश्च स्वाविविक्तवद्भवंति विषयविवेकाभावविवक्षयैव ते व्यवहारा इत्याशयः। अत एव विवेकार्थानामुपदेशानां च सार्थ्यक्यमुपपद्यते । विशदो हि विवेकः पुरुषार्थाय कल्प्यते। न त्वौत्पत्तिकः । आत्मनो देहे व्याप्तत्वादत्यंत प्रेमास्पदत्वाद्रागादयोऽपि युज्यंत एवेति ॥ १२ ॥ आधिना म्लानं वक्त्रं ॥ १३ ॥ अवधूतेन वेषेण धूलीरूषिताकारेण ॥१४॥ अवनौ भूमौ । बोधनायैते उन्मत्ता इति ज्ञापनायोन्मत्तस्यैव लिंगं येषां ते तथा ॥१५॥१६॥१७॥१८॥ अज्ञानिनां ज्ञानहेतवः ॥१९॥ मुग्धधियो मूढबुद्धेर्मम युवां प्रभू रक्षकावुभावपि समाविति वा। अतो युवाभ्यां ज्ञानदीपक उदीर्यतां प्रवर्त्यतां ॥२०॥ कौ तु युवामित्यस्योत्तरमाह ॥ अहामिति ॥२१॥ अतदर्हत्वे हेतुर्महापुरुषगोचरं श्रीहरिभक्तमनुस्मृत्य विचिंत्य ॥२२॥ भगवद्भक्तिमतो न नाशः। न मे भक्तः

प्रणश्यतीति भगवता प्रतिज्ञातत्वादिति भावेनाह ।। ब्रह्मण्य इति ।।२३।। यद्यहमनुग्राह्यस्तर्हि पूर्वमेव ज्ञानं कुतो नोपदिष्टमित्याशंक्य ज्ञानांगभूतवैराग्याभावादिति भावेनाह ।। तदैवेति। यद्यपि तेदैव पूर्वागमनसमय एव ज्ञानं न ददामि तथाऽपि तं पुत्रविषयकं। अभिनिवेशमाग्रहं ज्ञात्वा पुत्रमेव ददामीत्यर्थः ।।२४।। इदानीं विषयदोषदर्शनेन विरक्तस्य तव ज्ञानाधिकार इत्याशयेनाह ।।अधुनेति। दारादीनामनित्यत्वादिकमतिदिशति ।। एवमिति । एवं पुत्रवद्रायोऽर्थाश्चला अनित्याः । किंच हे शूरसेन । इमे राज्यादयः सर्वे शोकादिप्रदाः ।। ।। २५ ।। किंचागमापायित्वेन गंधर्वनगरस्तुल्याः । गंधर्वनगरं ह्यकस्मादेव क्वाचिदायाति वाऽपैति चेति प्रसिद्धं । नन्वयं पुत्रदारादिरूपो बंधः किं मूल इत्यत आह ।। मनोभावा इति । मनोजन्या इत्यर्थः । तर्हि किमयं बंधः स्वप्नादिवन्मिथ्येत्यत आह- ।। स्वप्नेति । स्वप्नः स्वप्नजाग्रत्वं माया ऐंद्रजालिकं । मनोरथो मनोरथस्थायित्वं । दृश्यमानाः प्रतीतमात्रशरीराः स्वप्नादय इवेमे पुत्रादयोऽर्थेन पारमार्थिकस्वरूपेण विना न दृश्यंते प्रत्यक्षादि प्रमाणैः सत्यत्वेनैव ज्ञायंत इत्यर्थः ।। २६ ।। २७ ।। ननु पुत्रादयः पुण्यापुण्यकृता इति केचिदाहुः । तत्कुतो मनोभावत्वमित्यत आह ।। कर्मेति । कर्मेप्सिततमं । अभिध्यायतो रागाद्युपहतान्मनस एव निमित्तान्नानाकर्माणि पुण्यपापलक्षणान्यभवन् । कर्मणामपि रागद्वेषद्वारा मनोभवत्वात्तत्साध्या अर्था अपि मनोभवा एवेति भावः ।। तथा चोक्तं ।। मनस इत्यादि नारदीये ।। २८ ।। तदेवं ममताऽऽस्पदानां पुत्रादीनां दुःखादिहेतुत्वमुक्तं । तत्र च देहसंबंधो मूलमित्याह ।। अयं हीति । हि शब्दोऽवधारणे । अयं द्रव्यज्ञानक्रियात्मको द्रव्यं पंचभूतानि ज्ञानं ज्ञानजनकेंद्रियाणि त्रीणि कर्मकारकेंद्रियाणि । एतद्रूपो देह एव देहिनो देहोऽहमिति मन्यमानस्य देहिनो जीवस्य विविधान्क्लेशान्संतापांश्च करोतीति विविधसंतापक्लेशकृत् । उदाहृत इत्यर्थः ।। तथा चोक्तं ।। द्रव्यात्मक इत्यादि ब्रह्मवैवर्ते ।। २९ ।। उपसंहरति ।। तस्मादिति । तस्मात्पुत्रादेः संतापहेतुत्वात्स्वस्थेनाव्यग्रेण मनसाऽऽत्मनः परमात्मनोगतिं तत्त्वं विमृश्य नित्यत्वादिना निश्चित्य परापेक्षत्वात्तद्वयशब्दापरपर्यायद्विशब्दवाच्येन जीवेनेतं प्राप्तं । शरीरादिकं द्वितं द्वितमेव द्वैतं । अनन्यापेक्षतस्त्वेक इत्यादि वचनात् । तस्मिन्द्वैते ध्रुवोऽयमर्थ इति विश्रंभं विश्वासं प्रणयं वा त्यज विरक्तो भव । ततश्चोपशमं भगवन्निष्ठमाविशाश्रयेत्यर्थः ।। ३० ।। ज्ञानार्थिनां वैराग्यमवश्यं संपादनीयमित्यभिप्रायेण तत्रेतिहासमाह ।। भोज इति । शत्रुणा ग्रस्तं कवलितं यदन्नं तदेव भोजनं यस्य स

तथा । शत्रूच्छिष्टान्नं भक्षण इत्यर्थः ॥ ३१ ॥ केचिच्छत्रवस्तस्य भोगान् भोगसाधनानि प्रासादोद्यानानि विलुलुपुर्विनाशितवंतः । अपरे शत्रवो विधिषु स्थितान् राजनियोगेषु वर्तमानान्पुरुषान् । आहारन्केचिज्जायामाहरन् । अन्ये शत्रव आत्मनो भोजस्य शिरोऽहरन् । सर्वत्रापि कारणमाह ॥ पूर्वेति । पूर्ववैरानुस्मरणैरित्यर्थः । पूर्वं वैरं गृण्हातीति तथातैः । कर्मभिरितिवा ॥ ३२ ॥ दुरंतदुःखानां मोघो यस्मिन्स तथा । तस्मात्स्वप्नादुत्थितः सन् । तं स्वप्नानुभूतमनुस्मरन् । भृशं निर्विण्णोऽतिविरक्तः सन् । तावत्तदानीमेव ॥ ३३ ॥ निःसंगो मुक्तदुःसंगः । शांतविग्रह उपशांतवैर आत्मना स्वेच्छयाऽऽत्मानं स्वात्मानं दर्शयन् । जडोन्मत्तादिवदिति शेषः । ग्रहान्निर्जगाम प्रवव्राज । यदहरेव विरजेत्तदहरेव प्रव्रजेदित्युक्तेरित्यर्थः । तत आत्मना मनसा । निर्वाणमप्राकृतशरीरं परब्रह्म प्रविष्टः सन् । स्वयं यस्मिन्कुलाये देहे स्थितस्तं कुलायं देहं नाविददसंप्रज्ञातसमाध्यवस्थापन्नः सन् । देहाभिमानादुन्मुक्तोऽभूदित्यर्थः ॥ ३४ ॥ अंगिरसोपदिष्टं तत्त्वं परमेश्वरप्रसादं विना न प्राप्यत इति तत्प्रसादाय मंत्रविद्यां नारद उपदिशति ॥ इमामिति । इमामुत्तराध्याये वक्ष्यमाणामुपनिषदं परंश्रेयोस्यामिति । उपनिषन्मंत्रमेवोपनिषत्त्वां प्रतीच्छाग्रहणाल्लिप्सामुत्पादयितुं विद्यायाः क्षिप्रफलत्वमाह ॥ यामिति । यां मंत्रोपनिषदं सप्तरात्रं धारयन् संकर्षणं शेषांतर्यामिणं संकर्षणनामकं भगवंतं द्रष्टा द्रक्ष्यसि भवानित्यर्थः । संकर्षणस्य पुरुषांतरसाधारणत्वे किं तद्दर्शनेनेत्याशंक्य तन्महिमानमाह ॥ यदिति । नरेंद्र हे चित्रकेतो । पूर्वे पदप्राप्तेः पूर्वकालीनाः शर्वादयो रुद्रादिपदप्राप्तियोग्या यस्य संकर्षणस्य पादमूलं । उपसृत्योपास्य महिमत्वं शेषादि पदप्राप्तिलक्षणं मुक्तिगतस्वयोग्यानंदप्राप्तिलक्षणं च माहात्म्यं प्रापुरित्यन्वयः॥ तथाचोक्तं ॥ रुद्राद्या इत्यादि । नन्वज्ञानादिलक्षणप्रतिबंधकसद्भावेन कथं महिमत्वप्राप्तिरित्यत आह ॥ भ्रममिति । भ्रमं देहाद्यहं ममाभिमानलक्षणमिमं तन्मूलं द्वितयं देहादिबंधं च विसृज्य परित्यज्येत्यर्थः ॥ तदुक्तं ॥ द्वैतेनेत्यादि शब्दनिर्णये । देहाद्यहं ममाभिमानो भ्रम इति च । कीदृशं महत्वं प्रापुरित्यत आह ॥ तदीयमिति । संकर्षणसंबंधीत्यर्थः । ननु तदीयमहत्वप्राप्तिः कथमुपपद्यते । न ते महित्वमन्वश्नुवंति । ब्रह्मेशानादिभिरित्यादि श्रुतिस्मृतिविरोधादित्यत आह ॥ अतुलेति । तत्प्रसादलभ्यत्वेन तदधीनत्वात्तदीयमित्युच्यमानमपि तन्महिम्ना नातुल्यमनधिकं चेत्यर्थः । यद्वा । रुद्रादेरेव मोक्षात्पूर्वतनमाहात्म्यापेक्षया मोक्षे विद्यमानमाहात्म्यमतुलानाधिकमित्यर्थः । रुद्रादेर्मो- ॥ ३५ ॥

क्षात्प्राचीनमाहात्म्यस्य साधनोपचयेन प्रतिक्षणं वर्धमानत्वादतुलस्य तदधिकस्य वा प्राप्तिरस्ति । मुक्तौ तु प्राप्तादधिकस्य समस्य वा प्राप्त्यभावान्मुक्तिगतं माहात्म्यमतुलानाधिमकाहात्म्यमित्यर्थः ॥ तथा चोक्तं ॥ तेषां तेषामित्यादि श्रुतेरिति । अस्त्वेवं संकर्षणोपासकानां महित्वप्राप्तिः । प्रकृते किमायातमित्यत आह ॥ भवानिति । यत्पादमूलमुपसृत्येत्यादेरनुकर्षणार्थोऽपि शब्दः । भवानपि परं महित्वं न चिरादविलंबेनैवोपैत्युपैष्यसीत्यर्थः ॥ ३६ ॥ इति श्रीभागवतटिप्पण्यां पंचदशोऽध्यायः ॥ ६--१५ ॥ ॥

॥ हरिः ॐ ॥ जातवैराग्यदार्ढ्यस्य चित्रकेतोः सुतोक्तिभिः । देवर्षेरुपदेशेन श्रेयः प्राप्तिर्निरूप्यते ॥ १ ॥ आदौ तावत्तत्पुत्रमुखेनैव पितृपुत्रादि संबंधोऽनित्य इति दर्शयितुं योगबलेन तमेव ज्ञातिनां दर्शयित्वा जीवात्मन्नित्याद्युवाच ॥ २ ॥ शेषमवशिष्टमायुरस्ति । अमृत्युना मृतत्वादिति भावः । पितृप्राप्तान्पितृदत्तान् ॥ ३ ॥ तदेव कलेवरं प्रविश्योपस्थितो जीव उवाच । यद्वा । अंतराले प्रेतशरीरे स्थित्वोवाचेति ज्ञेयं । ब्रह्मन् हे नारद ॥ ४ ॥ मयि मृते पुत्रदृष्ट्या शोकश्चेच्छत्रुदृष्ट्या हर्षः किं न क्रियत इत्याशयेन संबंधस्यानित्यत्वमाह ॥ बंधिवति । बंधवो विवाहादि संबंधिनो ज्ञातयः सपिंडा अरयो बंधादिकर्तारः । कर्तव्यमुपकारमपकारं ये कुर्वंति ते मध्यस्था मित्राणि स्वयमेव क्लेशस्थानं निरूप्योपकर्तारः । कर्तव्ये उपकारेऽपकारे च ये उदासते ते उदासीनाः । विद्विषोऽवासितकर्तारः । अप्रियं कर्तार इति यावत् ॥ तथा चोक्तं ॥ द्वेष्योऽवासितं कृत्वाऽयं मात्रकारी तु मध्यमः । प्रियकृत्प्रियो निरूप्यापि क्लेशं यः परिरक्ष्यति । स मित्रमुपकारं त्वनपेक्ष्योपकारकृत् । यस्ततः सुहृत्प्रोक्तः शत्रुश्चापि वधादिकृदिति ॥ नारदीये च ॥ अनिमित्तस्नेहवांस्तु सुहृज्ज्ञात्वोपकारकृत् । मित्रवधादिकृदरिर्द्वेषस्त्वप्रियमात्रकृत् । उदासीनः स्नेहवतोऽस्नेहस्तत्कृतानुकृत् । मध्यस्था इति विज्ञेयो सुहृदेषु विशिष्यत इति ॥ ५ ॥ कर्मभिर्भ्राम्यमाणत्वे दृष्टांतमाह ॥ ॥ यथेति । यथा पण्यानि क्रयविक्रयार्हाणि सुवर्णरजतादीनि । कर्तृषु व्यवहर्तृषु नरेषु पुरुषेषु पर्यटंति । एवं जीवोऽपि योनिषु जनकेषु परिभ्रमतीत्यर्थः ॥ ६ ॥ एकस्मिन्नपि जन्मनि संबंधस्यानित्यत्वं सदृष्टांतमाह ॥ नित्यस्येति द्वाभ्यां । यथा नित्यस्य जीवतोऽप्यर्थस्य पश्वादेः । नृषु संबंधोऽनित्योऽनियतः क्रयविक्रयादिना संबंधनिवृत्तेः । अस्य पश्वादेर्नृषु संबंधो यावत्कालं वर्तते । तावत्कालमेव ममत्वं ममायं पशुरित्याभिमानो भवति ॥ ७ ॥ एवं योनिगतः पित्रादि संबंधं प्राप्तोऽपि स जीवो नित्यः ।

देहं जन्मादिना तस्य जन्माद्यभावात् । अत एव वस्तुतो निरहंकृतोऽहमस्य पुत्र इत्यभिमानशून्यः । यत्र पित्रादौ संबंधीनि । यावदुपलभ्येत कर्मवशेन वर्तेत्तावदेव तस्य पित्रादेस्तत्तस्मिन्स्वत्वं । न तु विक्रयाद्युत्तरकालेऽपीत्यर्थः । अथवैवं संबंधः । यदुक्तं कलेवरं स्वभावस्येति तत्र तास्मिन्कलेवरे ममेदानीं स्वत्वनिवृत्तमिति सदृष्टांतमाह ॥ नित्यस्येति । नित्यस्य चिरकालावस्थायिनः सुवर्णादेः । योनिगतो देहं प्रविष्टः । यत्र देहे तस्य जीवस्य तत्तास्मिन्देहे स्वत्वं न तु मरणोत्तरकालमपीत्यर्थः । शेषं समानं ॥ ८ ॥ एवमनित्यसंबंधेषु पुत्रादिषु ममतां विहाय नित्यसंबंधो भगवानेव भजनीय इत्यभिप्रेत्य भगवतो जीवेन सह नित्यसंबंधमाह ॥ एष इति । य आत्ममायागुणैः स्वेच्छानियतप्रकृतिगुणैर्विश्वं परावरं जगत्सृजति । तन्नियामकत्वेन स्वात्मानं च सृजति प्रादुर्भावयाति । एषो भगवान् । अव्ययो न व्येति जीवं विहाय नापगच्छतीत्यव्ययः । नित्यसंबंध इति यावत् । कुत इत्यत आह ॥ ॥ नित्य इति । चतुर्विधनाशरहित इत्यर्थः । संबंधस्यानित्यत्वं त्रिधा संभवति । स्वरूपनाशेन वा देहहान्या वा परिच्छिन्नत्वेन वा तदेतत्त्रयं भगवतो न संभवति । अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधो ज्ञेयस्तदभावो हरेः सदेति वचनात् । जीवस्वरूपस्य च नित्यत्वं प्रागेवोक्तं । अतस्तयोः संबंधो नित्य इति भावः ॥ तथा चोक्तं ॥ अनित्येत्यादि । भगवतो नित्यसंबंधित्वं नाकाशवत् । किंतु सर्वोपजीव्यत्वेनेत्याह ॥ सर्वाश्रया इति । धारणपोषणादिकर्तेत्यर्थः । नन्वेवं भगवान्नित्यसंबंधश्चेत्संनिहितोऽपि कुतो नोपलभ्यत इत्यत आह ॥ सूक्ष्म इति । अव्यक्तस्वभाव इत्यर्थः । सर्वनियामकत्वेनात्मानं सृजतीत्यनेन प्राप्तां भेदशंकां निराकरोति ॥ एक इति । स्वरूपेष्वित्यर्थः ॥ तथा चोक्तं ॥ एकोऽपि स्थोऽपि नानात्वान्नानेव हरिरीर्यते । सर्वांतर्यामिणस्तस्य न भेदो विद्यते क्वचिदिति ब्रह्मवैवर्ते । जगत्सर्जनोपयोगिन्यौ ज्ञानशक्ती आह ॥ स्वदृक् प्रभुरिति । स्वयमेव सर्वं पश्यतीति तथा । स्वतंत्रज्ञान इत्यर्थः । प्रभुः समर्थः ॥९॥ ननु यदुक्तं भगवान् स्वदृगिति तदयुक्तं । तथात्वे सर्वजगत्सर्जनानुपपत्तेः । न हि सर्वज्ञस्य स्वप्रतिकूलदैत्यादिसर्जनं युक्तिमदित्यत आह ॥ न हीति । अस्य भगवतः कश्चिदपि पुरुषः प्रियोमित्रं । अपि यः शत्रुःस्वः स्वकीयः परः परकीयो वा नास्ति कुत इत्यतआह ॥ एक इति । हियस्माद्भगवानेक एकप्रकारः सर्वसमः । न हि सर्वसमस्य शत्रुमित्रादि विभागबुद्धिः संभवतीति भावः । नन्वेवं तर्हि कंसः शत्रुः पांडवो बंधुरित्यादि व्यवहार

कथमित्यत आह ॥ सर्वेति । कर्तृणां जीवानां याः सर्वा विचित्राः सात्विकादि लक्षणा धियो बुद्धयस्तास्तं गुणदोषयोः पुण्यपापयोश्च द्रष्टा साक्षीत्यर्थः । भगवतः समत्वेऽपि जीवानामनादियोग्यताकर्मानुसारेणाविषमफलदातृत्वादुक्तव्यवहारो युज्यत इति भावः ॥ ॥ १० ॥ ननु विश्वं सृजत इति यद्भगवतो जगत्कर्तृत्वमुक्तं तदयुक्तं । कर्तृत्वे देवदत्तवत्कर्मफलभोगापत्तेरित्यत आह ॥ नेति । आत्मा परमात्मा क्रियाफलं सुखदुःखलक्षणं कर्मफलं नादत्ते नानुभवति । गुणं शुभविषयं क्रीडयाऽऽददन्नपि वृद्धप्रयोजकत्वेनादत्ते । नित्यपूर्णस्य गुणभोगप्रयुक्तबुल्ध्यसंभवात् ॥ तदुक्तं ॥ भोक्त्येत्यादि । दोषमशुभविषयं तु सर्वात्मना नादत्ते । एतत्सर्वं कुत इत्यत आह ॥ उदासीन इति । हि यस्मादुदासीन इवासीन उदासीनपुरुषवद्वर्तमानः । अनादरेण सृष्ट्यादौ वर्तमान इति यावत् । यस्यानायासेनैव जगत्सर्जनशक्तिः । कुतस्तस्य कर्मबंध इति भावः । एतदेव स्पष्टमाह ॥ ईश्वर इति । अचिंत्यशक्तिरित्यर्थः । परापरदृक् अतीतानागतद्रष्टा । तस्मादेव महामाहात्म्येपि तस्य भगवतो नित्यसंबंधित्वात्पितृत्वात्साक्षित्वाच्च स एव भजनीयः । युष्माकं मम च संबंधाभवान्न शोकः कर्तव्य इति प्रघट्टिकार्थः ॥ ११ ॥ आत्मनां स्वेषां पुत्रस्नेहाख्यां शृंखलां छित्वा स्नेहं स्नेहकार्यं शोकं मुमुचुः । क्वचिच्छोकमित्येव पाठः ॥ १२ ॥ १३ ॥ द्विजभाषितमंगिरसा प्रोक्तं पुत्रादीनां दुःखहेतुत्वं स्मरंत्यः पुत्रकामनाशून्या निर्मत्सराः सत्य इति भावः ॥ १४ ॥ ततश्चित्रकेतुः किं च करोति तत्राह ॥ स इत्थमिति । निबिडपंकतुल्यगृहं विहाय निष्क्रमणमतिर्धीरस्य तस्यैव योग्यं नान्यस्येति दृष्टांतेनाह ॥ सरसः पंकाद्वियोगज इवेति ॥ १५ ॥ कृताः पुण्या जलक्रियाः पितृतर्पणाद्या येन स तथा । संयतप्राणो नियतेंद्रियः ॥ १६ ॥ इमां मंत्रोपनिषदं प्रतीच्छेत्युक्तविद्यामिदानीमुपदिशतीत्याह ॥ अथेति । प्रपन्नायेत्यादिना शिष्याधिकारनिरूपणाद्विवक्षार्थतत्त्वज्ञानदार्ढ्यादिवाचकभगवच्छब्देन गुर्वधिकारनिरूपणात्प्रीत इत्यनेन गुरुप्रसादकथनाच्चांगवैकल्याभावेन विद्या संपूर्णफलप्रदाऽभूदिति सूचितं ॥ तथा चोक्तं ॥ प्राक् गुरुशिष्ययोरयोग्यत्वाद्गुरुवृत्तेरपूर्तितः । अप्रसादाद्गुरोर्विद्या यथोक्तफलदा इति ॥ १७ ॥ चित्तसंन्निहितत्वात्तुभ्यमिति । नमो धीमहि ध्यायेम । मनसा नमस्याम इत्यर्थः । भगवते षड्गुणपूर्णाय । लक्ष्मीसमेताय वा । जगत्सृष्ट्यादिकर्त्रे वा ॥ तथा चोक्तं ॥ गुणवान्भगवानेव सृष्टिसंहाररक्षकः । द्वौ द्वौ गुणावधिष्ठाय सर्गाद्यमकरोत्प्रभुः । प्रद्युम्नश्चानिरुद्धश्च

संकर्षण इतीरितः । भगवान्वासुदेवोऽसौ सृष्ट्याद्यमकरोत्स्वयं । ऐश्वर्यं वीर्यवान्सर्गे प्रद्युम्नः प्रत्यपद्यत । तेजः शक्तिसमाविश्या-
निरुद्धोप्यपालयत् । बलज्ञाने तथा द्वे तु संकर्षणाधिष्ठितः । अकरोद्भगवानेव संहारं जगतोऽस्य तु । एवं षड्गुणपूर्णत्वादपि च
श्रियः । सर्गादि कारणत्वाच्च भगवानिति चोच्यत इति भारते । वसति स्वयं सर्वत्र वासयति च सर्वं स्वास्मिन्निति वासुः ।
स चासौ देवः क्रीडादि गुणशाली च तस्मै ॥ तदुक्तं ॥ सर्वत्रासौ समस्तं च सत्यं चेति च वै यतः । ततः स वासुदेवेति
विद्वद्भिः परिपठ्यत इति विष्णुपुराणे । प्रद्युम्नाय प्रकृष्टद्युतिरूपाय ॥ तदुक्तमैतरेयसंहितायां । प्रद्युम्नो द्युतिस्वरूपत्वाद्विष्णुरेव
प्रकीर्तित इति । न केनापि क्वापि निरुद्ध इत्यनिरुद्धः । अनिभिः प्रयत्नवद्भिः मुख्यप्राणदासैर्वा । हृदि निरुद्ध इति वा ।
तस्मै । सं सर्वेषां जीवानां कर्षणाद्योग्यतानुसारेण शुभाशुभगतिप्रापणात् संकर्षणस्तस्मै ॥ १८ ॥ विज्ञानमात्राय पूर्णज्ञान-
स्वरूपाय । परमानंद एव मूर्तिः शरीरं यस्य तस्मै । सदज्ञानानंदशीर्षोऽसौ सत्ज्ञानानंदबाहुक इत्यादेः । आत्मारामाय
स्वरमणाय । शांताय पूर्णसुखाय । निवृत्तद्वैतदृष्टिः स्वावतारेषु भेदज्ञानं यस्मात्तस्मै । यद्वा । द्वैतदृष्टिर्भेददर्शनं अन्यथाज्ञानमिति
यावत् । विद्यमानाकारापेक्षया द्वितीयाकारविषयत्वात् । सा निवृत्ता यस्मादित्यर्थः ॥ तथा चोक्तं स्कांदे । भिन्नस्याभेदतो
दृष्टिरपि भेददृशिर्मता । वस्तुयाथ्यात्म्यतस्तस्य भिन्नत्वादिति सूरिभिः । अन्यथा ज्ञानमेवातो भेदज्ञानं विनिंदितं । न विद्यमान-
भेदस्य दर्शनं निंदितं क्वचिदिति । निवृत्तद्वैतवृत्तय इति पाठे द्वैतमन्यथाज्ञानं । अन्यथा मतयो द्वैतमिति वचनात् । निवृत्तद्वैतत्वेन
वृत्तिरवस्थानं यस्य स तथा । तस्मै । यद्वा । अन्यथाज्ञानवाचिनो द्वैत शब्देन तत्कारणमविद्या लक्ष्यते । ततश्च निवृत्ता द्वैतवृत्तयोऽ
विद्या पंचपर्वाणि यस्मादित्यर्थः ॥ तदुक्तं भारते ॥ तमस्तुशार्वरं प्रोक्तं मोहश्चैवविपर्ययः । तदाग्रहो महामोहो तमिस्रं क्रोध
उच्यते । नरकं त्वंधतामिस्रमविद्या पंचपर्विकेति ॥ तृतीय स्कंधेच च । योऽविद्ययानुपहतोऽपि दशार्धवृत्त्येति । यद्वा । द्वैतमशुभं ।
एकं तु शुभमुद्दिष्टमशुभं द्वैतमुच्यत इति भारतवचनात् । ततश्च निवृत्ता द्वैतदृष्टिर्द्वैतवृत्तिर्वा यस्मात्तस्मै शुभदृष्टये शुभव्यापारायेत्यर्थः
॥ १९ ॥ सम्यक् त्यक्ता जननादि षडूर्मयो येन तस्मै । अशनयादि षडूर्म्यैरहितायेति वा । अशनया पिपासे शोकं मोहं
जरां मृत्युमत्येतीति श्रुतेः । तत्र हेतुः ॥ आत्मेति । स्वरूपानंदानुभवेनेत्यर्थः । हृषीकाणामिंद्रियाणां प्रेरकस्तस्मै । यद्वा । हृष्या

हर्षहेतवः केशा अस्येति हृषीकेशः । अग्न्यादिषु स्थित्वा स्वकेशनियतैस्तदंशुभिर्जगतो बोधनस्थापनाभ्यां हर्षणाद्धृषीकेश इत्यर्थः ।। तदुक्तं मोक्षधर्मे ।। सूर्याचंद्रमसौ शश्वत्केशैर्मेंऽशुसंज्ञितैः । बोधयन्स्थापयंश्चैव जगदुत्पद्यते पृथक् । बोधनात्स्थापनाच्चैव जगतो हर्षसंभवात् । अग्निषोमकृतैरेभिः कर्मभिः पांडुनंदन । हृषीकेशोऽहमीशानो वरदो लोकभावन इति ।। २० ।। वचो मनः शब्दौ सर्वेंद्रियोपलक्षणे । मनसा बाह्यमनसा सह वचसि वागादि बाह्येंद्रियजाते । उपरते विलीने सति । मनसा मन आदि चिन्मात्रेंद्रियैः सह यो भवान् प्राप्यो भवति सोऽव्यादित्यन्वयः । नामप्रवृत्तिनिमित्तानामनंतत्वेन ज्ञातुमशक्यत्वात्प्राकृतरूपराहितत्वाच्चानामरूपः।। तदुक्तं ।। अप्रसिद्धेस्तद्गुणानामनामाऽसौ प्रकीर्तितः । अप्राकृतत्वाद्रूपस्याप्यरूपोऽसावुदीर्यत इति । स चासौ चिन्मात्रश्च । सदसत्परः कार्यकारणविलक्षणः । कार्यकरणयोः कारणं वा ।।२१।। तदेवाह ।। यस्मिन्निति । यस्मिन्निदं कार्यकारणात्मकं जगत्तिष्ठति । अप्येति च यतश्च जायते । तत्र दृष्टांतमाह ।। मृण्मयेष्विति । मृज्जातिर्यथा मृदा जातिर्जन्म यस्य सो वृक्षादि मृण्मयेषु पृथिवीपर्वतादिषु तिष्ठत्यप्येति । तेभ्यो जायते च तद्वदित्यर्थः। एतेन मृण्मयेष्विव मृज्जातिरिति दृष्टांतबलान्मृद्धटयोरिव ब्रह्मप्रपंचयोरप्युपादानोपादेयभाव इत्येतन्निरस्तं । उपादानोपादेयभावशून्यानामेव दृष्टांतत्वेन विवक्षितत्वात् ।। तथा चोक्तं । पृथिवी पर्वता इत्यादि ।। २२ ।। यदुक्तं सदसत्पर इति कार्यकारणात्मकप्रपंचवैलक्षण्यं तत्कुत इत्यतो लोकप्रमाणविषयत्वादित्याह ।। यामिति । व्योमवदंतर्बहिर्विततमपि यं भगवंतमसवः प्राणाः कर्मेंद्रियाणि क्रियाशक्त्या न स्पृशंति मन आदीनि च ज्ञानशक्त्या न विदुः । यद्वा । मन आदि ज्ञानकर्मेंद्रियाणि न स्पृशंति । न विषयीकुर्वंति तदभिमानिनो रुद्रादि देवाश्च न विदुरित्यर्थः ।। २३ ।। तेषां तदज्ञाने हेतुमाह ।। देहेति । अमी देहेंद्रियादयो यस्य परब्रह्मणोंऽशै रूपविशेषैर्विद्धाः प्रेरिताः संतो कर्मसु स्वविषयेषु प्रचरंति जाग्रत्स्वप्नयोः । अन्यदा सुषुप्तिमूर्च्छादौ नैव प्रचरंति ।। तत्प्रेरणाभावात्। यथा प्रतप्तं लोहं न दहाति । अतो यथा लोहमग्निशक्त्यैव दाहकं सदग्निं न दहति । एवं ब्रह्मशक्त्युद्बोधितज्ञानक्रियाशक्तिभ्यां प्रवर्तमानदेहादयश्च तदभिमानिनो देवाश्च यं न स्पृशंति न विदुश्चेति भावः । स्थानेषु जागरादिषु देहेंद्रियादिषु वा । द्रष्टुरुपदेशसाक्षिसंज्ञं तत्परब्रह्म । शरणमेमि ।। २४ ।। ज्ञानशक्त्यादि गुणैः शोभमानाः सात्वताः । सत्त्वं तु शोभनं स्यात्तद्युक्ताः सात्वता मता इति वचनात् । सकला ये सात्वतपरि-

वृद्धाः सात्वतश्रेष्ठास्तेषां करकमलानां कुड्मलैर्मुकुलैरुपलालितं चरणारविंदयुगलं यस्य तस्य संबोधनं । परमोत्कृष्ट । परमेष्ठिन् सर्वेश्वर ॥ २५ ॥ पूर्वं सनारदांगिरसावाजगामेत्यंगिराः प्राधान्येनोक्तश्चित्रकेतोः पुत्रप्रदत्वेन तस्य प्रथमगुरुत्वात् । इह तु नारदोंऽगिरसा साकं ययाविति नारदस्य प्राधान्यनिर्देशः । तदुपदेशेन तस्य परवैराग्योत्पत्तेः । प्रभो हे समर्थ ॥ २६ ॥ यथा यथावद्धारयामास ॥ २७ ॥ २८ ॥ कतिपयैरहोभिर्विद्ययैधेन दीप्तेन मनसा गतिर्यस्य स तथा । अत्र विद्याया भगवद्विषयकत्वेऽपि तथा शेषांतिकप्राप्तिर्युज्यते । शेषांतर्यामिण एवोपास्यत्वादिति ज्ञातव्यं ॥ तदुक्तं ॥ अन्यांतर्यामिणमित्यादि नारदीये ॥ २९ ॥ मृणालवद्गौरं शिनिवाससं नीलांबरं स्फुरंति किरीटादीनि यस्य तत्कटित्रं कटिसूत्रं प्रसन्नानि वक्त्राणि यस्यारुणानि लोचनानि यस्य तं च । सिद्धेश्वराणां मंडलैः समूहैर्वृतं ददर्श ॥ ३० ॥ तस्य दर्शनेन ध्वस्तं समस्तं किल्बिषं यस्य । स्वस्थं विक्षिप्तममलं रागादि दोषरहितमंतःकरणं मनो यस्य । प्रवृद्धया पूर्णया भक्त्या प्रहृष्टानि रोमाणि यस्य । प्रणयेन स्नेहेनाश्रुयुक्ते लोचने यस्य स चित्रकेतुः । अनेनैव प्रकारेणेति शेषः । इदानीं शेषांतर्यामिणं विद्ययोपास्य यथा तत्सकाशं प्राप्तोऽनेनैव प्रकारेण मुहुस्तमभ्ययात् । असकृत्तत्सकाशमभ्यगादित्यर्थः ॥ ३१ ॥ सः तं प्रसमीडितुं स्तोतुं चिरं नैवाशक्नन्न शशाक । तत्र हेतुः । उत्तमश्लोकस्य पादाब्जयोर्विष्टरमासनं । प्रेम्णा जातैरश्रुबिंदुभिरुपसेचयन् अभिषिंचन् । प्रेम्णोपरुद्धोऽखिलानां वर्णानां निर्गतं उच्चारणं यस्य स तथा ॥ ३२ ॥ मनीषया बुद्ध्या मनः समाधायैतद्वक्ष्यमाणं बभाषे । प्रतिलब्धो वाग्रसो वचनं वीर्यं येन स तथा । सर्वेषामिंद्रियाणां बाह्येषु विषयेषु वर्तनं व्यापारं सात्वतानां स्वभक्तानां शास्ता सन्मार्गशिक्षको विग्रहोऽवतारो यस्य तं ॥ ३३ ॥ भक्तवात्सल्याख्यगुणानुस्मरणेन भगवान् क्षिप्रमनुगृहीष्यतीत्यभिप्रेत्य तदेव प्रथमतोऽनुस्मरति ॥ अजितेति । हे अजित । अन्यैरजितोऽपि भवान् साधुभिर्भक्तैर्जितो वशीकृत एव । यद्यस्माच्च भगवानतिकरुणः । तद्भक्तिस्तत्करुणाचेत्युभयमपि वशीकरणे हेतुरिति भावः । ते साधवोऽपि निष्कामा अपि च भवता विजिताः । यो भवान् अकामानामाऽऽत्मानमेव ददाति यस्मादित्यर्थः ॥३४॥ अजितेति भगवतोऽनन्याधीनत्वमुक्तं । तत्कुत इत्याशंक्य सर्वस्यापि तदधीनजन्मादिमत्त्वादित्याह ॥ तवेति । इयं स्तुतिर्न शेषमात्रविषया । किंतु तदंर्यामिविषयाचेज्जगत्कारणत्वादिगुणानां शेषेऽसंभवादिति ज्ञातव्यं ॥ तदुक्तं ॥ शेषांतर्यामिणमित्यादि । क्रियंते

स्तुतयोऽन्यत्र तदंतर्याम्यपेक्षया । न जीवेषु गुणाः पूर्णा यथायोग्यं हि तद्वत इति च । हे भगवन् । जगत उत्पत्त्यादीनि तवैव विभवो महिमा । क्रीडेति यावत् । आदि शब्देन नियमादीनि गृह्यंते । कथं तर्हि ब्रह्मादीनां स्रष्टृत्वाद्याभिमानस्तत्राह ॥ विश्वसृज इति । विश्वसृजो ब्रह्मादयो नेश्वराः किंतु ते तव येंऽशा जीवबिंबभूतास्तेषामंशाः प्रतिबिंबाः । त्वदधीना इति यावत् । तत्रैवं स्थितेऽपि पृथक् पृथगीश्वरा वयमित्यभिमानेन वृथैव स्पर्धंते ॥३५॥ त्वमेव सृष्ट्यादिकर्तेत्येतदुपपादयति ॥ परमाण्विति । परमाणुः सूक्ष्मं मूलकारणं परमं महत् । अंतिमं कार्यं तयोस्त्वमेवाद्यंतवर्ती आदावंत्ये चांतरे मध्ये च वर्तितुं शीलं यस्य सः । अत एव त्रयविधुर आद्यंतमध्यशून्यः । ध्रुवो ब्रह्मादयस्तु त्वया सृज्यंते । न तु ध्रुवाः । कुत इत्यत आह ॥ आदाविति । सत्त्वानां सत्त्व शब्दोपलक्षितगुणत्रयकार्याणामादावंतेऽपि च अंतराले मध्येऽपि च यदस्ति तदेव ध्रुवमित्यर्थः ॥ ३६ ॥ एवं भगवतो ध्रुवत्वेन कालतः परिच्छेदो नास्तीत्युक्तं । देशतोऽप्यपरिच्छेदमाह ॥ क्षित्यादिभिरिति । पूर्वस्माद्दशगुणमुत्तरोत्तरैः क्रमेणाधिकैः । क्षित्यादिभिरतद्गुणसंविज्ञानबहुव्रीहिः । जलादिभिरित्यर्थः । क्षितेर्दशगुणोत्तरत्वाभावात् । क्षितिसाहित्येऽष्टत्वापत्त्या सप्तभिरित्यनुपपत्तेश्च । क्षितिशब्दोपादानं तु जलनिष्ठदशोत्तरत्वं प्रति क्षितेरवधित्वसूचनार्थं ॥ तदुक्तं ॥ अबग्नी नभोहंकृन्महत्तत्त्वगुणत्रयैः । क्रमाद्दशोत्तरैरेतदावृतं परतस्तत इति । दशगुणोत्तरैः सप्तभिरित्यनेन गुणत्रयं मिलितमेव दशगुणोत्तरं । न तु प्रत्येकमित्युक्तं भवति । एतदभिप्रायेणैवाबग्निरिति श्लोके गुणैरिति वक्तव्ये । त्रय शब्दोपादानं गुणानां परस्परं द्विगुणत्वेन प्रसिद्धेश्च ॥ तदुक्तं ॥ तमसो रजसस्तु द्विगुणं रजसः सत्त्वमेव च । परिमाणत एवं स्युस्त्रयं प्रकृतिजा गुणा इति । केचित्सत्त्वादीनां प्रत्येकं दशगुणोत्तरत्वमंगीकृत्य द्विगुणोक्तिविरोधमाशंक्य तदुक्तिः संभवाभिप्रायेत्याहुः । तदप्येतेनैव परास्तं । सप्तभिरित्यनेन विरोधात् । एतैः सप्तभिरावृतः । एषो वर्तमानो ब्रह्मांडकोशो ब्रह्मांडकोटिभिः सह यत्र यस्मिन्भगवति त्वयि अणुभ्योऽप्यणुकल्पः परमाणुतुल्यो दृश्यते । तत्तस्मात् । त्वद्रूपमनंतमपरिच्छिन्नमित्यर्थः ॥ ३७ ॥ यस्मादेव परमेश्वरस्त्वमेवान्ये देवास्तव विभूतयः । अतस्त्वां विहाय विषयकामनयाऽन्योपासका मंदा इत्याह ॥ विषयेति । विषयेषु तृट् तृष्णा येषां ते नराकाराः पशवः । कुतः । ये विभूतीर्विविधा नामरूपत्वेनोत्पादितत्वाद्विभूतिशब्दवाच्यानिंद्रादीनुपासते । न तु परं त्वां । ततः किं

तत्राह ॥ तेषामिति । तदनूपास्यानंतरं । यथा राजकुलमनु राजकुलनाशानंतरं तत्सेवकानामाशिषो नश्यंति तद्वत् । अयं च परमो विधिमध्येऽपि नश्यंत्येवेति ज्ञातव्यं ॥ ३८ ॥ विषयकामेनापि कृता त्वत्सेवा मोक्षफलैव । ध्रुवादिषु तथा दर्शनादित्याह ॥ कामधिय इति । कामधियो विषयकामना अपीह । ईश । त्वयि रचिताः कृताश्चेन्न पुनरारोहंति देहांतरावृत्तये न भवंति । करंभबीजानि भर्जितबीजानि यथा तद्वत् । कीदृशे त्वयि । ज्ञानात्मनि ज्ञानशब्दोपलक्षितकल्याणगुणस्वरूपे । अत एवागुणमये न विद्यते गुणमयं प्रकृतिगुणविकृतं देहेंद्रियादिकं यस्य तस्मिन् । यतोऽस्य जीवस्य सत्त्वादिगुणसंबंधादेव सुखदुःखादिलक्षण-द्वंद्वसमूहा भवंति । त्वं तु निर्गुणस्ततः कामेनापि निर्गुणस्य तव भजनाच्छनैर्नैर्गुण्यं भवति । तं यथा यथोपासते तदेव भवति । यादृशो भावितस्त्वीशस्तादृशो जीवो भवेदिति श्रुतिभ्य इति भावः ॥ ३९ ॥ फलकामनयाऽपि त्वदाराधनं यदा मोक्षहेतुस्तदा । किं वक्तव्यं भागवतधर्ममाहात्यमिति वक्तुं तत्संप्रदायप्रवर्तकत्वेन भगवंतं स्तौति ॥ जितमिति । हे अजित । यथा भवान् भागवतं धर्मं निवृत्तिधर्ममाह । तथा भवता जितं सर्वोत्कर्षेण स्थितं । यद्वा । भवान् भागवतं धर्मं यथा यथावदाहोपदिदेश । तथा शब्दः समुच्चये । भवता जितं चेत्यर्थः । तत्र हेतुः । ये निष्किंचनाः सनकादिमुनयस्ते यं भगवंतमपवर्गाय सेवते । तेन भवता जितं यद्धर्मामिति वा ॥ ४० ॥ अनवद्यानामेवाह ॥ विषमेति । यत्र यस्मिन्भागवतधर्मेऽनुष्ठिते सति त्वं कर्ताऽहं कर्तेति ममेदं तवेदमिति च विषमबुद्धिर्नृणां न भवति । किंतु भवानेव सर्वकर्ता सर्वस्वामीति च बुद्धिर्भवतीत्यर्थः । अनवद्यपदव्यावृत्त्यमाह ॥ य इति । अन्यत्र भगवदविषयकः । विषमाधिया स्वर्गादि फलकामनया स्वस्वातंत्र्यभ्रमेण विरचितोऽनुष्ठितो यो धर्मो ज्योतिष्टोमादिलक्षणः । स ह्यविशुद्धः । रागादिमत्वात् । क्षयिष्णुश्च । नश्वरफलत्वात् । अधर्मबहुलश्च । अहिंसादिबाहुल्यादित्यर्थः ॥ ४१ ॥ एतदेव प्रपंचयति ॥ क इति । धर्म्येण काम्यकर्मणा निजपरयोः स्वस्य परस्य च कः क्षेमः किं कुशलं न किंचित् । न केवलं क्षेमाभावः । किंत्वनर्थो भवेदिति भावेन धर्मं विशिनष्टि ॥ स्वेति । स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक् तेनेत्यर्थः ॥ तदुक्तं प्रकाशिकायां ॥ स्वकामं तु तपः क्रूरं लोकानां क्षोभकृद्भवेत् । इतरच्छांतये सर्वलोकानां भवति ध्रुवमिति । भवतु काम्यकर्मिणः स्वपरद्रोहः । ततः किं तत्राह ॥ स्वेति ।

स्वद्रोहात्परपीडया चाधर्मो भवति । तेन च तव कोपो भवतीत्यर्थः । अतो भागवतधर्मा एवानवद्य इति भावः ॥ ४२ ॥ ननु काम्यधर्मोऽपि भगवतैवाभिहित इति कुतो नानवद्य इत्याशंक्य त्वया रागाद्यमपि कथंचिद्वेदमार्गे प्रवर्तयितुं काम्यधर्मोऽभिहितो न तत्त्वदृष्ट्या । भागवतधर्मस्तु तत्त्वदृष्ट्योक्त इत्याह ॥ नेति । यया भागवतधर्माभिहितः सा तवेक्षा दृष्टिर्न व्यभिचरति परमार्थं न जहातीत्यर्थः । अव्यभिचारे हेतुमाह ॥ स्थिरेति । स्थावरजंगमप्राणिसमूहेषु आर्या यं धर्मं सेवंते । अन्यथा तन्न स्यादित्यर्थः । के ते आर्या इत्यत आह । अपृथग्धिय इति । विद्यमानप्रकारापेक्षया भिन्नः प्रकारः पृथक् तद्विषयिणी बुद्धिः पृथक् बुद्धिः । मिथ्याज्ञानमिति यावत् । सा न विद्यते येषां ते तथोक्ता इत्यर्थः ॥ तदुक्तं गारुडे ॥ विष्णवधीना जगत्सत्ता प्रतीतिश्चेष्टितं गतिः । इति यन्निश्चितं ज्ञानमपृथग्दर्शनं स्मृतं । मिथ्याज्ञानं पृथग्ज्ञानं तत्पृथग्दृष्टिरुच्यत इति ॥४३॥ एवं भूतस्य भागवतधर्मप्रवर्तकस्य तव दर्शनात्सर्व पापक्षयो भवतीति किं चित्रमित्याह ॥ न हीति ॥ ४४ ॥ अतोऽहं कृतार्थोऽस्मीत्याह ॥ अथेति । अतो हेतोर्वयं । हे भगवन् । तवावलोकनेन परिमृष्टा निरस्ता आशये चित्ते मला येषां ते तथा भूता इत्यर्थः । त्वद्दर्शनं च मम नारदोपदेशेन जातमित्याह ॥ सुरर्षिणेति । तावकेऽनेन यदुदितमुद्दिष्टं तत्कथमन्यथा भवति वृथा न भवतीत्यर्थः॥ ॥ ४५ यथा चाहं पूर्वमतिमूढ आसं । यथा नारदेनानुगृहीतोऽस्मि । तत्सर्वांतर्यामिणस्तव मया किं प्रकाशनीयमित्याह ॥ विदितमिति । हे अनंत । जनैराचरितं समस्तं तव विदितं । अतः परम गुरोर्गुरूणामपि गुरोः सर्वज्ञस्य तव विशेषेण ज्ञाप्यं प्रकाशनीयं कियदिदं न किमपीत्यर्थः । तत्र दृष्टांतः । सवितुर्यथा खद्योतैः प्रकाशनीयं नास्ति तद्वदिति ॥ ४६ ॥ उक्तलक्षणं भगवंतं प्रणमति ॥ नम इति द्वाभ्यां । सकलस्य जगतः स्थित्यादीनामीशाय । समर्थाय । दुरवासिताऽविज्ञाताऽऽत्मगतिर्निजतत्त्वं यस्य तस्मै । केषां कुयोगिनां ॥ ४७ ॥ विश्वसृजो ब्रह्मादयः श्वसंतमनुश्वसंति चेष्टंते । चेकितानं पश्यंतमनुवृत्तयो ज्ञानेंद्रियाण्युच्चकंति स्फुटं पश्यंति । सर्षपायति सर्षपवद्वर्तते ॥ ४८ ॥ मम शासनं मद्विषयिणी विद्या । तया विद्यया मम दर्शनाच्च । संसिद्धोऽसि जीवन्मुक्तोऽसि ॥ ४९ ॥ ५० ॥ तदुपादिष्टविद्यया वीर्यातिशयाय स्वयमप्युपादिशति ॥ अहमित्यादिना । अहं भूतानामात्मा स्वामी । स्वामित्वं च न राजादिवत्तत्स्थत्वेन किंत्वंतर्यामित्वेनेत्याह ॥ अहमिति । अहं सर्वभूतानि भूतांतर्यामी । वै शब्दोऽनुक्ता-

र्थप्रमाणसिद्धिं सूचयति ॥ तदुक्तं ॥ हरिस्तु सर्वेत्यादि । इतोऽपि राजादिवैलक्षण्येन स्वामित्वमित्याह ॥ भूतभावन इति । भूतानां प्रकाशकः कारणं चेत्यर्थः । ननु शब्दब्रह्म प्रकाशकं परं ब्रह्म कारणं च प्रकाशकं चासत्यं । ते उभे मम रूपे इत्याह ॥ शब्दब्रह्मेति । वेदादिशब्दराशिलक्षणं शब्दब्रह्म सच्चिदानंदलक्षणं परब्रह्मेति चेत्युभेऽपि ब्रह्मणी मम शाश्वती शाश्वत्यौ तनू इत्यर्थः । परं ब्रह्म साक्षाद्रूपं शब्दब्रह्म तु प्रतिमारूपं प्रतिपाद्यत्वेन भगवतस्तत्र संनिहितत्वादिति भावः ॥ तदुक्तं ॥ तिङ्पदान्यपीत्यादि ॥ ५१ ॥ अस्तु भगवानेतादृशमाहात्म्योपेतः किं तत इत्याशंक्य जाग्रदाद्यवस्थाऽनुभवितृत्वलक्षणबंधस्यानादिविषयवासनाऽवसितांतःकरणमूलत्वात्तयोश्च मदधीनत्वात् तन्निवृत्त्यर्थं मामेवोक्तवक्ष्यमाणमाहात्म्योपेतमनुस्मर इत्यभिप्रेत्याह ॥ लोक इति चतुर्भिः। आत्मानं मनो लोके स्वविषयप्रपंचे विततं व्याप्तं । लोकं चात्मनि मनसि । सततं वासनारूपेण व्याप्तं । उभयमात्मानं लोकं च मया ब्रह्मरूपेण व्याप्तं उभयमप्याश्रितं मदधीनं च स्मरेदिति तृतीयेनान्वयः । पश्येत्यध्याहारो वा ॥ तथा चोक्तमेकादशस्कंधे सनकादिप्रश्ने ॥ गुणेष्वाविशते चेतो गुणश्चेतासि च प्रभो । कथमन्योन्यसंत्यागो मुमुक्षोरतितीर्षोरिति । तत्समाधाने च गुणेष्वाविशते चेतो गुणश्चेतासि वः प्रजाः । जीवस्य देह उभयं गुणश्चेतो मदात्मन इति । तात्पर्ये च । विष्णुस्था विषयाः सर्वे विष्णावेव मनो मम । इति मय्यां तथ्य तत्सर्वं त्यजेत्तत्तन्न बाधत इति अविततमिति पदं विच्छिद्यात्मानं जीवं लोकेऽविततमव्याप्तं जानीहीति व्याख्यानं प्रकृतोऽनुपयुक्तं । प्रकरणाननुगुणं च । अस्मत्पक्षे तु लोकं चात्मनि संततमित्युक्तवासनाकारणीभूतानुभवप्रतिपादकत्वेन सार्थक्यमुक्तं समाख्याऽनुकूलं चेति ज्ञातव्यं ॥ ५२ ॥ जाग्रदाद्यवस्थानां भगवदिच्छाधीनत्वं संप्रतिपन्नदृष्टांतेनाह ॥ यथेति द्वाभ्यां । यथा सुषुप्तो निद्रितः पुरुषो जीवः स्वप्ने स्वप्नावस्थायामात्मनि मनसि विद्यमानं विश्वं वासनामयप्रपंचं पश्यति । स्वप्नादुत्थितश्चैकदेशस्थं शयानदेशस्थितं स्वात्मानमेव पश्यति न तु स्वाप्नप्रपंचं । तेन च स्वप्नं मायामात्रं मन्यत इति ग्राह्यं । दार्ष्टांतिकानुसारात् । एवमेव जागरणादीनि जाग्रत्सुषुप्तिमूर्छादीनि जीवानां स्थानान्यवस्था आत्मनः परमात्मनो माययेच्छया निमित्तभूतया तन्नियतयोपादानभूतया प्रकृत्या च मात्राणि निर्मितानि । मा निर्माण इति धातोः । विज्ञाय तेषां जीवस्थानानां द्रष्टारं दर्शयितारं । जाग्रदादिभिर्जीवबंधकमिति यावत्। स्वतंत्र कर्तृ शब्दः स्यात्प्रज्ञस्यावेदनं यथा । सर्वप्रदर्शके चैव तुरीये सर्वदार्शितामिति

ब्रह्मतर्कवचनात् । प्राज्ञः किंचन संवेत्ति तुर्यं तत्सर्वदृक् सदेति श्रुतेश्च । यद्वा । द्रष्टारं स्वातंत्र्येण जीवावस्थासाक्षिणं । विश्वादित्रिरूपं परं तद्विलक्षणं । मोक्षप्रदं तुर्यरूपं भगवंतं स्मरेदुपासितेत्यर्थः ॥ तथा च श्रुतिस्मृती । कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यत इति । कार्यकारणस्य बंधस्य तदधीनत्वतो विभुः । विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ । कुतो बंधः परस्यास्य बंधेशस्य चिदात्मन इति च । यद्वा । स्वप्ने सुषुप्तः पुरुष आत्मनि वासनारूपेण वर्तमानं विश्वं गिरिवनादिरूपं देशांतरस्थं पश्यति । स्वप्नमध्ये सुप्तिस्वप्नं च पश्यतीत्यर्थः । तदा स्वप्न एवोत्थितः सन् आत्मानमेकदेशस्थं शयनदेशे स्थितं मन्यते । जाग्रदवस्थामनुभवति । तानि च सुषुप्त्यादिस्थानानि तदा जीवस्य स्वातंत्र्याभावेन यथा मायामात्राणि । एवं प्रसिद्धान्यपि जागरादीनि जीवस्थानानि आत्मनः परमात्मनो माययेच्छया मात्राणि निर्मितानीति विज्ञायेत्यर्थः । शेषं पूर्ववत् ॥ तदुक्तं ॥ मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवमिति । विश्वं पश्यति चाबाह्यप्रतीत्यनेन मनोगत वासनामयपदार्थावलोकनं स्वप्न इति स्वप्नलक्षणमुक्तं । मनोगतांस्तु संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयत इतिवचनात् । आत्मानमेकदेशस्थं मन्यत इत्यनेन बाह्यपदार्थदर्शनं जाग्रादिति जाग्रल्लक्षणमुक्तं ॥ ५३ ॥ ५४ ॥ इदानीं सुषुप्तिस्वरूपं निरूपयन् जाग्रदादिनियामकस्य विश्वादि चतूरूपस्य भगवतः स्वाभिन्नत्वशंकां परिहरति ॥ येनेति । पुरुषो जीवो येन प्राज्ञनामकेन भगवता प्रसुप्तः प्रस्वापितः सन् । तदा स्वापकाले आत्मनः स्वस्य स्वापं सुप्त्यवस्थां तत्कारणज्ञानं च स्वापकालं च निर्गुणविषयजन्यं ॥ स्वरूपभूतमिति यावत् । सुखं चात्मानं स्वस्वरूपं चेत्येतत्तदेव वेद नान्यत् । एतावंतं कालं सुखमहमस्वाप्सं नान्यत्किंचिदवेदिषमिति सुप्त्युत्तरकालीनस्मरणात् ॥ तथा चोक्तं । नात्मानं न परांश्चैव न सत्यं नापि चानृतं । प्राज्ञः स वेदयेत्किंचिज्जीवकामतमो विना । सुप्त्यवस्था सुखं चापि विना नान्यत्प्रदर्शयेत् । सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वर इति । येन प्रसुप्त इत्युपलक्षणं । येन जाग्रदादिकं प्रापितो भवति । तं निर्गुणं गुणकार्यावस्थाऽतीतं । ब्रह्म संपूर्णगुणं । आत्मानं चतूरूपं परमात्मानं मामवेहि । मदभिन्नं जानीहीत्यनेन विश्वादीनां चतुर्णामपि परस्परं कार्यभेदप्रयुक्तभेदशंका परास्ता ॥ तथा चोक्तं ॥ विश्वादिरूपो यः स्वात्मा स विज्ञेयो मुमुक्षुभिः । निर्विशेषोऽपि भगवांश्चतुर्धा समुदीरित

इति ॥ ५५ ॥ न केवलं भगवतो जाग्रदादि नियामकत्वज्ञानमेव बंधनिवर्तकं । किंतु भेदज्ञानमपीत्यभिप्रेत्य जीवेश्वरभेदं सयुक्तिकं निरूपयति ॥ उभयमिति । तज्जाग्रदादि जीवावस्थानियामकं ब्रह्म विश्वादि चतूरूपं परं ब्रह्म उभयं प्रस्वापं प्रतिबोधं च स्मरतोऽनुभवतः पुंसो जीवस्य प्रतिबोधे जाग्रदवस्थायामन्वेति जीवमनुसरति। जीववत्स्वयमपि प्रतिबुद्धं वर्तत इति यावत् । प्रस्वापे सुषुप्त्यवस्थायां स्वप्नावस्थायां च । सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च । अन्योन्यनामता ज्ञेया मनोबुध्योस्तथैव चेति शब्दनिर्णयवचनात् । व्यतिरिच्येत व्यतिरिच्यते । जीववन्नानुसरति । जीववत्सुप्तं न भवतीति यावत् । ॥ तथा च श्रुतिः । स्वप्नेन शारीरमप्रहत्या सुप्तसुप्तानभिचाकसीतीति । यद्वा । प्रतिबोधः सम्यग्ज्ञानं । प्रस्वापोऽज्ञानमन्यथाज्ञानं च । अज्ञानं सुप्ति शब्दोक्तमिति वचनात् । तथा चोभयं प्रस्वापं प्रतिबोधं च स्मरतः प्राप्तवतः पुंसः प्रतिबोधे सम्यग्ज्ञानदशायां तद्ब्रह्म नेति प्रतिबुद्धं वर्तते । प्रस्वापेऽज्ञानदशायां मिथ्याज्ञानदशायां च व्यतिरिच्यते तद्रहितं वर्तत इत्यर्थः । अत एव ज्ञानं पूर्णज्ञानस्वरूपं । अत एव तत्परं तस्मादल्पज्ञानाज्जीवात्परं भिन्नमित्यर्थः । तदेवं भूतं ब्रह्म मामवेहीत्यनुषंगः ॥५६॥ भेदज्ञानं बंधनिवर्तकमित्युक्तं । विपक्षे बाधकमाह ॥ यदिति । आत्मनो जीवाद्भिन्न एषः पूर्वोक्तो मम भावः स्वरूपं यदि विस्मृतः स्यात् । जीवेश्वरभेदो विस्मृतश्चेदिति यावत् । ततस्तर्हि पुंसः संसारो भवति । संसार स्वरूपमाह ॥ देहादेह इति । जन्मांतरं पुनर्जन्मेत्यर्थः । ऐक्यज्ञाने तु तम एवेत्याह ॥ एकस्येति । एकस्य जीवेश्वरैक्यमनुसंदधतः पुंसो मृतेर्मृतिः । दुःखानंतरं पुनर्दुःखमंधंतमो भवतीत्यर्थः । ॥ तथा चोक्तं ॥ सर्वभिन्नमित्यादि ॥ ५७ ॥ तदेवमुक्तमाहात्म्योपेतस्य मम ज्ञानार्थमत्रैव प्रयतितव्यं । भोगादि संपादनं तु योन्यंतरेऽपि शक्यमित्याह ॥ लब्ध्वेति । इह कर्मभूमौ ज्ञानविज्ञानसंभवां ज्ञानं शास्त्रोत्थं विज्ञानमपरोक्षं । श्रवणान्मननाच्चैव यत्ज्ञानमुपजायते । तदज्ञानदर्शनं विष्णोर्विज्ञानं शंभुरब्रवीदिति वचनात् । तयोः संभवो यस्यां तां मानुषीं योनिं लब्ध्वाऽऽत्मानं सर्वगुणपरिपूर्णं परमात्मानं नित्याततगुणत्वात्स आत्मेति श्रुतिषूदित इति वचनात् । तथाऽऽत्मानं जीवस्वरूपं भगवत्पारतंत्र्यादिना यो न बुध्येत । सः क्वचिदपि क्षेमं नाप्नुयादित्यर्थः । ॥ ४१

॥ तथा च श्रुतिः । इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरिति ॥ ५८ ॥ प्रवृत्तिमार्गे वैराग्यार्थं प्रवृत्तिनिवृत्तिमार्गयोर्विवेकमाह ॥ स्मरन्वेति । ईहायां प्रवृत्तिमार्गे परिक्लेशमत्यायासं । तत ईहतः फलविपर्ययं । फलं सुफलं सुखप्राप्तिर्दुःख-

निवृत्तिश्च तयोर्विपर्ययो व्यत्यासः। दुःखनिवृत्तिः सुखप्राप्तिरितियावत्। तं च स्मृत्वा विचिंत्यानीहायां निवृत्तिमार्गे तूभयमपि परिक्लेशफलविपर्ययश्च नास्तीत्येवं पश्यन्। यद्वा। भयं पुनः पुनर्जननमरणलक्षणसंसारभयं नो भवति। किंतु नित्यसुखप्राप्तिलक्षणमोक्षो भवतीति पश्यन्। तत्तस्या ईहाया विरमेद्विरज्येतेत्यर्थः ॥५९॥ तदेव विवृणोति॥ सुखायेति त्रिभिः। दंपती अग्निहोत्रादि क्रियाकरणयोग्यौ स्त्रीपुरुषौ सुखप्राप्तये दुःखनिवृत्तये च क्रियाः प्रवृत्तिधर्मान्कुर्वाते। ततः प्रवृत्तिधर्मेभ्यो दुःखस्य निवृत्तिः सुखप्राप्तिश्च भवति। तस्मात्पुरुषोऽधिकारी जीवो विद्याभिमानिनां पंडिताभिमानिनां न तु पंडितानां। प्रवृत्तिधर्मिणामिति यावत्। नृणामेवमुक्तलक्षणफलविपर्ययं बुध्वा ॥ ६० ॥ तथाऽऽत्मनः परमात्मनः स्थानत्रयविलक्षणं। जाग्रदाद्यवस्थात्रयातीतं। अत एव सूक्ष्मं। दुर्ज्ञेयं गतिं स्वरूपं च बुध्वा। स्वेन तेजसा विवेकबलेन दृष्टश्रुताभिर्मात्राभिरैहिकामुष्मिकैर्विषयैर्विमुक्तः। तत्र विरक्त इति यावत्। ज्ञानविज्ञानाभ्यां संतुष्टः सन्मयि भक्तिमान्भवेदित्यर्थः ॥६१॥ मत्ज्ञानादन्यः परमपुरुषार्थो नास्तीत्याह॥ एतावानिति। योगेन नैपुण्यं यस्याः सा बुद्धिर्येषां तैर्नृभिर्मनुजैः परस्य सर्वोत्तमस्यात्मनो ममैवैकं दर्शनमिति यावत्। एतां भवानेव सर्वात्मना स्वार्थो ज्ञेय इत्यर्थः ॥ ६२ ॥ ६५ ॥ इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ६-१६ ॥ ॥

॥ हरिः ॐ ॥ रुद्रावुमा न कोपोत्थपार्वती शापतोऽभवत्। चित्रकेतोर्वृत्रजन्मेत्यध्यायेऽस्मिन्निरूप्यते ॥ १ ॥ यतो यस्यां तस्यै दिशे नमस्कृत्वा ॥ १ ॥ स विद्याधरस्त्रीभिर्हरिं गाथयन् रेम इति द्वयोरन्वयः। अव्याहतं बलमिंद्रियपाटवं च यस्य स तथा। नानाविधाः संकल्पत्वेनैव सिद्धयो यासु। कुलाचलेंद्रस्य द्रोणिषु निम्नतटेषु ॥ २ ॥ ३ ॥ इदानीं चित्रकेतोरसुरजन्मप्राप्तौ कारणमाह ॥ एकदेत्यादिना ॥ ४ ॥ अंके उत्संगे कृतामुपवेशितां देवीमालिंग्य स्थितमुवाच। तस्यांतिके स्थितः सन् जहास च ॥ ५ ॥ धर्मं वक्ता वदति। भार्या मिथुनीभूय चास्ते ॥ प्राकृतो मूढः ॥ ७ ॥ अगाधा गंभीरा धीर्यस्य स तथा ॥ न तस्य वीर्यं प्रभावं विद्वान्। तास्मिन् धृष्टायाः प्रागल्भाया निर्जितात्माभिमाने जितेंद्रियोऽहमित्यभिमानवते रुषा क्रोधेनाह ॥ ॥ ९ ॥ ॥ १० ॥ किमयं शास्ता। यतोऽस्मद्विधानां निषेधकृन्निवारको जात इत्यर्थः ॥ ११ ॥ ब्रह्मादयो धर्मं न विदुः किं यतोऽतिवर्तनं शास्त्रमतिक्रम्य वर्तमानं शीलं हरं नो निषेधंति न वारयंतीत्यर्थः ॥ १२ ॥ एवं काकूक्त्या

विनिंद्य तस्य दंडयत्वं निश्चिनोति ॥ एषामिति । पक्ष इति शेषः । अनुध्येयेत्यतः पूर्वं रुद्रावराणामिति शेषः । यः क्षत्रबंधुः क्षत्रियाधमः सूरीन् ब्रह्मादीन्परिभूयाज्ञान्कृत्वा एषां पूर्वोक्तानां ब्रह्मादीनां पक्षे रुद्रावराणामनुध्येयं पदाब्जयुगलं यस्य तं । मंगलमंगलं परममंगलमूर्तिजगद्गुरुं रुद्रं प्रशास्ति । हि यस्मात्तस्मादयं दंड्य इत्यर्थः । अत्र रुद्रस्य ब्रह्मध्येयत्वाभावेन रुद्राणामित्यध्याहारो न दोषायेति ज्ञातव्यं ॥ तथा चोक्तं ॥ विष्णुब्रम्हेत्यादि तंत्रमालायां ॥ १३ ॥ ननु भगवद्भक्तो न दंडार्ह इति चेत्तत्राह ॥ नायमिति । अयं साधुभिः पर्युपासितं परिसेवितं वैकुंठस्य श्रीहरेः पादमूलोपसर्पणं नार्हति । यतः संभावितात्माऽहमधिक इति कृता मतिर्येन । अत एव स्तब्धोऽनम्रः ॥ १४ ॥ तदेवं स्वयं दंड्यत्वं तं प्रत्याह ॥ अत इति । तत्फलमाह ॥ यथेति । तेनेति शेषः । तेने दंडेनेहास्मत्समीपे यथा तथा भूयोऽन्यत्र स्थलांतरेऽतिमहतां किल्बिषमपराधं न कर्ता न करिष्यतीत्यर्थः ॥ १५ ॥ १६ ॥ न मम शापदात्र्यामपि भवत्यां कोपस्तस्य भगवतैव क्लृप्तत्वादित्याह ॥ ॥ देवैरिति । यद्वरशापादिकं प्रोक्तं भवति । तत्तस्य मर्त्यस्य पूर्वदिष्टं हि प्राचीनकर्मोद्बोधकेन श्रीहरिणा क्लृप्तमेव । यत्तद्भगवता क्लृप्तं तदेव नियतं भवेत् । अतोऽन्येषां वरःशापो गुणदोषप्रवर्तक इत्यर्थः ॥ १७ ॥ अयं च संसारचक्रे स्वभाव एव न चित्रमित्याह ॥ संसारचक्र इति ॥१८॥ ननु यदुक्तं पूर्वदिष्टमिति भगवतःसुखादिकर्तृत्वं तदयुक्तं । जीवस्यैव तत्कर्तृत्वानुभवादित्याशंक्य सो भ्रांतिरित्याह ॥ नैवेति । अत्रैवं स्थितेऽपि प्राज्ञ आत्मानमन्यं च कर्तारं मन्यत इत्यर्थः ॥ १९ ॥ शापादेर्भगवन्नियतत्वं न भवत्यां कोप इत्युक्तं । इदानीमशेषानर्थमूलगुणप्रवाहपतितस्य तदपेक्षया शापादेरल्पत्वान्न तत्प्रयुक्तशोकादिरित्याह ॥ गुणेति । किं शब्द आक्षेपे । गुणानां सत्त्वादीनां प्रवाहे संसारे शापादिकः कियान्न कियानप्यल्प इत्यर्थः ॥ तथा चोक्तं ॥ आक्षिप्यते किमेतद्यत्राल्पफलता भवेत् । वस्तुषु यस्य चाल्पत्वं पुंसो वा नेति चोच्यत इति प्रकाशसंहितायां ॥ २० ॥ ननु शापादिकं भगवन्नियतमित्युक्तं । तत्कुत इत्याशंक्य तस्यैव सर्वकारणत्वादित्याह ॥ एक इति । भगवानेक एवात्ममायया स्वेच्छया निमित्तभूतया स्वाधीनप्रकृत्या चोपादानभूतया भूतानि प्राणिनः सृजति । एषां बंधादिकं च सृजति । निष्कलः स्वयं बंधादिशून्य इत्यर्थः ॥ २१ ॥ नन्वेवं भूतविषमसृष्टौ तस्य किं कारणं । प्रियादिवैषम्याभावादित्याशंक्य यद्यपि प्रिया- ॥ ४२

दयो न संति । तथाऽपि तत्तद्योग्यताकर्मवशात्सर्वं घटत इत्याह ॥ न तस्येति द्वाभ्यां । प्रतीपोऽप्रियो न ज्ञातिर्बंधुश्चेत्यर्थः । तत्र हेतुः । सर्वत्र समस्य । तत्कुतः । निरंजनस्य निःसंगस्य । अत एव तन्निमित्ते सुखे रागो नास्ति । रागानुबंधी तु रोषः कुतः स्यात् ॥ २२ ॥ यद्यप्येवं तथाऽपि तस्य भगवतः शक्त्या सामर्थ्येन नियतो विसर्गः पुण्यपापादिलक्षणं कर्म । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित इति गीतावचनात् । किंच विविधः सात्विकादिलक्षणो विसर्गो निसर्गः । स्वभावयोग्यतेति यावत् । येषां शरीरिणां सुखाद्यर्थमेव कल्प्यते समर्थो भवतीत्यर्थः । भगवतो योग्यताद्यनुसारेणैव फलप्रदत्वात्समत्वं न विहन्यते । वैषम्यनैर्घृण्ये न सापेक्षत्त्वात्तथाहि दर्शयतीति सूत्रादिति भावः ॥ तथा चोक्तं ॥ सेवां योग्यातिरेकेण स्वात्मनामपि न दास्यति । अपराधातिरेकेण नान्यत्स्यात्तत्समो हरिरिति । भगवतो योग्यतादि पारतंत्र्यपरिहाराय तच्छक्तीत्युक्तं । न च पुनर्वैषम्याद्यापातः । तादृशवैषम्यादेरिष्टत्वात् । उपपद्यते चाप्युपलभ्यते चेति सूत्रादिति भावः ॥ तथा चोक्तं ॥ वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणं । नांगीकार्यमतोऽन्यत्तु न वैषम्यादि नामकमिति ॥ २३ ॥ यत एवमथ तस्मात् । तस्मादथोऽथेत्येतत्थेत्वर्थे समुदीरितमित्यभिधानात् । हे भामिनि । कोपने त्वं केवलं प्रसादयामि । न तु शापमोक्षाय तर्हि किं प्रसादेनेत्यत आह ॥ यदिति । यद्यस्मान्ममोक्तमुक्तिमसाधु मन्यसे । तत्तस्मात्त्वया क्षम्यतामिति प्रसादयामीत्यन्वयः । तत्र भवत्या मनसि कोपादि वृत्तौ ज्ञानादि विलोपलक्षणो महाननर्थो भविष्यतीत्यतस्त्वां प्रसादयामीति भावः ॥ २४ ॥ गिरिशौ पार्वतीपरमेश्वरौ प्रसाद्य स्मयतोर्विस्मयं कुर्वतोः ॥ २५ ॥ ॥ २६ ॥ हरेर्भृत्यानामपि ये भृत्यास्तेषां माहात्म्यमित्यर्थः ॥ ॥ २७ ॥ किं तन्माहात्म्यमित्यत आह ॥ कुतश्चन शापादेर्न बिभ्यतीति । स्वर्गादौ तुल्य एवार्थः प्रयोजनमिति द्रष्टुं शीलं येषां ते तथोक्ताः । नन्वस्तु स्वर्गनरकयोः प्रयोजनसाम्यं । नरकवत्स्वर्गस्याप्यनित्यत्वात् दुःखसंभिन्नत्वाच्च । अपवर्गे तु कथं साम्यं । तस्य दुःखासंभिन्ननित्यसुखरूपत्वेन परमपुरुषार्थत्वादित्यत आह ॥ नारायणपरा इति । नारायण एव परः पुरुषार्थो येषां ते तथोक्ता इत्यर्थः। तादृशानामपवर्गेप्यनादरात्सर्वत्रापि तुल्यार्थदर्शित्वोक्तिरुपपद्यत इति भावः। यद्वा । अपवर्गो जीवन्मुक्तिः । ततश्च न कश्चित्क्षुद्रोपद्रव इति ज्ञातव्यं ॥ २८ ॥ ननु कुतश्चन बिभ्यतीत्युक्तं । तत्कुत इत्याशंक्य शापादीनामीश्वरेच्छाक्लृप्त-

त्वेनापरिहार्यत्वादिति भावेनाह । देहिनामपि देहसंयोगान्निमित्तात् सुखं दुःखमित्यादि द्वंद्वानीश्वरस्य लीलयेच्छया भवतीत्यर्थः ॥ २९ ॥ ननु यदुक्तमीश्वरस्य*सुखादिकर्तृत्वं द्वंद्वानीश्वरलीलयेति तदयुक्तं । देवदत्तः सुखयति यज्ञदत्तो दुःखयतीति जीवस्यैव कर्तृत्वप्रतीतिरित्याशंक्य सा भ्रांतिरित्याह ॥ अविवेकेति । अर्थभेदोऽर्थानामीश्वरकर्तृकाणां सुखादि पदार्थानां भेदो वैलक्षण्यं । जीवकर्तृकत्वमिति यावत् । गुणदोषविकल्पश्च गुणदोषाणामीश्वरकर्तृकाणां सुखादि कारणीभूतपुण्यपापानां भेदो जीवकर्तृकत्वं पुंसोऽविवेकेन कृतो भ्रांतिकल्पितः । स कारयेत्पुण्यमथाऽपि पापं । सुखं दुःखं भवो भाव इत्यादि श्रुतिस्मृतिभ्य इत्यर्थः । तत्र दृष्टांतमाह ॥ भिदे वेति । आत्मनि मनसि विद्यमाने । इत्येवं वासनामयत्वेन प्रमिते प्रपंचे भिदा भेदः । वासनामयप्रपंचवैलक्षण्यं बाह्यत्वमिति यावत् । स्वप्ने स्वप्नावस्थायां यथा कल्पिता । तद्वत् । यदन्यथात्वं जाग्रत्वं सा भ्रांतिस्तत्र तत्कृतेति कौर्मोक्तेरित्यर्थः ॥ तथा चोक्तं ॥ यत्तद्भगवता क्लृप्तमित्यादि प्रकाशसंहितोक्तेरयमर्थः । आत्मनि जीवे प्रतीयमानोऽर्थभेदः सुखादि भागः पुण्य पापविभागश्च स्वप्नकल्पिता भिदेव करितुरगादि भेद इवाविवेककृतोऽविद्याकल्पित इति । जगन्मिथ्यात्वप्रतीतिवारणाय श्लोकं समाख्यया व्याचष्टे ॥ यत्तदिति । भगवता यत्क्लृप्तं संकल्पितं तदेव नियतं नियमेन भवेत् । भगवानेकः । सर्वकर्तेति यावत् । ततस्मात्कारणादन्येषां भगवदितरेषामतोऽस्माद्भगवत एव वरादयो भवंति । भगवानेव सर्वेषां वरदातेति यावत् । कर्तुर्भावः कर्तृता कर्मगुणदोषप्रकर्तृता पुण्यपापलक्षणकर्मेत्यर्थः । इदमुपलक्षणं । सुखादिकं च ग्राह्यं । यद्वा । तद्भगवता तेन स्वतंत्रतया प्रसिद्धेन भगवता यत्क्लृप्तं तदेवातोऽन्येषां भगवद्व्यतिरिक्तानां भवत् । यच्छब्दार्थमाह ॥ पर इति । ननु यदुक्तं भगवानेव सर्वकर्तेति तदयुक्तं । देवदत्तः शपति यज्ञदत्तोऽनुगृण्हातीति वरादीनां जीवकर्तृत्वेन प्रतीतेरित्याशंक्य सा भ्रांतिरित्याह ॥ स्वत इति । स्वतः प्राप्तात्स्वतंत्रभूतभगवत्संकल्पप्राप्तात् । भेदकृतिर्विभागकरणं । भ्रांतिरिति शेषः । शापादिकं भगवत्कर्तृकं न भवति किंतु जीवकर्तृकमिति ज्ञानं भ्रांतिरित्यर्थः । तत्र दृष्टांतमाह । स्वप्नेषु स्वप्नावस्थायां मनसि यथा यथार्थतया विद्यमानस्य । तत्र हेतुः । वासनारूपिणो वासनोपादानकस्य प्रपंचस्य दर्शनं बाह्यत्वेन ज्ञानं यथा भ्रांतिस्तद्वदित्यर्थः । अस्त्वेवं भगवान्सर्वकर्ता । किं तत इत्यत आह ॥ भगवदिति । यस्मात्सर्वेषां शापादीनां भगवद्वशता तस्माद्भगवत्स्वरूपं स्वतंत्रत्वादिना ज्ञेयमित्यर्थः ॥ ३० ॥ स्व-

र्गादिषु तुल्यार्थदर्शिन इत्युक्तं तद्विवृणोति ।। वासुदेव इति । ज्ञानविज्ञानयोर्वीर्यं बलं येषां तेषां व्यपाश्रयो विशिष्टबुद्ध्याऽऽश्रयणीयोऽर्थो नास्तीत्यर्थः ।। ३१ ।। अस्य श्रीहरिदासत्वेन तत्प्रभावत्वान्नैतच्चित्रमिति वक्तुं श्रीहरेर्माहात्म्यमाह ।। नाहमिति द्वाभ्यां । पृथक् तारतम्येन । ईशमानिनो लोकेशा इत्यभिमानवंतो वयं सर्वे सुरेशा ब्रह्मपुत्राः सनकादयस्तदन्ये मुनयश्च यस्यांशकांशाः प्रतिबिंबानामपि प्रतिबिंबाः । तत्तस्य भगवत ईहितमाभिप्रायं लीलां वा । स्वरूपं च न विदामेत्यर्थः। सुरेशा इति साम्येनोक्तं विशिष्याह ।। नाहमित्यादि ।।३२।। एवं देवाद्यवेद्यत्वलक्षणमाहात्म्यमुक्त्वा सर्वसमत्वादि लक्षणं च माहात्म्यमाह ।। न हीति । अस्य भगवतः कश्चिदपि जीवोऽति योग्यतातिक्रमेण प्रियादिर्नास्ति । सर्वसम इत्यर्थः ।। तदुक्तं ।। सेवा या योग्यतातिरेकेणेत्यादि । तत्र हेतुमाह ।। आत्मत्वादिति । स्वामित्वादित्यर्थः । न हि सर्वभूतस्वामिनस्तेषु स्वकीयः परकीय इत्यादि विभागबुद्धिः संभवतीति भावः। हेत्वंतरमाह ।। सर्वेति । यतो हरिः सर्वेषां भूतानां प्रियः प्रियतमोच्चेत्यर्थः । न हि विष्णोः सर्वं भूतानि प्रियंत इति भावः ।। ३३ ।। एवं भूतस्य श्रीहरेरनुचरत्वादयमपि तादृश एव न चित्रमित्याह ।। तस्येति द्वाभ्यां । प्रियोऽनुगः प्रीतिविषयोऽनुचरः । अहं चाच्युतप्रियो यस्य । अच्युतप्रियश्च तस्मादस्मिन् क्रोधो मा भूदिति भावः ।। ३४ ।। ३५ ।। ३६ ।। प्रतिशप्तुं प्रतिशापं दातुमलंतमः समर्थतमोऽपीत्यर्थः । अत्र प्रतिशप्तुमलंतम इत्युक्तिर्न चित्रकेतोः पार्वत्यपेक्षयाऽऽधिक्याभिप्रायः । किंत्वधमानामुत्तमान्प्रत्यपि शापदानसंभवाभिप्राय इति ज्ञातव्यं ।। तथा चोक्तं ।। देवा एव तदन्येभ्य इत्यादि । परैरपकृता अपि न प्रतिकुर्वंति । इत्येतावदेव साधूनां लक्षणं ।। ३७ ।। कुत्रास्य जन्माभूदित्यत आह ।। जज्ञ इति ।। ३८ ।। परमप्रमेयमुपसंहरति ।। एतदिति । वृत्रस्यासुरजातेरसुरस्त्वभावेनोत्पत्तेर्भगवन्मतेश्च यत्कारणं परिपृच्छसि पृष्टवानसि । तदेतदाख्यातामित्यन्वयः । यद्वा । असुरजातेश्चासुरजात्युत्पन्नस्यापि वृत्रस्य या भगवन्मतिस्तस्याः कारणमित्यर्थः ।।३९।। एतच्छ्रवणफलमाह ।। इतिहासमित्यादिना ।। चित्रकेतोर्विष्णुभक्तानामंगिरो नारदादीनां च माहात्म्यमेतदेतं ।। ४० ।। ४१ ।। ४२ ।। इति श्री भागवतटिप्पण्यां सप्तदशोऽध्यायः ।। ६–१७ ।। ६ ।।

।। हरिः ॐ ।। त्वष्टुर्वंशः स संप्रोक्तो वर्णितोऽथ यथाक्रमं । तदन्यादित्यवंशोऽत्र दैत्यवंशश्च वर्ण्यते ।। १ ।। दक्षकन्याऽ

न्वयकथनेऽदित्यां द्वादशपुत्राः प्रोक्ताः । विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः । धाता विधाता वरुणो मित्रः शक्र उरुक्रम इति । तत्र षष्ठाध्यायांतमारभ्य विश्वरूपवृत्रचित्रकेतूपाख्यानैस्त्वष्टृवंशमनुवर्ण्येदानीं सवितुर्वंशमाह ॥ प्रश्निरिति । सावित्रीमित्यादिषु प्रसूतेत्युत्तरस्यानुषंगः । पशुं पशुयागं महामखान् पंचयज्ञान् ॥ १॥२ ॥ धातुर्भार्या कुहूः साऽयं पुत्रमसूत । एवं शिनीवाली दर्शमित्यनुक्रमादित्यर्थः ॥ ३ ॥ समनंतरो विधाता क्रियायां भार्यायां पुरिष्याख्यानग्नीन्पंचविंशतिं । पुरिष्यासोऽग्नय इति श्रुतेः पंच वा एतेऽग्नयो याचित इति श्रुतेश्च । चर्षणी वरुणस्य भार्याऽऽसीत् । पूर्वं ब्रह्मणः पुत्रो भृगुर्यस्यां पुनर्जातः ॥ ४ ॥ वाल्मिकिश्च वाल्मीकाद्वरुणस्यैव पुत्रो भवेत् । एतौ वरुणस्यैवासाधारणपुत्रौ तथोत्सर्गादयो मित्रस्यासाधारणाः । तयोरेव साधारणौ द्वौ पुत्रावाह ॥ अगस्त्य इति । ब्रह्मजो वसिष्ठश्च । पुलस्त्यजोऽगस्त्यश्च द्वावृषी पुनर्मित्रा वरुणयोरभवतां ॥ ५ ॥ यत उभावपि कुंभे रेतः सिषिचतुः । सत्रेहजातादिषितानमोभिःकुंभे रेतः सिषेचतुः समानमिति श्रुतेः । द्रुतं स्कन्नं ॥ ६ ॥ ७ ॥ बृहच्छ्लोको नामपुत्रोऽभवत् । तस्य बृहच्छ्लोकस्य ॥ ८ ॥ तस्योरुक्रमस्य कर्मादीनि । असौ महात्मनः कश्यपस्य पत्न्यामदित्यां यथाऽवततार तं प्रकारं पश्चादष्टमस्कंधे वक्ष्यामह इत्यन्वयः ॥ ९ ॥ १०॥ दितेर्हिरण्यकशिपुर्हिरण्याक्षश्चेति प्रथमं द्वौ दायादौ पुत्रौ । तौ च कीर्तितौ तृतीयस्कंधे ॥ ११ ॥ १२ ॥ विप्रचित्तो दानवाद्भर्तुः सकाशाद्राहुं पुत्रमग्रहीत् ॥ १३ ॥ ततः प्रल्हादात्पंचजनं पुत्रमसूत ॥ १४ ॥ यो मेषरूपं वातापिं । याचेत्तामिल्वलं ययाचे । तं वातापिं चासूतेत्यन्वयः ॥ १५ ॥ तस्य विरोचनस्य बलिः सुतोऽभवत् ॥ १६ ॥ ततो बलेः सकाशात्पुत्रशतमभवत् । सुश्लोक्यः पुण्यकीर्त्याभः । तस्य बलेरनुभावो माहात्म्यं पश्चादष्टमस्कंधेऽभिधास्यते वक्ष्यते ॥ १७ ॥ तस्य गुणेषु मुख्यता प्राधान्यं । यस्य बाणस्य पार्श्वे ॥ १८ ॥ समानरूपतां देवत्वमापिताः ॥ १९ ॥ ॥ २० ॥ सत्रमयनमाश्रयो यस्य । हे सत्रायण शौनक । सर्वदर्शनः सर्वज्ञः । स च बादरायणिर्मुनिरादृतं सादरमर्थवद्बह्वर्थयुक्तं विष्णुरातस्य परीक्षितस्तद्वचो निशम्य तं विष्णुरातं सभाजयन्स्तुत्या प्रीणयन्निभृतेन हर्षपूर्णेन चेतसा जगादेत्यन्वयः॥ २२ ॥ पार्ष्णिग्राहेण पृष्ठतः सहायेन ॥ २३ ॥ भ्रातॄणां दैत्यानां हंतारं । उल्बणं क्रूरं । अक्लिन्नहृदयं कठिणचित्तं ॥ २४ ॥ ननु तेन स्वदेहरक्षणार्थमन्येषां घातनं करोत्येव किमत्र चित्रं । तत्राह ॥ किमिति । ईशः प्रभुरित्यभिहितस्यापि यस्य देहस्यांते मर-

णानंतरं । द्वित्रिदिनावस्थितस्य कृमय इति श्वादिभिर्भक्षितस्य तु विशिष्टेति । दग्धस्य भस्मेति संज्ञा भविष्यंति । तत्कृते तस्य देहस्यार्थे यो भूतेभ्यो द्रुह्यति । स किं स्वार्थं वेद न वेदैव । तत्र हेतुः । यतो भूतद्रुहान्निरयो भवति ॥ २५ ॥ इदं देहादिकं ध्रुवं नित्यमाशानस्य मन्यमानस्य । अत एवमुन्नद्धमुच्छृंखलं चेतो यस्य तस्येंद्रियस्य यो मदस्तस्य शोषणं । येन सुतेन स्यात् । स सुतो मे भूयात् ॥ २६ ॥ इति भावेन सा दितिर्भर्तुः प्रियमसकृदाचचार ॥ २७ ॥ २८ ॥ जडीभावे हेतुद्वयं ॥ स्त्रियेति ॥ विदग्धयेति च । प्रौढ्येत्यर्थः । विवशः स्त्रीपरवशः सन् बाढं तव मनोरथं पूरयिष्यामीति यदाह । न तच्चित्रं योषिति ॥२९॥ तत्र हेतुमाह ॥ विलोक्येति । प्रजापतिर्ब्रह्माऽऽदौ सृष्टिकाले । भूतानि प्राणिन एकांतभूतानि निःसंगानि विलोक्य । मैथुनेन सृष्टिवृद्ध्यर्थं स्वदेहार्धात्स्त्रियं चक्रे ससर्जेत्यर्थः । एवं स्त्रिया शुश्रूषितः सन्नाहेत्यन्वयः ॥३०॥ ३१॥ इह चकारात्परत्र च । कः कामः पुरुषार्थः । आगम आप्राप्यः ॥ ३२ ॥ ननु परदैवते सुप्रीते सर्वकामप्राप्तिरिति सुप्रसिद्धं । तत्कथमुच्यते भर्तरि सुप्रीत इति । तत्राह ॥ पतिरेवेति । नारीणां परमं दैवतं पतिरेक पत्यावेव सन्निहितं फलदानाय । अतः पत्यौ सुप्रीते तन्निष्ठपरदैवतमपि प्रीयत इति भावः । ननु किं तत्परदैवतं यत्पत्यौ सन्निहितमित्यत आह ॥ मानस इति । सर्वभूतानां मानसो मनसि स्थितः श्रीवासुदेवो लक्ष्मीपतिरेव परमं दैवतमित्यन्वयः ॥ ३३ ॥ ननु यदि भगवत्प्रीतिरेव पुरुषार्थसाधनं तर्हि स एव पृथक् सेव्यः । किं पतिसेवयेत्यत आह ॥ स एवेति । स भगवान्पत्यौ रूपविशेषधृगेव स्त्रीभिरिज्यते न पृथगित्यर्थः । अधिष्ठानानियमे दृष्टांतमाह ॥ दैवतेति । अलौकिकार्थैर्नामभिरप्राकृतैः रूपैश्च विविधं कल्पितैरभिव्यक्तैर्देवतानिष्ठैर्लिंगैर्मूर्तिविशेषैरुपलक्षित एव यथा पुंभिरधिकारिविशेषैरिज्यते न पृथक् तद्वदित्यर्थः ॥ ३४ ॥ उपसंहरति ॥ तस्मादिति । पतिं पतिस्थमीश्वरं सर्वाभीष्टप्रदानसमर्थं । आत्मानं परमात्मानं । अनन्यभावेन न विद्यते ईश्वरादन्यो विषयो यस्य स चासौ भावो भक्तिश्च तेन ॥ तथा चोक्तं भगवता ॥ यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् । अनन्यभक्तेरुद्रेकात्सा ययैव तरेत्स्थितिमिति । भावो भक्तिः समुद्दिष्ट इति च ॥३५॥ ईदृग्भावेन हरिरत्र स्थित इति भावनया । पतिमात्मानमीश्वर इत्युक्तत्वात् ॥ तथा चोक्तं सप्तमस्कंधे ॥ या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा । हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदत इति । तत्तात्पर्ये च । हरि-

रस्मिन् स्थित इति स्त्रीणां भर्तरि भावना । शिष्याणां च गुरौ नित्यं शूद्राणां ब्राह्मणादिषु । भृत्यानां स्वामिनि तथा हरिभाव इतीरित इति । असतीनामपतिव्रतानां । सती साध्वी पतिव्रतेत्यभिधानात् ॥ ३६ ॥ इंद्रहणमिंद्रहंतारं । अमर्त्यं मृत्युशून्यं । येनेंद्रेण विष्णुना सहायेन । घातितौ ॥३७॥३८॥ कृपणः क्षुद्रः ॥३९॥ स्वभावमनुवर्तमानाया योषितः कोऽत्रातिक्रमोऽपराधः । न कोऽपीत्यर्थः ॥ ४० ॥ स्वभावमेवाह ॥ शरदीति द्वाभ्यां । हृदयं चित्तं ॥ ४१ ॥ स्वाशिषात्मनां स्वार्थकामनयाऽऽत्मवत्प्रेष्ठत्वेन प्रतीयमानानामित्यर्थः ॥ ४२ ॥ इदं वक्ष्यमाणमुपायमुपकल्प्ये करिष्ये ॥ ४३ ॥ अयं भावो वैष्णवव्रतं तावदुपदेक्ष्यामि तेनैवास्याशुद्धचित्तायाः । इंद्रक्रोधो निवर्तिष्यते । व्रतवैगुण्येनेंद्रस्य बाधो न भविष्यतीति ॥ ४४ ॥ हे भद्रे । अंजो यथावत् । यदि धारयिष्यसि तर्हींद्रहा भविष्यति । वैगुण्ये सति देवबांधवो भविष्यति । वैष्णवत्वाद्व्रतस्य वैगुण्ये सति सर्वथा नैष्फल्याभावादिति भावः ॥ ४५ ॥ कार्याण्यावश्यकानि व्रतं यानि न घ्नंति । नावश्यकानि न च निषिद्धानि किं त्वभ्यनुज्ञातानि सर्वाण्यपि ब्रूहि ॥ ४६ ॥ तत्रैकत्रिंशन्निषेधेनाह ॥ न हिंस्यादिति पंचभिः । न शपेन्नाक्रोशेत् । अमंगलं कपालास्थ्यादि न स्पृशेत् । अपि शब्दो निषेधसमुच्चये ॥ ४७ ॥ नाप्सु प्रविश्य स्नायात् । अधौतमनिर्णिक्तं वासो वस्त्रं न वसीत नाच्छादयेत् । पूर्वविधृतां स्रजं पुनर्न धारयेत् ॥ ४८ ॥ भोजने पंचनिषेधानाह ॥ नोच्छिष्टमिति । चंडिकान्नं भद्रकाल्यादि शक्तिभ्यो निवेदितं पिपीलिकादूषितमामिषं मांसं । जंबीरादिकं वा । पले जंबीरमामिषमित्यादेः । तेन सहितमन्नं सामिषं वृषलाः शूद्राः कर्मभ्रष्टा वा । वृषो धर्मः समुद्दिष्टस्तस्य यः कुरुते लयं । वृषलं तं विजानीयात्सर्वकर्मसु गर्हितमिति भारतवचनात् । तैराहृतमन्नं । उदक्या रजस्वलया । अंजलिना नु न पिबेद्यः ॥ ४९ ॥ गृहाद्बहिर्निर्गमे सप्तनिषेधानाह ॥ नोच्छिष्टेति । अनर्चिता मंडनहीना । असंपीता अपावृता ॥ ५० ॥ शयनेऽष्टनिषेधानाह ॥ नाधौतपादिति । नापराक् पश्चिमशिराः । अन्यैः सह ॥ ५१ ॥ कार्याण्याह ॥ धौतवासा इति द्वाभ्यां । प्रातराशात्प्रथमभोजनात् ॥ ५२ ॥ वरवती जीवभर्तृका पतिं चार्च्य संपूज्योपतिष्ठेत स्तुतिं कुर्यात् । तं पतिं कोष्ठगतं पुत्ररूपेण कुक्षेरंतर्गतं ध्यायेत् ॥ तथा च श्रुतिः ॥ आत्मैव पुत्रनामासीति ॥ यद्वा । तं पतिस्थं परमात्मानं कोष्ठगतं हृदयगतं ध्यायेदित्यर्थः ॥ ५३ ॥ पुंसवनं पुत्रोत्पत्तिकरं । अविप्लुतं वैगुण्यरहितं । तुभ्यं तव ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥५७॥ हरिरिंद्रो व्रतस्य छिद्रं प्रेप्सुः प्राप्तुमिच्छुः । जिह्मः कुटिलः । साधुवेषो मृगहा लुब्धको यथा । मृगवंचनाय मृगवेषो भवति । तद्वदित्यर्थः ॥५८॥ तत्परो व्रतदोषान्वेषणानिष्ठोऽपि नाध्यगच्छत ॥५९॥ अस्पृष्टवारिश्वासौ धौतांघ्रिश्च ॥६०॥ तदंतरं तमवकाशं निद्रया हृतं चेतो यस्याः । योगमायया योगसामर्थ्येन ॥६१॥ मा रोदीरित्युपलालयन्निव तान्पुनरेकैकं सप्तधा चकर्त चिच्छेद ॥६२॥ जिघांससि हंतुमिच्छसि ॥६३॥ मा भैष्ठ मा भयं कुरुध्वं । कौशिक इंद्रः । गणाः । सप्तगणा वै मरुत इति श्रुतेः ॥६४॥६५॥ न ममार दितेर्गर्भमित्येतन्न चित्रमित्याह ॥ सकृदिति । पुरुषोजीवः पुरुषं परमपुरुषं सकृदिष्ट्वाऽपि सात्मतां सारूप्यमपि याति । दित्याच किंचिदूनसंवत्सरं हरिरर्चितो यतस्तस्मान्न ममारेति न चित्रमित्यर्थः । यद्वा । मरुतां दितिपुत्रत्वेऽपि देवप्राप्तौ हेतुरनेनोच्यते ॥६६॥ इंद्रेण सजूः सह हरिणेंद्रेण दिति सेवितेन विष्णुना वा । मातृदोषं दैत्यत्वं व्यपोह्य परिहृत्य । सोमपाः सोमपानार्हाः कृताः ॥६७॥ पर्यंतुष्यद्गर्भच्छेदेऽपि पुत्राणां मरणाभावादिति भावः ॥६८॥६९॥७०॥ नित्या निष्कपटे उक्ते सति । इंद्रोऽपि निष्कपटमेवाह ॥ अंबेति । लब्धमंतरमवकाशो येन स तथा । अर्थ एव बुद्धिर्यस्य स तथा ॥७१॥७२॥ अध्यवसायप्रकारमेवाह ॥ महापुरुषेति । महापुरुषस्य भगवतः पूजा यस्य सकाशाद्भवित्री सिद्धिः फलं भवत् । प्रसाद इति यावत् । कार्यानुषंगिणी कार्याविनाभूतनियमेनाभिलषितकार्यसाधकः । अतोदितिकृतसेवाजन्यभगवत्प्रसादेन मरुतो न म्रिर इति भावः ॥७३॥ यद्यपि सेवया प्रसन्नो भगवान् सर्वकामान्प्रयच्छति । तथाऽपि निष्कामनया सेव्य इति दितिं कटाक्षीकृत्याह ॥ आराधनामिति द्वाभ्यां । ये निराशिषो निष्कामा आराधनमीहमानाः कुर्वाणः संतः । परमपि परमपुरुषार्थं मोक्षमपि नेच्छंति । ते स्वार्थसाधनकुशला इत्यर्थः ॥ ७४ ॥ आत्मानमपि प्रददातीति तथा । आराध्य गुणस्पर्शं विषयभोगं बुधः को वृणीत । यस्मात्तन्नरकेऽपि स्यात् ॥ ७५ ॥ महीयसि हे महत्तमे । मृतः सन्नुत्थितः । दिष्ट्यामंगलं ॥ ७६ ॥ ७७ ॥ ७८ ॥ इति श्रीभागवतटिप्पण्यामष्टादशोऽध्यायः ॥ ६-१८ ॥

॥ हरिः ॐ ॥ यद्वैष्णवं व्रतं चक्रे दितिः पुंसवनाभिधं । अत्र लोकोपकाराय तत्स्वरूपं निरूप्यते ॥ १ ॥ पुंसवनाख्यं व्रतं तस्य । प्रकारमिति शेषः ॥ १ ॥ मार्गशिरे मासि शुक्लपक्षे आदितः प्रतिपदि । सर्वकामिकं मोक्षादि सर्वपुरुषार्थसाधनं

॥ २ ॥ अनुमंत्र्य पृष्ट्वा । शुक्ला दंता यस्याः सा शुक्लदंती धौतदंता । अलंकृता सती पूजयेदित्यन्वयः ॥ ३ ॥ ४ ॥ नमस्कारमंत्रानाह ॥ नम इति त्रिभिः । केवलं ते तुभ्यं नमोऽस्तु । तत्र हेतुः ॥ निरपेक्षायेति । निरपेक्षत्वे हेतवः । हे पूर्णकाम महाविभूतिपतये लक्ष्मीपतये । संकल्पमात्रेणैव सिद्धयोऽणिमाद्या यस्मिंस्तस्मिन् ॥ ५ ॥ भो ईश । यतो यस्मात्त्वं कृपादिभिर्जुष्टोऽन्यैश्च सत्यसंकल्पादिभिः सर्वैः गुणैस्ततस्तस्माद्भगवच्छब्दवाच्योऽसि ॥ ६ ॥ महामाये महामाहात्म्ये महापुरुषस्य श्रीनारायणस्यैव लक्षणानि निरपेक्षत्वादीनि यस्यास्तस्याः संबोधनं ॥ ७ ॥ पूजामंत्रमाह ॥ ॐ नम इति । महाविभूतिभिः परिवारदेवताभिः सहवर्तमानाय । उपस्पर्शनमाचमनं । हविः शेषमुपाहरावशिष्टं ॥ ८ ॥ होममंत्रमाह ॥ ॐ इति । प्रकर्षेण भवंत्याभ्यामिति प्रभवौ ॥ ९ ॥ १० ॥ स्तोत्रप्रकारमेवाह ॥ युवामिति सार्धैश्चतुर्भिः । युवां लक्ष्मीनारायणौ । ननु प्रकृतिपुरुषयोर्जगत्कारणत्वं श्रूयते तत्र तत्र क्वचिच्चाव्यक्तादीनां तत्कथमुच्यते युवामिति तत्राह ॥ इयमिति । इयमेव प्रकृतिः प्रकृतिनामिका । त्वमेव पुरुषः पुरुषनामकः । इयमेव सूक्ष्मा दुर्विभाव्याऽव्यक्तशब्दप्रकृतिकथनमेतत् । सूक्ष्मत्वादव्यक्तनाम्नीत्यर्थः ॥ तदुक्तं ॥ कालोंऽतकः प्रधानं च मृत्युरव्यक्तमित्यपि । उच्यते प्रकृतिः सूक्ष्मा श्रीश्चदुर्गेति नामभिरिति । विष्णुशक्तिनियम्यत्वाच्छक्तिनाम्नी च । श्रीभूदुर्गेति या भिन्ना प्रकृतिः शक्तिरुच्यते । विष्णुस्वरूपशक्तेः सा शक्यत्वाच्छक्तिरेवेति वचनात् । अज्ञानादिना जगद्बंधकत्वान्माया नाम्नी च ॥ तदुक्तं ॥ मायेति प्रकृतिश्चैव मायाजीवश्च कथ्यत इति । मूलकारणभूता तु मायेत्याहुर्मनीषिण इति च । सा दुरत्यया भगवत्प्रसादमंतरेण केनाप्यत्येतुमशक्या । एवं भूतायास्तस्याः । अधीश्वर इत्यनेन समकक्षतया जगत्कारणत्वं युवामित्यनेन प्रतीतं निराकृतं ॥ ११ ॥ त्वं सर्वयज्ञः सर्वयज्ञांतर्यामी । इयं श्रीरिज्या क्रियांतर्यामिणी । इयं क्रिया क्रियांतर्यामिणी । भवान् फलभुक् कर्मफलभोक्तृषु स्थित्वा तत्फलभोजकः ॥ १२ ॥ गुणानां सत्त्वादीनां व्यक्तिरभिव्यक्तिर्भवान्गुणाभिव्यंजकः सन् गुणकार्यसुखादिभोजकः। सर्वेषां शरीरिणामात्मांऽतर्यामी । श्रीस्तु शरीराद्यंतर्यामी प्रत्ययो नामरूपयोः प्रकाशः । अत्र तत्तदंतर्यामित्वादेव तत्तच्छब्दवाच्यत्वं । न तु सर्वाभेदात् ॥तदुक्तं॥ अंतर्यामीत्वित्यादि । न केवलं भवान् यज्ञादीनामेवांतर्यामी किंतु सर्वनियामिकायाः श्रियोऽपीत्याह ॥ उपाश्रय इति । उप सर्वाधिकायाः श्रियोऽप्यंतर्यामित्वेनाश्रय इति भावः ॥ तदुक्तं ॥ अंतर्यामी श्रिय इत्यादि

॥ १३ ॥ युवां त्रिलोकस्य वरदावित्येतद्यथा सत्यं तथा ममाशिषः कामाः सत्याः संतु ॥ १४ ॥ उपहरणं नैवेद्यं ॥ १५ ॥ १६॥

॥ १३ ॥ युवां त्रिलोकस्य वरदावित्येतद्यथा सत्यं तथा ममाशिषः कामाः सत्याः संतु ॥ १४ ॥ उपहरणं नैवेद्यं ॥ १५ ॥ १६॥ महापुरुष चेतसा भवानस्मिन्संनिहित इति बुद्ध्या पतिं चोपचरेत् । पतिश्च स्वयं प्रेमशीलः सन् पत्न्याः कर्माणि बिभृयात् । तदनुकूलो भवेदित्यर्थः । कुत इत्यत आह ॥ कृतमिति । यतो दंपत्योर्मध्ये एकतरेण कृतमुभयोरपि भवति । तस्मादित्यर्थः । यद्वा । उत्तरवाक्यार्थे हेतुरयं ॥ १७ ॥ १८ ॥ ननु व्रतमध्ये रजोदर्शनादिनाऽनर्हायां पत्न्यां कथं तदनुष्ठानमित्यत आह ॥ पत्न्यामिति । न विहन्यात् न विछिंद्यात् ॥ १९ ॥ २० ॥ २१ ॥ द्वादशमासानीत्युक्ते कदाचिन्मध्ये मलमासे सति तेन सह द्वादशसंख्यायां सत्यां शुद्धस्यैकस्य त्यागः स्यात् । हायनमित्युक्ते तन्मध्यपातिनस्तस्यापि प्रसंगःस्यात् । तदुभयं वारयितुमुभयमुक्तं । कार्तिके मासि चरमेऽहनि । अंतिमे दिवसे । उपचरेत् ॥ २२ ॥ श्वो भूते सत्युपस्पृश्य स्नात्वा पयसि श्रुतेन पक्वेन पाक्यज्ञविधानेनापर्वणस्थालीपाकविधानेन ॥ २३ ॥ आत्मविद्ब्रह्मार्पणं ब्रह्महविरित्याद्युक्तप्रकारेण परमात्मानं जानत् । द्वादशब्राह्मणान् भोजयेदित्यर्थः । यद्वा । द्वादशात्मविदित्येकं पदं । द्वादशनामात्मानं स्वामिनं केशवादिरूपिणं परमात्मानं वेत्तीति तथेत्यर्थः ॥ २४ ॥ सोदपात्रान् उदकपूर्णपात्रैः सहितान् । इलान्वितान्भूमिसहितान् । गौरिलाकुंभिनीक्षमेत्यभिधानात् ॥ २५ ॥ २६ ॥ सुप्रजास्त्वं । सत्पुत्रहेतुमित्यर्थः । सुष्ठु यस्मात्तं शेषं ॥२७॥ जीवपतिमायुष्मंतं पतिं । अवीरा विधवा । हतकिल्बिषा सती गतिं विंद्येत् । धनेश्वरी सत्यपि या दुर्भगा सा सुभगा भवति । विरूपाऽप्यग्र्यं रूपं विंदेदित्यन्वयः ॥ २८ ॥ आमया वीरोगी सविरुजः । विविधाद्विशिष्याद्वा रोगाद्विमुच्यते । किंचेंद्रियैः सहितः कल्पः पटुर्देहो यस्य स भवति । अभ्युदये कर्मणि शुभकर्मणि । एतत्पठन् यो वर्तते स पितॄणां देवतानां च । अनंततृप्तिं करोतीति शेषः ॥ २९ ॥ किंतु हुतभुजादयस्तस्मै समस्तकामान्प्रयच्छंति । उपसंहरति ॥ राजन्निति । महत्पुण्यं जन्म महद्व्रतं चाभिहितं ॥ ३० ॥ इत्यशेषमंगलं ॥ वाक् प्रसूनकृता चट्टीवेंकटाद्रिविपाश्रिता । ध्रियतां हृदये माला सदये प्रभुणाश्रितः ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोध्यायः ॥ ६–१९ ॥

॥ इति श्रीमद्भागवतटिप्पण्यां सज्जनहिताख्यायां श्रीमद्वेंकटाचार्याणां शिष्येण चट्टीवेंकटाद्रिणा विरचितायां षष्ठःस्कंधः-समाप्तः ॥ ६ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ इति श्रीमद्भागवतटिप्पणी चेट्टीत्याख्या समाप्ता ॥

॥ षष्ठः स्कंधः ॥

## ॥ अथ श्रीमद्भागवतटिप्पणी मंदनंदिनी प्रारभ्यते ॥

## ॥ सप्तमः स्कंधः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

( श्रीमन्मध्वाचार्याः )

॥ हरिः ॐ ॥ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ चरणस्मरणात्सर्वदुरितस्य विदारणं ॥ शरणं नृहरिं वंदे करुणावरुणालयं ॥ १ ॥ आपाततोऽन्यथाभातभागं भागवतं सतां ॥ तात्पर्यतोऽजितपद्यः तं तत्त्वज्ञमुनिं भजे ॥ २ ॥ वाणीनर्तनरंगाभवत्क्रान् जयमुनीन्गुरून् ॥ अस्मद्देशिकपर्यंतान् बुद्धिशुध्द्यै समाश्रये ॥ ३ ॥ योऽतनोत्प्रभवा विष्णुतत्त्वकर्मविनिर्णयौ ॥ तमो निरास्यच्च तमाचार्यसूर्यमहं भजे ॥ ४ ॥ ॥ सृष्टिकूपे निपतितं द्विजमुद्धृत्यमापतः ॥ पदांबुजे जिहसंतं भुवनेंद्रमहं भजे ॥ ५ ॥ सप्तमस्कंधगफले अतिस्वादयिष्टे रसं ॥ शुकानुकंपया व्यासस्तत्त्वज्ञः कश्चन द्विजः ॥६॥ विजयध्वजतीर्थानां कृतेरनुकृतिर्मम ॥ शिशोरिवकृतिः पित्रोर्हासहर्षावहासितां ॥ ७ ॥ सप्तमस्कंधपद्यानां श्रीमद्भागवते शुभे ॥ भुवनेंद्राज्ञया कुर्वे योजनां मंदनंदिनीं ॥ ८ ॥ अत्र सप्तमस्कंधे सर्वसज्जनदुरितविदारिश्रीनृसिंहावतारस्तत्प्रसादाय विविधवर्णाश्रमाचारस्तत्सपर्याधिकारश्च प्रतिपाद्यते । तदर्थं परीक्षित्प्रश्नपूर्वमुपोद्घातं रचयति ॥ सम इति । समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय इत्यादि वचनेषु समत्वाद्युक्तेरुभयत्र समात् । एकस्यार्थे परस्य वधाद्ययोगः । लोके तथा दर्शनात् । अत्र समत्वादेः प्रत्येकमेव वधायोगप्रयोजनकत्व । वैशिष्ट्ये कृत्याभावात् । विषमो यथेत्युपलक्षणं बोध्यं । यद्यपि सिद्धांत्यभितं समत्वं न वधविरोधि । प्रियत्वादिकं न सर्वत्रास्ति । तथाऽपि तादृशसिद्धांताविर्भावार्थैवेयमुक्तिरित्यवधेयं ॥ १ ॥ युक्त्यंतरेणापि वधायोगमाशंकते ॥ न ह्यस्येति । किं चेंद्रस्यार्थे दैत्यवधः किमिंद्रेण स्वप्रयोजनसद्भावात् । यद्वा । स्वस्यैव दैत्यद्वेषसद्भावात् । यद्वा । भाविबाधकशंकाजनितभयात् । नाद्य इत्याह ॥ न ह्यस्येति । तत्र हेतुः ॥ साक्षान्निःश्रेयसात्मन इति । निर्दुःखानंदादेः स्वरूपत्वं नासंपादनीयत्वात् । स्वस्यानन्याधीनत्वेनाभिव्यक्त्यर्थं स्थित्यर्थमप्यधिकारिवद्भावच्चानन्यापेक्षणात् । न द्वितीय इत्याह ॥ नैवासुरेभ्य इति । विद्वेषस्यापि क्रोधादिरूपतया । क्रुध् द्रुहेर्ष्यासत्यार्थानां यं प्रति कोप इति चतुर्थी । न तृतीय इत्याह ॥ नोद्वेगश्चेति । उभयत्र हेतुः ॥ अगुणस्येति । द्वेष उभयोर्गुणकार्यत्वात् । अस्य निर्गुणत्वात् ॥ २ ॥ नारायणगुणान्प्रतीति समत्वादौ निःश्रेयसात्मत्वे निर्गुणत्वे च सति सुरोपकारकत्वदैत्यसंहारकत्वादि गुणायोगः । तस्मिन्वा सत्युक्तगुणायोग इति बहुगुणविषयकः संदेह इत्यर्थः ॥ ३ ॥ प्रश्नं स्तौति ॥ साधुपृष्टमिति । यस्माद्भगवत्संबंधिमाहात्म्यं पृष्टादिकं सत् भगवद्भक्तिवर्धनं

तत्तस्मात्त्वया पृष्टं साधिवति योजना ॥ ४ ॥ नत्वा कृष्णायेत्यत्र क्रियार्थोपपदस्य तत्कर्मणि स्थानिन इत्यनेन चतुर्थी ॥ ५ ॥ उत्तरमाह ॥ निर्गुणोऽपीति । अपीत्यावर्तते । भगवानिति च । अपि यद्यपि । भगवान्विष्णुर्निर्गुणो गुणत्रयरहितोऽत एत एव तत्कार्यद्वेषोद्वेगरहितः । प्रकृतेर्लक्ष्म्या अपि परः । भगवान्समग्रैश्वर्यवान् । अत एव सुरगणैर्नास्यार्थोऽस्ति । अपि तथाऽपि स्वमायया गुणमाविश्य स्वतंत्रेच्छालक्षणगुणं स्वेच्छाधीनसत्वादिगुणं वाऽऽश्रित्य बाधकतां गतो भवति । इंद्रस्यार्थे दैत्यानवधीदिति यावत् । तथा चेंद्रजन्योपकारादिकारणत्रयाभावेऽपि स्वेच्छाधीनगुणाद्यनुरुद्धया स्वेच्छयैव कारणेन वधो गुणाद्यनुरोधाच्च । न वैषम्यादि । अत्र निर्गुणत्वस्य सत्वे तत्कार्यजननादिरूपकार्याभावः । तत्कारणीभूतजडप्रकृतेः परत्वं च लिंगमित्याशयेनाज इति । प्रकृतेः पर इति चोक्तं । अनेन द्वितीयश्लोकोक्तशंकाया निरासः । नन्वत्र षष्ठीतत्पुरुषोपगमे बाधकाभावेऽपि द्वंद्वात्तल् प्रत्ययोपगमे कथं बाध्यबाधकतां गत इति संगच्छते । तल् प्रत्ययस्य सर्वत्र संबंधेन निर्दोषस्य बाध्यतां गतत्वस्यायोगादिति चेन्न । बाध्यस्थत्वेनैव निमित्तेन बाध्यतां गत इत्युक्तेः संभवात् । अत एवात्र तात्पर्यं । बाध्यादिस्थो हरिरित्यादि भाविष्यत्पर्वणीति । अत्र बाध्यतादिगतेत्यपीत्यत्रापि भक्तिको वा सुपो लुका वा निर्देशः । अत्रादि पदेन विद्वद्दुःखादेर्ग्रहणं । अनेन प्रवृत्तिनिमित्तानियामकत्वेन लक्षणतदधीनत्वनयन्यायेनेव प्रवृत्तिनिमित्ताश्रयस्थत्वेनापि तच्छब्दवाच्यत्वमित्युक्तं भवति । न च बाध्यस्थत्वोक्तिरनुपपन्नेति वाच्यं । बाध्यताप्रयोजकलोकपीडाजनकबलप्रदत्वेन तत्स्थत्वस्य वक्तव्यत्वात् । न च बाध्यस्थत्वमनुपलब्धिबाधितं । अव्यक्तत्वात् । अत एवाव्यक्त इति मूले उक्तं । एतच्च प्रथमश्लोकोक्तशंकापरिहारस्याप्युपलक्षणं । समत्वं न तावद्वधविरोधि । तस्य यमे समवर्तित्ववत्तत्तद्योग्यतानुसारेण फलप्रदरूपत्वात् । प्रीतिकत्वरूपं प्रियत्वं । प्रत्युपकारमनपेक्ष्योपकारककर्तृत्वरूपं सुहृत्वं च सज्जनेष्वेवेति ॥६॥ निर्गुणत्वं विवृणोति ॥ सत्त्वं रज इति । अत्र सुरासुरादिगतसत्त्वादि गुणानुसारेण भगवतस्तत्तत्कार्यकारित्वं कथं । प्रत्येकगुणत्रयादिसत्वात् । न च प्राचुर्यानुसारेण तदिति वाच्यं । तथात्वे सुरेषु तमःकार्यस्य कदाऽप्यनापत्तेरिति चेन्न । प्रचुरगुणस्यैव जन्मलयकाले विवृद्धत्वेन तदनुसारेण भगवत्कार्यव्यवस्थोपपत्तेः । मध्ये रज आदेरपि किंचिद्विवृद्धया सुरादिषु तत्कार्योपपत्तिरित्याशयेनाह ॥ न तेषामिति । तथा च युगपत्ह्रासवृद्ध्यभावान्नाव्यवस्थेति भावः ॥ ७ ॥ कथं तर्हि व्यवस्थेत्यत आह ॥ जयकाल इति । रजस इत्यादावपि जयकाल

इति संबध्यते। असुरान्सुरभिन्नान्मनुष्यान्। नित्यसंसारिण इति यावत्। यक्षरक्षांसीति तमोयोग्योपलक्षणं। भजन्। एवं देवादीन् जन्मलयकाले विभजन्। तत्कालगुणस्तत्कालेऽभिवृद्धगुणानुगुण आस्त इत्यन्वयः ॥ ८ ॥ बाध्यादिस्थो भगवान् व्यक्त इत्येतदृष्टांतमुखेनाह ॥ ज्योतिरादिरिति। अरुणी ज्योती रूपेण वन्हिः। आदि पदेन दध्यादौ घृतादिः। यथा विद्यमानेऽपि न भाति तथाऽऽत्मस्थोऽपि परमात्मा न भाति। अमानो नाप्रतिषेध इति प्रतिषेधार्थक आभातीत्यत्र एत्यव्ययं। न भातीत्यस्यैवाभिप्रायमाह ॥ संघातादिति। देहेंद्रियासुजीवसमुदायान्न विविच्यते विविच्य न ज्ञायते। अविद्यमान एव न भातीति किं न स्यादित्यत आह ॥ विदंतीति। यतः कवयो मथित्वा श्रवणादि विचारं कृत्वा तत आत्मादिस्थं देहादिस्थमपरोक्षंति जानंति। यथाऽरुणौ वन्हिं दध्नि वा घृतं। कवयो मथनकुशलाः। अतो नास्तीति वक्तव्यमिति भावः। अत एवैतत्सर्वमभिप्रेत्योक्तं तात्पर्ये। दधिस्थघृतवदित्यादि ॥ ९ ॥ जयकाले तु सत्त्वस्येत्यादिना गुणत्रयप्रकृतत्वात्प्रसंगात्सृष्टिरक्षासंहृतिष्वपि गुणत्रयोपादानं विवेकेनाह ॥ यदा सिसृक्षुरिति। परः परमात्मा आत्मनः पुरः शरीरस्थानापन्नानि महदादितत्त्वानि तदभिमानिदेवशरीराणि ब्रह्मांडतदंतर्गतशरीरजातं च सिसृक्षुर्भवति तदा पृथक् साम्यावस्थापन्नाद्विविच्य स्वमायया स्वेच्छया रजो रजोगुणं सृजति सृष्टौ व्यापारयति। यदा चैषः सृष्टासु विचित्रासु पूर्षु रिरंसुः। अंतर्णीत णिच्। रिरक्षुरिति यावत्। तदा सर्वमीरयति। यदा चासौ शयिष्यमाणः स्वयं प्रलयजले स्वांतर्वा लोकान् शायिष्यमाणः। अंतर्णीत णिच्। स्थापयिष्यन् भवति। तदा तम ईरयति। अत्र सर्वत्रेश्वरः समर्थ इति ॥ १० ॥ कालादेव जगदुत्पत्त्युपपत्तेर्न भगवानपेक्षणीय इति काल शब्देश्वरैकत्वमतान्यप्येवमेव हीत्यनुव्याख्यानोक्ताः कालैकत्ववादिनः। प्रधानपुंभ्यामेवोत्पत्तिरिति सांख्याः। तन्मतंनिराह ॥ कालं चरंतमिति। कालोऽखंडो न क्षणलवादिभेदस्योपाधिकत्वस्य समयपादे निरासेन स्वाभाविकत्वात्। तथा च प्रवाहतश्चरंतं कालमपि भगवानेव सृजति। कला मुहूर्ता इत्यादि श्रुतेः। नापि प्रधानपुरुषयोः स्रष्टृत्वं ताभ्यां सह कालस्य सृष्टत्वात्। इत्याशयेनाह ॥ प्रधानपुंभ्यामिति। नेयं पंचमी। किंतु सहयोगे तृतीया। प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः। क्षोभयामासेति वचनात्। एतदेवाभिप्रेत्योक्तं तात्पर्ये ॥ प्रधानपुंभ्यां सहेति। इदमिदानीमिति प्रतीतिसिद्धकालाश्रयत्वप्रदोऽपि भगवानित्याभिप्रेत्याश्रय इत्युक्तं। आरोपितत्वाज्जगतो माया-

पेक्षा वक्तव्या । नतूक्तगुणत्रयापेक्षेत्येतद्वेति चोद्यं निराह ॥ सत्यकृदिति । विश्वं सत्यमित्यादि श्रुतेः । अनीशो हि मिथ्यां दर्शयति । अयं चेश इतीत्युक्तं ॥ ईश इति । एवं जगत्सर्जनेन तत्र तत्र प्रवेशनादिना च स्वप्रयोजनाभावात्कथमेतदित्यत आह ॥ स तत्र तत्रेति । योग्यायोग्यजनेषु स्थित्वा शुभाशुभलक्षणोभयसिद्धिमाप्नुयात् । अंतर्णीत णिच् । आपयेत् । तथा च स्वस्य विहार एवायं । जनस्य सदसन्मोक्षलाभ एव प्रयोजनमिति भावः । तथाप्युपादाननिमित्ताद्यपेक्षणात्परापेक्षत्वं तच्छक्त्यभावाच्चापूर्णत्वमित्यत आह ॥ लिंगात्मन इति । लिंगं शरीरे चिन्हे च साधने शेफभस्मनोरित्यभिधानात् । लिंगस्य शरीरस्थानीयस्य साधनस्य वा प्रकृतिकालादेरात्मनः स्वामिनो लिंगगुणाः स्वाधीनतया संति । षष्ठ्यर्थः स्वत्वं । तथा च साधनानां साधनत्वं यदात्माधीनमिष्यते । तदा साधनसंपत्तिरैश्वर्ये द्योतिका भवेदित्युक्तेः । साधनापेक्षया न स्वातंत्र्यहानिः । नाप्यपूर्णत्वं । यतो लिंगशक्तयः परमात्मनः संति । सर्वसामर्थ्योपेतत्वात् । शशविषाणादिसर्जनसामर्थ्यमप्यास्ति । किंतु सत्यसंकल्पत्वान्न तथा करोतीत्येव । यद्वा । पृथिव्यबादीनां जडानां या आस्पदत्वतदर्थैकत्वादिशक्तयो याश्च देवानां शक्तयस्ताश्च संतीति न भगवतो न्यूनत्वं । इदं च पद्यं प्राचीनैर्बहुधा योजितमपि मंदानंदायेत्थं योजितमिति क्षंतव्यं ॥ ११ ॥ निर्गुणोऽपि ह्यज इति प्रतिवचनश्लोके स्वमायागुणमाविश्येत्येतेन स्वेच्छाधीनसत्त्वादिगुणालंबनाद्वधादिकं युक्तमित्युक्तं । तदेव प्रयोजनोक्त्या प्रपंचयति ॥ एष इति श्लोकद्वयेन। य एष उरुश्रवाः पुरुकीर्तिर्दूरश्रवणादिकीर्तिमान्वा भगवान्कालप्रकृतिपुरुषादिविषये ईशिता सुराणामनीकमिव बलोपष्टंभकसैन्यमिव स्थितं देहेंद्रियादि कारणीभूतं सत्त्वमेधयति । रजस्तमस्कान् तत्प्रत्यनीकान् सुरविरोधिनोऽसुरान् प्रमिणाति निहंति । तमसि संसारे वा प्रक्षिपाति । एतत्किमर्थमित्युक्ते स भगवान्स्वसृष्टस्य स्थितिरक्षानुवृत्तये स्थितेस्तदर्थं रक्षायाश्चानुवृत्तये प्रकृतं ताक्त्वं हीत्यधिकरणोक्तरीत्या संहर्तुरसंहारातिरिक्तान्नदानादिरूपरक्षां विना स्थित्ययोगात् । सत्त्वं सत्त्वगुणं तेन सुराणां च मुहुः प्रतिस्थितिकालमुपबृंहयते वर्धयते । असुरान्नाशयतीति च ग्राह्यं । अत्र काल ईशितेत्यत्र प्रथमाभ्रांतिं वारयितुं तात्पर्यं । काले कालविषये ईशितेति । अनेन प्रकृतिपुरुषकालादिभिर्बलात्कृत इत्थं करोतीति न प्रयोजन चिंतेति चोद्यं निरस्तं । सुरानीकमिवेत्यस्यैधयतीत्यनेनान्वयभ्रांतिं निवारयितुं सादृश्यं प्रकटयितुं च प्रवृत्तं तात्पर्यं । देहादिकारणत्वेन सुरानीकमिव स्थितं सत्त्व-

मिति । एवंचेवेत्यस्य स्थितमित्यध्याहृतेनान्वयः । उपोद्धलकत्वेन च सादृश्यमित्युक्तं भवति । मूले सुरप्रियेत्युक्तिरनुपपन्ना । कदाचिदसुरादावप्यैश्वर्यादिप्रियकारित्वात् । न च सदा प्रियत्वेन विशेषः । तथात्वे सर्वसमत्वानुपपत्तेरित्यतस्तद्घटयितुं प्रवृत्तं तात्पर्ये ब्रह्मतर्कवचनं । स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः । अप्रियश्चासुराणां स स्वभावात्तूभयं नृणां । अत्र हरिर्देवप्रिय उच्यते । अत्र हेतुद्वयं सदा प्रियत्वात्स्वभावतः प्रियत्वादिति । प्रीतेः कर्तृविषयस्वभावोभयनिमित्तकत्वं बोध्यं । तु शब्दो नैव सुरादिष्विति विशिनष्टि । च शब्दस्तु शब्दार्थे । असुराणां त्वित्यर्थः । यद्वा । अनुक्तसमुच्चयो सदा चेत्यर्थः । यद्वा । न केवलं सुरप्रियोऽसुराणामपि यश्चेति । नृणां तूभयं । प्रियाप्रिय इत्युच्यत इत्यर्थः । अत्रापि स्वभावात्सदेति ग्राह्यं । एवं तर्हि समत्वानुपपत्तिरित्यत आह । देशकालगुणांश्चैव भक्त्यादीनप्यपेक्ष्य तु । योग्यतां च तथा कर्म सम इत्यभिधीयते । भक्त्यादिदेशं कृतत्रेतादिकालं । सदाचारादिगुणान् भक्तिश्रद्धादीन् अनादियोग्यतां पूर्वपुण्यकर्म चापेक्ष्य । एवमसुराणां देशादिकं द्वेषादिकं तस्य योग्यतां पूर्वपापं च मनुष्याणां तु मिश्रमवेक्ष्य फलं ददातीति सम उच्यते । न वैषम्यं । अत एव वैषम्यनैर्घृण्ये न सापेक्षत्वादिति सूत्रं । प्रकारांतरेण समत्वमाह । स्वतः प्रियोऽपि देवानामुत्पाद्यैव गुणानिमान् । इतरेषां तथा दोषात्सुखदुःखे ददात्यजः । उभयं तु मनुष्याणामतः सम इतीरितः । पूर्वं स्थितं साधनमपेक्ष्य फलदानात्समत्वं । अत्र तु स्वतः प्रियत्वादौ सत्यपि गुणादिकमुत्पाद्यैव फलदानात्समत्वमिति भेदः । एवं तर्ह्यसुरेषु गुणे सुरेषु दोषे सति करोतीत्यत आह । अनादिनियताश्चैव गुणदोषाः सुरादिषु । यथाक्रमं पुनश्चैव नियमाद्वर्धितास्तथा । विष्णुनैव ततो नित्यं विषमश्च जनार्दन इति ब्रह्मतर्के । यतः सुरासुरादिषु गुणदोषा यथाक्रममनादिनियता अतो नोक्तशंकेति भावः । एवं मिश्रेषूभयमनादिनियतमिति ग्राह्यं । अत्र गुण पदं मोक्षसाध्यपरं । दोष पदं तमःसाधनपरं । उभयं च संसारापादकं ग्राह्यं । एवं च सुरेषु दुःखापादकस्यासुरेषु सुखापादकस्य च सत्वेऽपि न दोष इत्यवधेयं । नन्वेवं गुणदोषप्रवाहस्यानादित्वे सदसन्मुक्तिः कदाचिदेव कथमापाद्येते इत्यत आह ।। नियमाद्वर्धिता इति । तथा च यथायोग्यमभिवृद्धयोरेव गुणदोषयोः सदसन्मुक्तिकारणत्वान्न पूर्वं तदापत्तिः । मनुष्याणां तु साधनानुष्ठानपर्यवसित पक्षे यथायोग्यं वर्धितत्त्वं ज्ञेयं । यथायोग्यमनंतरमनुष्ठितं च साधनं मुक्तानुष्ठितकर्मेव न फलसाधनं किंतु पूर्वमेव । फलं तु

स्वरूपसुखदुःखोभयानुसारि बाह्यसुखदुःखानुभवापर्यवसानमेव केचिल्लिंगभंगमप्याचक्षत । साधनानुष्ठान[illegible] तु क्रमादभिवृद्धिरित्यवधेयं । एवमपि सुरेष्वनादिगुणनियत्याऽसुरेषु दोषनियत्या विषमः स्यादेवेत्यत आह ॥ नित्यं विषमश्च जनार्दन इति । तर्हि विषमत्वं नास्तीत्युक्तेः का गतिरित्यतस्तात्पर्ये स्कांदवचनं प्रवृत्तं । न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् । योग्यतायास्तन्नियत्या विषमत्वं भवेदितीति स्कांदे । इति योग्यतापेक्षया योग्यताऽतिक्रमापेक्षया तद्व्यत्यासापेक्षया वा विषमत्वं नास्ति । यथास्थिततन्नियत्यापेक्षया तु विषमत्वं स्यादेव । विषमत्वं नास्तीत्युक्तिस्तु योग्यताऽतिक्रमापेक्षया नास्तीत्यभिप्रायिका । नन्वेवं तर्हि यथाकथंचिद्विषमत्वं दोषमावहेत्  इत्यतो नेदं विषमत्वं दोषायेत्याशयेन प्रवृत्तं तात्पर्यं । विषमत्वं तु दोषाय शुभाशुभविपर्यये । अतस्तादृशवैषम्यं ब्रह्मसूत्रे निराकृतं । शुभाशुभनियंतृत्वं न दोषो गुण एव सः । अतस्तादिष्टं कृष्णस्य ब्रह्मसूत्रकृतं विभोरिति तंत्रनिर्णय इति । शुभाशुभविपर्यये । पुण्यपापविपर्यये योग्यताविपर्यये वा । विपर्ययेण फलदाने इति यावत् । उक्तं चानुव्याख्याने । वैषम्यनिर्घृणत्वं च वेदाप्रामाण्यकारणं । नांगीकार्यमतोऽन्यत्तु न वैषम्यादि नामकमिति विवृतमेतत्सुधाचंद्रिकयोः ॥ १२ ॥१३ ॥ अत्रैव स्वभावतः सुरप्रिय इत्यत्रैव ॥१४॥ महाद्भुतं निंदकस्यापि सायुज्यरूपमाश्चर्यं ॥१५॥ विस्मितमना आश्चर्ययुक्तचित्तः ॥१६॥ चैद्यस्य शिशुपालस्य ॥१७॥ भगवन्निंदायास्तमोहेतुत्वे निदर्शनमाह ॥ वेन इति ॥१८॥ कलभाषणमारभ्य संप्रत्यंतत्कालपर्यंतमप्यमर्षी द्वेषी ॥१९॥ श्वित्रः श्वेतकुष्टः । धर्मी स्वर्गं विधर्मी निरयमेत्येवेति श्रुतेः । धर्माधर्मयोर्मृत्यनंतरभाविफलकत्वात् । श्वित्रो न जात इति कथमुच्यत इत्यतस्तात्पर्यं प्रवृत्तं । नियमाद्भुज्यते पुंभिर्धर्माधर्मफलं मृतौ । कैश्चिदत्रापि भुज्येत तस्मान्नाधर्ममाचरेदिति भारते । कैश्चिदत्युत्कटैरित्यर्थः । अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इत्युक्तेः । भगवन्निंदनस्य चात्युत्कटत्वात् ॥२०॥ दुःखग्राह्यधामन्यप्राप्यस्वरूप ॥ २१ ॥ एतदेतस्मिन्विषये बुद्धिर्भ्राम्यति । निंदा तमः कारणमिति श्रुतिशतासिद्धा निंदकस्य सायुज्यं प्रत्यक्षसिद्धं । अतो मनो नान्यतरन्निश्चेतुमर्हतीत्यर्थः ॥ २२ ॥ सदसः कथाः शृण्वंतः संत इत्यर्थः ॥ २३ ॥ युधिष्ठिरोक्तप्रश्नं प्रतिवक्तुमारभते ॥ निंदनेत्यादिना । अत्र निंदनादिना भगवतः क्रोधदुःखहिंसनाद्युपद्रवप्राप्त्या कथं चैद्यस्य सायुज्यमिति वा । एतज्जन्मनि साधनाभावात्कथं तादिति वा । द्विषतोऽपि सायुज्ये वेनस्यापि तत्स्यादिति वा । नाद्य इत्याह ॥ निंदनेति । हे राजन् । प्रधानपुरुषयोः

प्रकृतिपुरुषयोर्देहजीवयोर्वाऽविवेकेनात्यंताभेदाज्ञानेन निमित्तेन यत्कल्पितं निष्पादितं तदेव कलेवरं देहादिकं निंदनाद्यर्थं भवति । निंदनस्तवौ दोषगुणसंकीर्तनरूपवाचकव्यापारौ । सत्कारन्यक्कारौ सन्मानावमानलक्षणौ कायिकौ । एतैः कार्यं क्रोधदुःखादिकं लक्ष्यते । तथा च स्वर्गार्थं याग इतिवन्निंदनादिजन्यक्रोधाद्युपद्रवायेदं निंदनाद्यर्थं । अर्थेन नित्यसमासो विशेष्यनिघ्नता च । एवं दंडपारुष्ययोः शरीरदंडननिष्ठुरवाचोरपि निमित्तयोः सतोः शरीराभिमानेन हिंसा भवति । चेतनस्य हिंसाऽभावेनाभिमन्यमान-शरीरहिंसयैव हिंसितो देवदत्त इति व्यवहारात् । तदभिमानेनेत्येतत्सर्वत्रापि ग्राह्यं । कोऽभिमानो नामेत्यतो भूतानां मामहामिति यद्वैषम्यं तदिति । अस्वकीये ममेति स्वकीयता बुद्धिः । अनहं भूतेऽहामिति बुद्धिश्चेत्यर्थः । तथा चायमभिमानो यद्देहनिबंधस्तद्वधा-देव प्राणिनां वधः । प्रकृते किमायातमित्यत आह ॥ यदिति । यस्येतस्यापरस्येत्युत्तरेणान्वयः । अकयप्रविसंभूमसखहा विष्णु-वाचका इत्युक्तेर्यस्य विष्णोरिति वार्थः । अभिमानो नास्तीत्यत्र कैवल्यादखिलात्मन इति च हेतुः । अखिलस्वामित्वादस्वकी-याभावेन नास्वकीयेऽस्वकीयता बुद्धिः । कैवल्य पदं च कैवल्यदेहाद्यभावादिति तात्पर्ये एव व्याख्यातं । हिंसालक्षणोपद्रवोऽपि नास्तीत्याह ॥ परस्येति । अकर्तुरित्यत्र न तत्पुरुषः किंतु बहुव्रीहिरित्याशयेन तात्पर्यं । अकर्तुस्तस्यान्यः कर्ता न विद्यत इति । हिंसेत्यस्य विशेषणे इदमित्यत्र लिंगव्यत्ययेनेति प्रवृत्तं तात्पर्यं । इदमेषा । व्यत्ययोऽतिशयकुत्सनभेदेष्विति सूत्रादिति । परमा-त्मनोऽतिशये हिंसायाः कुत्सितत्वं । अस्वतंत्रत्वादत्यंतभेदं वा द्योतयितुं व्यत्ययश्च इत्यर्थः । तथा च भगवतोऽभिमानाभावेन भिन्नदेहाभावेन स्वातंत्र्येण च निंदनादिना कोऽप्युपद्रवो नास्तीति । नाद्यः पक्षो युक्तः । यद्यपि वेनादिकृतनिंदनादिनाऽप्युपद्रवो नास्ति । अन्यथा परमात्मा केनापि निंदनादिकं न कारयेत् । तथाऽपि वेनादिकृतनिंदनादिना स्वाभाविककोप एवाभिव्यज्यते तेन तस्य तमःप्राप्तिः । भक्ते तु चैद्यादौ स्वाभाविकः कोपो नास्ति । औपाधिकस्तु नोत्पद्यते । किंतु स्वाभाविकी प्रीतिः । ततश्चान्यावेशकृतं निंदनादिकं सोढ्वा कृपालुर्मुक्तिमेवाददादिति भावः । न द्वितीय इत्याह ॥ तस्मादिति । सर्वथाऽप्युपद्रवाभावा-द्वैरानुबंधादिना केनापि प्रकारेण युंज्यात् । अत्र निर्वैरेण युंज्यादिति विशिष्टविधिः । वैरानुबंधेनेत्यादावप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीदित्यत्र वेनविशेषणे तात्पर्यं । किंतु योगमात्रविधाने वैरादेर्निषिद्धत्वात् । इयं चानुव्याख्यानसुधारीतिः ।

वस्तुतस्तु य इत्यध्याहारेण यो वैरानुबंधादिना युंज्यात्सः कथंचित्पृथगन्यद्वस्तु नेक्षते इत्येकवाक्यतया योजना। तथा चान्यविषयकत्वे सति भगवद्विषयकत्वं मनसो लक्ष्यते। तदेव मुक्तिसाधनमिति भावः। अत एव तात्पर्यं ॥ कथंचिन्नेक्ष्यते पृथक्। तत्रैव मनसोऽभिनिवेशेन तदन्यं नेक्षते। वैरादीनामेकतमेनापि युंज्यात्स नेक्षत इति स्वभावकथनं विधिरिति ॥ तथा चान्यविषयकभगवद्विषयकमनोयोगलक्षणसाधनसद्भावादिह जन्मनि साधनाभाव इत्येतत्सिद्धं। ननु वैरानुबंधाद्यंशेऽपि विधिः किं न स्यादित्यतो बाधकं वक्तुं प्रवृत्तं तात्पर्यं ॥ कर्मणा मनसेत्यारभ्य कथंचनेत्यादेरित्यंतं ॥ तत्र कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययं। मज्जंति पितरस्तस्य नरके शाश्वतीः समा इति ग्रंथांतरस्थवचनं। अत्र द्विषतः पितृणामपि नरकोक्तेर्द्वेषकस्याकार्यत्वं लब्धं। तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिं। अवजानंति मां मूढा मानुषीं तनुमाश्रितं। परं भावमजानंतो मम भूतमहेश्वरं। मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता इति गीतावचनं। अत्र द्विषतामधोगत्युक्त्याऽवजानता मोघाशत्वादेः राक्षसासुरस्वभावत्वस्य चोक्त्या द्वेषस्याकर्तव्यत्वं लक्ष्यते। यदनिदत्पिता मे त्वामविद्वांस्तेज ऐश्वरं। तस्मात्पिता मे पूयेत दुरंताद्दुस्तरादघादित्यत्रैव वक्ष्यमाणं वचनं। अत्र निंदनप्रसक्तात्पातिप्रार्थनान्निंदनस्याकर्तव्यत्वं। एतच्च सज्जीवविषयं। दुर्जनस्य विषये प्रार्थनस्य पावनस्य चायोगात्। हिरण्यकशिपुश्चापि भगवन्निंदया तमः। विवक्षुरत्यागात्सूनोः प्रह्लादस्यानुभावतः। इति चतुर्थस्कंधगतवचनं। अत्रापि निंदया तमोवेशनप्रसत्युक्तेर्निंदनस्याकर्तव्यत्वं। एतदपि सज्जीवविषयं। वरतोऽपि न मुच्यंते द्वेषिणः शापतोऽपि तु। भक्तानेव निपात्यंते धर्माधर्मैस्तथेतरैः। अन्यावेशकृतं यत्तु तद्वराद्यैरपोह्यते। तद्विरुद्धस्वभावानामन्यथा न कथंचनेति ग्रंथांतरस्थं। अत्र स्वाभावद्वेषिणो वरतोऽपि मुक्त्यभावोक्त्या द्वेषस्याकर्तव्यत्वं। स्वभावभक्तस्य शापतोऽपि निपातनाभावोक्तेर्दृष्टांतत्वं। इतरैर्धर्मैरपि द्वेषिणो मुक्त्यभावः। अधर्मैर्निपतनाभाव इत्यर्थः। द्वेषविरुद्धस्वभावानामेवान्यावेशकृतद्वेषादेर्वरादिनाऽपवादस्य स्वभावद्वेषानपवादस्य चोक्त्या द्वेषस्याकर्तव्यत्वं। मूले ॥ तस्माद्वैरानुबंधेनेति। अत्र तच्छब्दस्य यच्छब्दसापेक्षितत्वात्। तात्पर्यकृद्योजयति ॥ यस्मादेवं कोऽप्युपद्रवो नास्ति भगवतस्तस्मादेव द्वेषादिनाऽपि मनो योक्तुं शक्यते तत्प्रेरणया।

ताद्दशानां तदेव चिंतयंति च । अन्यथाऽऽत्मनो दुःखकारणं द्वेषादिकं कथं सर्वनियामको हरिरुत्पादयेदिति । अनेन तथा नयस्य कैवल्याद्यभिमान इत्यनेनोक्ताभिमानो लक्षणोपद्रवाभावस्य परामर्श इति सूचितं । शक्यते इत्यनेन युंज्यादिति लिंगो न विधिरर्थः किंतु शक्यत्वमिति सूचितं । इदमपि द्वेषादिना मनोयोगादिकं भगवतो नोपद्रवादिकारणमित्यनेन न किंतु तत्प्रेरणायाः । न ऋते त्वत्क्रियत इति श्रुतेः । इति भावेनोक्तं तत्प्रेरणयेति । ताद्दशानामन्याविष्टानां भक्तानां तदेव यथाकथंचिद्योजनं भवत्विति द्वेषादिना मनो निवेशनं चिंतयंति । आलोचयति च । भगवांस्ताद्दशानां नित्यद्वेषादिमतां तदेव तत्पूर्वं मनोनिवेशनमेवेति वाऽर्थः । प्रेरणयाऽपि भगवत उपद्रवाभावो लब्ध इति भावेनाह ।। अन्यथेति ।। २७ ।। न केवलं वैरानुबंधादिना मनो योजयितुं शक्यते, किंतु भक्त्याद्यपेक्षयाऽतिशयेनेत्याह ।। यथेति । एतदभिप्रायेणैव तात्पर्यं ।। तत्रेव हेतुरिति । वैरानुबंधेन मनोयोजनस्य कर्तुं शक्यत्वेऽतिशयेन तत्साधनत्वं हेतुरित्यर्थः । तन्मयतां मनसस्तत्राभिनिवेशनं । श्लोकार्थस्तु स्फुटः । अनेन प्रमेयांतरमपि लब्धमित्याशयेनाह तात्पर्यकृत् ।। यथा वैराभिनिवेशिनः संति तथा भक्त्याभिनिवेशिनो न संति । तत्कथमन्यथा भक्तानेव बहून्हरिः कुर्यादिति भाव इति ।। सदसन्मुक्तियोग्यानां भगवदभिनिवेशनस्यावश्यकत्वात्तत्र वैरादेः सुलभसाधनत्वाद्भक्तेश्च दुर्लभत्वाद्वैराभिनिवेशिनो बाहुल्येन संति । न तथा भक्ताः । अन्यथा भक्तेरेव सुलभत्वे बहून् भक्तान्कुर्यादित्याशयः ।। २८ ।। कीटः पेशस्कृतेत्यादि चैद्यादीनां भक्तियुक्तत्वप्रतिपादनमिति तात्पर्यं । तथा च कीटः कृमिविशेषः पेशस्कृता भ्रमरविशेषेण कुड्ये तद्रतकर्दमकृतनीडे रुद्धः स्वाशनदानाय यांतमनुस्मरन् संरभभययोगेन कोपभययुक्तस्नेहेन तत्स्वरूपतां ताद्दश्यं विंदते लभत इति योजना । चैद्यादय ईद्दशा इति भावः । अत्र सिंहावलोकनन्यायेन पूर्वस्य निर्वैरेणेत्यादेः कृत्यं वक्तुं तात्पर्यं । स्नेहाद्याय-तनदेहनाशादिनाऽप्युपद्रवोऽस्य नास्तीति निर्वैरेणेत्याद्युक्तमिति । तस्माद्वैरानुबंधेनेत्यत्रोक्तपक्षपंचके निर्वैरेण स्नेहात्कामेनेति पक्षत्रयं मुख्यं । तत्रापि क्रमात्तारतम्यं । वैरभयपक्षे तु भक्त्या मुक्तावप्यस्योपासकस्य स्वस्नेहाद्यायतनस्य देहस्य चक्रादिनाशया-तनाद्युपद्रवोऽस्ति । उक्तपक्षत्रये तु नास्तीत्यभिप्रायेण निर्वैरेणेत्याद्युक्तमित्यवधेयं । पूर्वं यथा वैराभिनिवेशिन इति स्ववाक्ये वैराभिनिवेशिनां बाहुल्यं भक्तानां स्वल्पत्वं युक्त्या समर्थितं । अधुना श्रुतिमपि तत्राह । ततः कनीयांस एव देवा ज्यायांसो

असुरा इति श्रुतिः । तत इत्यस्य भक्तेर्दौर्लभ्यादित्यर्थो भाति । पूर्वश्लोके तन्मयतामित्यस्याभेदार्थभ्रांतिं वारयति ॥ तन्मयतां मनसस्तत्राभिनिवेशनमिति । प्रमेयविशेषं चाह । मागधाद्या यथा नित्यं द्वेषादाग्रहिणो हरौ । न तथाऽऽग्रहिणो भक्ता ऋते ब्रह्माणमव्ययमिति हरिवंशेषु । द्वेषादाग्रहो नाम द्वेषविषये उत्तमत्वं । माहात्म्यप्रतिपादकेषु तत्र स्नेहं कुर्वत्स्वपि द्वेषस्तद्वधोद्योगः । एवं भक्त्याऽऽग्रहोऽपि तद्विषयनिंदकादेरपि जिव्हाच्छेदादि शपथं तदुन्मूलनोद्योगादि । एतच्च भाविब्रह्मत्वे भीमसेने स्पष्टं । अनेन केवलभक्त्याऽभिनिवेशिनोऽल्पाः किंतु तदाग्रही सुतरां दुर्लभ इति प्रमेयविशेष उक्तः । अत्र योग शब्दार्थमाह । योगः स्नेहः । संरंभभययुक्तस्नेहेन । प्रीतिः स्नेहस्तथा योगः प्रेमबंध इतीर्यत इति शब्दनिर्णये । अनेन शाकपार्थिव इत्यत्र प्रिय पदस्येव संरंभभययोगेनेत्यत्र युक्त पदस्य लोप उक्तो भवति । अभिधाने स्नेहः प्रीतिरित्यादि शब्दैरीर्यत इति योजना ॥ २९ ॥ न केवलं चैद्यः किंतु बहवोऽप्यन्याविष्ठा भक्ता एवमित्याह ॥ एवमिति । एवं चैद्यवद्बहवो भगवति कृष्णे मायामनुजे स्वेच्छया मनुष्यवत्प्रतीयमाने वस्तुत ईश्वरे वैरेणानुचिंतया वैरपूर्वकभक्त्या धूतपाप्मानः संतस्तमापुरिति योजना । अत्र वैरेणेत्यस्य युक्त्याऽपीत्यध्याहृत्यानुचिंतयेत्यनेनान्वयः । न धूतेत्यनेन । अनुचिंता पदं च भक्तिवाचीत्याशयेनाह तात्पर्यकृत् । वैरयुक्तयाऽप्यनुचिंतया तमापुः । अनुचिंतेति तामाहुर्भक्तिपूर्वा तु या स्मृतिरिति च । अत्र श्लोकेऽनुचिंता पदस्य भक्तिपरत्वं । द्वेषादेरन्यावेशकृतत्वं भगवतः कृपालुत्वात् द्वेषस्यागणनं । स्वाभाविकभक्तेरेवानुसरणं । इत्यादिकं कुतः कल्प्यत इत्यतोऽत्र सर्वत्रैकं प्रमाणमाह ॥ स्नेहादन्नं ददातीति । स्वाकर्षणभयेऽपि च विद्यमानेऽल्पकोपे संगतिस्नेहतस्तथा । पेशस्कृद्रूपतां कीटो यथा याति तथैव तु । चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि । निजस्वभावया भक्त्या नीता हरिसरूपतां । तथा हि करुणो विष्णुरन्यावेपाद्यदि द्विषन् । हीयते किं ममानेन नित्यानंदस्वरूपिणः । देहबंधयुतानां हि द्वेषिणापकृतं भवेत् । मम को ह्यपराध्येत निर्दोषसुखरूपिणः । अतो मय्यपराधस्तु स्वास्मिन्नेव न मे भवेत् । अतो यच्चासुरवशात्कृतमेतेन दुष्कृतं । अनादिभक्तो यस्मान्मे मोचयिष्येततस्त्वहं । इति मत्वा मोचयति चैद्यादीनपि केशव इति ब्रम्हांडे । अत्र च शब्दस्तथा शब्दश्च परस्परसमुच्चये । तथा चाकर्षणभयेऽप्यल्पकोपेऽपि तथा संगतिस्नेहत एकत्र सहवासं स्नेहादन्नं ददातीति स्नेहाच्च पेशस्कृद्रूपतां यथा याति कीटस्तथा चैद्यादय इति योजना ।

यदि यद्यपि द्विषन्नास्ते चैद्यादिस्तथाऽपि करुणो विष्णुरिति मत्वा मोचयतीति योजना । एतत्सर्वमभिप्रेत्यैव स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि क्वचित् । द्वेषादिव गुणानाह पुराणे वृद्धवाक्यवत् । इत्यनुव्याख्यानव्याख्यावसरे सुधायां वैरेण यन्नृपतय इत्यादि स्मरणयोगप्रधानकवाक्यानां स्मरणकर्तव्यत्वे तात्पर्यं गतिः । द्वेषाच्चैद्यादय इत्यादिना द्वेषप्रधानकानां गुणे तात्पर्यं गतिरित्युक्तं। गुणप्रकारश्च शापादिना द्वेषिणोऽपि चैद्यादयस्तात्कालिकं द्वेषमनुरूप्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवता मोचिताः। अहो कृपालुत्वं निर्विकारत्वं सत्यसंकल्पत्वं चेति तत्रैवोक्तः । वृद्धवाक्यवदिति प्रतीतार्थे तात्पर्याभाव एव दृष्टांतः । ननु शाब्दप्रमाजनकत्वे पुराणवाक्यस्य तथात्वेऽप्रामाण्यापत्तेः । तथा च पुराणवाक्यस्य प्रतीयमाने द्वेषहेतुकत्वे न तात्पर्यं । किंतु कृपालुत्वे तात्पर्यं । तद्बोधलाभश्च द्वेषादिति पंचमी ल्यब् लोप निमित्ता । कृपयेत्यध्याहारः । द्वेषमनिरूप्य कृपया तद्गतिं गता इति योजनया वृद्धवाक्यं तु प्रतीतिकेऽर्थे न तात्पर्यवत् । द्विषदन्नं न भोक्तव्यमित्यत्र तात्पर्यवदपि न तच्छाब्दबोधजनकं । वचनलिंगानुमा हि सेति कर्मनिर्णयोक्तेः । अनुमानप्रकारश्च तट्टीकायां न्यायामृते च व्यक्तः ॥३०॥ न केवलं वैरेणानुचिंतया तमापुः किंतु कामादिभिरपीत्याह ॥ कामादिति । कामादित्यादौ तृतीयार्थे पंचमी । कामेन यथा यथावत् । स्वयोग्यया भक्त्या सहेति केचित् । एवं स्नेहेन मित्रादि साधारणस्नेहेन यथावद्भक्त्या सह । अपरे एवं भयेन द्वेषेणापि यथावद्भक्त्येश्वरे मन आवेश्य तदघं यद्द्वेषादिना प्राप्तमघं यथावद्भक्त्या पश्चात्तापयुक्तया भक्त्या हि बहवस्तद्गतिं गताः । भगवत्प्राप्तिं गता इति योजना । अत्र यथेति दृष्टांतस्तथेत्यस्याश्रवणात् । किंतु योग्यतार्थः । यथा भक्त्येत्येतदावृत्त्या तदघं हित्वेत्यत्र संबध्यते । कारणांतरश्रवणात् । इत्याशयेनाह तात्पर्यकृत् । कामादिभिरपि यथावद्भक्त्या सहैव मन आवेश्य तदघं यत्तु द्वेषादिकृतमघं यथा भूतया भक्त्या हित्वेति । अनेन तदघमिति भिन्नं पदं । यद्द्वेषादिकमिति शेषः । भक्त्येति सहयोगे तृतीया । यथा पदं योग्यपरमिति सूचयति । कामस्यादित्वेऽपि द्वेषस्यैव विशेषमघकारणत्वात् । द्वेषादित्युक्तिः । मूले स्नेहपदेन भक्त्यंतर्गतसुहृत्स्नेहपरं । पृथगुक्त्ययोगात् । अघकारणत्वायोगाच्च । किंतु कृष्णस्य मार्गगमने शत्रवो नोपद्रवेयुरिति सैन्यस्य सह प्रेषणकारणीभूतयुधिष्ठिरादिगतस्नेहपरामिति ध्येयं ॥ ३१ कामादेरुदाहरणमाह ॥ गोप्यः कामादिति । अत्र पूर्वानुरोधान्मानांतरानुसाराच्च यथा भक्त्येत्यनु-

वर्तते । तद्गतिं गता इति च कामाद्भोगलौल्यात् । भयात्कदा मारयतीति भयात् । वृष्णयो यादवाः । संबंधाद्देहानुबंधरूपबांध-
वात् । यूयमित्यपरोक्षीकृतयुधिष्ठिरादीनां निर्देशः । स्नेहान्मित्रादि साधारणस्नेहात् । वयमिति नारदादिनिर्देशः । भक्त्या
कामादिरहितया केवलभक्त्या । एतदपि कृष्णावतारदशायामिति ज्ञेयं । अन्यदा सर्वेषामपि केवलभक्तत्वात् कंसाविष्टभृगोर्मु-
नित्वाद्धर्मादीनां चोत्तमदेवतया नारदादप्यधिकं केवलभक्तत्वात् । तत्रापि भीमसेनस्य न कदाऽपीदृशस्नेहः । परममाहात्म्यज्ञाने
जाग्रति तस्याजननात् । इत्यनुसंधेया योजनात् । गोप्यः कामाद्गतिं गता इति प्रत्येकं द्रष्टव्यं । अत्र भक्तेति पूरणीयमिति
वक्तुं कंसचैद्याविष्टांश्च वक्तुं प्रमेयविशेषं च वक्तुं तात्पर्यं प्रवृत्तं ॥ गोप्यः कामयुता भक्ताः कंसाविष्टः स्वयं भृगुः । ज्ञेयो
भययुतो भक्तश्चैद्यादिस्था जयादयः । विद्वेषसंयुता भक्ता वृष्णयो बंधुसंयुताः । बहुमानस्नेहसाम्याद्देवा भक्ताः प्रकीर्तिताः ।
स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः । बहुमानोऽपि देवानामृषिभ्योऽभ्यधिको मतः । ब्रह्मवींद्रेंद्रकामादेरितरेषां यथा क्रममिति
ब्रह्मतर्के ॥ अत्र गोपीत्वदशायामेव कामयुतत्वं । असुरत्वदशायां केवलभक्तत्वं । भृगोरपि कंसेनाविष्टत्वदशायामेव भययुक्त-
भक्तत्वं । चैद्यादिस्था इत्यत्र स्वनिष्ठावेशकर्तृत्वसंबंधेन हिरण्यकशिप्वादिनामकदैत्यस्थत्वं ज्ञेयं । दैत्यानामेव पिशाचस्थानापन्नत्वात् ।
बंधुसंयुता बंधुत्वसंयुताः । माहात्म्यज्ञानपूर्वकसुदृढस्नेहो भक्तिः । केषुचित्तु भक्तेषु माहात्म्यज्ञानलक्षणबहुमानस्नेहयोः समानाधिकरणयोः
साम्यं । केषुचित्तु माहात्म्यज्ञानस्यैवाधिकत्वं । अत्राधिकारिद्वैविध्यविवक्षायामधमेषु भक्तेषु ऋष्यादिषु स्वगतप्रचुरस्नेहकप्रचुर-
माहात्म्यज्ञानवत्त्वं । तदपि तारतम्यानुसारेणोत्तमेषु देवेषु स्वगतस्नेहसमानमाहात्म्यज्ञानवत्त्वं । ऋष्याद्यपेक्षया माहात्म्यज्ञानमधिकमेव ।
एतदपि तारतम्येन । अधिकारित्रैविध्यविवक्षायां तु स्वगतस्नेहापेक्षया प्रचुरमाहात्म्यज्ञानवत्त्वं । अधमानां समोभयत्वं । मध्यमानां
प्रचुरस्नेहवत्त्वं चोत्तमानां ब्रह्मादीनां सर्वमपि तत्तत्तारतम्यानुसारेणेत्यवध्येयं ॥ ३२ ॥ द्वेषयुतस्यापि चैद्यस्य भगवत्प्राप्तौ वेन-
स्यापि स्यादिति तृतीयपक्षं निराह ॥ कतमोऽपीति । केवलभक्तिस्तु नास्ति । कामाद्युपसर्जनानामपि पंचानां भक्तिलक्षणोपायानां ॥ ६ ॥
कतमोऽपि पुरुषं प्रति पुरुषविषयकभक्तिलक्षणोपायो वेनस्य नास्ति । अतो न तस्य चैद्यवद्भगवत्प्राप्तिरिति शेषः । तस्माद्भक्ति-
सत्त्वे भगवत्प्राप्तेरावश्यकत्वात्केनाप्युपायेन कामाद्युपसर्जनभक्तिलक्षणोपायेन मनः कृष्णे निवेशयेत् । इति योजना । अत्रोपाय

शब्दो भक्तिपरः अन्यथा द्वेषेणाभिनिवेशस्य चैद्यादेरप्याधिकं वेने सत्वेनोपायो नास्तीत्यस्य बाधापत्तेरित्याशयेन व्याचष्टे तात्पर्यकृत् ॥ कतमोऽपि भक्तियोगो न वेनस्य । तस्मात्केनापि प्रकारेणोपायेनैव मनो निवेशयेत् । नानुपायेन । उपायो भक्तिरुद्दिष्टो द्वेषाद्या अनुपायका इत्यभिधानामिति ॥ स्पष्टमेतत् ॥ ३३ ॥ पेशस्कृता रुद्ध इत्यत्र चैत्याद्यः स्वतो भक्ता असुरावेशाद्वेषिण इत्यत्र हेतुर्मातृष्वस्रेय इत्यादीत्येवं तात्पर्येणैव श्लोकोऽवतारितः । इत्यत्र हेतुः इत्यत्रेति शब्दात्परमुक्तामिति । हेतुरित्यतः परमुच्यत इति शेषः । मातृष्वस्रेय इति ढकि लोप इत्यनुवृत्त्या पतितान् मातृष्वसुश्चेति सूत्रात् । ढकि अत लोपे च रूपं । हे पार्थिव वो युष्माकं मातृष्वसुः पुत्रश्चैद्यो दंतवक्रश्च विष्णोः पार्षदौ विप्रशापात्पदच्युताविति योजना स्पष्टा ॥ ३४ ॥ विप्रशापात्पदच्युताविति श्रुत्वा युधिष्ठिरः पृच्छति ॥ कीदृश इति श्लोकद्वयेन । हरिदासान् जयादीन् अभिमृशति स्पृशतीति हरिदासाभिमर्शनः शापः कीदृशः किं प्रकारः । कस्येति कर्तृविशेषप्रश्नः । विप्रशापादित्यनेन सामान्यस्य निश्चितत्वात् । शापप्रयुक्तो भवश्चाश्रद्धेय इवाविश्वनीय इव भाति । तत्र हरेरेकांतिनां नियतभक्तानां देहेंद्रियासुहीनानामसवः प्राणा वैकुंठपुरवासिनां वैकुंठस्य पुरं वैकुंठाख्यपुरमिति वा । एतत्त्रयं हेतुः । एकांतिनां परोपद्रवायोगात् । देहादिहीनानां पुनरुत्पत्त्ययोगात् । वैकुंठपुरात्पुनरावृत्तेरयोगाच्च । अतो देहसंबंधस्य संबंधं संबध्यतेऽनेनेति निमित्तं एतदाख्यातुमर्हसीति योजना ॥ ३५ ॥ ३६ ॥ नारद उत्तरमाह ॥ एकदेत्यादिना श्लोकपंचकेन । भगवद्भक्तान् । भगवंतं च द्रष्टुकामा भुवनत्रयं चरंतो ब्रह्मणः । पुत्राः सनंदनादयो यदृच्छया भगवदिच्छयैकदा विष्णोर्लोकं जग्मुः ॥ ३७ ॥ पंच वा षड्वा पंचषट् । समासांतरस्य चो भावो आनित्यत्वात् । पंचषड् हायना अब्दा यस्य । हायनोऽस्त्री शरत्समा इत्यमरः । तादृशोऽर्भोऽर्भकस्तस्याभेवाभा येषां ते पंचषड्हायनार्भाभाः । ब्रह्मणः प्रथमकल्पे रुद्रः प्रथमसंभवः । सनकाद्याश्च वाराह इत्युक्तेः । पूर्वेषां पूर्वजा ब्रह्मणो ज्येष्ठपुत्राः । दिग्वाससः । एतच्च विशेषणत्रयं सनंदनादीनां । तथा च जग्मुरिति पूर्वेणान्वयः । तान् शिशून्मत्वा द्वाःस्थौ जयविजयौ प्रत्यषेधतां वेत्रविधानेन न्यवारयतामिति योजना ॥ ३८ ॥ अत्र प्रत्यषेधतामित्यनेन शापनिमित्तमात्रमुक्तं । शापप्रकारश्च वक्ष्यते । देहेंद्रियासुहीनानामित्यादिना प्राप्तापुनर्भवासंभवशंका कथं निरस्तेत्यतस्तात्पर्यकृदाह ॥ द्वाःस्थावित्यनेनाधिकारस्थत्वामिति ।

अनेनापि कथं परिहार इत्यतः प्रमाणमुपन्यस्यति ॥ अधिकारस्थिताश्चैव विमुक्ताश्च द्विधा जनाः । विष्णुलोकस्थितास्तेषां वरशापादियोगिनः । अधिकारस्थिता मुक्तिं नियतं प्राप्नुवंति च । विमुक्त्यनंतरं तेषां वरशापादयो न तु । देहेंद्रियासुयुक्ताश्च पूर्वं पश्चान्न तैर्युताः । अप्यभिमानिभिस्तेषां देवैः स्वात्मोत्तमैर्युता इति तंत्रसारे ॥ अनेन विष्णोः पार्षदा गरुडानंतविष्वक्सेन जयादयो द्विविधाः संति । वैकुंठादिधामत्रयोद्देशेऽपि द्विविधः । अमुक्तगम्यो मुक्तमात्रगम्यश्चेति । तत्रामुक्तगम्यदेशे विद्यमानाः पार्षदाः संसारिणः । मुक्तदेशे तु मुक्ताः । तथा च देहेंद्रियहीनानामित्युक्तं हेतुत्रयसिद्धं । अत एव शेषस्य लक्ष्मणादिभावेन भवः गरुडस्याऽपि शापादिना नावताराः सनंदनादीनामपि लिंगत्वमेव । वाराहकल्पब्रह्मजातशरीरवत्वात् । तथा चापराध-शापतत्प्रयुक्तजन्मादिमत्वं सर्वं युक्तमित्युक्तं भवति । जना गरुडानंतादयः पार्षदा अधिकारस्था विमुक्ताश्चेति द्विविधा विष्णुलोके स्थिताः । एषां मध्येऽधिकारस्थितास्तद्दशायां वरशापादियोगिनो ब्रह्मलयकाले नियतं यथा भवति तथा मुक्तिं यांति । विमुक्त्य-नंतरं तैर्जडदेहादिभिरपि जडदेहादिनाऽपि स्वात्मोत्तमैर्देवैस्तेषां गतदेहादीनामाभिमानिभिः। घञ्च्य मनुष्ये बहुलमिति अभीत्यस्य दीर्घः। अभिमानवद्भिर्युता भवंति अत एव चानन्याधिपतिरिति सूत्रं । मुक्तः स्वकीयावरयंत्रताऽस्ति इत्यनुव्याख्यानसुधयोर्विवृतमेतत् । अत्र देवैरित्यनेनैकादशस्कंधे वक्ष्यमाणा असुरा मित्राश्चाभिमानिनो मुक्तौ न संतीति ध्वनितं ॥ ३९ ॥ एवं प्रतिषेधेन कुपिताः सनंदादयोऽपश्यन् कोपेन जयविजयावपश्यन्नित्यर्थः । मधुद्विषः पादमूले पादसमीपे । रजस्तमोभ्यां तत्कार्याभ्यां रहितं । युवां वासं न च नैवार्हथः ॥ ४० ॥ पापिष्ठां पापो दैत्यस्तद्युक्ता पापिनी । आतिशयेन तथा भूतामासुरीं । सुरभिन्नोऽसुरस्तत्संबं-धिनीं योनिं । आश्वितः शरीरात् । यात गच्छतामित्यूचुश्चेति शेषं कृत्वा योजना। न केवलं कुपिता अपश्यन् किं त्वित्यूचुश्चेत्यर्थः । अत्र पापिष्ठामित्यनेन महादैत्यावेशलाभः । आसुरीमित्यस्य सुरभिन्नसंबंधिपरतया व्याख्यानात् । दैत्यराक्षसमानुषभावेऽपि न दोषः ॥ ४१ ॥ एवं शप्तौ अनंतरमेव पततौ । द्वाःस्थयोः प्रतिषेधो धर्मः । भगवद्भक्तावस्माभिर्वृथा शप्तौ । अत उद्धारः कार्य इत्येवं पतनकाले कृपालुभिस्त्रिभिर्जन्मभिरेवं भूत्वा पुनरिमं लोकं वां । विभक्तिव्यत्ययेन युवां पुनरिमं लोकं यातमिति प्रोक्ताविति योजना। ततोऽनुजो हिरण्यकशिपोरनंतरं जातः। एवं क्रमेण ज्येष्ठकनिष्ठौ जयविजयौ ज्ञेयौ। सिंहरूपिणा नृसिंहरूपिणा

योजना तु स्फुटा ॥ ४२ ॥ सौकरं वपुर्वराहसंबंधिशरीरं बिभ्रता हरिणा हिरण्याक्षो हत इति योजना । जिघांसुर्हंतुमिच्छुर्मृत्युहेतवे मरणरूपप्रयोजनाय नाना यातना बहून् शरीरोपद्रवान् हिरण्यकशिपुरकरोदिति योजना ॥ ४३ ॥ सर्वभूतात्मभूतां तत्र तात्पर्यं ॥ सर्वभूतात्मनि भूतामिति ॥ सर्वभूतस्वामिनि भूतं दासभूतं । प्रशांतं । प्रकर्षेण विष्णुनिष्ठबुद्धिं । अतदर्हणमुक्तनानायातनाऽयोग्यं । भगवत्तेजसा स्पृष्टं भगवदनुग्रहाय तेजसा सामर्थ्यविशेषेण स्पृष्टं युक्तं । तं प्रह्लादं । उक्तैर्हननोद्योगैर्हंतुं नाशक्नोदिति योजना ॥ ४४ ॥ ततो वराहेण नृसिंहेन च हननानंतरं । तौ केशिन्यां राक्षस्यां राक्षसौ जातौ राक्षसत्वजातिमंतौ । मातृजातिः सुतानामित्युक्तेः । कीदृशौ किं नामानौ कस्य सुतावित्यतः सर्वलोकप्रतापिनौ रावणकुंभकर्णश्चेति नामवंतौ विश्रवसः सुताविति ॥ ४५ ॥ तत्रापि रावणादिजन्मन्यपि शापमुक्तये न्यहनादिति योजना । त्रिषु जन्मस्वहमेव हन्मीति विष्णोर्वरो हिरण्यकशिप्वादिजन्मानि सुराद्यवध्यत्वविषयको धातुर्वरश्च ग्रंथांतरादवसेयौ । दैत्यजन्मांतरं राक्षसत्वे तदनंतरं मानुषत्वे तदनंतरं सायुज्ये च किं कारणमित्यतस्तात्पर्यकृत्प्रमाणमाह ॥ हिरण्यकशिपुर्भूतममन्यत मृतौ हरिं। अतो भयानको जातस्तत्र राजानमेव च । मत्वा राजैव संजातः कृष्णं चक्रादिलक्षणैः । मृतिकाले हरिं चैव मत्वा भक्त्यैव केवलं । द्वाःस्थत्वं हरिमाविश्य प्रापैव मनुजोऽपि त्विति गारुडे ॥ भूतराक्षसं भयानको राक्षसः । यं यं वाऽपि स्मरन् भावं त्यजत्यंते कलेवरं । तं तमेवेति कौंतेयेत्युक्तेः । केवलं भक्त्या द्वेषमुज्झित्वा बहुपश्चात्तापयुक्तया महाभक्त्या निमित्तेन मनुजोऽपि हरिमाविश्य प्रापेत्यन्वयः । तु शब्दस्य तत्रेत्यनेनान्वयः । रावणजन्मनि त्वित्यर्थः । राजैव संजात इत्यनंतरं तत्र त्वित्यनुवर्तते । राजजन्मनि त्वित्यर्थः । एतत्सर्वं हिरण्याक्षेऽप्यनुसंधेयं ॥ ४६ ॥ वनवासकाले भविष्यंतीं मार्कंडेयकथां मनसि कृत्य श्रोष्यसीति लृट् प्रयोगः । तौ रावणकुंभकर्णौ ॥ ४७ ॥ कृष्णचक्रहतांसौ कृष्णचक्रहतमंहस्त्रिजन्मकृतं पापं ययोस्तौ । वैरानुबंधतीव्रेण वैरयुक्तभाक्तिभरेणात्युत्कटध्यानेनाच्युतसाम्यतां ॥ स्वार्थे ष्यञ् । अच्युतदेहप्रवेशं नीतौ । विष्णुपार्षदौ पुनर्हरेः पार्श्वं जग्मुरिति योजना । अत्र द्वेषेणैव साक्षात्साम्यं किं न स्यादित्यतो बहुप्रमाणबाध उक्तः । प्रमाणांतरबाधं चाह तात्पर्यकृत् ॥ विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः । विष्णोर्गुणन्हासवाचः श्रीब्रह्मादेस्तथा क्रमात् । विष्ण्वादिद्वेषतश्चैव सुखवाचस्तथाऽखिलाः । मोहनार्थाः समुद्दिष्टा यथार्थद्योतका-

स्तथोति प्रकाशसंहितायां ॥४५॥ श्रीब्रह्मादेः क्रमाद्गुणह्रासवाच इत्यनुवर्तते। विद्यमानगुणानां ह्रासवाच इत्यर्थः। बुध्या विवेकिनां क्रमादवरताक्रमात्। विद्यमानश्रीब्रह्मादेः सकाशाद्विष्णोर्ह्रासवाच इति वाऽन्वयः। तथार्थद्योतका विरुद्धार्थद्योतकाः। अन्येऽपि तथा मोहनार्थाः समादिष्टा इत्यर्थः। एतच्च वचनं क्वचित्तात्पर्यं कोश इह नास्ति। किंतूत्तराध्यायादावभिधानपूर्वकं वैरानुबंधपदं व्याचष्टे ॥ वैरानुबंधो वैरयुक्ता भक्तिः। अनुबंधस्तु भक्तिः स्याद्बंधः स्नेह उदाहृत इति प्रकाशसंहितायां ४८॥ अच्युतात्मनि विष्णुमनस्के। अत एव महात्मनि। प्रियिते दयाविषये। पुत्रे प्रह्लादे विद्वेषः कथमासीत्। यन्निमित्तमासीत्तन्मे ब्रूहीति योजना ॥ ४९ ॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां प्रथमोऽध्यायः ॥ ७–१ ॥

॥ हरिः ॐ ॥ युधिष्ठिरकृतप्रश्नं प्रतिवक्तुं प्रारभते ॥ भ्रातरीति। भ्रातरि हिरण्याक्षे क्रोडमूर्तिना वराहमूर्तिना। रुषा हरिविषयककोपेन शुचा भ्रातृविषयकशोकेन पर्यतप्यत संतापमकार्षीत् ॥ १ ॥ दष्टदशनच्छदोऽधरोष्ठो येन स हिरण्यकशिपुर्धूम्रं यथा भवति तथाऽम्बरं निरीक्षन् इदं वक्ष्यमाणमुवाच ॥ २ ॥ करालदंष्ट्रोग्रदृष्ट्या भयंकरदंष्ट्राभिर्युक्तया उग्रदृष्ट्या निमित्तेन दुष्प्रेक्ष्यभृकुटीमुखः प्रेक्षितुमशक्यभ्रुवोराक्रमयुक्तमुखः। इदं वक्ष्यमाणमब्रवीत् ॥ ३ ॥ संबोधनद्योतकस्य भो इत्यस्यादराद्विरुक्तिः। स्युः प्याट् पाडंग हे है भोरित्यमरः। भो भगो इति प्रादेशः। पोलोव्योरिति लोपः। दानवदैतेया इति सामान्यतः संबोधनं। द्विमूर्धनित्यादि तन्नामकीर्तनं। हयग्रीवेति तन्नामकदैत्यसंबोधनं। पाक इल्वलेत्यत्राविवक्षणात्संहिताभावेन तत्कार्यं एकदेशाभावः। वाक्ये तु सा विवक्षामपेक्षत इत्युक्तेः। असंधिः काव्य एव दोषः। क्रियता। मदुक्तमिति शेषः। आश्वित्यस्य माचिरमिति विवरणं चिरं यथा न भवतीति ॥ ४ ॥ ५ ॥ क्षुद्रैरल्पैः सपत्नैः शत्रुभिः। अदितिपुत्रैरिति यावत्। वस्तुतो दैत्यादित्यसमेनापि उपधावनैर्देवकर्तृकोपसत्तिभिः। टीकायां स्योदवनैरिति लेखकदोषः। स्वपादवनैरित्येव स्वपादभजनैरित्यर्थः। एवमुत्तरत्रापि लेखकदोषा मार्जनीयाः। तुष्टेन पार्ष्णिग्राहेण देवरक्षकेण हरिणा घातितो हननं प्रापित इति योजना। तदानीमादित्यां हरेरवताराभावेन हरेः साम्यं बलवत्त्वं चेति तस्य ज्ञानं ॥ ६ ॥ स्वाभिप्रायमाविष्करोति ॥ तस्येति श्लोकद्वयेन। तस्य हरेः षष्ठ्यंतानि तस्य विशेषणानि। त्यक्तस्वभावस्य त्यक्तसाम्यस्वभावस्य। घृणेः शोच्यस्य। घृणिर्विभावसौ सूर्ये रश्मौ शोच्ये विघर्षण

इत्यभिधानं । मायावनौकसो मायया कापट्येन वनस्थानकवराहरूपस्येत्यर्थः । भजंतं स्वसेवकं भजमानस्य स्वसेवानुसारेण फलदातुः । बालस्येवास्थिरात्मनश्चंचलमनस्कस्य । युधिमच्छूलभिन्नग्रीवस्य तस्य भूरिणा रुधिरेण प्रियं भ्रातरं हतव्यथः सन् तर्पयिष्य इति योजना ॥ ७ ॥ ८ ॥ तस्मिन्नष्टेऽदृष्टे दुष्टे वा कूटे कपटे हते सति । कृतं मूले वनस्पतौ विटपाः शाखा इव विष्णुप्राणा दिवौकसः । अनायासेन शुष्यंतीति योजना ॥ ९ ॥ अहं हरिमन्वेषयामि । यूयं तावद्विप्रादिसमेधितां भुवं यात । दानकानित्यत्र स्वार्थे क प्रत्ययः । यद्वा । मत्वर्थे कः । तथा च तपादींस्तद्वतो ब्रह्मादीन्वा सूदयध्वमिति योजना ॥ १० ॥ तावता विष्णोः किमपकृतमित्यत आह ॥ विष्णुरिति । देवर्षिपितृभूतानां धर्मस्य च परायणं । मुख्याश्रयो यज्ञ इज्यत इति यज्ञः । पुमान्पुरुषः । धर्ममयो धर्मप्रधानो विष्णुः । द्विजक्रियामूलो द्विजानां ब्रह्मक्षत्रादीनां क्रिया तप आदिका मूलमुपोद्बलिका यस्य तादृशः । यत्र यत्र द्विजादयस्तं तं जनपदं यात । संदीपयत वन्हिना ज्वलयत । वृश्चत । ओ वृश्चू च्छेदन इति धातोः । छेदनं कुरुतेति योजना । तथा च द्विजानां यज्ञकारित्वेन गवां हविःसंपादकत्वेन वेदानां मंत्रादिरूपत्वेन वर्णाश्रमोचितक्रियाणां विहितत्वेन विष्णुप्रीतिसाधनतया विष्णूपोद्बलकत्वेन तदपकारे विष्णोरपकृतं भवतीति भावः। विष्णोः स्वस्यैव सर्वं मूलत्वेन द्विजक्रियामूलत्वमित्येतदासुरं मतं । एवमन्यदपि विरुद्धमासुरं मतं बोध्यं । अत एवात्र तात्पर्यं ॥ विप्रयज्ञादिमूलं तु हरिरित्यासुरं मतं । हरिरेव हि सर्वस्य मूलं सम्यङ्मतो नृपेति ब्राह्मे ॥ सर्वस्य मूलमित्यतः परमिति शब्दोऽनुवर्तनीयः ॥ ११ ॥ १२ ॥ आज्ञानुसारेण भृत्यानां करणप्रकारमाह ॥ इति ते भर्तृनिर्देशमित्यादि सार्धश्लोकत्रयेण । योजना तु स्फुटा । कदनं हिंसां । कद हिंसायामिति धातोः । राजाधिष्ठानं पुरं ग्रामो बहुजनाकीर्णस्थानं व्रजं गवामावासस्थानं । गोपालवसतिर्वा । आश्रमो मुनिवास उद्यानं महावनं क्षेत्रं श्रीमुष्टादि । आराम उपवनमाकरो रत्नाद्युत्पत्तिस्थानं खेटो नाव्यस्थानं खर्पटो वसनविक्रयस्थानं घोष आभीराणां पल्ली पत्तनं वणिग्भिरधिष्ठितं । आजीव्यान्नारिकेलक्रमुकपनसादिवृक्षान् । शरणानि गृहाणि ॥ १३ ॥ १५ ॥ एवं विप्रकृते विनाशिते लोके लोकपाला देवा अलक्षिता अदृष्टाः । कटोदकं धर्मोदकं । शकुनिमित्यादीनि नव पुत्रनामानि । रुशद्भानुं हिरण्याक्षपत्नीं । जननीं हिरण्याक्षमातरं । देशकालज्ञो मृतस्य पुत्रादिगृहे तत्काले यद्वक्तव्यं तत्ज्ञः । श्लक्ष्णया मनोहरया गिरा ।

इदमाहेत्यन्वयः ॥ १६ ॥ २० ॥ अंबांबेति दितेर्वधूरिति रुशद्भानोः संबोधनं । श्लाघ्यो जनैः शूराणामीप्सित इष्टः । अनेन श्लाघ्याऽभीप्सितप्राप्त्या शोको न कार्य इत्युक्तं भवति । नाप्येकत्र संवासो गत इति तस्याध्रुवत्वनियमादित्याह ॥ भूतानामिति । प्रपायां नानापथा गच्छद्भ्यो दीयमानपानीयशालायां । प्रपा पानीयः स्यान्मंत्रशाला प्रतिश्रय इत्यभिधानं । दैवेन कर्मवशेनैकत्र नीतानां संगतानां तथा पूर्वं पश्चाच्चोन्नीतानां वियुक्तानां संवासोऽध्रुव इति योजना ॥२१॥ तत्त्वमुपदिशति ॥ नित्य आत्मेत्यादिना श्लोकपंचकेन । नित्यः स्वरूपतोऽव्ययो देहतोऽपि व्ययरहितः । शुद्धो गुणत्रयरहितः । सर्ववित्सर्वज्ञः । सर्वगः सर्वत्र गतः । परः स्वतंत्रः । असावात्मा हरिर्गुणान्पूर्वं सौक्ष्म्येण विद्यमानान् आदिसृष्टौ स्वमायया स्वेच्छया विसृजन् आत्मनो जीवस्य लिंगं मन आदि षोडशकलात्मकलिंगशरीरं धत्ते धारयति । पुष्णाति चेति योजना । एतदेवाभिप्रेत्य तात्पर्ये ॥ जीवमन आदीनामाधारं ब्रह्मेति ॥ अत्र धत्त इत्यनेन नियामकत्वेन भगवतोऽतःस्थितत्वमाप्त्या जीवस्येव गुणप्रयुक्तो बंधस्तस्यापि स्यादित्यतः स्वातंत्र्यपारतंत्र्याभ्यां संभोगो नेशजीवयोरित्युक्तरीत्या तस्य न बंधः । किं त्वज्ञेन बद्धजीवेन तत्समीपस्थो भगवानपि भ्रांत्या तथा दृश्यत इत्याह ॥ यथेति । नौकादिकमधिरुह्य जले गच्छतः पुंसः प्रचलताऽम्भसांऽभोगतप्रतिबिंबभूततरुसमूहेन निमित्तेन तीरस्थतरवोऽपि यथा चला इव दृश्यंते । यथा वा चक्षुषा भ्राम्यमाणेन भ्रमणयुक्तेन भूरपि भ्रमतीव दृश्यते ॥ २२ ॥ २३ ॥ एवं गुणैर्भ्राम्यमाणेऽज्ञानभ्रमादि-बंधयुक्ते । मननान्मन उद्दिष्ट इत्युक्तेः । मनसि जीवे । अविकलो वैकल्यरहितः पुमान्परमपुरुषोऽलिंगो लिंगशरीररहितो लिंग-वान् जीवभ्रांत्या तत्साम्यतां । स्वार्थे ष्यञ् । तत्साम्यतां यातीति योजना । एतत्सर्वमभिप्रेत्य प्रवृत्तं तात्पर्ये ॥ लिंगवानिव जीव इव । असमं समतामेति भ्रांतिदृष्ट्यैव केवलं । जीवेन ब्रह्म न समं तत्त्वदृष्ट्या कथंचनेति षाड्गुण्ये । यथोदचलनाद्वृक्ष-प्रतिबिंबचलनात् । तटस्थवृक्षचलनं कल्पयेदबुधो नरः । तथा मनसिजैर्दोषैराभासे दूषिते नरे । आभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत् । आत्मनश्चक्षुषो भ्रांत्या यथा पश्येद्भ्रमं भुवः । तथैव स्वात्मनो दोषाद्दोषवद्ब्रह्म पश्यतीति ब्रह्मतर्के ॥ असमं ब्रह्म तत्त्वदृष्ट्या न समं । आभासे नरे प्रतिबिंबभूते जीवे । आभासिनो बिंबस्य । आत्मनः स्वस्य भ्रांत्या चलनेन भ्रमं चलनमित्यर्थः ॥ २४ ॥ एवमुक्तरीत्याऽलिंगे लिंगशरीररहिते लिंगभावानां । आर्शाद्यच् । लिंगशरीरयुक्तस्य जीवस्य भावना साम्यबुद्धिः ।

य एषः प्रक्रम्यमानपरामर्शित्वात्पुलिंगं । आत्मविपर्यासः परमात्माधिष्ठानको भ्रमः । तस्य फलमाह ॥ एवमिति । एवं भ्रमे सति प्रियाप्रिययोगादयो दोषा भवंतीति योजना ॥ २५ ॥ वियोगो बंधुभिः । कर्म पापं । संसृतिः संसारबंधः । स्मृतोऽनुभवसिद्धो विविधशोकश्च विवेकःस्मृतिः वस्तुतोऽविवेकिन एव । अविवेकेऽसम्यग्ज्ञाने विवेकस्मृतिः सम्यग्ज्ञानमिति भ्रांतिरित्यर्थः । अतो दोषमध्ये परिगणनं युक्तं । एतदेवाभिप्रेत्य तात्पर्यं ॥ विवेकस्मृतिरविवेकिन एव विवेकित्वभ्रांतिरिति ॥ अत्र तत्त्वोपदेशे हिरण्यकशिपोः केशवे भक्तिः प्रतीयते । अतः कथं तत्स्तोतारं प्रह्लादं द्वेष्टीत्यत आह तात्पर्यकृत् ॥ अंतर्हिरण्यकादीनां भक्तिरस्त्येव केशवे । असुरावेशतस्त्वन्यान्हरिस्तोतृन्द्विषंति चेति पाद्मे ॥ २६ ॥ भूतानामिह संवासोऽध्रुव इति न केवलं मयोक्तं किं त्वत्रेतिहासमप्युदाहरतीत्याह ॥ अत्रेति । प्रेतबंधूनां कस्यचिन्मृतस्य ज्ञातीनां । तमितिहासं निबोधत । जानीत । बुध्यतेर्ण्यत्ययेन शप् ॥ २७ ॥ उशीनरेषूशीनरस्य जनपदेषु । तद्राजस्य । लुग्बहुष्विति लुक् । ज्ञातयो बांधवा उपासंत तद्विषयकचिंतामकुर्वन् ॥ २८ ॥ असृगाविलं रक्तेन व्याप्तं ॥ २९ ॥ स्तब्धाक्षं निश्चलनेत्रं । संरंभात्कोपात् । रजकुंठमुखांभोजं धूलिधूसरमुखांबुजं यस्य तं । छिन्न आयुधयुक्तभुजो यस्य तं ॥ ३० ॥ तत्पदयोः पत्युः पदयोः ॥ ३१ ॥ आक्रंदनयोच्चरोदनेन नृणां शोचं सृजंत्यः कुर्वाणा विलेपिरे परिदेवनं चक्रुः ॥ ३२ ॥ हे प्रभो नाथ । भवान्येनाकरुणेन विधात्रा नोऽस्माकं दृशामगोचरमविषयं देशं नीतः । उशीनराणां वृत्तिदः कृतोऽधुना शुचं विवर्धनः कृतः । तं विधातारं धिक् । अहो आश्चर्यमिति योजना ॥ ३३ ॥ हे महीपते । सुहृत्तमेन कृतज्ञेन त्वया विना कथं स्याम तिष्ठामः । हे वीर । तव पादयोः शुश्रूषतीनामस्माकं त्वं यत्र यास्यसि तत्रानुयानं दिशेति योजना ॥ ३४ ॥ निर्हारं शवनिर्हरणं । अनिच्छंतीनां मृतं पतिं परिगृह्यैवं विलपतीनां सतीनां । विलपतीषु सतीष्विति यावत् । यस्य च भावेन । भावलक्षणमिति षष्ठी । अर्कोऽस्तं यथा भवति तथा सन्यवर्तत रथनिवर्तनमकरोदिति योजना ॥ ३५ ॥ परिदेवनं विलापनं । योजना तु स्फुटा ॥ ३६ ॥ बालरूपस्य यमस्योक्तिप्रकारमाह ॥ अहो इति । मतो वयसाऽधिकानां लोकविधिं मर्त्यलोकस्थितिं विपश्यताममीषां प्रेतबंधूनामेषो विमोहो अहो आश्चर्यकरः । एष कः । यत्र पूर्वमदर्शनं उद्भव उत्पातिः । तत्र तद्दर्शनं गतं मनुष्यं स्वयं सधर्मास्तादृशोत्पत्त्यादिमतोऽपार्थे व्यर्थमनुशोचंतीति य

बंधुवियोगेनानुशोचनस्याकार्यमुक्त्वा तादृशचिंतारहितस्य स्वस्य धन्यत्वं रक्षकाभावे रक्षणं कथमित्यतो भगवत एव रक्षकत्वं चाह ॥ अहो वयमिति । अत्र लोके पितृभ्यां मातापितृभ्यां त्यक्ताः । रक्षकरहिता इति यावत् । अबला दुर्बला अपि वृकादिभिरभक्ष्यमाणाः । यो हि गर्भे रक्षति स एव सर्वदाऽपि रक्षिता रक्षक इति निश्चित्य मातापितृवियोगादिकं न विचिंतयामः । यद्यस्मादहो तस्माद्वयं धन्यतमा हीति योजना ॥ ३८ ॥ अन्यसृष्टं संहारके चास्मिन् सति प्रयोजनाभावे च कथं रक्ष्यतीत्यतः सृष्ट्यादिकर्तैक एव । प्रयोजनाभावेऽपि रक्षणादिव्यापारेच्छारूपस्य भगवतः क्रीडैव । देवस्यैष इति श्रुतेः। जगच्च क्रीडोपकरणमित्याशयेनाह ॥ य इच्छयेति । हे अबलाः । य एवेदं स्वेच्छयैव सृजति य एव रक्षति अनुलुंपते संहरति । स्वयमव्ययः । तस्य निग्रहसंग्रहे सृष्ट्यादिना संग्रहे संहारादिना निग्रहे प्रभोः समर्थस्येशितुः स्वामिनश्चराचरं क्रीडनं क्रीडोपकरणमाहुर्विद्वांस इति योजना ॥३९॥ रक्षणादिकं भगवदधीनमेव न जीवव्यापाराधीनं । तस्यान्वयव्यतिरेकव्यभिचारादित्याशयेनाह ॥ पथिच्युतमिति । अत्र दिष्ट शब्देन भगवानभिधीयते । अस्यानेन । योजना तु स्फुटा ॥४०॥ किंचिदनिमित्तीकृत्य भगवतः स्रष्टृत्वादौ वैषम्यादीत्यत आह ॥ भूतानीति । भूतानि प्राणिनः सर्वशः पूर्णेन भगवता तैस्तैर्निजयोनिकर्मभिः स्वजन्मकारणीभूतकर्मभिर्निमित्तीकृतैः काले कालविशेषे भवंति जायंते । एवं मृतिकारणीभूतकर्मभिः कालविशेषे न भवंति म्रियंते । तत्र जननादौ प्रकृतौ तत्कार्ये देहे स्थितोऽपि जीवादन्यतमः सुविरुद्धस्वरूप आत्मा परमात्मा तस्याः प्रकृतेर्गुणैः सत्त्वादिभिः । सत्त्वं सुखे जयतीत्यादिनोक्तैस्तत्कार्ये न निबद्ध्यत इति योजना । एतदेवाभिप्रेत्य तात्पर्ये ॥ अन्यतम आत्मा परमात्मा । सुविरुद्धस्वरूपत्वाज्जीवादन्यतमो हरिरिति वामने ॥ ४१ ॥ देहे स्थितः परमात्मा न निबद्ध्यत इत्यनेन जीवो बाध्यत इत्यायातं । तत्कथं । तस्यापि देहात्पृथक्त्वादित्यतो जीवमिथ्याज्ञानमूलत्वाद्युक्तस्तस्य बंध इत्याशयेनाह ॥ इदं शरीरमिति । यथा भौतिकं पंचभूतकार्यं गृहं गृहमानिना पृथगीयते । तथोदकैः पार्थिवतैजसैः । उपलक्षणया पंचभूतैरुपादानैः कालेन मुख्यनिमित्तेन भगवता जातमिदं शरीरं पृथगभिमानिनो भिन्नं । यद्यपि तथाऽपि पुरुषस्य जीवस्य । मोहजं स्वातंत्र्यादिमिथ्याज्ञाननिमित्तकं यतोऽतो जनो देहस्थो जीवो जातो विकृतो विनश्यति । जननजरादिविकार-

मरणप्रयुक्तदुःखलक्षणबंधवान् भवतीति योजना । अत्र शोको न कार्य इत्यर्थे यत्रोद्भव इत्यादिना देहानित्यत्वोक्तेरुपयोगेऽप्यहं वयमित्यादिना भगवन्माहात्म्योक्तेः कोपयोग इत्यतस्तात्पर्यं ॥ भगवन्माहात्म्यकथनेन सर्वस्य तद्वशत्वात्स एव भजनीयो न शोकेन प्रयोजनमिति फलितार्थः ॥ ४२ ॥ जीवस्य गुणबंधे निमित्तमुक्त्वा परस्य तदबंधे निमित्तं दृष्टांतपूर्वमाह ॥ यथेति । यथा भिन्नोऽनल ईयते सदाह्यत्वात्तद्गुणेन दाह्यत्वादिना न लिप्यते च । अनिलो देहगतः पृथक् स्थितः छेद्यदेहात्पृथगच्छेद्यत्वादिना विलक्षणतया स्थितस्तद्गुणेन छेद्यत्वादिना न सज्जते । यथा नभः सर्वगतं कूटस्थत्वान्न सर्वगुणैः सज्जते । तथा परः परमात्मा सर्वगुणाश्रयः सर्वज्ञः स्वातंत्र्याद्याश्रयो गुणैर्देहस्य जीवस्य वा गुणैर्न सज्जत इति योजना । एतदेवाभिप्रेत्य तात्पर्यकृत्प्रमाणमाह ॥ देहदारुगतौ प्राणवन्ही सर्वगतं नभः । देहादिभ्यो यथा भिन्ना न लिप्यंते च तद्गुणैः । तथा जीवगतो विष्णुर्जीवाद्भिन्नो न तद्गुणैरिति च ॥ जीवगतो जीवेन सह गतः ।तद्गत इति वा । तद्गुणी तस्य जीवस्य देहस्य वा । गुणलेपवानित्यर्थः ॥ ४२ ॥ इतश्च शोको न कार्य इत्याह ॥ सुयज्ञ इति । हे मूढ । यमनुशोचथात्र यः शेते देहोऽसौ सुयज्ञोऽयं ननु किमित्याक्षेपः । तथा चानुशोच्यः सुयज्ञो देहो नेत्यर्थः । देहस्याश्रोतृत्वेन जडत्वात् । तर्हि श्रोतारमनुशोचाम इत्युक्ते किं मुख्यं श्रोतारमुतामुख्यं । आद्ये आह ॥ य इति । यो मुख्यतः श्रोताऽनुवक्ता च हरिः स इह लोके कर्हिचिन्न दृश्येत् । अव्यक्तत्वात् ॥ ४४ ॥ सुयज्ञो जीवो मुख्यश्रोता किं न स्यादित्यतः कैमुत्येन नेत्याह ॥ न श्रोतेति । अत्र लोके देहे वेतरापेक्षया महान्मुख्योऽसुरपि मुख्यप्राणोऽपि न स्वतः श्रोताऽनुवक्ता चेति यदा तदा देहप्राणयोः सकाशात् । च शब्दात्स्वतः श्रोतुर्वक्तुर्भगवतश्चान्योऽभिमानत इंद्रियवानात्मा जीवो यः स तु न स्वतः श्रोताऽनुवक्ता चेति किमु वक्तव्यं । इति योजना । अत एव तात्पर्यं प्रवृत्तं ॥ इंद्रियवान् जीव इति ॥ ४५ ॥ यः श्रोताऽनुवक्तेत्यत्र मुख्यतः श्रोता यः स न दृश्यतेत्युक्तं । स क इत्याशंकायामाह ॥ भूतेति । यो जीवादन्यः परमात्मा विभुः समर्थः । जीवस्य संसारमोक्षार्थं भूतेंद्रियमनोलिंगान् भूतेंद्रियमनांसि लिंगं स्वरूपं येषां तान् । उच्चावचान्सुरनरतिर्यगादीन्देहान् जीवनियामकतया स्थातुं स्वयमपि भजते । लोकांतरं च जीवं गमयितुमुत्सृजाति । स एव स्वतः श्रोताऽनुवक्ता चेत्यध्याहृत्य योजना ।जीवस्य देहभजनोत्सर्जनादिकं स्वान्याधीनमिव स्वस्याऽपि देहभजनादिकं किमन्याधी-

नामित्याशंकापरिहाराय तदपि स्वेन तेजसा च स्वसामर्थ्येनैवेति चतुर्थः पादो योजनीयः। एतावदभिप्रेत्यैव तात्पर्यं प्रवृत्तं ॥ भजत्युत्सृजति ह्यन्यः परमात्मा। स एव श्रोताऽनुवक्ता च। नान्योऽतोऽस्ति श्रोता स योऽतो श्रुत इत्यादेरिति ॥ ४६ ॥ सिंहावलोकनन्यायेन पूर्वश्लोकतात्पर्यमाहाचार्यः ॥ मुख्यप्राणोऽपि स्वतो न श्रोता किमु जीव इतीति ॥ एतदनुसारेणैव पूर्वं मूलं योजितं च। तत्पूर्वश्लोकस्यापि तेनैव न्यायेन तात्पर्यमाह ॥ अयं ननु सुयज्ञ इत्याक्षेप इति ॥ आक्षेपप्रकारश्च पूर्वमुक्तः। अमुख्यं श्रोतारं सुयज्ञमनुशोचाम इति तृतीयपक्षस्य सुयज्ञस्यास्वातंत्र्यात्। तच्छोकेनापि किं फलमित्यध्याहृत्य मूले उत्तरं द्रष्टव्यं। एतदेवाभिप्रेत्य तात्पर्यं प्रवृत्तं। यस्तु सुयज्ञः सोऽपि स्वतो वक्तुं श्रोतुं न शक्तः। अतस्तस्यानुशोकेन किमित्यर्थ इति। पूर्वश्लोकोक्तस्योत्तरश्लोके वक्ष्यमाणस्य तत्प्रसक्तस्य प्रमेयांतरस्य निर्णायकं प्रमाणं मध्ये पठति तात्पर्यकृत् ॥ अन्यो जीवो चितो देहात्तद्वशो देह उच्यते। पश्यामीत्याभिमानोऽस्य चक्षुराद्यभिमानवान्। न तद्वशाश्चक्षुराद्या न दृष्ट्यादौ स ईश्वरः। चक्षुराद्या मनो जीवो दृष्ट्यादिश्चापि यद्वशे। स प्राण इति विज्ञेयो ज्ञाता मंता च स प्रभुः। तस्यापि ज्ञातृमंतृत्वं न स्वतः शक्यते क्वचित्। यस्तस्य ज्ञातृमंतृत्वदाता स भगवान्हरिः। स्वतो ज्ञाता मंता च द्रष्टा श्रोता च केशवः। ज्ञानादिदो न तस्यान्यः सर्वस्य ज्ञानदो हरिः। स देहान्भजते विष्णुः स्वेच्छयैवोत्सृजत्यपि। यावद्देहस्थितो विष्णुस्तावज्जीवो विपर्ययः। तावत्क्लेशादयश्चास्य वृथा चेंद्रियवृत्तयः। यदोत्सृजति देहं स हरिः सर्वात्मना विभुः। तदा तदभिमानी तु जीवो मुच्येत संसृतेः। अतिभिन्नस्वरूपौ तौ जीवेशावेकदेहगौ। देहाभिमानी त्वेकोऽत्र न मानी मानदः पर इति गारुडे ॥ अनेन पतितो देहः सुयज्ञो नान्वित्याक्षेपो विवृतः। चक्षुषा पश्यामीत्याभिमानोऽत एव चक्षुराद्यभिमानवान् चक्षुराद्या न तद्वशा दर्शनेच्छायामपि कदाचिदपाटवादौ ज्ञानाजनकत्वात्। कारणस्यानधीनत्वादेव तद्वृत्तौ दृष्ट्यादावपि स ईश्वरः समर्थो न भवति। अनेनाभिमानत एवेंद्रियवानित्येतत्समर्थितं भवति। बाह्यकारणांतःकरणतद्व्यापारजीवा यस्य वशे स प्राण इति विज्ञेयः। तस्यापि प्राणस्यापि ज्ञातृमंतृत्वं न स्वतः। अनेन न श्रोता नानुवक्ताऽयं मुख्योऽपीत्येतद्विवृतं। यस्तस्येत्यादिना सर्वस्य ज्ञानदो हरिरित्यंतेन यः श्रोता योऽनुवक्तेहेत्येतद्विवृतं। उत्सृजत्यपीत्यंतेन भजत्युत्सृजति ह्यन्य इत्येतद्विवृतं। यावद्देहान्वित इत्यारभ्य यावल्लिंगान्वितो ह्यात्मेति वक्ष्यमाणश्लोकस्य तात्पर्यकथनं देहान्वितो लिंगदेहादिजडदेहान्वितस्तावत्पर्यंतं विपर्ययः।

विपर्येतीति विपर्ययः । विपरीतमतिमान् । इंद्रियवृत्तयश्च संसारहेतवः । यदा सर्वात्मनोत्सृजति न कमपि जडदेहमवशेषयति तदा संसृतेर्मुच्यते । अतिभिन्नस्वरूपावतिविलक्षणस्वरूपौ । मानदोऽभिमानप्रदः । पूर्वमिंद्रियवानित्यनेन जीव उक्तः । क्वचि-देहोऽनिंद्रिय इति भगवानुच्यते । तत्कथं स्वस्वामिभावसंबंधस्य भगवत्येव मुख्यत्वादित्यतोऽत्र विधिनिषेधयोर्विवक्षितं निमित्तांत-रमुदाहराति तात्पर्यकृत् ।। इंद्रियाद्यभिमानेन तद्वान् जीव उदीर्यते । अतन्मानाद्धरिः प्रोक्तस्त्वदेहोऽनिंद्रियस्तथा । जीवानभिमते देहे न विष्णुर्जीवति स्थितः । अतश्चादेह उद्दिष्टः परमात्मा सनातन इति प्रकाशसंहितायां ।। अनेन देहादिमत्वोक्तावभिमानो निमित्तं । अदेह इत्याद्युक्तौ तु अभिमानाभावः । अदेहत्वोक्तौ निमित्तांतरं चाह ।। जीवानभिमत इति । जीवतीति समन्वयं । श्वासोच्छ्वासादिमतीत्यर्थः । यदि रामकृष्णादि विग्रहः प्राकृतः स्यात्तदाऽयं नियमो न स्यात् । देवदत्तादिस्तु स्वेतर जीवान-भिमते जीवति देहे तिष्ठतीति न तस्यादेहत्वं । तथा च स्वेतरजीवानभिमतश्वासोच्छ्वासादिमच्छरीरकत्वं देहवत्वोक्तौ निमित्तं । तदभावोऽदेहवत्वोक्तौ निमित्तमिति भावः । सिंहावलोकनन्यायेन स चान्यः प्राणदेहयोरित्यत्र च शब्दसमुच्चयमाह तात्पर्यकृत् ।। स चान्यः श्रोतुर्वक्तुश्चेति च शब्द इति ।। स चान्य इत्यत्र च शब्दः श्रोतुर्वक्तुश्चेति समुच्चयार्थ इत्यर्थः । पुनः सिंहावलोकनन्यायेन भूतेंद्रियमनोलिंगानीत्यनूद्य लिंगशब्दस्य स्वरूपार्थे प्रमाणमाह तात्पर्यकृत् ।। भूतेंद्रियमनोरूपान् । लिंगं स्वरूपमुद्दिष्टं लिंगं ज्ञापकमेव चेति शब्दनिर्णये ।। एवं जीवस्य पुनः पुनः देहप्राप्तौ कदा मोक्ष इत्यतो मूलं प्रवृत्तं ।। यावल्लिंगेति । अत्र तात्पर्यं ।। आत्मा परमात्मा । कर्मबंधनो जीवः । ततः परमात्मनो विपरीत इति । तथा च यावल्लिंगान्वितो लिंगशरीरादिजडदेहान्वित आत्मा परमात्मा कर्मनिबंधनं संसृतौ यस्य तादृशो जीवस्ततः परमात्मन एव विपर्ययो विपरीतमतिमान्वर्तते । क्लेशः संसारक्लेशो मायायोगोऽविद्यायोगस्तन्निमित्ताभिमानोऽपि तावदनुवर्तत इति योजना । यदोत्सृजति देहं सः हरिः सर्वात्मना विभुः । तदा तदभिमानी तु जीवो मुच्येत संसृतेरित्यपि योजनीयं । गारुडे एवमेवोक्तेः । तथा च कदा मोक्ष इति शंका परास्ता ।। ४७ ।। एवं तर्हि संसारेषु पुरुषार्थो नास्तीत्यायातं । कथं तर्हि स्वर्गलोके न भयं किंचनास्तीत्यादिवचनबलात्स्वर्गादौ पुरुषार्थत्वज्ञानं जीवस्येत्यत आह ।। वितथेति । गुणेषु गुणकार्येषु स्वर्गादिष्वर्थदृक् पुरुषार्थ इति ज्ञानमयं वितथाभिनिवेशोऽयथार्थाभिमानः ।

वस्तुतः स्वर्गादेः परमपुरुषार्थत्वाभावात्। वचोऽपि वितथा न प्रतीतार्थे। तत्रत्यस्वर्गपदस्य मोक्षपरत्वात्। अत्र दृष्टांतमाह॥ यथेति। सप्तसु प्रथमेत्युक्तेः। मनोरथे स्वप्ने वैंद्रियकमिंद्रियेण प्रतीयमानवित्तादिकं मृषा वृथा। इदं वित्तादिकं मम पुत्राद्युपयोगी भवतीत्यभिनिवेशो यथा तथेति योजना। स्वप्नमनोरथपदार्थानां वासनाद्युपादानकत्वेन सत्यत्वस्य तद्विषयकबाह्यार्थक्रियाकारित्वज्ञानभ्रांतित्वस्य स्वप्नाधिकरणे निर्णीतत्वात्। अत एव तात्पर्यं॥ मृषा वृथा। स्वप्नदृष्टवित्तादिवदिति॥ मायायोगपदेनाभिमानः संसारकारणमित्युक्तं ईश्वरस्याभिमानस्य सत्त्वेन संसारापत्तेरित्यतोऽभिमानं विवेचयति प्रमाणेन तात्पर्यकृत्॥ लेपाभिमानी जीवस्तु स्वरूपानुभवी न च। मुक्तः प्राक्तेन मान्युक्तो न मानी विष्णुरुच्यते। सर्वं ममेति पश्यन्नप्यलेपाभिमातिर्यतः। सम्यक्स्वरूपानुभवात्स्वतंत्रत्वाददोषत इति ब्रह्मतर्के॥ अत्र स्वकीयत्वबुद्धिमात्रं नाभिमानः किं त्वस्वकीये स्वकीयत्वबुद्धिः। किंचिद्दत्तस्वत्वकेऽपि वस्तुन्यदत्तस्वत्वबुद्धिश्चात एव लेपस्य पुण्यपापलेपस्य कारणं। एवं लिप्यत इति लेपः। संबद्धं वस्तु तथा चासाधारण्येन व्यपदेश इति। स्वरूपसुखादौ मदीयत्वबुद्धिर्नास्ति किंतु बाह्यमात्राभिमानवान्। उक्तद्विविधलेपाभिमानस्य मुक्तेः प्राक् सत्वात्। तदैव जीवो मान्युक्तः। विष्णुस्तु तदभावान्न मानीत्युच्यते। लेपाभिमतेरेव मानीत्युक्तौ निमित्तत्वात्सर्वं पश्यन्नपि विष्णुरमानीत्युच्यते। लेपाभिमत्यभावमुपपादयति॥ सम्यगित्यादिना। आद्येन बाह्यमात्राभिमानाभावः। द्वितीयेनास्वकीये स्वकीयत्वबुद्धेरभावः। तृतीयेन पुण्यपापलेपकारणत्वाभाव उपपादित इति ध्येयं॥४८॥ शोको न कार्य इत्येतदुपसंहरति॥ अथेति। स्वभावो नित्यानित्यस्वभावः शोचतां शोचद्भिरन्यथा कर्तुं न शक्यत इति ज्ञात्वाऽथ तस्मादन्यथा कर्तुमशक्यत्वात्। तद्विदो नित्यानित्यविदो नित्यमनित्यं वोद्दिश्य नानुशोचंतीति योजना॥ ४९॥ एवं बालरूपो यमः स्वयमेवमुक्त्वा वैराग्यं जनयितुं कांचन कथामाह॥ लुब्धक इत्यादिभिः कतिपयैः श्लोकैः। योजना तु स्फुटा। लुब्धको मृगयुर्निर्मितः। विधिनेति शेषः। वितत्य विस्तृत्य प्रलोभनं वंचनं॥ ५०॥ कुलिंगमिथुनं। दार्वाघाटो दारुकुट्टः कुलिंगो दीर्घतुंडक इत्यभिधानं। मिथुनं स्त्रीपुंसद्वंद्वं॥ ५१॥ सिचा जालेन सह यंत्रितया तंत्या सूत्रेण। महिषी कुलिंगभार्या। कालयंत्रिता मृत्युवशमापन्ना॥ ५२॥ अकल्पो मोचयितुमसमर्थः। पर्यदेव यद्विलपितवान्। विलपनप्रकारमाह॥ अहो इति। देवो विधिर्यमो वा अकरुणो दयारहितः स्वप्रयोजनाभावेऽपि हंतृत्वात्। एवं विषया स्त्रिया हृतया किं

करिष्यतीत्यकारुण्योपपादनं ॥ ५३ ॥ दुःखेन स्वात्मनो वधमाशास्ते ॥ काममिति। अर्धेनात्मना देहेन ॥ ५४ ॥ विधुरायुषा स्त्रीरहिता युष्मताऽर्धेन देहेन दुःखं जीवता । अनेनार्धस्य वैयर्थ्यमुपपादितं । जीवनेऽनुपपत्तिमाह ॥ कथमिति । मे प्रजाः ॥ ५५ ॥ शाकुनिकः पक्षिमारकः कालेनांतकेन प्रहितः प्रेरितः । निलीनः छन्नः ॥ ५६ ॥ एवं कुलिंगवत् । आत्मापायं स्वविनाशं ॥५७॥ विस्मितचेतसो वृद्धानामस्माकमविद्यमानमेतादृशं ज्ञानं बालस्यास्तीत्याश्चर्ययुक्तचेतसो ज्ञातयो बांधवाः सर्वं देहगेहाद्यनित्यं तत्र प्रतीयमानस्वत्वं स्वकीयत्वादिकमयथोत्थितमसत्यं मेनिर इति योजना । एतद्व्याख्यातुं तात्पर्यं प्रवृत्तं ॥ अहं ममाभिमानादि त्वयथोत्थमनित्यकं । महदादि यथोत्थं च नित्या चापि यथोत्थिता । अस्वतंत्रैव प्रकृतिः स्वतंत्रो नित्य एव च । यथार्थभूतश्च पर एक एव जनार्दन इति ब्रह्मतर्के ॥ अहं ममाभिमानादि शब्देन तद्विषयीभूतगेहादि लक्ष्यते । तत्रापि प्रकारीभूतास्वत्वस्वकीयत्वादि । अयथोत्थमसत्यं । विशेषभूतं देहगेहादि तु अनित्यं । अविद्यायास्तन्मूलजगतश्च सत्यत्वात् । कथमयं विवेक इत्यतः सर्वं सत्यमित्याह । महदादि यथोत्थं सत्यमनित्यं च प्रकृतिश्चिदचित्प्रकृतिर्नित्या यथोत्थिता च । अपि तथाऽप्यस्वतंत्रैव परः परमात्मा जनार्दन एक एव स्वतंत्रः । तथा स्वयं च यथार्थभूतः । सत्यनित्य एव । नाचित्प्रकृतिवन्नित्यानित्य इत्यर्थः ॥५८॥ अंतरधीयतादृश्योऽभूत् । सांपरा-यिकमौर्ध्वदेहिकं । ततः स्वत्वादेरसत्यत्वात् देहादेरनित्यत्वात् । यूयं परं च परदेहमात्मानं स्वदेहं चोद्दिश्य मैव शोचत । मा शब्दोऽयं न माङ् ॥५९॥ स्वपराभिनिवेशेन स्वदेहपरदेहादावात्मत्वपरात्मत्वभ्रांतेः स्वपरगेहादौ स्वकीयत्वपरकीयत्वभ्रांतेश्च जनकेनाज्ञानेन विना देहिनां भिन्नदेहवतां को देहः । आत्मा स्वस्वरूपभूतः को वा देहः । परः परात्मभूत इत्याक्षेपः । न कोऽपि न देह आत्माभिन्नः। एवं को गेहदेहादिः स्वीयः को वा पारक्यः परकीयः न कोऽपीति योजना । एतदेवाभिप्रेत्य तात्पर्यं प्रवृत्तं ॥ क आत्मा कः पर इति देहाद्यपेक्षया । न हि देहादिरात्मा स्यान्न च शत्रुरुदीरितः । अतो दैहिकवृद्धौ वा क्षये वा किं प्रयोजनं । यस्तु देहगतो जीवः स हि नाशं न गच्छति । ततः शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः । देहादिव्यतिरिक्तौ तु जीवेशौ प्रति-जानतां । अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा । शत्रुनाशस्तथा ज्ञाननाशो नान्यः कथंचनेति ब्रह्मवैवर्ते ॥ देहादिरित्या-दिपदेनेंद्रियादिकं । अतः स्वपरस्वरूपत्वाभावात् । क्षये वेत्यत्र बुद्ध्या विवेकेन दैहिकस्येत्यनुवर्तते । शत्रुदैहिकस्येत्यर्थः । तत

उक्तहेतोरेव शोचनं कुतः। देहयोरात्मत्वाभावात्। अविवेकिनामकार्यमुक्त्वा विवेकिनां संपाद्यवृद्धिशत्रुनाशावाह ॥ देहादिव्यतिरिक्ताविति। अतोऽन्यस्य वृद्धित्वाद्यभावात्। अज्ञाननाशोऽज्ञानतत्कार्यभ्रांत्यादिनाशः ॥ ६० ॥ दैत्यपतेर्वाक्येन दितेः शोकनिवृत्तिर्जातेत्याह ॥ इति दैत्यपतेरिति। तन्त्रे परतन्त्रे ॥६१॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां द्वितीयोऽध्यायः ॥ ७–२ ॥

॥ हरिः ॐ ॥ साधनातिशयेनाप्ययोग्यं पदं न प्राप्यत इति हिरण्यकशिपुतपःकथनव्याजेन निरूप्यतेऽस्मिन्नध्याये। प्रायेण श्लोकाः स्फुटयोजनाः। हिरण्यकशिपुरात्मानमुक्तविशेषणविशिष्टं। एकराजनं त्रिलोक्या अपि मुख्यं राजानं व्याधित्सान्विधातुमैच्छत् ॥ १ ॥ तेपे तपः कृतवान् ॥ २ ॥ संवर्तार्क इव प्रलयसूर्य इव। स्थानान्यगम्यस्थानानि ॥ ३ ॥ विष्वगीरितः परितः संचरन् ॥ ४ ॥ चुक्षुभुः क्षुब्धाः ॥ ५ ॥ तप्तास्तापिताः ॥ ६ ॥ न शक्नुमो न समर्थाः ॥ ७ ॥ उपशमं परिहारं। बलिहरा बलिप्रदाः ॥ ८ ॥ संकल्पोऽभिप्रायः ॥ ९ ॥ निजासनमध्यास्ते सत्यलोकमधितिष्ठति। अधिशीङ्स्थासामित्यधिकरणस्य कर्मत्वं ॥ १० ॥ तत्तु ब्रह्मपदं। तथा ब्रह्मवदात्मनः समाधियोगेन साधयिष्य इत्यन्वयः। अयोग्यपदकामना हिरण्यकशिपुप्रभृतीनामयोग्यत्वाज्ञानाद्रागाद्यौत्कंठ्याच्च युज्यते। अत एव तात्पर्यं ॥ जानतामपि कर्तव्यं कर्मात्मसदृशं सदा। तत्रात्मसदृशाज्ञानाद्रागाद्यैर्वा विमोहिताः। जानंतोऽपि ह्यसदृशं कर्म कुर्युर्ऋते विभुं। चतुरास्यं स नायोग्यं कर्म कुर्यात्कथंचनेति नारदीये। तपसा विद्यया वाऽपि ज्ञानध्यानादिनाऽथवा। व्यस्तैः समस्तैरपि वा कुर्वतां यत्नमुत्तमं। संभारविक्षेपशतैर्बहुकोटिभिरेववा। न शक्यंते समारोढुं स्वात्मायोग्यपदानि तु। तथाऽप्याचरतां कुर्युर्दैत्यानां सुरनायकाः। विघ्नं तु तप आदीनां वैयर्थ्यस्यापनुत्तय इति प्रकाशसंहितायां ॥ ब्रह्मज्ञानिनामध्यात्मसदृशमात्मयोग्यकर्म कर्तव्यं। तत्र ब्रह्मज्ञानिष्वपि केचनात्मसदृशाज्ञानात्। सदृश पदमसदृशस्याप्युपलक्षणं। तथा चेदं योग्यमिदमयोग्यमिति विवेकाभावात्। अयोग्यस्यापि योग्यत्वभ्रमात्। जानंतोऽपि ब्रह्मज्ञानिनोऽपि असदृशमयोग्यकर्म कुर्युः। जानंतोऽपीत्यस्यासदृशमित्यनेनान्वयः। आत्मसदृशाज्ञानादित्यनेन व्याघातात्। केचन रागाद्यैर्विमोहिता ज्ञातामप्ययोग्यतां विस्मृत्य रागजनितयोग्यताभ्रांतिमंतः कर्म कुर्युः। उक्तस्यापवादमाह ॥ ऋते विभुं चतुरास्यमिति। कथंचन योग्यायोग्यज्ञानाभावाद्रागौत्कंठ्यादित्यर्थः। अत्र यदि योग्यताभ्रांत्या

दिना हिरण्यकशिप्वादयः कुर्युः । तर्ह्ययोग्यपदस्य सर्वथाऽप्यप्राप्तेः कुतो विघ्नं कुर्वंति सुरा इत्यत आह ॥ तपसेति । विद्यया वेदविद्यया व्यस्तैः प्रत्येकमनुष्ठितैः समस्तैर्मिलितैः । बहुकोटिभिर्जन्मभिराजितैः संभारविक्षेपशतैः । संभारा यज्ञसाधनद्रव्याणि विक्षेपोऽग्नौ विक्षेपः । तथा च यागशतैरपीत्यर्थः । यद्यप्येवं तत्पदप्राप्तिभयं नास्ति । तथाऽपि वैयर्थ्यस्यापनुत्तये वैयर्थ्यज्ञानस्य परिहाराय यदि संपूर्णं तप आदिकं । तदा पदाप्राप्त्या तपसोऽसाधनत्वे ज्ञातदैत्याः पुनरयोग्यपदोद्देशेन तप आदिकं न कुर्युः । विघ्ने तु कृतेऽविघ्नं चेत्तपस्तदा साधयेदेव पदमिति भ्रांतिरनुवर्तित इति भावः ॥ ११ ॥ मूले पुनर्हिरण्यकशिपोरभिप्रायमाह ॥ अन्यथेति । इदं जगदन्यथा विधास्ये । अन्यथेत्यस्य विवरणं यथा पूर्वमिति । धातुर्ब्रह्मत्वकाले इंद्रादयो दिक्पालाः स्वायंभुवादयो मन्वंतराधिपा मम ब्रह्मत्वकाले तु दैत्या एव दिक्पालादय इत्येवमयथापूर्वमित्यर्थः । तर्हींद्रादयो विरुंध्युरित्यत आह ॥ किमिति । वैष्णवादिभिर्ब्रह्मनिर्मितैः कल्पांतैः मनुकल्पाद्यायुष्कैः कालनिर्धूतैः क्लृप्तकालावसितपदैरन्यैरिंद्रादिभिः किं कार्यं भवतीति योजना । अत्र वैष्णवपदं ब्रह्मपरमिति साभिधानकमाह तात्पर्यकृत् ॥ वैष्णवादिभिर्ब्रह्मनिर्मितैः । ब्रह्मा स्वयंभूर्द्रुहिणो वैष्णवः शतधृक्तथेति शब्दनिर्णये ॥ १२ ॥ श्रुतं विज्ञाप्यानंतरं यदुक्तं तत्कार्यमित्याह मूले ॥ इतीति । निर्बंधमाग्रहयुक्तं ॥१३॥ इतराद्वित्वा मत्पदमेव कुत आकांक्षत इत्यतः पदं स्तौति ॥ तवासनमिति । हे जगत्पते । तव पारमेष्ठ्यं चतुर्दशलोकाधिपत्यरूपमासनं पदं जगतां भवाय ज्ञानादिगुणवृद्धये श्रेयसे मोक्षाय भूत्यै ऱ्हासराहित्याय क्षेमाय प्राप्तपरिरक्षणाय विजयायाप्राप्तलाभाय भवतीति योजना । इतरान्विना कुतोऽयमेवाकांक्षत इत्यतो ब्रह्मपदमाकांक्षमाणानां परिगणनं प्रमाणेन भवादिपदार्थं चाभिधानेनाह तात्पर्यकृत् ॥ भवाय श्रेयसे चैव न कश्चित्तदपेक्षते । मधुकैटभयोश्चैव हिरण्यादेस्तथैव च । नान्यो ब्रह्मपदं वांछत्यृजून्योग्यान्विना क्वचित् । ततःश्रेयांसि वांछंति न तु तत्पदमाप्तय इति ब्रह्मांडे । भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः । वृद्धस्य न पुनर्ऱ्हासो भूतिरित्येव कथ्यत इति शब्दनिर्णये ॥ भवायेत्यादिकमुक्तमात्रोपलक्षणं । न कश्चिदित्येतद्विवृणोति ॥ मधुकैटभयोरिति । हिरण्यादेः सकाशादिति शेषः । ऋजून्योग्यानित्यनेन मधुकैटभादेरयोग्यत्वं सूचयति । एवं च योग्या ऋजवोऽयोग्यानां मध्ये मधुकैटभादयो ब्रह्मपदमाकांक्षंत इति परिगणना सूचिता ॥ १४ ॥ अनंतरं ब्रह्मणा कृतमाह ॥ इतीति ॥ परितः परिवृतः ॥१५॥

कीचकैरनिलेन स्वनवद्वेणुभिः। कीचका वेणवस्ते स्युर्ये स्वनंत्यनिलोद्धता इत्यभिधानात्। आकर्णोंति मेदः प्रभृतीनां विशेषणं बहुव्रीहिः ॥ १६ ॥ अभ्रविहितं मेघेनावृतं। लोकान् जनान्। तपसा तपंतं संतापयंतं विलक्ष्य दृष्ट्वा हसन् अयोग्ये महाप्रयत्न इति हसन् हंसवाहनश्चतुर्मुखस्तं प्राह। मुनिषु तपस्त्वप्राप्तौ लोकताप एतत्तपसा कुत इति चोद्यं निराकर्तुं तात्पर्यं ॥ सकामं तु तपःक्रूरं लोकानां भयकृद्भवेत्। इतरच्छांतये सर्वलोकानां भवति ध्रुवमिति प्रकाशिकायां ॥ १७ ॥ प्राहेत्युक्तोक्तिप्रकारमाह ॥ ब्रह्मोवाचेति। अत्र ब्रह्म शब्देन हिरण्यगर्भ इति कथं निर्णयः। हंसवाहन शब्दस्य विष्णुपद्मासनावुक्तौ पंडितैर्हंसवाहनावित्यभिधानेन विष्णुसाधारण्यात्। हिरण्यगर्भपदप्राप्तिकामं प्रति तस्यैव वरदत्वायोगाच्चेति चेन्न। तस्यैव तपसाऽऽराधितत्वेन वरदत्वोपपत्तेरित्याशयेन तात्पर्यं ॥ ब्रह्माणमभजद्ब्रह्म पदार्थं स हिरण्यक इति स्कांदे। मूले काश्यप कश्यपपुत्र ॥ १८ ॥ हृत्सारं हृदयदार्ढ्यं ॥ १९ ॥ ब्रह्माणमिति प्रमाणेऽपि हिरण्यगर्भनिर्णायकांतराभावाद्ब्रह्मपदस्य पूर्ववच्छंकावकुंठितत्वेनानिर्णायकत्वात्कथमियं योजनेति विचार्य। ब्रह्माणं बृहस्पतिमित्यर्थोपपत्तेः। चतुर्मुखस्याराधितत्वानिश्चायकत्वाच्च। वस्तुतस्तु सकामतपः क्रूरमस्त्विदं निष्काममेव किं न स्यादित्यत आहेति पूर्वसंगतत्वेन योज्यं। अथवा। हिरण्यकशिपुतपसो ब्रह्मपदेतरफलानुद्देशितत्वात्। ब्रह्मणः कोपजननायैव देवैर्ब्रह्मपदोद्देशित्वमुक्तं। वस्तुतस्तु न तथा तस्य काम इति मूलाशयकल्पनोपपत्तेः। तदुद्देशित्वस्याप्यभावान्निष्कामत्वमेव तस्य संतापकत्वोक्त्या निष्कामतपोऽपि संतापकरी प्रकाशिका वचने शांतय इत्यस्य नाशायेत्यर्थोपपत्तेः। अत एव पूर्ववाक्यान्यपि तात्पर्यकृद्भिर्न वक्तव्यानीति मंदाशंकानिरासायाहेत्यवतरणमिदं भाति। निरंबु जलरहितं यथा भवति तथा ॥२०॥ अनेन तेन तपसा विजितो वशीकृतः। न तु पराजितः। अत्र तात्पर्यं ॥ जितो वशीकृतः। पराभूतं वशस्थं च जितमित्युच्यते बुधैरिति शब्दनिर्णये ॥ २१ ॥ ते तुभ्यं। अमर्त्यस्य मम ॥ २२ ॥ आदौ भवो यस्य स आदिभवो ब्रह्मा। औक्षदासिंचत्। अमोघराधसाऽव्यर्थसिद्धिमता ॥ २३ ॥ वज्रसंहननो वज्रवद्दृढः। एधस इंधनात् ॥ २४ ॥ अंबरे स्थितमिति योजना ॥२५॥ प्रव्हः प्रवणः। अगृणादस्तौत् ॥ २६ ॥ स्तौति ॥ कल्पांत इति। महाकल्पांते कालसृष्टेन तत्कालव्यक्तेन। अंधेनांधयतीत्यंधं

स्वरोचिषा स्वतेजसा । तमो व्यक्तीकृत्याभिव्यनगाभिव्यक्तमकरोत् । तथाऽऽत्मना स्वेन कार्योन्मुखीकृतया त्रिवृता जडप्रकृत्योपादानभूतयेदं महत्तत्त्वादिकं सृजत्यवति लुंपति च । यत्तदोर्नित्यसंबंधात्तस्मै रजःसत्त्वतमोधाम्ने । सृष्ट्यादिक्रमानुसारेणेत्थमुक्तिः । पराय च स्वतंत्राय महते पूज्याय नम इति श्लोकद्वये इति योजना । अत्र चतुर्मुखेऽसंभाव्यमाना गुणाश्चतुर्मुखनियामके भगवति । इतरे चतुर्मुखे योज्याः । हरिस्तुतिं विना देवतांतरस्तुतेः प्रायेण मिश्रस्तुतित्वात् । प्रकृतेस्त्रिभिर्गुणैर्वर्तत इति व्युत्पत्त्या त्रिवृच्छब्दवाच्यत्वं । एतदभिप्रेत्य तात्पर्यकृदाह ॥ प्रायस्तु स्तुतिशब्देषु मिश्रा वाचो हरिं विना । केचिज्जीवगुणास्तत्र तन्नियंतुर्हरेः परे । एकस्थानैककार्यत्वाद्विष्णोः प्राधान्यतस्तथा । जीवस्य तदधीनत्वान्न भिन्नाधिकृतं वच इति ब्रह्मतर्के ॥ हरिं विना हरिस्तुतिं विना । मिश्रत्वं स्पष्टयति ॥ केचिदिति । परेऽन्ये कुत एव मिश्रत्वमित्यत आह ॥ एकेति । एकदेहस्थितत्वाद्वरदानादिलक्षणैककार्यकरत्वात् । एककार्यकरत्वेऽप्याराधितस्य देवतांतरस्यैव स्तुतिः किं न स्यादित्यत आह ॥ विष्णोरिति । वचः स्तुतिवचः । भिन्नाधिकृतं प्रत्येकमात्रविषयं न । त्रिवृच्छब्देति तात्पर्यं त्रिवृता प्रकृत्येति ॥ २७ ॥ २८ ॥ आद्याय बीजाय कारणाय । ज्ञानविज्ञानमूर्तये सामान्यविशेषज्ञानोपदेष्टृशरीराय । प्राणेंद्रियमनोबुद्धिलक्षणैर्विकारैः । ब्रह्मांडांतर्व्यक्तिं शरीरमीयुषे । प्राप्तायेति योजना ॥ २९ ॥ मुख्येन प्राणेन सह । तस्य चतुर्मुखसमत्वात् । ईशितृकोटिप्रवेशः । न त्वीशितव्यकोटौ । हरिपरत्वे त्वीशितव्यत्वमेव । जगतो जंगमस्य तस्थुषः स्थावरस्य त्वमीशिषे ईश्वराकाररूपं यद्ब्रह्मांडं तस्येश इत्यर्थः । अत एव तात्पर्यं ॥ प्राणेन सहेति ॥ ३० ॥ मूले । तन्वा भगवतः प्रतिमास्थानीयया त्रय्या वेदत्रयेण । स त्रिभिर्विधीयतेति श्रुतेः । चतुर्होतृकविद्यया च ब्रह्महोतृअध्वर्याग्नीध्रलक्षणर्त्विक्चतुष्टयव्यापारप्रतिपादिकया कल्पसूत्रादिविद्यया च त्वं सप्ततंतून् क्रतून् वितनोषि । आत्मवतां ब्रह्मज्ञानिनां आत्मा प्रेष्ठः । आत्मा प्रेष्ठे स्वरूपे च जीवज्ञातरि केशवे । वायौ देहे स्वयं स्वांते नवसु प्रोच्यते बुधैरित्युक्तेः । अनादिरादिशून्याय । अनंतपारोऽनंतान्संसारान्पारयतीत्यनंतपारः । अव्यये हरावात्मा मनो यस्याव्ययात्मा । अत्र तात्पर्यं ॥ सप्ततंतून् क्रतूनिति ॥ सप्तक्रतूनित्यपपाठः । यज्ञः सत्रोऽध्वरो यागः सप्ततंतुर्मखः क्रतुरिति कोशात् ॥ ३१ ॥ अनिमिषो जाग्रत्स्वभावः कालः कालनियामकः कूटस्थो निर्विकारः । आत्मा व्याप्तः परमेष्ठी सर्वोत्तमः । न जायत इत्यजः । महान्परममहान् । महत्तत्वमानी वा ।

जीवलोकस्य जीवजातस्य जीवः प्राणधारकः। जीवप्राणधारण इति धातोः। त्वं लवाद्यवयवैर्जनानामायुः क्षिणोषीति योजना। अत्र चतुर्मुखेऽसंभवंति विशेषणानि तन्नियंतरि हरौ योज्यानि। अत्र तात्पर्यं॥ जीवानां प्राणधारक इति॥ ३२॥ मूले। परमतीतं अपरमनागतं वर्तमानमपि। अनेजत्स्थावरं। एजत् जंगमं च। किंचित्सर्वं त्वया व्याप्यत्वात्त्वत्तो व्यतिरिक्तं नास्ति। सर्वा विद्याः कलाश्च विद्याकलाः। विद्या महाविद्याः कलाः कलाविद्यास्ते तनवस्तन्वाश्रिताः। तात्स्थ्यात्तच्छब्दं। हिरण्यगर्भोऽसि हिरण्यात्मकं ब्रह्मांडं गर्भे उदरे यस्य सोऽसि। बृहद्गुणपूर्णं वस्त्वसि। त्रिपृष्ठस्तिसृभ्योऽवस्थाभ्यः पृष्ठोऽतिक्रांतः। तुरीय इति यावत्। एतादृशोऽसीति योजना। अत्र विष्णुगुणैर्ब्रह्मणो स्तोत्रं तद्गतविष्णुविवक्षयेति ज्ञातव्यं। एतदेवाभिप्रेत्य तात्पर्यं॥ परावरेषु यस्मात्त्वं व्याप्तो विष्णुः सनातनः। तस्मान्न व्यतिरिक्तं त्वदित्याहुर्वेदवेदिन इति पाद्मे। विद्याश्च कलाश्च विद्याकलाः। महाविद्याः कलाश्चैव त्वत्तनावाश्रिता यतः। विद्यातनुरिति प्राहुरतस्त्वां तत्त्ववेदिन इति च। त्रिपृष्ठस्तुरीयः। ब्रह्मणोऽप्याधिकं विष्णुं जानन्नपि हिरण्यकः। ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णुविवक्षयेति च॥ ३३॥ मूले। हे विभो समर्थ। हिरण्यगर्भः पुराणपुरुष आदिपुरुष आत्मा स्वामी अव्ययस्त्वं। येन यदधिष्ठायेंद्रियप्राणमनसां गुणान्विषयान् भुंक्ष्ये। इदं ब्रह्मांडाख्यं व्यक्तं स्पष्टं तव स्थूलशरीरं शरीरस्थानापन्नं। ब्रह्मणो विराड्शरीरत्वात्। इति योजना॥ ३४॥ अनंताव्यक्तरूपेणासंख्याता-तींद्रियरूपेणेदमखिलं जगत्ततं व्याप्तं तस्मै चिदचिन्नियामकशक्तियुताय भगवते नम इति योजना। भगवच्छब्देन हरिग्रहणेऽखिल शब्देन निरुपचरितं सर्वं हिरण्यगर्भग्रहणे यथोचितं ग्राह्यं॥ ३५॥ वरान्वृणोति॥ यदि दास्यसीत्यादि चतुःश्लोक्या। योजना तु स्फुटा। त्वद्विसृष्टेभ्यस्त्वन्निमित्तेभ्यः॥ ३६॥ नांतरिति नञ्। आयुधैरित्यंतं प्रत्येकं संबध्यते। अपि च शब्दौ समुच्चये। अन्यस्मात् विभक्तिवचनव्यत्ययः। देहावयवभिन्नैरायुधैः खड्गादिभिः॥ ३७॥ व्यसुभिर्वा व्यसुभिः शिलादिभिः। असुमद्भिः शत्रुनियुक्तैः श्वानादिभिः। वा शब्दान्नञनुवर्तते। सुरासुरमहोरगैरित्यत्रापि वा शब्देन नञनुवर्तते। मृत्युरिति सर्वत्रान्वेति। भवोदिति शेषः॥ ३८॥ यो महिमा कर्हिचित्कदाचिदपि न नरिष्यति न नश्यति तं महिमानमित्यन्वयः। द्वितीयांतानां देहीं-

॥ हरिः ॐ ॥ अत्र दैत्यादीनां वरलब्धमैश्वर्यमनित्यं । योग्येष्वेव भगवदनुग्रह इत्येतत्कतिपयैरध्यायैर्निरूप्यते । तत्रादौ हिरण्यकशिपुचर्यामाह ॥ एवं वृत इति । श्लोकाश्च स्फुटयोजना इति तत्र तत्र पदार्थ एव निरूप्यते । अथ वरदानानंतरं । तस्य हिरण्यकशिपोः ॥ १ ॥ तात वत्स । यान्मम सकाशाद्वृणीषे इमे यदपि यद्यपि दुर्लभास्तथाऽपि वितरामीति योजना ॥ २ ॥ अमोघानुग्रहोऽव्यर्थानुग्रहः ॥ ३ ॥ भ्रातुर्हिरण्याक्षस्य वधं वराहकृतं । भगवति द्वेषमकरोत् । भक्तिमतोऽपि द्वेषः परावेशात् । तदुक्तं तात्पर्ये ॥ स्वतो भक्ता हिरण्याद्याः परावेशाद्धरौ द्विष इति ॥ ४ ॥ गंधर्वगरुडा गंधर्वश्रेष्ठाः । यद्वा । गरुडजातीयाः पक्षिणः ॥ ५ ॥ विद्याध्रान् विद्याधरान् । पितृपतीन् चिरपितॄन् ॥ ६ ॥ सर्वसत्त्वपतीन् सिंहादीन् । बलश्रेष्ठान्वा । विश्वजित्सर्वजित् ॥ ७ ॥ त्रिविष्टपं वर्णयति ॥ देवोद्यानेत्यादिना । अध्यास्ते स्म अध्यासांचक्रे । साक्षात्प्रत्यक्षं । तुरीयं वा । विष्टपत्रयात् । साक्षात्प्रत्यक्षतुर्ययोरित्यभिधानात् ॥८॥ अखिलर्द्धिमत् सर्वसंपत्तिमत् । भुवः । प्रवालश्रेणिका इंद्रनीलमध्य इत्यर्थः ॥ ९ ॥ वितानान्युपरिधानवस्त्राणि ॥ १० ॥ शब्दयंत्यः संचारेण ध्वनिं कारयंत्यः ॥११॥ सुदतीः सुदत्यः । सुरादिभिरित्यतद्गुणसंविज्ञानो बहुव्रीहिः । गंधर्वादिभिरित्यर्थः । अन्यथा त्रिभिर्विनेति वक्ष्यमाणविरोधात् । वस्तुतस्तु । अयज्ञभुजोऽपि देवाः सुरशब्देनोच्यंते । तत्पदं सुरपदं । तात्पर्ये तथा वक्ष्यमाणत्वात् ॥ १२ ॥ अंगेति युधिष्ठिरसंबोधनं । तपोयोगबलौजसां पदमाश्रयं तमित्यन्वयः । त्रिभिर्विना वसुरुद्रादित्यभेदेन त्रिविधैः सुरैर्विना । मरुदादीनां तत्रैवांतर्भावात् । नाधिक्यशंका कार्या । तदुक्तं तात्पर्ये ॥ आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः । मरुतश्चैव विश्वे च साध्याश्चैव तद्गताः । अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृता इति स्कांदे ॥ मरुदादयः क्रमेण तद्गताः । आदित्यांतर्गताः मानुषाश्चत्वारो वर्णभेदेनोक्तरीत्या देवानां त्रिशब्देन ग्रहणसंभवेऽपि । सुरादिभिरभिवंद्यांघ्रियुगयुक्तत्वात् । त्रि शब्दो ब्रह्मविष्णुरुद्रपरः किं न स्यात् । देवानां हिरण्यकशिपुसेवकत्वाभावस्य स्पष्टमनुक्तेरित्यतस्तात्पर्यं ॥ उपायनं ददुः सर्वे विना देवान्हिरण्यक इति ॥ विषयसप्तमी । चतुर्थ्यर्थे वा । तर्हि पूर्वोत्तरविरोध इत्यतस्तात्पर्यं ॥ अयज्ञभागेष्वपि तु सुरशब्दः प्रयुज्यते । यज्ञभागभुजस्त्वेव त्रय इत्यभिशब्दिता इति चोति ॥१३॥ ओजसा स्वसामर्थ्येन । महेंद्रासनं स्थितमास्थितं ॥ १४ ॥ इंद्रादिपदत्यक्तमंत्रैर्दीयमानान्हविर्भागान्स्वयमेवेज्यमान उद्देश्यः सन्

अग्रहीदिति योजना ॥ १५ ॥ अकृष्टपच्योल्लेखमंतरेण सस्यादिपरिपाकोपेता मही कामदुघेच्छानुसारेण वर्षणाद्युपेता । नानाश्चर्यपदं नानाग्रहतारकाद्युपेतं ॥ १६ ॥ क्षारेक्ष्वादयो रत्नाकराः समुद्रास्तत्पत्न्यो नद्यश्च रत्नानि । ऊर्मिभिस्तरंगैरूहुस्तीरं प्रापयामासुः ॥ १७ ॥ आक्रीडं क्रीडास्थानं । गुणान्पुष्पादिसंपत्तीरूहुरित्यन्वयः । लोकपालानामिंद्रादीनां । पृथग्गुणान्वर्षणपाचनादीन् । एक एव दधार ॥ १८ ॥ यथोपजोषं यथाकामं ॥ १९ ॥ ब्रह्मशापं सनकादिशापं ॥ २० ॥ संविग्ना भीताः ॥ २१ ॥ काष्ठायै तारतम्यांतगायै । यत्र यः सत् यत्पदं ॥ २२ ॥ संयतात्मनो निग्रहीतमनस्काः ॥ २३ ॥ यतोऽभयं यस्मादभयं लोकस्य ॥ २४ ॥ अरूपाऽशरीरिणी ॥ २५ ॥ सर्वश्रेयोपपत्तये सर्वश्रेयोलाभाय । अकारांतोऽपि श्रेयः शब्दोऽस्ति । टा लोपस्यासिद्धत्वं वा नाश्रितं ॥ २६ ॥ दैतेयापसदस्य दैतेयक्षुल्लकस्य ॥ २७ ॥ स इति तच्छब्दश्रवणाद्यस्येत्यध्याहारः । आशु क्षिप्रं ॥ २८ ॥ प्रह्लादाय यदा द्रुह्येत्तदा वरोर्जितमपि हनिष्य इति । अत्र प्रह्लादद्रोहं निमित्तीकृत्य हननप्रतिज्ञया देवापेक्षया प्रह्लादे प्रीतिविशेष इति न मंतव्यं । देवानां सर्वदाप्रसिद्धत्वेन प्रह्लादादीनां देवाद्यपेक्षयाऽल्पभक्तानां यशःप्राप्त्यर्थमित्थं प्रतिज्ञोपपत्तेः । एतदुक्तं तात्पर्ये ॥ यत्र क्व च यशस्थानमन्येषामिति केशवः । सर्वत्रापि तु देवानामित्यन्यान्पूजयेत्क्वचिदिति च ॥ स्थान शब्दो निगूहस्थानमित्यत्रेव निमित्तवाची । यत्र क्वचित् यदा कदाचित् । सर्वत्रापि सर्वदाऽपि । यशः स्थानमित्यनुवर्तते । तथा च देवानां सर्वदा यशोनिमित्तं भवामीति हेतोरन्येषामपि कदाचिद्यशःस्थानं भविष्यामीत्यभिप्रायेण केशवोऽन्यानपि प्रह्लादांबरीषादीन्कदाचिदपूजयन्मानयामासेत्यर्थः ॥ २९ ॥ गतोद्वेगा गतभयाः । हतं मेनिरे । एष्यत्तु निश्चितं यत्तु तदतीतत्वेन भण्यत इत्युक्तेः ॥ ३० ॥ तेषां मध्ये महदुपासको महतः परमात्मन उपासकः । सत्यसंधः सत्यप्रतिज्ञः ॥ ३१ ॥ सर्वभूतानां सज्जनानां मध्ये एको मुख्य आत्मवत्प्रियः सुहृत्तमः प्रियः प्रीतिविषयः सुहृत्तमश्च । उत्तमहीनसमेषु वृत्तिप्रकारमाह ॥ दासवदित्यादिना ॥ ३२ ॥ विद्यादिनिमित्तैः प्राप्तगर्वस्तंभादिदोषवर्जित इति विद्येत्यादेरर्थः ॥ ३३ ॥ व्यसनेषु सत्सु नोद्विग्नचित्तः । श्रुतादिषु गुणेषु शब्दादिविषयेषु निस्पृहः । यतोऽवस्तुदृक् अनित्यबुद्धिः । दांतेत्यादि निगृहीतेंद्रियप्राणशरीरमनाः ।

अपि नाभिधीयंते नाभिधातुं शक्यंते । यथा भगवानीश्वर इति दृष्टांतीकरणेऽपि न तत्साम्यं ज्ञेयं । सर्वथाऽसंभवात् । किंतु किंचित्साम्यं । अत एवोक्तं तात्पर्ये ॥ अन्येषां हरिसाम्यं तु किंचित्साम्यमुदीरितं । सम्यक्साम्यं तु मत्स्यादेरिति शास्त्रस्य निर्णय इति ॥ ३५ ॥ रिपवोऽपि सुराः साधुगाथाः सज्जनविषयकगाथां कुर्वंतो यं प्रति मानं दृष्टांतं कुर्वंति । किमुतान्ये भवादृशा इति ॥ ३६ ॥ गुणैः । अलं कथितैरिति शेषः ॥ ३७ ॥ न्यस्तेत्यादेर्निरस्तक्रीडासाधनक इत्यर्थः । जडवज्जडभरतवत् । विषयासक्तमूढवद्वा । कृष्णेत्यादेर्नारायणाख्यग्राहगृहीतमना इत्यर्थः ॥ ३८ ॥ एतान्यासनादीनि ॥ ३९ ॥ रुदति रोदिति । अनेन श्लोकत्रयेण सार्धेन भक्तलक्षणं सूचितं ॥ ४० ॥ तन्मयस्तदासक्तः ॥ ४१ ॥ स्पर्शो विषयः । अस्पंदप्राणोऽचंचल-श्वासः ॥ ४२ ॥ अकिंचनसंगलब्धया नारदादिसत्सहवासप्राप्तया ॥ ४३ ॥ अघमपराधं ॥ ४४ ॥ तव सकाशात् । आत्म-जायेत्याद्युक्तिरपकरणायोग्यत्वद्योतनाय ॥ ४५ ॥ उपालभंते वंचयंति । भयं जनयंतीति यावत् । अपरे शत्रवः ॥ ४६ ॥ विधम परिहर । पितुः पित्रा ॥ ४७ ॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां चतुर्थोऽध्यायः ॥ ७—४ ॥ ॥

॥ हरिः ॐ ॥ हिरण्यकशिपुप्रह्लादसंवादच्छलेन भक्तिस्वरूपं हरेर्निरतिशयस्वातंत्र्यं च निरूपयत्यस्मिन्नध्याये । काव्यो भार्गवः । दैत्यराजगृहांतिके । पौरोहित्येन वासं चक्रतुः ॥ १ ॥ प्रापितं शिष्यत्वेन ॥ २ ॥ तत्र तत् । शुश्रुवे एव न पपाठ । नाभ्यासं चकार । स्वरूपासद्ग्रहाश्रयं स्वरूपेणासदसाधुग्रहः पक्षः । वैष्णवसिद्धांतविरुद्ध इति यावत् । स आश्रयो यस्य तत् । मनसा न साधु मेन इति योजना ॥ ३ ॥ यत्साधु मन्ये तत्कथ्यतां ॥ ४ ॥ स्वेन मतं साध्वाह ॥ तदिति । हे असुरवर्य । असद्ग्रहाद्दुर्विषयाभिनिवेशात्सदा समुद्विग्नधियां नित्यं चंचलमनसामात्मपातं स्वस्य निरयपातकारणमंधकूपं प्रकाशरहितकूपस्थाना-पन्नं गृहं हित्वा वनं सज्जनसंगलक्षणं गतो हरिमाश्रयेदिति । यत्तत्साधु मन्य इति योजना ॥ ५ ॥ परपक्षसमीहिताः शत्रुपक्षनिष्ठा गिरः ॥ ६ ॥ विष्णुपक्षप्रतिच्छन्नैर्वस्तुतो विष्णुपक्षैः प्रतिच्छन्नैर्गूढैरस्य धीर्यथा न भिद्येत तथाऽयं बालो विधार्यतां विविक्ततया धार्यतामिति योजना ॥ ७ ॥ प्रह्लादज्ञानं स्वारसिकमाहितं वेति ज्ञातुं सामभिः समपृच्छत् ॥ ८ ॥ बालान् अति अतिक्रम्यैषबुद्धिर्विपर्ययः । तुभ्यं तव कुतोऽभूदिति योजना ॥ ९ ॥ गुरूणां समीपे । कुलनंदन दैत्यकुलनंदन ॥ १० ॥

उत्तरं वक्तुं मंगलमाचरति ॥ पर इति । विमोहितधियामज्ञानावृतमनसां पुंसां तत्र विषये परो देवतादिः स्वतंत्रोऽत्र विषये स्वात्माहं स्वतंत्र इति दृष्टोऽनुभवसिद्धोऽसद्ग्रहो दुरभिमानः। यन्मायया यस्य परमात्मनो मायया मोहिन्या कृतः। तस्मै भगवते नम इति योजना ॥ ११ ॥ उक्तमेव विशदयति ॥ स यदेति। स परमात्मा पुंसां यदा वक्ष्यमाणभ्रांतेरनुगतोऽनुकूलस्तदा एषो ब्रह्मादिर्देवोऽन्यः स्वतंत्रः। तथाऽहमन्यः स्वतंत्र इत्याकारिका देहगता लिंगदेहगता। मनोगतेति यावत्। असती भ्रांतिरूपा पशुबुद्धिः पशुवदसद्बुद्धिर्विभिद्यते उत्पद्यते। तथाहि श्रुतिः। अथ योऽन्यां देवतामुपास्ते। अन्योऽसावन्योऽहमस्मीति। न स वेद यथा पशुरिति। असौ ब्रह्मादिरन्यः स्वतंत्रोऽहमन्यः स्वतंत्र इत्यर्थः। न चेयं श्रुतिर्जीवस्य परमात्मना स्वरूपतो निषेधति तथैव प्रतीतेरिति वाच्यं। य आत्मानमंतरो यमयतीति जीवनियामकत्वेनांतः शब्देन च स्वरूपतो भेदस्यैवोक्त्या तद्व्याघातापत्तेः। व्याख्याता चैषा श्रुतिर्बृहद्भाष्ये। चर्चिता च न्यायामृते। तदेतत्सर्वमभिप्रेत्य तात्पर्यं ॥ स्वातंत्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियं। अन्योऽसावन्योऽहमिति पश्यन्नज्ञ इति स्म ह। आत्मानमंतर्यमयेदिति भेदं स्वरूपतः। आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु। स्वरूपसत्ताकर्तृत्वं भोगोमोक्षस्तथैव च। मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदेति ब्रह्मतर्के ॥ इयं श्रुतिः केत्यतोऽर्थतोऽनुवदाति ॥ अन्योऽसावित्यादिनेति स्म हेत्यंतेन। प्रतीतेः स्वरूपभेदनिषेध एवार्थः किं न स्यादित्यत आह ॥ आत्मानमिति। तत्तस्माद्ब्रह्मणः परब्रह्मणस्तधीनत्वमेव स्फुटयति ॥ सर्वं विष्णोर्वश इति। किं तत्सर्वमित्यत उक्तं ॥ स्वरूपसत्ताकर्तृत्वमित्यादि ॥ १२ ॥ ब्रह्मणो दुर्विज्ञेयत्वं बुद्धिरेषा पराकृतोताहो ते स्वत इत्यस्योत्तरं चाह ॥ स एष इति। स एष आत्मा परमात्मा। स्वपरेत्यविभक्तिको निर्देशः। सुब् लोपो वा। स्वपरस्वातंत्र्यविषयिण्यबुद्धिर्विपरीतबुद्धिर्येषां तैर्दुरन्वयानुक्रमणो दुरवगममाहात्म्यो निरुच्यते निरूप्यते। यद्वर्त्मनि यत्सरूपैर्वेदवादिनो वेदार्थज्ञानकुशला ब्रह्मादयः। अतद्गुणसंविज्ञानो बहुव्रीहिः। रुद्रादय इत्यर्थः। एष आत्मा भिनत्ति मे मतिमिति योजना ॥ १३ ॥ एतदर्थं सदृष्टांतमाह ॥ यथेति। ब्रह्मन् शंडामर्क। आकर्षसन्निधावयस्कांतसन्निधौ। स्वयं भ्राम्यति स्वतो गच्छति। यदृच्छया तदिच्छया भिद्यते तद्विषयीकरणशक्तीक्रियते। अयोगतिवच्चेतोगतिरपि नैसर्गीकीति भावः ॥ १४ ॥ उपरराामोपरतवान्। सुदीन इत्यनेन वाचाशिक्षणसामर्थ्यं राजसेवक इत्यनेन

प्रह्लादोक्तं सम्यगिति जानतोऽपि राजसेवनाय शिक्षकत्वमिति सूचितं ॥ १५ ॥ अस्य वाचा शिक्षणानर्हस्य चतुर्थो दमो दंड उदितो विहितः ॥ १५ ॥ दैतेयचंदनवनमूलोन्मूलकपरशुस्थानापन्नस्य विष्णोर्हरेर्नालायितोऽवष्टंभकदंडायितः । एतमवष्टभ्य हरिः छिनत्तीति भावः ॥ १७ ॥ त्रिवर्गस्य धर्मार्थकामलक्षणपुरुषार्थत्रयस्य ॥ १८ ॥ ज्ञातज्ञेयचतुष्टयं पुरुषार्थचतुष्टयं । यद्यपि त्रिवर्गस्येत्युक्तं । तथाऽपि ज्ञात्वा शिवं शांतिमत्यंतमेतीत्यादेरापातार्थप्रतीतिमालंब्य मोक्षस्योपपादनं चोपलक्षणीयं । यद्वा । ज्ञेयचतुष्टयं सामाद्युपायचतुष्टयं । मातृमृष्टं मात्रा मृष्टं । निर्मलं स्नापितमलंकृतं भूषितं ॥ १९ ॥ आशिषा प्रतिनंद्य संतोष्य । निर्वृतिमानंदं ॥ २० ॥ मूर्धन्यवघ्रायाशिंचत् । मूर्धानमिति विभक्तिविपरिणामेनान्वेति । आयुष्मान्निति संबोधनं । आशिक्षत् । अनुज्ञात्तेतोपि व्यत्ययेन परस्मै पदं । विद्यां मा दत्तेत्यर्थः ॥ २२ ॥ स्वधीतमनुवाक्ति ॥ श्रवणमित्यादिना । विष्णोरिति सर्वत्रान्वेति । श्रवणं श्रोत्रेण माहात्म्यस्य कीर्तनं नाम्ना वाचा मनसा स्मरणं पादसेवनं हस्ताभ्यां । एतच्च भगवत्प्रतिमाभूतभक्तद्वारा । अर्चनं तुलस्यादिभिर्वंदनमभिवादनं । स्तुतिर्वा । दास्यं दासोऽहमित्यनुसंधानं सख्यमत्यंतस्नेह आत्मनिवेदनमात्मनि सर्वदा नियामकत्वेनस्थितत्वज्ञानं । ननु दासोऽहमिति समर्पणं दास्यमिति पुनरुक्तेरत एवोक्तं तात्पर्ये ॥ आत्मस्थत्वेन वेदनमात्मनिवेदनं । मुक्तस्यापि मर्मांतस्थो नियंतैव हरिः सदा । इति ज्ञानं समुद्दिष्टं सम्यगात्मनिवेदनमिति च ॥ २३ ॥ मूले । इत्युक्तप्रकारेण नवलक्षणा नवप्रकारा भक्तिर्भगवति विष्णौ । सप्तम्यर्थविवरणमर्पितेति । तस्यार्थो विषयिका क्रियत इति । येनाधीतेन नवलक्षणा भक्तिर्विष्णुविषयिका भवति । तदधीतं साधु इति मूलार्थः । येनाधीतेन निमित्तेन पुंसाऽर्पिता क्रियते तदधीनमुत्तमं मन्ये इति वा योजना ॥ २४ ॥ प्रस्फुरिताधरश्चंचलीकृताधरोष्ठः ॥ २५ ॥ एतद्वृत्तं किमित्यत आह ॥ विपक्षमिति । मामनादृत्य विपक्षं श्र यता त्वया बालोऽसारं ग्राहित इति यदेतदिति योजना ॥ २६ ॥ संति स्वामिद्रोहिण इत्याह ॥ लोक इति । तेषां दुर्मैत्रादीनाम घं मनसि विद्यमानं गूढद्वेषः पातकिनां रोग इव । काले कालविशेषे उदेतीति योजना ॥ २७ ॥ हे राजन् । अस्य प्रह्लादस्येयं विष्णुविषयिणी मतिर्नैसर्गिकी स्वाभाविकी । अतो मयि मन्युं नियच्छ । मामनादृत्येत्युक्तं । तदा तत्र मतेर्नैसर्गिकत्वे त्वदनादरणनिमित्तभूतोऽहंकारलक्षणो मान आत्मनो मम क । तथा च नासंगतिरत एवोक्तं तात्पर्ये क तदात्ममानो ममेति ॥ २८ ॥

इयं मतिर्गुरुमुखी गुरुमुखादागता न चेत्तर्हि कुत आगतेति योजना ॥ २९ ॥ पुनः पुनश्चर्वितचर्वणानां भुक्तानेव विषयान् भुंजानानां । अदांतैरनिग्रहीतेंद्रियैः । कृताभिर्गोभिर्नीतिशास्त्रादिवाग्भिः । तमिस्रं संसारं विशतां गृहव्रतानां । स्वतः परतो वेत्येवं मिथः परस्परं । कृष्णे नारायणे मतिर्नाभिपद्येदिति योजना ॥ ३० ॥ तदेव स्पष्टयति ॥ न त इति । ये दुराशयाः स्वतो दुष्टमनस्का बहिरर्थभावा आपातप्रतीतार्थज्ञानवंतो गुरुभिरपि तादृशैरंधैरुपनीयमाना अंधा यथा तथोपनीयमाना उरुदाम्नि स्वर्गादि-लक्षणफलइंद्रादिलक्षणदेवताब्राह्मणादिलक्षणाधिकारिनामलक्षणदामवत्यां । वाचि वेदलक्षणायामीशतंत्यां भगवदीयप्रतिबंध-कतंत्यां बद्धास्ते स्वार्थगतिं स्वपुरुषार्थप्रापकं विष्णुं न विदुरिति योजना । विषयाभिलाषवतां विष्णुज्ञानं न जायत इति भावः ॥ ३१ ॥ भगवदेकांतभक्तपादसेवनं विना गृहस्थानां भगवति मतिर्न जायत इत्याह ॥ नैषामिति । निष्किंचनानां विषयानपे-क्षाणां महीयसां महात्मनां पादरजोभिषेकं पादरजसां शिरसा धारणं यावन्न वृणीत वृणीरन् । तावदेषां गृहस्थानां मतिः । अनर्थापगमः संसारनिवृत्तिर्यदर्थः । परस्य प्रयोजनं तं उरुक्रमांघ्रिं उरुक्रमस्य विष्णोरंघ्रिं न स्पृशतीति योजना ॥ ३२ ॥ अंधी-कृतात्मा जडीकृतमनाः । स्वोत्संगात्स्वांकात् ॥ ३३ ॥ असहनप्रयुक्तकोपाविष्ट इत्यमर्षेत्यादेरर्थः । कषायीभूतलोचनो रक्तनेत्रः ॥ ३४ ॥ यः प्रह्लादो मे भ्रातृहा भ्रातृघ्नः स्वस्य पितृव्यहंतुर्विष्णोः पादौ स्वान् सुहृदो हित्वाऽर्चति । अयमधमः शोच्य इति योजना ॥ ३५ ॥ अयं विष्णोर्वा साधु सहायं किं करिष्यति । अभक्तत्वादिति भावः । पित्रोः पितृपितृव्ययोः ॥ ३६ ॥ स्वकीयत्वपरकीयत्वे रक्षणहननयोर्न प्रयोजके । किंतु हिताहितत्वे एवेत्याशयेनाह ॥ परोऽपीति । परकीयमप्यपत्यमरण्यस्थमप्यौ-षधं यथा तथा हितकृद्भवति । स्वदेहजोऽपि सुत आमयवदहितः । अनेन स्वकीयत्वपरकीयत्वे हिताहितत्वयोरप्रयोजक इत्युक्तं भवति । यच्चात्मनोऽहितं तदंगमुतांगमपि छिंद्यात् । कुत इत्यत आह ॥ शेषमिति । तद्विसर्जनाच्छेषमंगं जीवति यत इति योजना । यथा सर्पदष्टांगुलिं छित्वा शेषमंगं जीवति । तथा वयमप्येतदपत्यं हत्वा जीवेमेति भावः ॥ ३७ ॥ सुहृल्लिंगधरो मुनेर्दुष्टेंद्रियामिव वस्तुतः शत्रुरयं प्रह्लादः । संभोगादिभिः । सर्वैरुपायैर्हंतव्य इति योजना । संभोगो विषसंप्रक्तान्नभोजनं । शयनं तप्तशिलादौ । आसनं शूलादाविति ज्ञेयं ॥ ३८ ॥ नैर्ऋता राक्षसा भर्त्रा स्वामिना समुद्दिष्टा आज्ञप्ताः ॥ ३९ ॥ भैरवं

नादं भयंकरं नादं ॥ ४० ॥ अनिर्देश्येऽदृश्यत्वादिगुणके परे ब्रह्मणि विषये । युक्तात्मनि प्रयोजितमनस्के प्रह्लादे । तत्क्रिया वधोपायाः । अपुण्यस्य पापिनः । संपदुपाया इवाफला आसन्निति योजना ॥ ४१ ॥ तस्मिन्प्रह्लादविषये वधार्थं कृतप्रयासेऽपहते व्यर्थे सति निर्बंधेनाग्रहेण ॥ ४२ ॥ दंदशूकेंद्रैः सर्पश्रेष्ठैः । अभिचारैर्मरणोद्देश्यकयागादिभिः । अवपातैर्गिरिशृंगादधःपातनैः । मायाभिः शून्याक्रियाभिः । सन्निरोधैर्गंतुमशक्यस्थलवासैः ॥ ४३ ॥ हिमेत्यादेस्तत्प्रक्षेपैरित्यर्थः । पर्वतस्याक्रमणैरारोपणैः । तृतीयांतानां तद्वधोपायमिति पूर्वेण हंतुमित्युत्तरेणान्वयः ॥ ४४ ॥ चिंतां हननविषयां । तद्धननं कर्तुं । बव्हसाधूक्तो बहुनिष्ठुरैर्भर्जितः । असद्धर्मैरसतां चोरादीनां योग्यैः । अजडधीरमंदधीः ॥४५॥ मे सकाशाद्भविष्यदनर्थं । शुनःशेप इवाजीगर्तकृतं विक्रयणं भाविनं वाऽवयवद्वारा यागं न विस्मरति नालोचयति ॥ ४७ ॥ एतद्विरोधेनैतादृशमहानुभावाविरोधेन मे मृत्युः प्रायेण भविता नूनं । वितर्के न वा । पाक्षिक्यभावकोटिः । औशनसावुशनसः शुक्रस्य पुत्रौ । विविक्ते एकांतस्थले ॥ ४८ ॥ भ्रुवो विजृंभणेन त्रस्ताः समस्ता धिष्ण्यपा लोकपाला यस्मिंस्तादृशं जगत्त्रयं । येन त्वयैकेन जितं । तस्य चिंत्यं चिंतनीयं कार्यं न चक्ष्महे न पश्यामः । न च प्रल्हादहननं चिंत्यं । अतः शिशूनामंतःकरणं गुणदोषयोः पदं नित्यस्थानं न वै इति योजना । एषा बुद्धिर्गच्छेदिति भावः ॥ ४९ ॥ यावद्गुरुर्भार्गव आगमिष्यति तावद्भीतो यथा न पलायते वरुणस्य पाशैस्तथा । बद्ध्वा निधेहि । पुंसो वयसा । आर्यसेवया बुद्धिः समीचीना भविष्यतीति योजना ॥ ५० ॥ अनुज्ञायांगीकृत्य ॥ ५१ ॥ आनुपूर्वशः क्रमेण । प्रश्रितेति लुप्तचतुर्थीकं । विनीताय नम्राय चेत्यर्थः ॥ ५२ ॥ त्रिवर्गं धर्मार्थकामविषयं । रागद्वेषादियुक्तो यथा भवति तथोपवर्णितां ॥ ५३ ॥ गृहमेधीयकर्मस्वग्निहोत्रादिकर्मसु पराव्रुत्तोऽध्यापनस्थानात्पराव्रुत्त्योद्युक्तः । कृतक्षणैः कृतावसरैः । स प्रल्हाद उपहूतः । सोचिलोपो चेत्यादपूर्णमिति सुलोपः ॥ ५४ ॥ तान्वयस्यान् । तन्निष्ठां भगवन्निष्ठां ॥ ५५ ॥ द्वंद्वारामेरितेहितै रागद्वेषाद्युक्तोऽध्येता यथा भवति तथेरितैः प्रोक्तैः । वचनैरीहितैः प्रवृत्तिभिश्च ॥ ५६ ॥ तन्न्यस्तेत्यादेः प्रल्हादन्यस्तमनश्चक्षुष्का इत्यर्थः । असुरः प्रल्हादः ॥ ५७ ॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां पंचमोऽध्यायः ॥ ७—५ ॥ ॥

॥ हरिः ॐ ॥ मुकुंदसेवैव बुभूषुभिः संपाद्येत्याशयेन प्रल्हादो बालानुपदिशति ॥ हंतेति । हे अर्भकाः । वो युष्माकं

सर्वतः सर्वप्रकारेण शिवं मंगलं वचः शृणुत । हंतेत्यनुकंपायां । वयस्यान्पश्यत मृतान् । तेन दर्शनेन जातवैराग्याः । क्रीडांधाः संतो मा प्रमाद्यथ भगवद्विषये प्रमादं मा कार्ष्ट ॥१॥ बालाः क्रीडांधा भवंत्येवेत्यत आह ॥ नेति । पुरातना बालाः । मार्कंडेय प्रभृतय आत्मनोऽर्थे स्वश्रेयसे प्रियैषिणस्तत्साधनविचारपरा न क्रीडांधा इति योजना । गुरूक्तं हितसाधनं गृह्णीम एवेत्यत आह ॥गुर्विति । अनर्थे वस्तुतोऽनर्थे त्रिवर्गेऽयमेव पुरुषार्थ इत्यर्थकल्पनं तद्गुरूक्तमपि न ग्राह्यं ॥२॥ अज्ञानानिद्रया सुप्तो यदुक्त्या यस्य गुरोरुक्त्या न प्रबुध्येत ज्ञानलक्षणप्रबोधवान्न भवेत् । तस्य मतं न श्रद्दध्यान्न विश्वस्यात् । सः श्रद्दधानोंऽधो नायको यस्य तादृशोंऽधो यथा ॥३॥ शत्र्वादिलक्षणस्य तेषु कर्तव्यस्य च ज्ञानाय तत्प्रयुक्तसंपाद्विपत्प्राप्तिपरिहारलक्षणप्रयोजनाय च नीतिशास्त्रमभ्यसनीयमित्यत आह ॥ कः शत्रुरिति । आत्मनो मम कः शत्रुरित्यादिनाऽऽक्षेपो भवत्स्वप्येवमेवेति । न वै नीतिशास्त्रैः किं प्रयोजनं स्यात् । संपाद्विपदोः । पद्यते गम्यतेऽनेनेति पदं निमित्तं दैवमेव भगवानेवेति योजना ॥ ४ ॥ नीतिशास्त्रस्यानादरणीयत्वेऽपि स्वर्गसंपदादिहेतुभूतं धर्मशास्त्रमध्येतव्यमित्यत आह ॥ य इति । स्वजने वशः स्वस्वबंधुषु हितः । राजसूयज्योतिष्टोमाद्यनुष्ठानेन तदनुष्ठापनेन च पुनर्मुहुः श्रीलोकयोः स्वाराज्यस्वर्गयोः स्वस्मिन्स्वजनेषु हेतुः स आंध्यवान् । जननमरणमार्गापर्यवसानात् । प्रवृत्तधर्मकामं आत्मानं हिनस्ति च । इष्टापूर्तं मन्यमाना वरिष्ठमित्यादेः । यस्त्वेवं न हि स्यात्स मुक्तांध्यः । जननादिमार्गपर्यवसानदर्शनवान् । सोऽतिदुर्लभ इति योजना । निवृत्तधर्ममेवानुष्ठेयं । इदं च गुरुणोच्यमानं प्रवृत्तधर्मशास्त्रं नाभ्यसनीयमिति भावः ॥५॥ निवृत्तधर्मानुष्ठाता दुर्लभ इत्युक्तत्वात्तदनुष्ठानं कर्तव्यमित्यायातं । तथाऽपि तात्तिर्यगादिजन्मनि भाविमानुषजन्मनि वा । इहाप्यवस्थांतरे वा किं न स्यादित्यत आह ॥ कौमार इति । प्राज्ञो बुद्धिमान् इह वर्तमाने मानुषजन्मनि कौमारे कौमारावस्थायां भगवत्तुष्टिकरान्धर्मान् आचरेत् । अर्थदं वेदाधिकारगुरूपसत्त्यादिद्वारा पुरुषार्थदं । मानुषं जन्म दुर्लभमध्रुवमपि तत्तस्मादिति योजना । तिर्यगादिजन्मनोऽधिकाराद्यसंपादकत्वान्मानुषस्य दुर्लभत्वाद्वर्तमाने जन्मनि कौमारे भगवद्धर्मानाचरेदिति सिद्धं । बाल्ये विद्यां निषेवेत यौवने दारसंग्रहः । स्थाविर्ये मोक्षमातिष्ठेत्सर्वदा धर्ममाचरेदिति स्मृतिस्त्वंततः स्थाविर्ये कर्तव्यत्वार्था न तु बाल्ये निषेधार्था । एतद्वै मुखतोन्नं राद्धं मुखतोस्मा अन्नं राध्यते । यदहरेव विरजेत्तदहरेव प्रव्रजेदित्यादि श्रुतेरिति भावः ॥६॥ निवृत्तधर्मानुष्ठानबुद्धिः कदेत्यत आह ॥ यदेति । यद्यस्मादेष

विष्णुः सर्वभूतानां प्रियादिर्हि तस्मात्पुरुषस्य विष्णोः पादोपसर्पणं कर्तव्यं । तच्च यदा तदा धर्मानुष्ठानबुद्धिरित्यध्याहृत्य योजना ॥ ७ ॥ विषयानुभवद्वारेंद्रियजन्यं सुखं कथं लभ्यत इत्यतो दैवात्प्रारब्धकर्मवशाद्दुःखवत्तदवर्जनीयामित्याह ॥ सुखमिति । योजना तु स्पष्टा ॥८॥ यतः परं केवलमायुर्व्ययस्तत्प्रयासः प्रवृत्तधर्मानुष्ठानक्लेशो न कर्तव्यः । तथा विधः पुरुषः । क्षेमं मुकुंदचरणांबुजं न विंदत इति योजना ॥ ९ ॥ शरीरं पौरुषं बलोपेतं पुष्कलं सर्वेंद्रियोपेतं यावन्न विपद्येतान्यथा न भवेत् । चोऽवधारणे । तावदेव तं विष्णुमाश्रितस्तत इतरेण प्रयोजनाभावादनेन प्रजोजनसद्भावाच्च कुशलः क्षेमाय मोक्षाय यतेत ॥ १० ॥ कौमार एव यतेतेत्युपपादयितुं शतायुष्मतामंगीकृत्यापि यत्नाभावे प्रकारांतरेण व्ययमुपपादयति ॥ पुंस इत्यादिना श्लोकत्रयेण । अजितात्मनोऽजितेंद्रियस्य । निद्रादिजयरहितस्येति यावत् । अंधयतीत्यंधतमः प्रापितः । यद्यस्मात् शेते तत्तस्मादर्धमायुर्निष्फलं याति ॥ ११ ॥ अकल्पस्यासमर्थस्य ॥ १२ ॥ शेषं षष्ठिवर्षात्मकं ॥ १३ ॥ न केवलमुक्तन्यायेनायुर्व्ययमात्रं किं त्वस्माकं ज्ञातीनां श्रेयोविघातायासजन्यं मतिवैषम्यं भगवता कलहलक्षणमतिवैषम्यं चास्तीत्याह ॥ पश्यध्वमिति । संसृतिमनुसृत्येहतां चेष्टमानानामित्यर्थः ॥ १४ ॥ गृहेषु सक्तश्चेन्न कोऽप्यात्मानं विमोचितुमुत्सहेत इत्याह ॥ क इति । स्नेहपाशैः स्नेहलक्षणपाशैः ॥ १५ ॥ प्रवृत्तधर्मो न प्रयोजनमित्युक्त्वाऽर्थोऽपि न प्रयोजनमित्याह ॥ को न्विति । तस्करादिः राजभृत्येन प्रतियोधेन चोरेण हतः प्रेष्ठैः प्राणैर्यमर्थं क्रीणाति तादृशार्थतृष्णां प्राणेभ्योऽपि गरीयसीं को न विसृजेदिति योजना । अर्थे तृष्णा जाता चेत्प्राणानपि विसर्जयतीति न स पुरुषार्थ इतिभावः ॥ १६ ॥ परमपुरुषार्थसाधनवैराग्यपरिपंथित्वात्कामोऽपि न पुरुषार्थ इत्याह ॥ कथमित्यादिना । विषयकामुकः कथं विषयांस्त्यजेतेति वक्ष्यमाणेन योजना । प्रथमांतानि कामुकताविवरणानि । द्वितीयांतानि विषयविवरणानि । अनुकंपितायाः दयाविषयभूतायाः । एकांतोपदेशान्मंत्रान् । कलाक्षराणामव्यक्तमधुराणां । आकर्णने इति शेषः ॥ १७ ॥ प्रत्ता दूरदेशस्थितवरेभ्यो दत्ताः । अच् उपसर्गात्तः । हृद्य्या हृदयहिताः । रुचिरच्छदान् रुचिरपरिच्छदान् । कुल्याः कुलपरंपरया समागता वृत्तीर्जीवनकरीः ॥ १८ ॥ कोशस्थः कोशे विद्यमानकीट इव कर्माणि अशनादीनीहमान औपस्थ्यजैव्ह्यमुपस्थजिव्हाकरणकं कर्म व्यसनाशनादिकमित्यर्थः ॥ १९ ॥ यन् गच्छन् । गतं निजायुर्विहितमर्थं च न बुद्ध्यते । स्वकुटुंब एव रमत इति स्वकुटुंब-

रामः ॥ २० वित्तनिविष्टमनस्कता न केवलं वैराग्यपरिपंथिनी किंतु दुष्कृतसंपादिकाऽपीत्याह ॥ वित्तेष्विति । वित्तेषु नित्याभिनिविष्टचेताः परवित्तहर्तुश्चोरस्य । प्रेत्य नरकलक्षणं । इह ताडनादिलक्षणं दोषं विद्वानप्यजितेंद्रियोऽशांतकामश्च सन् । कुटुंबी तत्परवित्तं हरतीति योजना ॥ २१ ॥ न भगवानस्तीति ज्ञानमात्रं श्रेयःसाधनं किंतु स्वातंत्र्याभिमानपरित्यागसहितमित्याशयेनाह ॥ विद्वानपीति। हे दनुजाः । यः स्वकीयपारक्यविभिन्नभावः स्वस्वातंत्र्यपरस्वातंत्र्याभिमानमोहितमनाः स विद्वानपीत्थं कुटुंबं पुष्णन् स्वलोकाय मोक्षाय न कल्पते । किंतु यथा विमूढस्तथा पुनः पुनः संसृतिलक्षणं तमः प्रपद्यत इति योजना ॥२२॥ स्त्रीजितोऽपि न भवेदित्याह ॥ यत इति। वामदृशामक्षिसर्गो निगडस्तेन बद्धस्तासां विहारे क्रीडामृगो योऽयं । विद्वानपि दीनमात्मानं मोचयितुं यतो न कश्चित्कुत्रचिद्देशे क्वापि कालेनालं समर्थः । अतो न तादृशो भवेदित्यध्याहृतेन योजना ॥ २३ ॥ एवं विषयसंगे बाधकमुक्त्वा विषयसंगपरित्यागेन नारायणशरणगतिं विधत्ते ॥ तत इति । हे दैत्याः । विषयसंगस्योक्तरीत्या दुष्टत्वाद्विषयात्मकेषु दैत्येषु रिपुषु विदूरात्संगं परिहृत्यादिदेवं नारायणमुपेत शरणं गच्छत । अपवर्गहेतुः स नारायणो मुक्तसंगैरिषितः शरणं गत इति योजना ॥ २४ ॥ नारायणस्य दूरस्थत्वाच्छरणागतावपि स्वत्वेनास्मत्स्वीकारस्य संदिग्धत्वादच्युतप्रीणनं बह्वायास इत्यत आह ॥ न हीति । हे असुरात्मजाः । सर्वतः सिद्धत्वाद्व्याप्तत्वात्सर्वभूतानामिह देहे आत्मत्वात्स्वामितया विद्यमानत्वादच्युतं प्रीणयतो बह्वायासो न हीति योजना ॥ २५ ॥ देशांतरे कालांतरे पदार्थांतरे नियामकांतरस्य सत्त्वे कथमस्यैव शरणागतिर्युक्तेत्यत आह ॥ परावरेष्विति । परावरेषु भूतभविष्यद्वर्तमानेषु । उच्चावचेषु वा । ब्रह्मांतःस्थावरादिषु भूतेषु प्राणिषु भौतिकेषु विकारेषु ब्रह्मांडादिषु भूतेष्वाकाशादिषु महत्सु महदहंकारादिषु । गुणेषु सत्त्वादिषु । गुणसाम्ये प्रलये गुणव्यतिकरे सृष्टौ । अव्ययः पर आत्मा भगवानेवेश्वरो हीति योजना ॥ २६ ॥ २७ ॥ व्याप्तस्य परमात्मनोंऽतःस्थित्वा कथं नियामकत्वं युज्यत इत्यत आह ॥ प्रत्यगात्मेति । स्वयं भगवान्यद्यप्यनिर्देश्यः साकल्येन निर्देष्टुमशक्यः । व्याप्त एवेति वा । निर्देष्टुमशक्यश्च । तथाऽपि हि यस्मात्प्रत्यगात्मस्वरूपेणांतर्यामिरूपेण व्याप्यो मूर्तः कालरूपेण व्यापके व्याप्त इति । अचिंत्यैश्वर्येण विशेषेण शक्तिव्यक्तिबलेन विकल्पितो विविधतया स्थितस्तस्माद्व्याप्यव्यापकनिर्देश्योंऽतर्यामीति व्याप्त इति च निर्देष्टुं शक्यो भवतीति योजना ।

एतदेवाभिमेत्य तात्पर्ये ॥ अंतर्यामी मत्यगात्मा व्याप्तः कालो हरिः स्मृत इति चेति ॥ २८ ॥ मूले । एवं विधमाहात्म्यो भगवान्कुतो न दृश्यत इत्यत आह ॥ केवलेति । एतादृशो भगवान् गुणसर्गया गुणव्यक्तीकरणभूतया मायया प्रकृत्या जीवावरणभूतयांऽतर्हितैश्वर्यो जीवं प्रति पिहितैश्वर्य ईयते प्रमाणैः प्रतीयते । अतो नेदृशो दृश्यत इति योजना । एतदभिप्रेत्योक्तं तात्पर्ये ॥ प्रकृत्या तमसा वृतत्वाद्धरेरैश्वर्यं न ज्ञायत इति । तमसा भगवत्ज्ञानप्रतिबंधकया प्रकृत्या जीवावरणेनावृतत्वात्प्रतिबद्धत्वाद्धरेरैश्वर्यं न ज्ञायत इत्यर्थः ॥ २९ ॥ मूले भूतदयां च विधत्ते तस्मादिति सर्वभूतानामीश्वरगृहस्थानापन्नत्वादासुरं भावमुन्मुच्य सौहृदमाश्रित्य सर्वभूतेषु दयां कुरुत । तया दययाऽधोक्षजस्तुष्यतीति योजना । एतदभिप्रेत्योक्तं तात्पर्ये ॥ विष्णोर्गृहत्वाद्भूतेषु दया कार्या विजानतेति च ॥ ३० ॥ मूले तुष्टचापि किं प्रयोजनमित्यत आह ॥ तुष्ट इति । आद्येऽनंते उत्पत्तिनाशरहिते तत्र भगवति तुष्टे त्वलभ्यं किं । सर्वमाकांक्षितं भवतीति भावः । परं त्वेकांतैराकांक्षाऽपि न कार्येत्याह । सारं जुषां सर्वोत्तमवस्तुसेवमानानां । प्रीणयतां चरणयोरुपगायतां नोऽस्माकं येऽनुषंगेणैव सिद्धा वैषयिकसुखादयस्तैर्गुणव्यतिकरैर्गुणत्रयकार्यैः कांक्षितं किं । किं प्रयोजनं । एवं धर्मादिभिः प्रवृत्तधर्मादिभिरपि कांक्षितैः किं । अंततो गुणेन मोक्षेण कांक्षितेन किमिति योजना । न किमप्याकांक्षणीयमिति भावः । मोक्षगं सुखं त्वाकांक्षमाणापेक्षया नाकांक्षमाणस्याधिकं । एकांतभक्तत्वात् । एतदेवाभिमेत्य तात्पर्ये ॥ कांक्षतो मोक्षगमपि सुखं नाकांक्षतो यथेति चेति ॥ अकांक्षतः कांक्षारहितस्य यथाऽतिशयितं तथा कांक्षतो नेत्यन्वयः ॥ ३१ ॥ भगवत्तुष्टिरेव संपाद्या चेद्धर्मार्थकामादिकमसत्यत्वान्निष्फलत्वाद्वा न संपाद्यमित्यायातमित्यत आह ॥ धर्मेति । धर्मार्थ शब्दाभ्यां परस्य सुपो लोपः । तथा च धर्मोऽर्थः काम इति यो विहितस्त्रिवर्ग ईक्षा । एतद्विषयकं ज्ञानं । एतद्विधात्री त्रयी श्रुतिः । नयदमौ नीतिदंडशास्त्रे । विविधा च वार्ता । कृषिगोरक्षवाणिज्यादिरूपा । तदेतदखिलं निगमस्य नियमेनोक्तत्वात् । सत्यमबाध्यं तदुक्तफलसाधनं च मन्ये । अन्यथा वेदस्याप्रामाण्यानुपादेयत्वयोरापत्तेः । परंत्वेतदपेक्षया स्वसुहृदो निर्निमित्तोपकारकस्यास्य पुंसो भगवतः स्वात्मार्पणं नवविधभक्त्या स्वात्मसमर्पणं परमत्युत्तमसाधनमिति योजना । मोक्षफलकत्वात् । इतरस्य च संसारफलकत्वादिति भावः ॥ ३२ ॥ कथमेतादृशज्ञानं त्वया लब्धमित्यतः पुरावृत्तमाह ॥ ज्ञानमिति । अवाप्तुमशक्यं तदेतदखिलं ज्ञानं ।

ज्ञायतेऽनेनेति ज्ञानं । शास्त्रं । नरसखो नारायणः । धर्मपुत्रो नारदायाह किल । भगवदनुग्रहयोग्यानां । एतादृशं ज्ञानं भवतीति सामान्येनाह । एकांतिनां भगवतः पादारविंदरजसा प्लुतदेहिनां । अकिंचनानां । तज्ज्ञानं स्यादिति योजना ॥ ३३ ॥ भवतु नारदादीनां ज्ञानं तव तु कथमित्यत आह ॥ श्रुतमिति । योजना तु स्फुटा । ज्ञानं मोक्षसाधनं । विज्ञानं विशेषतो मोक्षसाधनं । धर्म्यं धर्मादनपेतं । देवदर्शनाद्भगवदपरोक्षिणः ॥ ३४ ॥ नारदाच्छ्रुतमित्येतत्कथं विश्रंभणीयं । तवास्माकं च शंडामर्काभ्यामृतेऽन्यस्य गुरोर्लाभाभावात् । ईश्वरोऽपि बालानां नो साक्षादुपदेष्टा । तव चांतःपुरस्थस्य महत्संगो दुर्लभः । अत्र विश्वासजननोपायोऽस्ति चेत्तमुक्त्वा संशयं छिंधीत्याशयेनाह ॥ प्रल्हादेति । नोपीत्यत्र नो अपीति पदच्छेदः । मगृह्य त्वत्तु नाश्रितं ॥ ३५ ॥ ३६ ॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां षष्ठोऽध्यायः ॥ ७–६ ॥ ॥

॥ हरिः ॐ ॥ साधनेषु भक्तेरेव प्राधान्यात्सैव निरूप्यतेऽस्मिन्नध्याये । प्रल्हादः किमाहेत्यत आह ॥ एवमिति । मदनुभाषितं नारदानुभाषितं ॥ १ ॥ प्रस्थिते गते । परमतिशयितं ॥ २ ॥ पिपीलकैरहिर्यथा भक्ष्यते तथा लोकोपतापनः पापो हिरण्यकशिपुर्लोकस्य दिष्ट्या सुखकारणेन पुण्येन स्वपापेन चाभक्षि भक्षितः । नष्ट इति यावत् । इति वादिनो वासवादयो युद्धोद्योगं चक्रुरिति योजना । दिष्ट्या समुपजोषं चेत्यमरः ॥ ३ ॥ सर्वतो दिशं सर्वा दिशः ॥ ४ ॥ पशुपरिच्छदान् पशुबंधनगृहान् । नावेक्षमाण इति न समासः ॥ ५ ॥ राजशिबिरं राजगृहं व्यलुंपन्नाशितवंतः । जयकाशिनो जयकांक्षिणो जयेन प्रकाशमाना वा ॥ ६ ॥ भयोद्विग्नां भयकंपितां ॥ ७ ॥ परपरिग्रहं परस्त्रियं ॥ ८ ॥ यावत्प्रसवमास्यतां मम निकटे । अर्थपदवीं प्रयोजनमार्गं । एतत्प्रसूतशिशुं हत्वेति भावः ॥ ९ ॥ निष्किल्बिषो निष्पापः । संस्थां हननं । अनंतानुचरो भगवत्सेवकः ॥ १० ॥ अनंतप्रियभक्त्याऽनंतस्य भगवतः प्रियया भक्त्या । अनंतप्रिये प्रह्लादे भक्त्या बहुमानेन वा । परिक्रम्य प्रदक्षिणीकृत्य ॥ ११ ॥ नोऽस्माकं । उष्यतां वासः क्रियतां वेति शेषः ॥ १२ ॥ अतिसमीपे । अकुतोभया कुतोऽपि भयरहिता ॥ १३ ॥ अंतर्वत्नीं गर्भिणी ॥ १४ ॥ उभयं गर्भक्षेममिच्छाप्रसूतिं । ईश्वरः समर्थः । धर्मस्य निवृत्तिधर्मस्य । तत्त्वं स्वरूपं । ज्ञानं ज्ञेयं । भगवंतं प्रादादुपदिदेशेत्यर्थः । मातरं निर्मलं योग्यं । गर्भस्थं मामपि । अत्रेच्छाप्रसूतेर्नारदवरत्वाद्बहुकालं तपःकरणेऽपि हिरण्यकशिपोः

शिक्षाकाले प्रल्हादस्य न पंचाहायनत्वविरोधः ॥ १५ ॥ तिरोदधे विस्मृतमभूत् । नाजहान्नात्यजत् ॥ १६ ॥ यथा मे वैशारदी धीर्भगवद्विषयिणी मतिः । तथा यदि भवंतो मे वचः श्रद्दधतो विश्वासं कुर्वंति । तर्हि भवतामपि भूयाद्भवेत् । एवं श्रद्दधतः स्त्रीबालानां च भूयादिति योजना । श्रद्धैव सम्यग्ज्ञानोत्पत्तौ कारणमिति भावः ॥ १७ ॥ एवं पूर्ववृत्तकथनेन बालानां स्वस्मिन् श्रद्धां जनयित्वा तानुपदिशति ॥ जन्माद्या इत्यादिना । देहजीवयोर्वैलक्षण्यं परमात्मनश्च ताभ्यामत्यंतवैलक्षण्यं सर्वस्य तदधीनत्वं ज्ञात्वा देहगेहादावहं ममता न कार्येत्याह श्लोकत्रयेण । दृष्टाः प्रत्यक्षसिद्धा जन्माद्याः । स्वरूपोत्पत्तिलक्षणं जन्म कालविशेष एव वर्तमानत्वलक्षणा सत्ता । उपचयलक्षणा वृद्धिः । परिणामोऽपचयलक्षणा । क्षयो ध्वंसलक्षणो विनाशः । इमे भावा विकाराः । च्यूतादिवृक्षस्य फलानामिव । कालेन कालनामकेनेश्वरमूर्तिना ईश्वर इति मूर्तिः रूपं यस्य तेन भगवता देहस्य भवंति । नात्मनो विष्णोरिति योजना । यद्यपि जीवस्याप्येते न संति । तथाऽपि स्वातंत्र्येणैव तदभावः परमात्मनो भगवदिच्छया तु जीवस्यापीति ज्ञेयं । अनेन विकाराणां देहनिष्ठत्वं न जीवनिष्ठत्वं नितरां परमात्मनिष्ठत्वं सर्वस्य विष्ण्वधीनत्वं चोक्तं भवति ॥१८॥ परमात्मनोऽत्यंतवैलक्षण्यं ज्ञापयितुं लक्षणान्याह ॥ आत्मेति । आत्मा परमात्मा नित्यः । अनित्यत्वं देहहानिरित्याद्युक्तचतुर्विधनाशरहितः । अव्ययो नैमित्तिकनाशरहितः । शुद्धो दोषरहितः । एकः स्वतंत्रकर्ता । एकत्वादेव करोतीति एक इत्यन्यत्र व्याख्यानात् । क्षेत्रज्ञः । एतत्क्षेत्रमिति प्रोक्तं तत्क्षेत्रं यच्च यादृक्चेति गीतोक्तरीत्या प्रकृत्यादिक्षेत्रज्ञः । आश्रयः सर्वोपजीव्यः। अविक्रियो विकाररहितः । स्वदृक् साकल्येन स्वस्वरूपदृक् । वश्यो वशं याति यापयतीति । सर्वस्य वशीति यावत् । सर्वस्य वशीति श्रुतेः । व्यापकोऽतर्बहिश्च व्याप्तः । अंतर्बहिश्च तत्सर्वं व्याप्य इति श्रुतेः । असंगो विषयसंगरहितः । अनावृतोऽज्ञानाद्यावरणरहितः । अत्र कतिपयलक्षणस्यातिव्याप्तिशंकाऽपराधीनत्वेन विशेषणेन परिहरणीयेति बोध्यं ॥१९॥ परैरुत्तमैः । अनन्यसाधारणैर्वा । देहादौ मोहजमज्ञानं लक्षणैरात्मानं विद्वान् अतद्भावमतस्मिन्नहं भूतदेहे आत्मदीये गेहादावहंभावं मदीयभावलक्षणं भ्रमं त्यजेत । एतत्सर्वमभिप्रेत्योक्तं तात्पर्ये ॥ षड्विकाराशरीरस्य न विष्णोस्तद्गतस्य तु । तदधीनं शरीरं च ज्ञात्वा तन्ममतां त्यजेदिति च ॥ तु शब्दात्स्वातंत्र्यलक्षणं विशेषमाह । शरीरं चेत्यतःपरामिति शब्दोऽध्याहार्यः । ममतामित्यनेन देहोऽप्यहंताभ्रमो नास्ति । प्राणिमात्रस्य मम देह इति भेदज्ञानात्किंतु स्फुट-

विवेकाभावमात्रमर्हंतेति सूचयाति । जन्माद्या इति श्लोके विष्ण्वधीनत्वं न स्फुटं प्रतीयत इत्यतः कालेनेति हेतुतोक्त्या तल्लब्धामिति वाक्यरूपतात्पर्यं ॥ हेतुत्वाद्विष्ण्वधीनत्वं शरीरस्येति ॥ २० ॥ उपायेन ब्रह्मगतिलाभप्रकारं सदृष्टांतमाह ॥ हेममिति । यथा हेमकारो ग्रावसु निकषाश्मादिलक्षणेषु क्षेत्रेषु लिप्तं हेमयोगैरुपायैस्तदभिज्ञ आप्नुयात् । तथा देहेषु क्षेत्रेष्वात्मयोगैर्भक्त्याद्युपायैरध्यात्मविदात्मानमधिकृत्य विद्यमानं देहगतमन आदिकं । प्रमेयमध्यात्मशास्त्रं वा । अधिकात्मानं बिंबं वा वेत्तीति तद्वित् । ब्रह्मगतिं वैकुंठादिकं लभेतेति योजना ॥ २१ ॥ आत्मनः क्षेत्रज्ञत्वमुक्तं । तत्र क्षेत्रशब्दार्थं प्रकृत्यादिकं तद्गतं च विविच्याह ॥ अष्टाविति । प्रकृतयो मूलप्रकृतिर्महानहंकारः पंचभूतानीत्यष्टौ प्रकृतयः । गुणत्रयस्यापि सत्वात्कथमष्टत्वमिति न वाच्यं । त्रय एव हि तद्गुणास्त्रयः सत्त्वरजस्तमः । पदार्थास्तद्गुणा अव्यक्तमूलप्रकृतेरवस्थाविशेषा एवेति तदंतर्भावात् । विकारा मनसा सहैकादशेंद्रियाणि शब्दाद्यास्तन्मात्रा इति षोडशविकारा आचार्यैः प्रोक्ताः । समन्वयात् । ल्यब् लोपनिमित्ता पंचमी । सर्वत्रानुगतिं प्राप्य वर्तमानः पुमान्परमपुरुष एकः पदार्थ इत्थं चतुर्विंशति तत्त्वानि क्षेत्रं पुमांश्च । तद्गत इत्युक्तं भवति । अत्र जीवस्यातिरिक्तस्य सद्भावेऽपि तस्याभिमानित्वापेक्षयाऽभिमन्यमानवाचिपदेन ग्रहणाद्विष्णुरेव पंचविंशः । जडमात्रविवक्षया तु जीवः पंचविंशो विष्णुः षड्विंशतया सम्यग्ज्ञेयः । एतदेवाभिप्रेत्य तात्पर्यं ॥ अभिमान्यपेक्षया विष्णुः पंचविंश इति स्मृतः । जडव्यपेक्षया जीवः सम्यग्ज्ञेयो हरिः स्मृत इति च ॥ अभिमान्यपेक्षयाऽभिमानिनोऽभिमन्यमानवाचिपदेन ग्रहणापेक्षयेत्यर्थः । जडव्यपेक्षया जडमात्रग्रहणापेक्षया जीवः पंचविंशो हरिस्तु सम्यक् षड्विंशतया ज्ञेय इति ॥ २२ ॥ देहस्यातिरिक्तस्य सत्वात्कथमुक्तोर्विभाग इत्यत आह ॥ देहस्त्विति । देहस्तु सर्वसंघात उक्तचतुर्विंशति तत्त्वकार्यभूतः । जगज्जंगमः । नरतिर्यगादिः । तस्थुः स्थावरस्तरुगुल्मादिरिति द्विधा । अत्रैव देह एव पुरुषः पूर्णषड्गुणो भगवान् । अतत् हरिभिन्नं चेत् । नाचेतनात्मकं जगत् त्यजन् त्यजताधिकारिणा मृग्यो विचार्यः । स वा एष नेति नेतीति श्रुतेरिति योजना । आत्मा प्रकृतिर्न महानित्येवं सर्ववैलक्षण्यं श्रुतेरर्थः ॥ २३ ॥ केनोपायेन मृग्य इत्यत आह ॥ अन्वयेति । भगवति तिष्ठति देहो जीवति गच्छति तु पततीत्यन्वययुक्तव्यतिरेकेण पेपीयमानो मोदमानस्तिष्ठति । अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यतीत्यादि श्रुतेः । विवेकेन सार्वज्ञाल्पज्ञतादि लक्षणविरुद्धगुणेन

गतात्मना मुक्तमनसाऽनुभवेन । अज्ञोता चाल्पशक्तित्वं दुःखित्वं स्वल्प स्वल्प कर्तृता सर्वज्ञतादीशगुणाविरुद्धाद्यनुभूतिगा इति मूलोक्तेः । सर्गस्थानं समाम्नायैः सृष्टिस्थितिसंहारादिबोधकैर्वेदैरसत्वैरापातप्रतीतिरहितैः । त्वरितोच्चारणादिदोषरहितैर्वा । अथवा । सावधानमनस्कैर्विमृशद्भिरधिकारिभिर्विमृग्यत इति योजना ॥ २४ ॥ प्रकारांतरेणापि भेदमाह ॥ बुद्धेरिति । बुद्धेर्जीवस्य जागरणं स्वप्नः सुषुप्तिरिति वृत्तयोऽवस्थास्ता एता येनैवानुभूयंते । स पुरुषश्चेतनोऽध्यक्षः साक्षिसिद्धः परो भगवतोऽन्यः । भगवतोऽवस्थात्रयानुभवस्य तत्कारणीभूतकर्मणस्तत्कार्यस्य सुखदुःखादेश्चाभावात् । अथवा । येन परमात्मनाऽनुभूयंते । अंतर्णीत णिच् । अनुभाव्यंते । सोऽवस्थात्रयप्रवर्तकः पुरुषः परमात्मा । अध्यक्षोऽवस्थाद्रष्टा । परो जीवादन्यः । तदेतदभिमेत्योक्तं तात्पर्ये ॥ बुद्धेर्जीवस्य । सत्त्वबुद्धयादिशब्दैस्तु जीवोऽपि क्वचिदीर्यते । जाग्रदाद्याः कर्म चैव सुखदुःखे च तस्य हि । जाग्रदादेः परो द्रष्टा सुखनित्यो हरिः स्मृतः । स जीवेन सह स्थानात्तत्स्वरूपः प्रदृश्यते । अज्ञदृष्ट्याऽनज्ञदृष्ट्यायथा गंधयुतोऽनिलः । अदृष्टेर्जीवपरयोर्भेदस्याप्नोति संसृतिं । अभेदनिश्चयाद्याति तमो नास्त्यत्र संशय इति च ॥ सत्त्वबुद्धयादि शब्दैरित्यनेन बुद्धेर्जीवस्येति व्याख्यानं प्रमापितं भवति । तस्य जीवस्य जाग्रदाद्यवस्था कर्म च तत्कारणीभूतपुण्यपापादिकं सुखदुःखे च तत्रानुभूयमाने भवंति । जीवात्परो हरिस्तु केवलं द्रष्टा । सुखनिष्ठः स्वरूपानंदनिष्ठः स हरिः । तत्स्वरूपो जीवस्वरूपः प्रदृश्यते । अज्ञदृष्ट्या भ्रांत्याऽनज्ञदृष्ट्या जानातीति ज्ञः । तद्दृष्ट्या तु न । यथाऽनिलोऽज्ञदृष्ट्या गंधयुक्तः पुष्परेणुयुत एव भेदाज्ञानाभेदनिश्चययोः क्रमेणानर्थातिशयमाह ॥ अदृष्टेति ॥ २५ ॥ पूर्वश्लोके बुद्धिशब्दितस्य जीवस्यावस्थात्रयलक्षणसंसारानुभवो भगवता भवतीत्युक्तं । तत्कथं । न हि भगवान्किंचिदनिमित्तीकृत्य संसारमनुभावयतीत्यतः संसारकारणान्याह श्लोकत्रयेण ॥ एभिस्त्रिवर्णैरित्यनेन । बुद्धिस्थैस्त्रिवर्णैर्लोहितशुक्लकृष्णामित्युक्तवर्णत्रयोपेतैः पर्यस्तैः परिक्षिप्तैः । अनादितः संबंधैरिति यावत् । बुद्धिभेदैर्बुद्धेर्जीवस्य भेदैर्भेदकैः स्वस्वाधिक्येन नीचमध्योच्चत्वलक्षणतारतम्यज्ञापकैः क्रियोद्भवैः सात्विकत्वादिक्रियाजनकैः सत्त्वादिगुणैरन्वयात्संबंधाद्वायुगंधैर्गंधोपेतैः पुष्पाद्यवयवैः सुरभ्यसुरभिमिश्रैः । अन्वयादिवात्मनः स्वरूपज्ञानानंदकेवलदुःखमिश्रात्मकं धत्ते पिधत्ते न जानातीति योजना । वायुर्निर्गंधोऽपि गंधसंबंधान्निर्गंधस्वरूपो न ज्ञायते । जीवोऽपि गुणत्रयसंबंधात्स्वरूपेण न ज्ञायत इति

भावः । अत्र बुद्धिभेदैरित्यस्य तात्पर्यं ॥ बुद्धिभेदैर्जीवानां तारतम्यज्ञापकैरिति । एवं च सत्त्वादिगुणतन्निमित्तकर्मणी संसारकारण इत्युक्तं भवति ॥ २६ ॥ एतदनूद्य मूलकारणं चाह ॥ एतदिति । संसार एतद्द्वारः । तस्यैव विवरणं गुणकर्मनिबंधन इति । हि शब्देनाजामेकां कर्मणा बध्यते जंतुरिति प्रमाणप्रसिद्धिं द्योतयति । अज्ञानमूलः प्रकृत्यविद्यादि शब्दवाच्याज्ञानावरणलक्षण-मूलकारणकः प्रकृतिः स्वात्मसंश्लिष्टान् गुणान् सत्वादिकान् अपीति । अज्ञानस्य प्रथमावरत्वोक्तेः । दुष्कर्मणोऽनर्थहेतुत्वं जानता कथं बुद्धिपूर्वकृतकर्मणाऽनर्थः प्राप्यत इत्यत उक्तं ॥ अपार्थ इति । स्वप्ने स्वशिरच्छेदादिरूपात्महननानुभवजनितवासनावशाद्बुद्धि-पूर्वकृतस्वशिरच्छेदेन दुःखमाप्यते । तथा रागादिवशाद्बुद्धिपूर्वं कृतकर्मणाऽपार्थोऽप्यनर्थोऽप्याप्यत इति योजना । एतदेवाभिप्रेत्य तात्पर्यं प्रवृत्तं ॥ दुःखरूपोपि संसारो बुद्धिपूर्वमवाप्यते । यथा स्वप्ने शिरच्छेदं स्वयं कृत्वाऽऽत्मनो वशः । ततो दुःखमवाप्येत तथा जागरितेऽपि तु । जानन्नप्यात्मनो दुःखमवशस्तु प्रवर्तत इति च ॥ अवशः स्ववशो न भवतीत्यवशः । आत्महननानुभवज-नितवासनया बलात्कृतः । अवशो रागादिवशः प्रवर्तते दुष्कर्मकरणे ॥ २७ ॥ मन एव मनुष्याणां कारणं बंधमोक्षयोरित्युक्ते-र्मनोऽपि संसारकारणमित्याह ॥ मनोमयत्वादिति । मनोमयत्वान्मनःपूर्वककर्मकारणकत्वेन मनःप्रधानत्वान्मानसवासनामयत्वात् । सर्वार्था गजतुरगादयः स्वप्नजागरयोः समा अनित्यत्वादिभिः समाः । अनित्यत्वविकारित्वपारतंत्र्यादिरूपतः स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यतेत्युक्तेः । एवमुक्तरीत्या दृष्टानर्था ध्यातुरनुभवितुः शोकमोहभयप्रदा अपि भवंतीति योजना ॥ २८ ॥ तर्हि किं कर्तव्यमस्माभिरित्यत आह ॥ तस्मादिति । कर्मणामिति मनसोऽप्युपलक्षणं । बीजं मूलकारणमज्ञानं । योग उपायः । सः क इत्यत आह ॥ प्रवाहेति । धियो बुद्धेर्यः प्रवाहः । तस्योप परमात्मसमीपे रमो रमणं क्रमेण भक्तिरभिवर्धनीयेति भावः । एतदेवाभिप्रेत्य तात्पर्यं ॥ धियः प्रवाहस्योपरमः परमेश्वरे रमणमिति । रमणमासक्तिः ॥ २९ ॥ सत्स्वन्येषूपायेष्वयमेव कुतः कर्तव्य इत्यत आह ॥ तत्रेति । सहस्राणां मध्येऽयं भक्तियोगो भगवता नरसखनारायणेन । तद्वच एव पठति ॥ यदीति । नान्यथारतिरित्येकं पदं । अनन्यविषयिणीति यावत् । तादृश्यन्यत्र नो भवेत् । अनन्यभक्तिः सा ज्ञेयेत्युक्तेः । यदीत्यस्य तदा मुक्तिरित्यध्याहृतेनान्वयः । इति यत्तदेव मुक्तिसाधनमिति वाऽन्वयः । भक्तिरतौ साधनमन्यथा रतिर्न भवतीति वा ॥ ३० ॥

षड्वर्गनिग्रहं भक्त्युत्पादनं चोपायानाह ॥ गुरुशुश्रूषयेत्यादिना। तृतीयातानां भक्तिः क्रियत इति वक्ष्यमाणेनान्वयः। गुरुशुश्रूषयेत्यत्र साधनपंचकमुच्यते। प्रत्येकं साधनविधायकवचनोदाहरणं तु गौरवभिया टीकायामुदाहृतं। तेन च क्वचिन्न क्रियते। भक्त्या गुरुभक्त्या। यथा देवतागुरावित्युक्तेः। सर्वलाभार्पणेन च सर्वेण यज्ञादिना लाभो लब्धं यत्पुण्यं तस्य समर्पणेन यद्यल्लब्धं स्वेन तस्य कर्तृत्वसमर्पणेन वा। साधुभक्तानां निर्व्याजभक्तानामीश्वराराधनेन पंच रात्रोक्तपांचकालिकाराधनेन ॥ ३१ ॥ श्रद्ध-येति श्लोके साधनचतुष्टयं। तल्लिंगेक्षार्हणादिभिस्तस्य भगवतो लिंगस्य प्रतिमाया ईक्षणं दर्शनमर्हणं पूजनं तदादिभिः ॥ ३२ ॥ भूतदयाऽपि साधनमित्याह ॥ हरिरिति। भगवानीश्वरो हरिः सर्वेषु भूतेष्वास्त इति मनसा। तैः प्रार्थितैः कामैः काम्यैः स्वशक्ति-विषयैर्वित्तविद्यादिभिः। भूतानि सज्जनान् साधु मानयतीति योजना ॥३३॥ उक्तसाधनैः साध्यं भवतीत्याह ॥ एवमिति। एव-मनुष्ठितैर्निर्जितोऽरिषड्वर्गो यैस्तैः साधनैरीश्वरे वासुदेवे भगवति स भक्तो यथा रतिं लभते तथा भक्तिः क्रियते उत्पद्यत इति योजना। रतिमुपासनापरोक्षस्वानंदानुभवलक्षणं ॥ ३४ ॥ भक्तानां वृत्तिप्रकारमाह ॥ निशम्येत्यादिना। यदेत्यस्य तदेति वक्ष्यमाणेनान्वयः। निशम्य श्रुत्वा। कर्माणि जगत्सर्जनादीनि। गुणान् ज्ञानानंदादीन्। लीलातनुभिः कृतानि वीर्याणि कंसवधादीनि ॥ ३५ ॥ आक्रंदते उच्चैः शब्दं करोति। जनं भक्तं। आत्मगतिर्भगवद्विषयकमनोगतिः। गतत्रपो गतलज्जः ॥ ३६ ॥ भक्त्युद्रेकफलमाह ॥ तदेति। तस्य भगवतो भावे स्वरूपे भावो भक्तिः। अत एव तात्पर्यं ॥ तद्भावभावः। तद्यथा स्वरूपं भक्तिरिति ॥ तयाऽनुकृतेऽनुकूलत्वेन कृते। आशयाकृतिराशयोऽतःकरणमाकृतिर्देहाकारो यस्य स तथा। यदाऽतिहर्षेत्यादिनोक्तमुद्गानादिकं नैकैकस्मिन् भक्ते समुच्चयो किंतु यथा तथेति ज्ञातव्यं। अतएव तात्पर्यं ॥ केचिद्भक्ता विनृत्यंति गायंति च यथेप्सितं। केचित्तूष्णीं भजंत्येव केचिच्चोभयकारिण इति चेति। उभयकारिणो नर्तनगायनोभयकारिणः। निर्दग्धकर्मबीजः। अनुशयोऽतःकरणं संसारो वा यस्य स निर्दग्धबीजानुशयः। अधोक्षजं समेति। भूयः प्रयोगेण स्तोत्रेण वक्ति स्तौति ॥ ३७ ॥ पूर्वमशुभात्मनो भक्त्युद्रेकात्संसृतिचक्रस्य शातनं। शद्लृ शातने शदेरगतौत इति तः। नाशनं। अधोक्षजालापं तन्निमित्तं यत्सुखं ब्रह्मनिमित्तकं निर्वाणसुखं मोक्षसुखं विदुरिति योजना।

अतएव तात्पर्यं ॥ ब्रह्मनिर्वाणसुखं ब्रह्मनिमित्तनिर्वाणसुखमिति । भगवत्कथयाऽपि सुषुप्ताविव स्वरूपसुखं व्यज्यत इति भावः । ततो भक्तेरेतादृशसुखसाधनत्वात् । यूयं हृदीश्वरमंतःकरणनियामकं हृदये स्थूलहृदये विद्यमानं प्राज्ञं भजत । जीवांगुष्ठमितो जीवे देहांगुष्ठमितो हृदीत्युक्तः ॥ ३८ ॥ भगवदुपासनायां महाफलमुक्त्वाऽऽयासोऽपि नास्तीत्याह । हे असुरबालकाः । स्वे स्वकीये हृदि छिद्रवदाकाशवत्सतो विद्यमानस्यास्यात्मनः सख्युर्हरेरुपासने कोऽतिप्रयासः । अशेषदेहिनां सामान्यतो हृदिस्थत्वेन न कस्यापि। अत्र तात्पर्यं ॥ अशेष देहिनां सामान्यतो हृदिस्थत्वेनेति । एवं सन्निहितत्वेन विषयोपपादनैर्देशांतरगमनैः किं प्रयोजनमिति योजना ॥ ३९ ॥ सर्वदाचलत्वेन देहहृदिस्थस्य नित्यस्य भगवतो महाप्रियकारित्ववत् कस्यापि विषयस्यापि प्रियकारित्वं मर्त्यस्य। मृत्यनंतरमभावात् । पूर्वमपि क्षणभंगुरत्वात्ततोऽपि देशांतरचलनात् । अतस्तत्र वैराग्येण भवितव्यमित्याशयेनाह ॥ राय इति । रायो हि बहिःस्थितवित्तानि । कोशो भूनिक्षिप्तद्रव्यं । अर्थकामा अर्थाश्च कामाश्च क्षणभंगुरायुषः स्वरूपनाशवंतश्चला अन्यत्र गमनवंतः ॥ ४० ॥ अर्थकामौ दूषयित्वा प्रवृत्तकर्मफलं स्वर्गादिकं दूषयति ॥ एवमिति । क्रतुभिः कृता अमी स्वर्गादय एवमर्थकामवत्क्षयिष्णवो नश्वराः स्वापेक्षयातिशयितलोकांतरवंतः । न निर्मलाः । न रागादिदोपरहिताः । हि शब्देन पुण्यचितो लोकः क्षीयते । अनैवं विन्महत्पुण्यं कर्म करोति तत्धास्यां ततः क्षीयत एवेत्यादि प्रमाणप्रसिद्धिं द्योतयति । तस्माददृष्टं श्रुतं च न भवतीत्यदृष्टश्रुतं दूषणं यस्य तं । दोषाः श्रुताश्च नाक्षैर्हि तथा प्रतीता इति श्रुतेः । परं परमात्मानमीशमेकमनन्यसाधारणभक्त्याऽऽत्मलब्धये स्वरूपानंदलाभाय भजतेति योजना ॥ ४१ ॥ तर्हि विहितानि कर्माणि किमकार्याणीत्यत आह ॥ यदर्थमिति । इह लोके विध्यंगानि विहितांगकानि कर्माणि नरो यदर्थं यत्प्रीत्यर्थमसकृत्करोत्यतः प्रसन्नाद्भगवतोऽविपर्यासं नाशरहितममोघं फलं विंदत इति योजना । भगवत्प्रीत्यर्थं कर्माणि कर्तव्यानीति भावः ॥ ४२ ॥ एतदेव विवृणोति ॥ सुखायेति । इह लोके कर्मणः संकल्पः सुखाय दुःखमोक्षाय सदा भवति । सुखमेव स्याद्दुःखमनागापि माऽभूदिति सर्वानुभवात् । परं त्वीहया स्वर्गादीच्छया कृतं चेद्दुःखमनीहायां सुखोन्नतिमाप्नोतीति योजना ॥ ४३ ॥ कामा अनित्या इति पूर्वं दूषितं । अधुना तु ते यदर्थाः सोऽपि देहोऽनित्य इत्याह ॥ कामानिति । यदर्थं यद्देहस्थितेंद्रियकारणकभोगार्थं कामान् तस्य विवरणं काम्यान्। कामयते इह पुरुषः स देहः पारक्यः

पूर्वं वनितादेः मृत्यनंतरं श्रृगालादेर्भोग्यो भंगुरः क्षणभंगुरः यात्युपैति च वै प्रसिद्धं ॥ ४४ ॥ अव्यवहितो देहो यदैवं विधस्तदा तत्संबंधिनो व्यवहितापत्त्यादयः किमु इत्यत आह ॥ किम्विति । भंगुराः पारक्याः किम्विति योजना ॥ ४५ ॥ अनित्यत्वमुक्त्वा तैः प्रयोजनं नास्तीत्याह ॥ किमिति । नित्यानंदमहोदधे इति । ल्यब् लोप निमित्ता पंचमी । एतादृशं परमात्मानं महांतं विहाय तुच्छैरेतैः किमिति योजना । अर्थसंकाशैः पुरुषार्थसदृशैः ॥ ४६ ॥ भगवद्भक्तिमंतरा कर्मभिर्निषेकादि मरणांतास्ववस्थासु क्रियमानस्य स्वार्थः कोऽस्ति । न कोऽपीत्याक्षिपति ॥ निरूप्यतामिति ॥ ४७ ॥ कर्मदेहोभयपरंपरा भगवदज्ञानलक्षणाविवेकादेवेत्याह ॥ कर्माणीति ॥ ४८ ॥ अवर्जनीयतया प्राप्ता अर्थकामादयः कथं त्यक्तुं शक्यंत इत्यतस्ते यदपाश्रया यत्परमात्ममूलकास्तमेवानीहया कामेन भजतेति विधत्ते ॥ तस्मादिति । अनीहमनीहाऽप्रयत्नेन जगत्कारणं । अशादिच् । तद्वंतं । बीजं जगतो व्यंजनाद्बीज शब्दवाच्यमात्मानं भजतेति योजना । एतदेवाभिप्रेत्य तात्पर्यं प्रवृत्तं ॥ अप्रयत्नेन करणमनीहा प्रोच्यते बुधैरिति च ॥ अप्रयत्नेनाप्रयासेन परिणामतो विकारतः ॥ ४९ ॥ बहुधा संबंधसद्भावाद्भगवानेव भजनीय इत्याह ॥ सर्वेषामपीति । आत्माऽंतर्यामी । ईश्वरः स्वामी । प्रियः प्रियकृत् । स्वकृतैर्महद्भिर्भूतैः । कृतानां देहेंद्रियवत्तया कृतानां बीजसंज्ञितो जनकश्च ॥ ॥ ५० ॥ मुकुंदचरणं भजतः स्वस्तिमत्वे न जातिः प्रयोजिकेत्याह ॥ देवो वेति । यथा वयमिति दृष्टांतः ॥ ५१ ॥ भक्तिरेव भगवत्प्रीतिसाधनं नान्यदित्याह ॥ नालमिति श्लोकद्वयेन । वृत्तं चरितं ॥ ५२ ॥ विडंबनं प्रीतिजनकतया प्रतीयमानमात्रं ॥५३॥ पुनर्भक्तिं विधत्ते ॥ तत इति । आत्मौपम्येनात्मदृष्टांतेन । सर्वभूतात्मन्यंतर्यामिणि ॥ ५४ ॥ जातिरप्रयोजिकेत्युक्तं । अधुना तु नानाजातिमंतोऽपि भक्तिमंतोऽच्युततां च्युतिवर्जनं । मुक्तिमिति यावत् । गताः संतीत्याह ॥ दैतेया इति । अत्र तात्पर्यं ॥ अच्युततां च्युतिवर्जनमिति ॥ ५५ ॥ उपसंहरति ॥ एतावानिति । परःस्वार्थ उत्तमः पुरुषार्थः । तदीक्षणं भगवदीक्षणं ॥ ५६ ॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां सप्तमोऽध्यायः ॥ ७—७ ॥

॥ हरिःॐ ॥ प्रह्लादरक्षणाय नृसिंहः प्रादुर्भूत इत्यस्मिन्नध्याये निरूप्यते । प्रह्लादोपदेशानंतरं बालकाः किमकार्षुरित्याह ॥ अथेति । निरवद्यत्वात्प्रह्लादवर्णितस्य बालानां मनसो वा निर्दोषत्वात् । नैवेत्यत्रापि जगृहुरित्यनुवर्तते ॥ १ ॥ एकांते

भगवति स्थिता यथा स्थितं यथा प्रल्हादेन वर्णितं तथा । यथा बालैर्गृहीतं तत्सर्वमित्यर्थः ॥ २ ॥ तनयानयं तनयस्य अनयः स्वसिद्धांतविरुद्धप्रकारो यस्मिन्वचने तत्तनयानयं ॥ ३ ॥ अतदर्हणं निष्ठुरयोग्यं । पापेन पापसाधनेन । तिरश्चीनेन वक्रेण ॥ ४ ॥ प्रकृतिदारुणः स्वभावेन दुष्टः ॥ ५ ॥ मच्छासनोद्धृतमतिक्रांतशासनं । त्वा त्वां यमक्षयं यमगृहं ॥ ६ ॥ तस्य मे तेन मया किं बलः को बलं यस्य सः । अत्यगा अतिक्रांतः ॥ ७ ॥ किं बलः इत्यस्योत्तरमाह ॥ न केवलमिति । परावरे उच्चावचाः । वशं स्वाधीनत्वं । अनेन सर्वबलत्वमुपपादितं ॥ ८ ॥ पूर्वार्धेन जगत्कर्तृत्वोपयोगिगुणपूर्णत्वमुक्तं । द्वितीयार्धेन जगज्जन्मादिकर्तृत्वं । स्वशक्तिभिः स्वरूपभूताभिः शक्तिभिर्विश्वं सृजतीत्यादि योजना ॥ ९ ॥ त्याज्यं निषेधयाति । कर्तव्यं च विधत्ते ॥ जहीति । विद्विषां सत्वात्कथं समं मन इत्यत उत्पथस्थिताच्छास्त्रमार्गमतिक्रम्य स्थितादजितादात्मनो मनसो ऋते विद्वेषो न संतीत्युक्तं । समर्हणं पूजा ॥ १० ॥ दशदिशो जिता इति भ्राम्यंतमपहसति ॥ दस्यूनिति । पुरं स्वदेहं लुंपतो विनाशयतः षट् कामादीन् । मन आदींद्रियाणि वा । दस्यून् अविजित्यैव दशदिशाः स्वजिता इत्येके मन्यंते । जितात्मनो जितमनस्कस्य देहिनां समस्य साधारणस्य साधोर्ज्ञस्य सज्जनस्य स्वमोहप्रभवाः परे शत्रवः कुत इति योजना । शत्रुत्वकल्पकमिथ्याज्ञानस्यैवाभावादिति भावः ॥ ११ ॥ अतिमात्रमत्यर्थं । विकत्थसे विरुद्धं भाषसे । अतो मर्तुकाम इति जानामि । विशेषमुक्त्वा सामान्यमाह ॥ मुमूर्षूणामिति । विप्लुता असंबद्धाः ॥ १२ ॥ स्वातिरिक्तेश्वरस्यानुपलंभबाधमाह ॥ य इति । भगवतःशरणत्वे तर्कबाधमाह ॥ स इति ॥ १४ ॥ न केवलं दुरुक्तिमात्रं किंतु दुरुद्योगं च चकारेत्याह ॥ एवमिति । स्तंभे न दृश्यत इत्युक्त्वांतर्वर्तते चेदायात्वित्याशयेन मुष्टिना स्तंभं तताडेति भावः । तदैव तस्मिन्नेवाविर्भावद्योतकशब्दो बभूवेत्याह ॥ तदैवेति । निनदो ध्वनिर्येन ध्वनिना । अस्फुटदाभिनत् । निनद शब्देन प्रकृतस्य ध्वनेर्यच्छब्देन परामर्शात्तच्छब्दाभावो न दोषः । स्वधिष्ण्योपगतं स्वस्थानं । सत्यलोकादिस्थानमुपागतं । स्वधा-



माप्ययं स्वधामनाशकालं प्रलयकालमित्यर्थः । अजादय इत्यतद्गुणसंविज्ञानः । अजस्य भ्रांत्ययोगात् ॥ १६ ॥ निर्हादं ध्वनिं । तत्पदं तस्य निर्हादस्य पदं निमित्तं । कर्तारमिति यावत् । येन निर्हादेन वितत्रसुरुद्विग्नाऽभूवन् ॥ १७ ॥ तदैव तत्रैव । प्रादुर्भावे प्रयोजनद्वयमाह ॥ सत्यमिति । निजभृत्यभाषितं सत्यं विधातुं व्याप्तिं च दर्शयितुं सभायां विद्यमाने स्तंभे । न मृगं न मानुषमिति

न समासः ॥ १८ ॥ स हिरण्यकशिपुः । एवं भूतं सत्त्वं प्राणिनं परितो विमृशन् निर्जिहानमुद्गच्छत् । वोहाङ् गतौ । किमेतदिति मीमांसं चक्र इति शेषः ॥ १९ ॥ उद्वहन्निति शेषः । तथा च नृसिंहरूपमुद्वहन् मीमांसमानस्य हिरण्यकशिपोरग्रतः समुत्थित इति योजना । द्वितीयांतानां नृसिंहरूपविशेषणत्वं । प्रतप्तचामीकरे निष्टप्तसुवर्णसदृशे चंडे क्रूरे लोचने यस्य तत् । स्फुरंति सटाकेसराणि ग्रीवस्थतीक्ष्णरोमविशेषा यस्य तत् । जृंभितं जृंभणयुक्तमाननं यस्य तत् । स्फुरत्सटाकेसरं च तज्जृंभिताननं चेति विशेषणद्वयस्य कर्मधारयः ॥ २० ॥ कराला भयंकरा दंष्ट्रा यस्य तत् । करवालश्चंद्रहासः । उभयतो धारोपेतः खड्गविशेषः । चंचलः क्षुरांतः क्षुरधारा यस्यांश्चंचलक्षुरांता करवालवच्चंचलक्षुरांता तादृशी जिव्हा यस्य तत् । भृकुटीयुक्तमुखं भृकुटीमुखं । तादृशमुखेनोल्बणं भयंकरं । स्तब्धोर्ध्वकर्णं स्तब्धावचंचलावूर्ध्वाग्रे कर्णौ यस्य तत् । गिरिकंदरवदद्भुते व्यात्ते विवृते । आस्यनासे । नासा पदं नासापुटपरं । यस्य तत् । हनुभेदेन दीर्घचुबुकविशेषेणभीषणं भयंकरं ॥२१॥ दिवि स्पृशत्कायं स्वर्गपर्यंतं व्याप्तदेहं । दिविस्पृशच्छब्दस्य संज्ञत्वात् हलंतात् संज्ञायामित्यलुक् । अदीर्घा पीवरा ग्रीवा यस्य तत् । उरु विशालं वक्षस्थलं यस्य तत् । अदीर्घपीवरग्रीवं च तत् । उरु वक्षस्थलं च । अल्पं मध्यमं यस्य तत् । चंद्रांशुगौरैश्चंद्रकलाधवलैः । तनूरुहैश्छुरितं मिश्रितं विष्वक् व्याप्तं भुजानीकं भुजलक्षणसैन्यं तद्धटकशतैर्युक्तं । नखा एवायुधानि यस्य तत् ॥ २२ ॥ सर्वाणि निजानि स्वीयानि नखेभ्य इतरायुधप्रवेकाणि चक्रादीनि तैर्विद्राविता दैत्यदानवा येन तत् ॥ २२ ॥ एतादृशं रूपं दृष्ट्वा हिरण्यकशिपोर्जातां शंकामाह ॥ प्रायेणेति । समुद्यतस्य पुत्रवधे उद्युक्तस्य मे औरसारिणा सहजशत्रुणा हरिणा प्रायेणायं भविष्यद्वधः स्मृतश्चिंतितः किमिति योजना ॥२३॥ एवमाशंक्य पलायितः किं नेत्याह ॥ एवमिति । मनसि विद्यमानमेव ब्रुवन् गदायुधो दैत्यकुंजरो दैत्यश्रेष्ठो नदन् सोऽसुरः । अलक्षितः साहसिकः । पतंगमः शलभोऽग्नौ यथा पतितो भवति तथा नृसिंहोजसि अभ्यपतदिति योजना । अथवा । पतनानंतरं पतंगमोऽग्नौ पतितोऽलक्षितो दृश्यमानो न भवति । तथा सोऽसुरो नृसिंहोजसि पतितोऽलक्षितो दृश्यमानो नाभूदिति योजना ॥२४॥ निनदेन ब्रह्मांडकटाहभेदनमारभ्यैतत्पर्यंतं वर्णितं माहात्म्यमसंभावितमित्यतो नेत्याह ॥ न तदिति । यो भगवान्प्रलयकाले व्याप्तं तमः सृष्टिकाले स्वतेजसा पुराऽपिबत् । तस्मिन्सत्त्वधामन्यपरिमेयपराक्रमशालिनि तद्वर्णितं माहात्म्यं न विचित्रमिति योजना ।

तर्हि सद्यो नाशितः किमित्यतो भगवाननेन चिक्रीड इत्याशयेनाह ॥ तत इति । अभ्यहनत् । विकरणव्यत्ययः ॥ २५ ॥ तार्क्ष्यसुतो महोरगं यथा गृण्हाति तथा गदाधरो नृसिंहस्तं विक्रमंतमग्रहीदिति योजना । चिक्रीडतो गरुत्मतोऽहिर्यद्वद्विक्रीडतस्तस्य नृसिंहस्य सोऽसुरो हस्तोत्कलितो हस्तादुच्चलित इति योजना । विक्रीडत इत्यनेनोच्चलने क्रीडैव निमित्तं न त्वसामर्थ्यमित्युक्तं भवति ॥२६॥ भगवत्क्रीडायाश्छिन्नभक्तसंशयजननमसुराणां मोहजननं च प्रयोजनमित्याशयेनाह ॥ असाध्विति । सर्वेधिष्ण्यपाः । धिष्ण्यं स्थानं । घनच्छदा मेघावृता हतौजसो हतमुखकांतयोऽमरा हस्तोच्चलनमसाध्वमन्यंत । पुनः कथं हस्तगृहीतो भवेदिति चिंतयेति भावः । यद्यस्माद्धस्तमुक्तो महासुरोऽतस्तं नृहरिं निजवीर्यशंकितं स्वसामर्थ्येन भीतं मन्यमानोऽभूत् । असुरस्य नृसिंहे स्वानिग्रहासामर्थ्यभ्रांतिरभूदिति भावः ॥ २७ ॥ स्ववीर्यभ्रांत्यैव पुनरापददसुर इत्याह ॥ पुनरिति । शतचंद्रवर्त्मभिश्चर्मगृहीतवतः परत्वं च न मार्गा यैस्तैः । अच्छिद्रं परप्रवेशो यथा न भवति तथा । उपर्यधः संचरंतं श्येनवेगं हरिर्जगृह इति वक्ष्यमाणेनान्वयः ॥ २८ ॥ उत्स्वनोल्बणं पुनः पुनरुद्धतस्वनेनोल्बणं भयंकरमट्टहासं स्वरं कृत्वा तद्भयेन निमीलिताक्षं विष्वक् स्फुरंतं परितश्चलंतं ग्रहणातुरं कुलिशेन वज्रेणाक्षतत्वचं महाजवः सन्हरिः । आखुं मूषकं हरिर्यथा तद्वज्जगृह इति योजना ॥ २९ ॥ ब्रह्मवररक्षणासुरवरशिक्षणचातुर्यमाह ॥ द्वारीति । द्वारीति रेफांतं । अनेननांतर्बहिरिति । ऊरावित्यनेन न भूमौ नांबर इति । नखैरित्यनेन नायुधैरिति । वरो रक्षितः । संध्यायामिति च वक्तव्यं । तेन न दिवा न नक्तमिति वरः । नृसिंहो हरिरित्यनुवृत्त्य न नरैर्न मृगैरपीति । न त्वद्विसृष्टेभ्यः इति । न व्यसुभिरसुमद्भिर्वेति वराः संरक्षिता इति ज्ञेयं । नृसिंहस्य केवलं नरत्वाद्यभावात् । ब्रह्मसृष्टत्वाभावाच्च । स्थिलावद्व्यसुत्वाभावात् । प्राणिवद्वायुविकारासुमत्वाभावाच्च । विवृताननांतं कपोलद्वयं जिव्हया विलिहन् आस्वादयन् हिरण्यकशिपुं ददारेति योजना ॥ ३० ॥ हिरण्यकशिपुविदारणानंतरं स्थितिकृतिप्रकारमाह ॥ असृगिति । रक्तबिंदुसंबद्धताम्रे सटामुखे यस्य स इति असृगित्यादेरर्थः । हरिर्द्विपहत्यया यथा तथेत्यसृगित्यादिनाऽन्वयः । आंत्रमाली च । अयं च स्थितिप्रकारः । कृतिप्रकारमाह ॥ नखांकुरेति । द्वितीयांतानामहमित्यनेन । हतवानित्यर्थः । केनान्वयः ॥ ३१ ॥ नखैः शस्त्रैः पाणिभिश्चेति द्वंद्वः । भुजदंडसमूहमार्गे गतानिति दोर्दंडादेरर्थः । भगवत्कृतमुक्त्वा तदीयावयवादिकृतकार्यमाह ॥ सटेत्या-

दिना । विधूताः कंपिताः । विनष्टरोचिषस्तिरस्कृततेजसः । अभूवन्निति शेषः ॥ ३२ ॥ दिगिभा दिग्गजाः । सटाभिरुत्क्षिप्त-मूर्ध्वं गमितं विमानसंकुलं यस्याः सा । प्रोत्सर्पत प्रोदसर्पत् । आगमशासनस्यानित्यत्वात् अडभावः ॥ ३३ ॥ रंहसा वेगेन । न रेजिरे न चकाशिरे । दैत्यहननाद्यनंतरं सभोपवेशनमाह ॥ तत इति । संभृततेजसं राशीकृततेजसं । अलक्षितमदृष्टपूर्वं कश्चन भूतलगतः । लोकत्रयमस्तकज्वरं शिरोरोगायमाणं ॥ ३४ ॥ ॥ ३५ ॥ प्रहर्षेत्यादेः संतोषातिशयाविकासितवक्त्रा इत्यर्थः ॥ ३६ ॥ आनकाः पटहा दुंदुभयो भेर्यः । कृतसर्वलोकोपकारकस्य भगवतो ब्रह्मादिभिः स्तोत्रप्रकारमाह ॥ तादिति । तदुप-व्रज्य तन्नृसिंहाधिष्ठितस्थलमुपव्रज्योपगम्य ॥ ३७ ॥ अप्सरचारणा इत्यसंहितायां सकारलोपश्छांदसः । तातेति युधिष्ठिरसंबोधनं ॥ ३८ ॥ ते प्रसिद्धाः ॥ ३९ ॥ नरशार्दूलेति संबुद्धिः । शार्दूलमिति पाठे सिंहमित्यर्थो बोध्यः । नातिदूरचरास्तारतम्यक्रमेण समीपचराः ॥ ४० ॥ आदौ ब्रह्मणः स्तोत्रमाह ॥ ब्रह्मेति । दुरंतज्ञानबलादिशक्तये विचित्रवीर्याय पराक्रमवते सर्गस्थितिसंय-मान् । संयमो संहारः । गुणैः सत्त्वादिभिः । स्वलीलया स्वरूपभूतलीलया । अव्ययात्मने नित्यवपुषे ॥ ४१ ॥ कोपशांत्या भक्तरक्षणं प्रार्थयते ॥ कोपकाल इति । हे भक्तवत्सल नृसिंह । ते कोपकालः कोपावसरो युगांत एवोचितो नेदानीं । असुरहन-नायेति चेत् । अयमल्पकः । कुतो वा शाम्यतु । हननस्य जातत्वादित्याह ॥ हत इति । कृपावसरश्चायमित्याह ॥ तत्सुतमिति । अनुसृतं शरणं प्राप्तं । भक्तं तत्सुतं तस्य हिरण्यकशिपोः सुतं प्रल्हादं पाहि रक्षेति योजना । पालनीयगतेऽनुसृतभक्तत्वे पालकगतं भक्तवत्सलत्वं पालने निमित्तानि ॥ ४२ ॥ हे परम । नोऽस्मान् त्रायता त्रायमाणेन भवता स्वभागाः प्रत्यानीताः प्रत्याहृताः । हिरण्यकशिपुकाले सहरक्षोनामकाग्निनेंद्रादीनामकेभ्यो दैत्येभ्यो नीताः । हव्यवाहनो देवानां कव्यवाहनः पितॄणां सह रक्ष असुराणामिति श्रुतेः । इति स्मृतिश्च । त्वद्गृहं त्वदावासयोग्यं । अस्मदीयहृदयकमलं दैत्याक्रांतं भीत्या तद्विषयकं तत एव निमीलितं तस्य हननात्प्र-त्यबोधि । एकांतभक्तानामस्मदादीनां त्वद्दयैव पुरुषार्थो न प्रत्यानीतस्वर्गाधिपत्यादिकं पुरुषार्थ इत्याह ॥ कालेति । हे नाथ । त्वा शुश्रूषतामिदं स्वाधिपत्यादिकं कालग्रस्तं नश्वरं कियत्फलं न महाफलमित्यर्थः । मुक्तिरपि न महाफलमित्याह ॥ मुक्तिरिति । हे नृसिंह । तेषां शुश्रूषतां मुक्तिरपि न बहुमता हि यस्मात्तस्मादपरैः पुरुषार्थैः किं प्रयोजनमिति योजना ॥ ४३ ॥ हे आदि-

पुरुष । यदात्मतेजः परमात्मापरोक्षसाधनं तप आलोचनं परममुत्तमसाधनं नोऽस्माकं त्वं । आत्थ ब्रवीषि । तपसा ब्रह्म विजिज्ञासस्वेति श्रुतेः । येन तपसेदं समस्तमात्मगतं मनोगतं योगप्रभावेन । सर्वापरोक्षमिति यावत् । तादृिप्रलुप्तममुना । हे शरण्यपाल । जगद्रक्षायै गृहीतवपुषा । अद्य पुनरन्वमंस्था अनुगृहीतवानसीति योजना । तपोऽपि न संतापात्मकं किं त्वालोचनात्मकं ज्ञानरूपं । यस्य ज्ञानमयं तप इति भगवदीयज्ञानेऽपि तपः शब्दार्थत्वदर्शनात् । एतत्सर्वमभिप्रेत्य तात्पर्यं ॥ तादृिप्रलुप्तमिति सादृश्याभेदवचनं । आलोचनमेव तपः । यस्य ज्ञानमयं तप इति श्रुतेः ॥ यत्तप आत्थ तादृिप्रलुब्धमिति कथं । आलोचनात्मकतपस आशुतरविनाशतयाऽधुना दैत्येन विनाशनायोगादिति तु न शक्यं । अधुना विप्रलुप्तस्यापि तत्सदृशत्वेन तादित्यभेदोक्तिसंभवात् । ज्ञानेव शालीनुपभुज्य इत्यादौ दर्शनात् ॥ ४४ ॥ नस्तनूजैस्तीर्थसमये दत्तानि तिलांबुमंति श्राद्धानि कव्यान्नानि यः प्रसभं बुभुजे । तानि नखविदीर्णवपात् । वपा नाम हृदयगतांत्रविशेषः । तस्योदरादाच्छेत्प्रापितवान् । यो भवान् । तस्मै अखिलधर्मगोप्तेऽखिलधर्ममर्यादासंरक्षकाय भगवते नम इति योजना ॥ ४५ ॥ हे विभो स्वामिन् । तेन नटनाट्यगायकाः । नटो नटनं त्वत्कथानुबद्धवचनं । नाट्यं त्वच्छृंगारादिप्रभावदर्शकवचनं । एतदुक्तं तात्पर्ये ॥ नटनं तु कथा बद्धं नाट्यकं भावदर्शनमिति ॥ ५० ॥ गंधर्वा ऊचुरिति । तयोर्गायका गीतविशेषयुक्तास्तया पाठका येन वीर्यबलौजसा पराक्रमदेहबलावष्टंभनशक्त्या । आत्मसात्कृताः स्वाधीनकृताः । स एवेत्यादि योजना । विशेषत उक्तं सामान्येनाह ॥ किमिति । उत्पथस्थो दुर्मार्गस्थः ॥ ५१ ॥ साधुहृच्छ्रयः साधून्हरंति संहरंतीति साधुहृतो दैत्यास्तेषामाश्रयः । स एष हिरण्यकशिपुः । भवापवर्गे भवस्य । भवाद्वा । त्यागो मोक्षो वा यस्मात्तत् ॥ ५२ ॥ पंचविंशश्चतुर्विंशति तत्त्वानि भगवांश्चेति पंचविंशतिः । तथा च पंचविंशतिसंख्यापूरकः । नृहरे । ते मनोज्ञैः कर्मभिरांदोलिकावाहनादिभिरनुचरमुख्या वयं ते तादृशाः । वयं दितिसुतेन वाहकत्वं प्रापिताः । एवं तत्कृतं ते तवानुजनपरितापं जानता त्वया सः पंचतां मृतिं । उपयात इति योजना ॥ ५३ ॥ किंपुरुषाः किंपुरुषजातीयाः । ईश्वर इति महापुरुषत्वोपपादनं ।

हरिनररूप नृसिंहरूप । शरणद रक्षकतया तत्प्रद । शमे सुखकारण । अयं हिरण्यकशिपुस्ते विधिकरोऽस्मद्वद्भृत्यः । अयं को यो विप्रशापादसुराविष्टो दैत्यो हिरण्यकशिपुः स इति योजना ॥५७॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यामष्टमोऽध्यायः ॥ ७–८ ॥

॥ हरिः ॐ ॥ प्रल्हादस्य भक्तेषु प्रसिद्धतालाभाय नृसिंहावतारे प्रल्हादे कृतवात्सल्यं दर्शयत्यस्मिन्नध्याये ॥ एवमिति । एवं सुरादयः सर्वे ब्रह्मरुद्रपुरःसरा ब्रह्मरुद्रौ पुरःसरौ श्रेष्ठौ येषां ते सुरादयः । आदि पदेन ऋष्यादयः । अत्र भक्तसमुदायेऽसुराणां मुख्यत्वं । तत्रापि ब्रह्मरुद्रयोरिति बुद्ध्या विवेक्तव्यं । मन्युसंग्रहं कोपमाकव्य स्वीकर्तरि । यद्यपि भगवतो देवदत्तादेरिव न ज्वलनात्मकः कोपः । तथाऽपि शत्र्वपकारहेतुत्वाल्लोकविभीषणचेष्टाहेतुव्यापारविशेषः कोप इत्युच्यते । स च ज्ञानानंदात्मक इति मंतव्यं । उपेतुं समीपं गंतुं नाशकन्न शक्ताः । लुदित्वादङ् ॥ १ ॥ उपेतुमशक्तैर्देवैः प्रार्थिता श्रीरागतेत्याह ॥ साक्षादिति । साक्षान्मुख्या श्रीर्महालक्ष्मी-र्देवैः प्रेषिता प्रार्थनया प्रेरिता तन्महदद्भुतं नृसिंहरूपं दृष्ट्वा । साधारणजनानामदृष्टाद्भुतपूर्वत्वात् । भयशंकायामपि स्वस्या अपि भयामिति लोकमोहाय प्रल्हादे वात्सल्यप्रदर्शनाय च स्वयं शंकितेव सा लक्ष्मीर्नोपेयायेति योजना ॥ २ ॥ अनंतरं भगवतो लक्ष्म्याश्च मनो ज्ञात्वा प्रल्हादं प्रेषयामास ब्रह्मेत्याह ॥ प्रल्हादमिति । हे तात वत्स । त्वदर्थमेव स्वपित्रे कुपितं प्रभुं नृसिंहं । उपेहि । उपेत्य च कोपं प्रशामयेत्युक्त्वा ब्रह्माऽतिकेऽवस्थितं प्रल्हादं प्रेषयामासेति योजना । श्लोकद्वयाभिप्रायं मनसि कृत्वा तात्पर्यं प्रवृत्तं ॥ अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः । नृसिंहं शंकितेव श्रीर्लोकमोहाय नो ययौ । प्रल्हादे चैव वात्सल्यदर्श-नाय हरेरपि । ज्ञात्वा मनस्तथा ब्रह्मा प्रल्हादं प्रैषयत्तदा । एकत्रैकस्य वात्सल्यं विशेषाद्दर्शयेद्धरिः । अवरस्यापि मोहाय क्रमेणै-वापि वत्सल इति ब्रह्मांडे ॥ अन्यै रमाब्रह्माद्यन्यैः साधारणैर्जनैः । अदृष्टाश्रुतपूर्वत्वात्तेषां भयशंकाजनकमपि स्वयं लोकमोहाय प्रल्हादे वात्सल्यदर्शनाय च नृसिंहं नो ययावित्यन्वयः । हरेः । अपि शब्दाच्छ्रियो हरिः क्रमेण तारतम्यक्रमेण वत्सलोऽपि । अयमेकाधिको भक्त इति मोहाय । एकत्रावतारेऽवरस्याप्येकस्य विषये विशेषाद्वात्सल्यं दर्शयेदित्यर्थः ॥ ३ ॥ तथेत्यनंतरमुक्त्वेति शेषः ॥ ४ ॥ आपत्कालाख्येनाहिना । निर्दष्टा ग्रस्ता धीर्येषां ते आपन्नानां । भक्तानामिति यावत ॥ ५ ॥ शीर्ष्णिकरानिधान-

फलमाह ॥ स तत्करोति । धुतं निरस्तं । अभिव्यक्तं परस्य परमात्मनो बिंबस्यात्मनः स्वस्य प्रतिबिंबस्य दर्शनं यस्य सः । निर्वृतोऽभिव्यक्तस्वरूपानंदो हृष्यत्तनुः पुलकितांगः क्लिन्नहृद्भक्त्याऽऽर्द्रांतःकरणोऽश्रुलोचन आनंदबाष्पोपेतनयनः ॥ ६ ॥ तन्न्यस्तहृदयेक्षणस्तस्मिन्न्यस्ते हृदयेक्षणे यस्य सः ॥ ७ ॥ कैमुत्यन्यायेन स्वस्तोत्रयोग्यो भगवान्न भवतीति स्तौति ॥ ब्रह्मादय इति । सत्त्वैकतानमतयः सत्त्वेन स्वाभाविकज्ञानबलसमाहारेण । सत्त्वगुणोद्रेकेण वा । एकताना विस्तृता मतिर्येषां ते । परतोऽपि रमाब्रह्मादेरपि परस्य यस्य सः । उक्तजातेरसुरजातेः । मम स्तोत्रेणेति शेषः । तोष्टुं तोषयितुमर्हति किं । न ते विष्णो इति श्रुतेरिति योजना ॥ ८ ॥ भक्तिं विना धनादयः परस्य पुंस आराधनाय तोषाय न भवतीति अहं मन्ये । कुत इत्यतो यत एतदभावेऽपि भक्त्या तुतोष नान्विति योजना । अभिजनः कुलीनत्वं । रूपं सौंदर्यं । श्रुतं श्रवणं । ओजोऽवष्टंभशक्तिः । तेजो ब्रह्मवर्चसं । प्रभावो माहात्म्यं । बलं देहशक्तिः । पौरुषं पराक्रमः । बुद्धिः शीघ्रग्रहणबुद्धिः । योगो ध्यानं । यूथपो यूथनाथः । नागेंद्र इति यावत् । सेनानेतरि नागेंद्रे यूथनाथः प्रकीर्तित इत्यभिधानं ॥ ९ ॥ भगवंतमेव स्तोतुं भगवदर्पणबुद्धिरहितमितरगुणोत्तमजातिमनुपयुक्तं निंदितत्वात् । तद्वंतं स्तौति ॥ विप्रादिति । द्विषड्गुणयुतात् ज्ञानसत्यादिद्वादशगुणयुतात् । अरविंदनाभपादारविंदयोर्विमुखात् । स्वस्वातंत्र्याभिमानत्यागस्वकीयसर्वसमर्पणबुद्धिरहितात् । विप्रात् । तदर्पितमनोवचनात्मगेहप्राणं श्वपचं वरिष्ठमहं मन्ये । कुत इत्यतस्तदर्पितमन आदिकस्यैव लोकपावकत्वात् । स्वातंत्र्यभ्रांतिमतस्तदभावादित्याशयेनाह ॥ तदर्पितेति । आत्मा देहः प्राणा इंद्रियाणि । उपलक्षणमेतत् । पुत्रमित्रकलत्रादेर्भूरिमानो बहुस्वातंत्र्यभ्रांतिमान् किमपि नैव पुनातीति योजना । यद्यपि स्वस्वातंत्र्याभिमानत्यागभगवदर्पणबुद्धिरहितस्यैते गुणा न संत्येव । तथाऽपि विद्यमाना अप्यप्रयोजका गौणाः कथंचित्संभवंतीत्यत्र तात्पर्यमाह । द्वादशगुणाश्च । ज्ञानं सत्यं दमः शमोऽमात्सर्यं ह्रीः तितिक्षाऽनसूया दानं यज्ञस्तपः श्रुतमित्येत एव विप्रगुणत्वेन भारतोक्तत्वान्नान्ये । अप्रामाणिकत्वात् । अत एव तात्पर्यं ॥ द्विषड्गुणयुतात् । ज्ञानं च सत्यं च दमः शमश्च ह्यमात्सर्यं ह्रीस्तितिक्षाऽनसूया । दानं च यज्ञश्च तपः श्रुतं च महाव्रता द्वादश ब्राह्मणस्येति भारते ॥ १० ॥ पूर्वं भगवते सर्वसमर्पयिता सकलं पुनातीत्युक्तं । तत्र किमर्पितं हविरादिकं भगवान्स्वीकरोति न वा । आद्येऽतिथ्यादेरिव भगवतोऽपूर्णत्वा-

अविदुषः स्वस्वामित्वादिकमविजानतो जनान्मानं दत्तविहारादिसपर्यामात्मनो जीवस्य प्रभुरयं भगवान्नैव वृणीते । स्वस्मिन्नविद्यमानस्वामित्वाज्ञानिनि प्रीतेरभावात् । क्षुन्निवृत्तये स्वीकुरुतामिति तु न । यतो निजलाभेन स्वरूपानंदादिना पूर्णः । अविदुष इत्यनेन विदुषो मानं तु वृणीत इति लब्धं । तर्ह्यपूर्णत्वं स्यादित्यत उक्तं ॥ निजलाभपूर्ण इति । तर्हि कुतः स्वीकुरुत इत्यतः ॥ करुण इति । तथा च दययैव स्वीकरोतीति न तदनुपपत्तिः । स्वस्यप्रयोजनाभावेऽपि दयया स्वीकारेऽर्पयितुः किं प्रयोजनं भवतीत्यतः ॥ यद्यदिति । जनो विद्वान् भगवते यद्यन्मानं विदधीत तच्चात्मने आत्मन आनंदादि लाभाय । यथा मुखश्रीर्मुखालंकारादिभिः प्रतिमुखस्यालंकारादये भवति । तथा बिंबस्य भगवतः पूजादिकं प्रतिबिंबस्य पुरुषार्थाय भवतीति योजना ॥ ११ ॥ ननु सुदृढस्नेहपूर्वकमाहात्म्यज्ञानवता विदुषा समर्पितं भगवान्स्वीकुरुत नाम । तव विमायातं । न च मया स्तुतिः क्रियत इति वाच्यं । यावद्गुणकीर्तनस्याशक्यत्वात् । यत्किंचिद्गुणकीर्तनस्याप्रयोजनवत्त्वात् । इत्यत आह ॥ तस्मादिति । अहमीश्वरस्य स्वरूपं तस्मात्तस्याचिंत्यमाहिमत्वात्सर्वात्मना न गृणामि न स्तौमि । किं त्वजया प्रकृत्या नीचो बद्धो गुणविसर्गं संसारमनुप्रविष्टः पुमान् येन यथा शक्त्यनुष्ठितेनानुवर्णितेन गुणकीर्तनेन संसारात्पूयेन्मुक्तो भवेत् । तर्हि यस्मात्तस्माद्यथा शक्त्यनुष्ठानस्यैव फलवत्वात् । तस्माद्भगवतो भक्तेषु करुणत्वादहं विगतविक्लवः । भावप्रधानो निर्देशः । मोचयति न वेति मनः संदेहरहितो यथा मनीषं यथाशक्ति यथाबुद्धि गृणामीति योजना । भगवतः करुणत्वाद्यथाशक्ति गुणकीर्तनमेव स्वीकृत्य मोचयतीति भावः ॥ १२ ॥ स्वतंत्रमन्यं कुतो न स्तौषीत्यतः सर्वेऽपि तवाज्ञाकारिण इत्याह ॥ सर्व इति । सत्त्वधाम्नो ज्ञानानंदपूर्णस्य तव ब्रह्मादयः सर्वेऽप्यमी वयमिव विधिकरा आज्ञाकारिणः । हि शब्देन विष्णोस्तिष्ठंति प्रदिशेति श्रुतिप्रसिद्धिं द्योतयति । उद्विजंतश्चात्मरक्षणोद्योगप्रयुक्तभयवंतश्च न । तव सर्वव्याप्तत्वज्ञानेनात्मगोपायनेच्छाभावात् । ततो न विजुगुप्सत इति श्रुतेः । भगवद्विक्रीडितस्य प्रयोजनमाह ॥ क्षेमायेति । अस्य भगवतो रुचिरावतारैर्विक्रीडितं क्षेमाय ब्रह्मादिरक्षणाय लक्ष्म्या भूतये भूत्यै । उतात्मसुखाय स्वस्य पूर्णानंदत्वज्ञापनाय भवतीति योजना । सोऽयं विहार इह मे तनुभृत्स्वभावसंभूतये भवति भूतिकृदेवेति स्मृतेः

॥ १३ ॥ यदर्थं ब्रह्मणा प्रेषितस्तत्प्रार्थयते ॥ तदिति । च यस्मादसुरस्त्वयाऽद्य हतः । साधुरपि स्वयमहिंसाशीलोऽपि वृश्चिकसर्पायमाणदैत्यहननेन मोदेत मोदते । लोकाः प्रजाश्च निर्वृतिमानंदमिताः प्राप्ताः । तत्तस्मात् । हे नृसिंह । मन्युं कोपं यच्छ नियच्छ शांतं कुरु । प्रसन्नेन च त्वयाऽनुज्ञाता आयाताः सर्वे देवाः प्रतियांतु । जनाश्च विभवाय दुरितादिनिवृत्तये तव रूपं स्मरंति स्मरंत्विति योजना । कोपं प्रति साक्षात्प्रयोजनस्यासुरहननस्य परंपरया प्रयोजनस्य साधुमोदलोकनिर्वृत्यादेश्च जातत्वात्कोपं शमयेति भावः ॥ १४ ॥ त्वमेव भीतः कोपशांतिं प्रार्थयसे किं भीतिकराश्चावयवाः का इत्यतस्तादृशावयवतया तथा रूपं विशिष्याभयंकरस्य करस्य शिरसि निधानान्नाहं बिभेमि । किंतु लोको बिभेतीत्याशयेनाह ॥ नाहमिति । हे अजित । अतिभयानकस्यातिभयंकरस्य ते तव । रूपादिति शेषः । तस्मान्नाहं बिभेमीति योजना । रूपं विशिनष्टि । अग्नियुक्तनेत्रेऽग्निनेत्रे ते च भृकुटी चाग्निनेत्रभृकुटयः । जिव्हाः कुटिलाश्च ता अग्निनेत्रभृकुटयश्च तासां रभसं यस्मिंस्तत् । उग्रे दंष्ट्रे यस्य तत् । तच्च तदुग्रदंष्ट्रं च तस्मात् । अनेनाग्नियुक्तत्वाज्जिव्हात्वाच्च नेत्रयोः । जिव्हात्वाद्भृकुट्या उग्रत्वात्तीक्ष्णाग्रत्वाद्दंष्ट्रयोर्भयंकरत्वमुक्तं भवति । आंत्रस्रज आंत्राणां स्रक् यस्मिंस्तत् । आंत्राणामेव भयंकरत्वं । स्रजस्तु सुतरामिति भावः । क्षतजयुक्तानि रक्तयुक्तानि केसराणि यस्य तस्मात् । शंकुवत् स्थूणवत् स्तब्धौ कर्णौ यस्य तस्मात् । क्षतजकेसरं च तच्छंकुकर्णं च । निर्ह्रादेन ध्वनिना भीता दिगिभा यस्य तस्मात् । अरिं भिंदंतीत्यरिभिंदि तानि नखाग्राणि यस्य तस्मात् ॥ १५ ॥ मद्रूपाद्भयाभावेऽपि तव कस्माद्भयं तत्परिहारोपायं वा किमिच्छसीत्यत आह ॥ त्रस्त इति । हे उशत्तम । वश कांतौ । कांतिरिच्छाऽमोघस्वतंत्रेच्छा । कृपणवत्सल । दुःसहादुग्रात्संसारचक्रात्प्राप्तं यत्कदनं विषयाभिलाषस्तदप्राप्तिरूपचिंता तया कृशतां शोषणं प्रणीतः प्राप्तः । स्वकर्मभिर्बद्धो वशीकृतः । अत एवाहं त्रस्तोऽस्मि । एवं भीतानामपवर्गं मोचकमरणं रक्षकं तेंऽघ्रिमूलं कदा नु समियामिति योजना । अनेन संसाराद्भयं तत्परिहाराय त्वदंघ्रिमूलप्राप्तीच्छाऽस्तीत्युक्तं भवति ॥ १६ ॥ संसारचक्रे क्वापि जन्मनि सौख्यं नास्तीति किमित्यत आह ॥ यस्मादिति । हे भूमन् । सकलयोनिषु प्रियाप्रिययोर्वियोगसुयोगौ जन्मशोकश्चैतल्लक्षणाग्निना दह्यमानोऽतद्धिया तच्छामकोपायज्ञानाभावेन यस्माद्दहं भ्रमामि तस्मात्तच्छांतिहेतुं तव दास्ययोगमुपायं वदोपदिश । न च मद्दास्यातिरिक्तं किमपि दुःखौषधं सेवनीयमिति वाच्यं ।

यदौषधं तदपि दुःखमेवेति योजना ॥ १७ ॥ किमनेनापि दास्ययोगेन सर्वदुर्गाणि तरसि किमित्यत आह ॥ मोहमिति । हे नृसिंह । सः संसारे क्लिश्यमानोऽहं प्रियस्य सुहृदः परदेवतायास्तव विरिंचगीता लीलाकथा अनुगृणन् योग्यतानुसारेण गृणन् । गुणविप्रमुक्तस्त्रैगुण्यलक्षणपाशाद्विमुक्तस्ते पदयोर्युगं पदयुगं तदालयो येषां ते हंसा नारदादयस्तत्संगवान्सन् दुर्गाण्यंजस्तरामीति योजना ॥ १८ ॥ प्रियस्येत्यनेनेष्टत्वमुक्तं । तद्दृष्टांतमालयोपपादयाति ॥ बालस्य चेति । च शब्दोऽनुक्तस्य पांथस्य समुच्चये । यादित्यस्य यद्वादित्यर्थः । इष्ट शब्दस्य लिंगविपरिणामादिना प्रत्येकमन्वयः । त्वामिति शेषः । एवं च । हे प्रभो नृसिंह । पांथस्य शरणं गृहमिष्टं यद्वदेवं बालस्य पितरौ । आर्त्तस्य रोगार्त्तस्यागदमौषधं । उदन्वति समुद्रादौ मज्जतो नौर्नौका । तप्तस्य घर्मतप्तस्य तर्पणविधिः शीतलोदकपानविधिः । त्वदुपासकानां तनुभृतां त्वं तद्वदंजसेष्ट इति योजना । इष्टत्वेपि वैलक्षण्यद्योतनायामंधिः ॥ १९ ॥ उक्तरीत्या ममेष्टत्वेऽपि स्वातंत्र्याभावात्कथं फलं दास्यामीत्यतः स्वातंत्र्यं वर्णयति ॥ यस्मिन्निति । अत्र सर्वकारकाणां सप्रभेदानां प्रकाराणां च भगवदधीनत्वमुच्यते । परो ब्रह्मादिः । अपरः स्वर्णकारादिः । तथा च यः परो ब्रह्मादिः पृथक् स्वभावः । भवता संचोदितः । यस्मिन् ब्रह्मांडे । यतः पांचभौतिकपञ्चलक्षणोपादानात् । उपादानाव.शिष्टभागस्यापादानत्वं । यर्हि सृष्टिकाले कालदेशभेदेनाधिकरणं द्विविधं । येन निमित्तभूतदृष्टादृष्टकरणेन यस्य जनस्य संबंधि । शेषत्वं षष्ठ्यर्थः । यस्मै देवसमूहाय । यथा येन संस्थानविशेषादिप्रकारेणायं भावं चतुर्दशलोकादिकं करोति । उत्पादयति । विकरोति विविधं करोति । यश्चापरः स्वर्णकारादिः । तत्राप्येवं द्रष्टव्यं । तदाखिलं भवतः स्वरूपं सर्वात्मना त्वदधीनामिति योजना । अत एव तात्पर्यं ॥ कर्तृकर्मक्रियादीनां सत्तावृत्तिस्तथैव च । विष्ण्वधीनं यतः सर्वं सर्वरूपस्तदुच्यत इति ब्रह्मतर्के ॥ सत्ता स्वरूपसत्ता । वृत्तिः प्रवृत्तिः । अर्थक्रियाकारित्वं । प्रमितेरप्युपलक्षणमेतत् । सर्वरूप इति बहुव्रीहिः । सर्वस्वरूप उच्यत इत्यर्थः । अनेनाधीनं स्वरूपमुच्यन्त इत्युक्तं भवति ॥ २० ॥ भगवत्प्रसादमंतरा मनोमूलस्य संसारचक्रस्य दुस्तरत्वमाह ॥ मायेति । माया चित्प्रकृत्यनुगृहीताऽचित्प्रकृतिचोदितगुणानुमतेन भगवत्प्रेरितसत्त्वानुगुणानुकूल्येन पुंसः कर्ममयं पुण्यपापादिकारणीभूतं छंदोमयं संकल्पविकल्पाद्यात्मकं बलीयो दुर्निग्रहं मनः सृजति । यन्मनोऽजया प्रकृत्याऽर्पितषोडशारमर्पितानि षोडश दशेंद्रियाणि पंच-

प्राणा मनश्चेति । अराणि यस्य तत् । संसारचक्रं । षोडशारमध्ये पतितस्यापि मनसः प्राधान्यात्तस्यैव संसारचक्रत्वाभिधानं ।
एतत् । हे अज । त्वदन्यः कोऽतितरेदतितारयेत् । अंतर्णीत णिच् । इति योजना । त्वमेव मनोनिग्रहादिकं कारयित्वोत्तमप्रसाद-
मासाद्य संसारचक्रं तारयेति भावः । षोडशार पदस्य पृथङ्मनोग्रहणस्य च तात्पर्यं कथितं तात्पर्यं ॥ दशेंद्रियप्राणमनोऽरं ।
मूलं मन एव संसारचक्रस्येति ॥ दशेंद्रियप्राणमनोलक्षणषोडशारमित्यर्थः । मन एव मूलं प्रधानमिति तदेव संसारचक्रमिति
कथितमित्यर्थः ॥ २१ ॥ उक्तविधसंसारचक्रे स्वस्य निष्पीड्यमाणत्वमुक्त्वा ततोऽपकर्षं प्रार्थयते ॥ सत्त्वमिति । हे विभो ईश्वर
नृसिंह । त्वं स्वधाम्ना स्वसामर्थ्येनैव नित्यविजितात्मगुणो नित्यविजिता दूरनिरस्ता आत्मनो देहस्य गुणाः स्वरूपोत्पत्तिध्वंसा-
दयः । जीवस्य वा देहयोगवियोगादयो येन सः । कालः कलयति सर्वमिति सर्वज्ञः । वशीकृतविसृज्यविसर्गशक्तिर्वशीकृता
स्वाधीना विसृज्यानां जीवानां विरिंचादिगता विसर्गशक्तिर्यस्य सः । अजया प्रकृत्या षोडशारे चक्रे विसृष्टं निष्पिड्यमाणं च मां
त्वां प्रपन्नं ततोऽपकर्षेति योजना ॥ २२ ॥ देवताविभवापहर्ता त्वया हत इति स्तौति ॥ दृष्टा इति । हे निभो नृसिंह । अखिल-
धिष्ण्यपानामिंद्रादीनां । आयुर्मन्वंतरायुः श्रियस्त्रैलोक्यसंपदो विभवो हिरण्यलक्षणो योऽर्थ एते ये दिवि मया योगदृष्ट्या दृष्टाः ।
याश्च यान् जन इच्छति । ते यस्या अस्मात्पितुः कुपितहासो दुष्टहासस्तेन विजृंभितयोर्विस्मृतयोर्भ्रुवोर्विस्फूर्जितेन चेष्टाविशेषेण
विलुलिता विनाशिताः । स तु तादृशो दैत्यस्त्वया निरस्त इति योजना ॥ २३ ॥ संसारतरणमेव किं प्रार्थयसे । आशिषः
प्रार्थयस्वेत्यत आह ॥ तस्मादिति । हे नृसिंह । उरुविक्रमेण दुर्निरसनसामर्थ्येन कालात्मना कालनामकेन ते त्वयाऽऽशिषो
विलुलिता भवंति । तस्मात्स्वर्गमारभ्याविरिंचाद्विरिंचलोकपर्यंतं । अनुभूयमाना आयुः श्रियमैंद्रियमिंद्रियभोग्यं विभव एतल्लक्ष-
णास्तनुभृताममूराशिषः । ज्ञः । मन्वंतरायुषः स्वर्ग्या महर्लोके तु काल्पिका इत्यादिना कालपरिमितत्वं जानन् अहं नेच्छामि । ॥ ३०
अतो निजभृत्यपार्श्वं मामुपनयेति योजना ॥ २४ ॥ कालपरिमितत्वात्स्वर्गाद्याशिषामिच्छा माभूत् । इह लोके आशिषः कुतो
नेच्छसीत्यत आह ॥ कुत्रेति । इह त्वित्यन्वयः । तु शब्देन स्वर्गाद्यपेक्षया वैशेष्यं द्योतयति । इह तु लोके आशिषः कुत्र संति ।
आशिषो मे भवंतीत्याशामात्रं । तथा चाशिषो भवंतीति मित्रवचनादिना श्रुतिसुखा एव श्रवणसुखजनकभ्रांतिविषया एव । यथा

मृगतृष्णासु मरुमरीचिकासु जलं पास्यामीत्याशयमात्रं । न त्वर्थक्रियाकारि अत एव मृगतृष्णरूपा इत्युक्तं । ह्रस्वश्छांदसः । संतु वा क्वचिदाशिषस्तथाऽपि तद्भोगायेदं कलेवरं क्व । तद्भोगक्षमं न भवतीति भावः । कुत इत्यत आह । अशेषरुजां सर्वरोगाणां विरोहं विशेषोत्पत्तिकारणं । तर्हि लोको न निर्विंद्यते कुत इत्यत आह ॥ निर्विद्यत इति । यदपि यद्यप्येवं तथाऽपि कामानलं दुरापैरायाससाध्यैर्मधुलवैर्विषयलक्षणाज्यबिंदुभिः शमयन् भवानीति विद्वान् जनो न निर्विंद्यते न विरक्तो भवतीति योजना । भ्रांतो लोक इति भावः । अनलत्वदुरापत्वमधुलवत्वाद्युक्तिर्वस्तुस्थितिप्रदर्शनं । न तु भ्रांतस्यैवं ज्ञानमिति न मंतव्यं ॥ २५ ॥ भक्तवात्सल्यद्योतनाय स्वामिन् भगवदनुकंपोत्पत्तेराश्चर्यकरत्वमाह ॥ क्वाहमिति । हे ईश । तमोऽधिके रजःप्रभवे विषयरागोत्पादकेऽस्मिन्सुरेतरकुले जातोऽहं क्व । एतादृशे मयि तवानुकंपा क्व । असुरकुलसुरोत्तमयोर्विरुद्धत्वादाश्चर्यमेतत् । भक्तवत्सलत्वादेवेयमनुकंपेति भावः । स्वास्मिन्कृतः प्रसादो नान्यत्रेत्यसुरजनमोहायाह ॥ नेति । मे शिरस्यर्पितः पद्मकरप्रसादः पद्मोदरनिभपाणिनिधानलक्षणो यद्यः सः । न ब्रह्मणो न तु भवस्य न वै रमाया इति योजना । वस्तुतस्तु मे इदानीमर्पितस्तेषु सदाऽर्पितो मदपेक्षया भक्तिज्ञानादेः सुखस्य च तेषु सृतौ मुक्तावप्याधिक्यात् । तारतम्यस्य सर्वथाऽप्यपनेतुमशक्यत्वात् । अत एव तात्पर्ये ॥ रमादीनामिदानीं नार्पितः । रमादीनामधिकोदयोऽपि सेवाधिकत्वादेव । श्रीब्रह्मब्राह्मीर्वींद्रादित्रिकतत्स्त्रीपुरुष्टुताः । तदन्ये च क्रमादेव सदामुक्तौ सृतावपि । हरिभक्तौ च तज्ज्ञाने सुखे च नियमेन तु। परतः स्वतः कर्मतो वा न कथंचित्तदन्यथेति ब्रह्मतर्के ॥ किं तु सर्वदाऽर्पित इति ग्राह्यं । अधिकोदयोऽपि सुखादिलक्षणं । अभ्युदयोऽपि सेवाऽधिकत्वात् । ज्ञानभक्त्यादिलक्षणसाधनाधिकत्वात् । ब्राह्मीर्वींद्रेति ह्रस्वश्छांदसः । ब्रह्मब्राह्मीपदाभ्यां वायुभारत्यावपि ग्राह्ये । वींद्रादित्रिकं गरुडशेषरुद्रत्रयं । तत्स्त्रियः सौपर्णीवारुणीपार्वत्यः । पुरुष्टुत इंद्रः । कामोऽप्युपलक्षणीयः । तदन्ये सूर्यादयः परतो वरशापादिना स्वतः स्वभावतः कर्मतोऽत्युत्कटतप आदितः । तत् तारतम्यं ॥ २६ ॥ भक्तिरेव भगवत्प्रसादे निमित्तमिति गूढाभिसंधाय देवविरुद्धकुले जाते मयि तवानुकंपेत्येतदाश्चर्यमित्युक्तं । अधुनाऽभिसंधिमुद्घाटयति ॥ नैवेति । जंतोर्जनस्य परावरमतिः स्वकीयपरकीयजातिविषयिणीमतिर्यथा प्रसादहेतुस्तथा जगत आत्मसुहृदो भवत एषा मतिर्न प्रसादहेतुः स्यान्नु । नन्वेतन्मतेः प्रसादहेतुत्वाभावे किं निर्निमित्तः

प्रसाद इत्यत उक्तं ॥ तथाऽपीति । तथाऽप्येतादृशमतेर्हेतुत्वाभावेऽपि । जातिविवेकमंतरा संसेवया सुरतरोरिव ते प्रसादोऽपि संसेवयैव । सोऽप्यनेकप्रकार इत्याह । सेवेति । उदयः सेवानुरूपो भक्त्यनुसारी । न तु परावरत्वं परावरत्वकारणक इति योजना । रमादीनामपि सेवाधिकत्वादेवेत्यादि तात्पर्यमत्राप्यनुसंधेयं ॥ २७ ॥ केनानुगृहीतोऽसि येनेदृशी भक्तिस्तव जातेत्यत आह ॥ एवमिति । हि भगवान् एवं कामानलमित्युक्तरीत्या प्रभवाहिकूपे प्रकृष्टभवलक्षणदुर्विषयरूपाहियुक्तकूपे निपातितं कामाभिकामं विषयाभिलाषिणं जनमनुसृत्यप्रसंगात्तादृशजनसंगात्पतन्योऽहं सुरर्षिणाऽऽत्मसात्कृत्वा गृहीतोऽनुगृहीतः सोऽहं तव भृत्यसेवां कथं नु विसृज इति योजना ॥ २८ ॥ भक्तरक्षणाय दुष्टशिक्षणाय भक्तवाक्यपरिपालनाय च त्वदवतार इति स्तौति ॥ मदिति । हे अनंत । मत्प्राणरक्षणं भवान्सर्वत्र व्याप्तो भक्तं रक्षतीति नारदोक्तं । असाद्विधिस्तुर्मदपरो मत्तोऽन्यो यदीश्वरस्तर्हि त्वामवतु । तव कं शिरो हरामीति खड्गं प्रगृह्य यदवोचदस्मात्पिता तस्य पितुर्वधं च सर्वत्र व्याप्त इत्यादि स्वभक्तर्षिवाक्यं ऋतं विधातुं कर्तुमवतीर्णं त्वां मन्य इति योजना ॥ २९ ॥ जगतो वैलक्षण्यं तत्स्रष्टृत्वं च तवेति स्तौति ॥ एक इति । अनंतेत्यनुवर्तते । हे अनंत । त्वमेवैको मुख्योऽभिन्नश्च । एतज्जगतोऽमुख्यं परस्परभिन्नं च । यतोऽमुष्य जगत आद्यंतयोर्मध्यतश्च प्रागभावध्वंसकाले स्थितिकाले च यथाक्रमं पृथक् अवस्यस्यवतिष्ठसि । धातूनामनेकार्थत्वात् । अनेकमुख्यत्वमेकत्वं चोक्तं । गुणव्यतिकरं गुणवैषम्यं । तत एव तदुपादानकं निजसामर्थ्येनेदं दृष्ट्वा तदनुप्रविष्टस्तैर्भिन्नैरधिष्ठानैस्त्वमपि नानेवावसितोऽसीति योजना । वस्तुतस्तु नानाऽधिष्ठानकस्त्वमेक एव । इंद्रो मायाभिः पुरुरूप इयते । प्रतिदृशमिव नैकधार्कमेकमित्याद्यागमात् ॥ ३० ॥ सृष्ट्वा गुणव्यतिकर इत्यनेन परमात्मजगतोर्भेदप्राप्तस्तर्हि सर्वं खल्विदं ब्रह्म भूतानि विष्णुर्भुवनानि विष्णुरित्यादावभेदव्यपदेशः कथमित्यतस्तद्गतिमाह ॥ त्वं वेति । हे ईश । सदसन्मूर्तामूर्तात्मकं चेतनाचेतनात्मकं वेदं जगत्त्वं वा उच्यते । त्वद्वाचकेन ब्रह्मविष्ण्वादि शब्देन सामानाधिकरण्येनोच्यते । त्वदधीनसर्गादिमत्वात् । यदधीना यस्य सत्ता तत्तदित्येव भण्यते । इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभव इत्याद्युक्तेः । न च वस्तुतोऽभेद एव किं न स्यादिति वाच्यं । यतो भवांस्ततो जगतोऽन्यः स्रष्टृत्वादेरेव । न हि स्रष्टृसृज्ययोरभेदो दृश्यते । न चान्येनान्यत्वं युज्यते । मदधीनत्वात् । मदभेदव्यपदेशो देवतादेरपि स्वातंत्र्यात्तदभेदव्यप-

देशोऽपि किं न स्यादित्यतः स्वातंत्र्यमेव नास्ति । तद्बुद्धेस्तु भ्रांतित्वमित्याह ॥ मायेति । यथाऽऽत्मनो जीवस्य परबुद्धिः परत्वबुद्धिः । स्वातंत्र्यबुद्धिरिति यावत् । सा मायाऽज्ञानजन्या । अत एवापार्थाऽयथार्था । अचेतनेऽभेदव्यपदेशस्योक्तगतावपि । तद्योऽहं सोऽसौ सोऽहमित्यादौ चेतने भेदोक्तेर्नेयं गतिस्तदभेदस्यैव संभवादिति वाच्यं । चेतनं प्रत्यपि जननादिहेतोर्भगवतश्चेतनेनाभेदायोगात् । तर्ह्यहं देवदत्तश्च भगवानिति बुद्धिः कथमित्यतः सा च भ्रांतिरित्याह ॥ यदिति । याऽऽत्मनः स्वस्य परस्य देवतादेर्बुद्धिर्भगवदभेदबुद्धिः साऽपि मायाऽज्ञानजन्या । अत एवापार्थाऽनर्थप्रदा च यज्जननादेर्यदधीनत्वं तस्य तत्सामानाधिकरण्यमिति सामान्यव्याप्तिमाह ॥ यद्यस्येति । यस्य जन्मनि धनं स्थितिरीक्षणं ज्ञानं च यद्यतस्तदेव तत्सामानाधिकरण्यव्यपदेशभागेव खलु । वै प्रसिद्धं । उदाहरति ॥ कालवदिति । दैववदिति उपलक्षणं । उष्ट्रिर्वृक्षदाहः । उष दाह इति धातोः । तत्र कालाधीनत्वात् । काल शब्दो यथा प्रलयाग्नौ कालाग्निरिति व्यवहारस्तथा । यथा वा । तरौ कल्पवृक्षादौ दैवाधीनत्वाद्दैवतरुः सुरतरुरित्यादि तथेत्यर्थ इति योजना । एतत्सर्वमभिप्रेत्योक्तं तात्पर्ये ॥ यथा वृक्षश्च वृक्षदाहश्च दैवकालाधीनत्वाद्दैवं कालश्चेत्युच्यते । एवं त्वदधीनत्वात्सर्वस्य सर्वं त्वमित्युच्यते । स्वतस्ताद्भिन्नोऽपि । अहं चान्यश्च परमेश्वर एवेत्यपार्था भ्रांतिः । तदधीनत्वादेव स इत्युच्यते । न स्वरूपत्वादित्यर्थ इति ॥ सुरतर्वादिकं दैवमुच्यते कालाग्न्यादिकं च काल इति चोच्यते । सर्वमित्युच्यते सर्वं ब्रह्मेत्युच्यते । इत्यर्थः । स्वतस्तद्भिन्नोऽपि तथाऽपि सर्वं ब्रह्मेत्युच्यते । यद्वा । अपि शब्दो हेतौ । यतः स्वतो भिन्नस्तत इत्यर्थः । अहं च परमेश्वर एवेति बुद्धिरपार्था भ्रांतिरित्यर्थः । आद्यंतयोः पृथगवस्यतीति प्रलयादिसृष्टिकाले स्थितिरुक्ता । तामेव विवृण्वन् स्तौति ॥ न्यस्येदमिति । हे भगवन् । विलयांबुमध्ये इदं जगन्महदादि । आत्मन्युदरे न्यस्य शेषासनः । शिष्यत इति शेषं । प्रलयकाले विद्यमानं वटपत्रमासनं यस्य सः । भूत्वा कालविशेषाविवक्षया वा शेषासनो निजसुखानुभवो निरीहः सृष्टीच्छाव्यक्तिरहितः । पूर्णकामो वा । योगेनात्मसामर्थ्येन । स्वेच्छयैवेति यावत् । मीलितदृक् । कुत इत्यतो वस्तुतो वीतनिद्रः । तदपि कुतस्तुर्यस्थितः । ननु जीवस्य संसारेऽवस्थात्रयं । तुर्यावस्था मुक्त्यनंतरावस्था । भगवांश्च नित्यमुक्तः । तया तुर्ये मुक्त्यवस्थायामेव स्थितो विद्यमानः । एतदभिप्रायेण तुर्ये स्थित इति विग्रहः प्रदर्शितस्तात्पर्ये । अन्वनंतरं प्रलयचरमभागे आत्मनि स्वाधीनतया विद्यमानं तमः प्रकृतिमन्वनंतरं गुणांश्च

सत्त्वादिगुणान् युंक्ष्ये कार्योन्मुखीकरोषीति योजना ॥ ३२ ॥ महाप्रलये विद्यमानेन भगवता पद्मनाभस्य निर्विशेषाभेदमुक्त्वा स्तौति ॥ तस्यैवेति । तस्यैव प्रलयकालवर्तिना निर्विशेषाभिन्नस्यैव ते प्रकृतिधर्मिणः प्रकृत्यादितत्त्वसमुदायाश्रयस्यांभस्यनंतशयनादनंतशयनमधिष्ठाय विरमत्समाधेः समाप्नुवद्योगनिद्रस्य आत्मगूढमुदरे विद्यमानं निजा स्वाभाविकी । कलयतीति कालविषयिणी या शक्तिस्तया संचोदितं ते नाभेः स्वकणिकाद्वटवद्वटांकुरमिव यन्महाब्जमभूदिदं ते वपुर्वपुःस्थानीयं त्वद्वशत्वादिति योजना । अत्र कणिकाशब्दवाच्यस्य बीजस्य वटं प्रति विकारिकारणत्ववद्भगवन्नाभेर्विकारिकारणत्वं न मंतव्यं । कणिकाशब्दस्य बीजांतर्वर्तिदेवतापरत्वात् । एतदेवाभिप्रेत्य तात्पर्ये ॥ जगदात्मकमब्जमपि भगवद्वशत्वात्तद्वपुः । स्थावराणां तु सर्वेषां देवतायाभिमानिनी । विशेषाद्वटबीजे च साऽश्वत्थे च व्यवस्थिता । अदृश्या कणिका नाम सा वृक्षान्व्यंजयत्यपि । अतो बीजमिति प्रोक्ता साजातेऽप्यंकुरेस्थिता । एवं हरिः कारणेषु स्थितः कार्यजनेरनु । कार्याण्यनुप्रविष्टः सन् प्रथमं तत्र दृश्यत इति च ॥ जगदात्मकमित्यनेन जडत्वं सूचितं । तद्वशत्वादिति निमित्तोक्त्या वपुः शब्दो गौण इत्युक्तं भवति । सा देवताऽङ्कुरोत्पत्तेः पूर्वं बीजे व्यवस्थिता संनिहिता । तत्रापि वटबीजेऽश्वत्थेऽश्वत्थबीजे च विशेषण व्यवस्थिता । तस्या एव कणिकेति नाम । न चैवं कणिकाया बीजत्वोक्तिरनुपपन्ना । व्यंजकत्वादिना तदुपपत्तेरित्याह ॥ सा वृक्षान्व्यंजयत्यपीति । न च बीजस्यांकुरतायां देवता क्व वर्तेत इति वाच्यं । परिणामानंतरमंकुरे स्थित्युपपत्तेरित्याह ॥ सा जातेप्यंकुरे स्थितेति । हरेरप्येवं स्थितिमाह ॥ एवमिति । प्रथमं कार्यजनने । पूर्वं तत्र कारणेऽनंतरं तत्र कार्ये दृश्यत इत्यर्थः ॥ ३३ ॥ पूर्वश्लोके पद्मोत्पत्तिमुक्त्वाऽधुना ब्रह्मणः पद्मादुद्भवं पद्मोपादानगतरूपस्य पद्मादन्यत्रादर्शनं चाह ॥ तदिति । तत्संभवः पद्मसंभवः कविः सर्वज्ञः सः प्रसिद्धो हिरण्यगर्भोऽतः पद्मादन्यद्वस्त्वपश्यन् । व्यंजकत्वाद्बीजशब्दवाच्यं । उपादानगतं । वस्तुत आत्मनि स्वदेहभूते पद्मे ततमब्दशतमप्सु निमज्यमानः सन् बहिः पद्माद्बहिर्विचिन्वन् गवेषमाणो नाविंदत् । कुत इत्यत आह ॥ जात इति । अंकुरे जाते तत्रैव विद्यमानं बीजगतं रूपं । इह ततो बहिः कथमुपलभेतेति योजना । अत्र पद्मोपादानगतस्य कणिका शब्दवाच्यस्यादृश्ययोगिगम्यस्य कार्ये जाते तद्गतत्वेनान्यत्राभावात् । अन्यत्रादर्शनं पद्मगतत्वेनैव दर्शनं च ग्राह्यं । बहिर्गवेषणं च लोक-

विडंबनाय भगवत्प्रीत्यर्थमेव वा । अन्यथा कविरित्युक्तसर्वज्ञत्वविरोधात् । उपादानाद्यनंतर्गतपद्मनाभदर्शनं तु तपसाऽस्त्येव । तृतीयस्कंधे तथैवोक्तेरित्येव मंतव्यं ॥ ३४ ॥ बहिर्नाविंददित्युक्त्या बहिरेवादर्शनं । अंतस्तु दर्शनं जातमित्याह ॥ स त्विति । हे ईश आत्मयोनिः परमात्मकारणकः स हिरण्यगर्भः । तु शब्देन देवतांतराद्वैशिष्यमाह । एकस्य हरेर्बहुधा जन्मास्तीति । अतिविस्मितो भगवद्विषयेऽत्यंताश्चर्यबुद्धिमान् अब्जमाश्रितः । कालेन भगवन्नियुक्तकालावच्छिन्नेन तीव्रतपसा परिशुद्धभावस्तादृशरूपदर्शनसमर्थमनस्को य इति काले तपस्यनुष्ठित एव ब्रह्मणा दृश्ये एवमिति भगवत्संकल्पादिति भावः । त्वां भूतेंद्रियाशयमये आशयो मनस्तत्त्वं भूतादिविकारे आत्मनि देहस्थानीये पद्मे भुवि गंधमिव गंधाख्यदेवतामिवातिसूक्ष्मं विततं व्याप्य स्थितं ददर्शेति योजना । अत एव तात्पर्यं ॥ गंधाख्या देवता यद्वत्पृथिवीं व्याप्य तिष्ठति । एवं व्याप्तं जगद्विष्णुं ब्रह्मात्मस्थं ददर्श हेति चेति ॥ जगद्व्याप्तं जगद्व्याप्यतिष्ठंतं । आत्मस्थं देहस्थानीयपद्मस्थमित्यर्थः ॥ ३५ ॥ न केवलं पद्मांतर्गतसूक्ष्मरूपं बहिः पद्मनाभरूपं दृष्टवान् । किंतु पातालमेतस्य हीत्यादिनोक्तं विराड्रूपं दृष्ट्वा मुदमापेत्याह ॥ एवमिति । अनंतार्थकसहस्रपदं वदनादेः सर्वस्य विशेषणं । मायामयं । एतच्च मायामयं ज्ञानस्वरूपमिति वा तात्पर्ये व्याख्यातं । मायेत्युक्त्वा प्रकृष्टत्वात्प्रकृष्टं हि मयाभिदं । विष्णोः प्रज्ञप्तिरेवैकेति श्रुतेः । सदुपलक्षणसंनिवेशं । एतदप्यानंदादिलक्षणसमुदायरूपमिति तात्पर्ये व्याख्यातं । अथ कस्मादुच्यते सदिति । संतो ह्यस्मिन्नानंद ओजो बलमिति स्पष्टश्रुतेः । उप शब्दस्योपपन्नार्थकत्वात् । संनिवेश शब्दस्य संनिवेशश्च यस्तोमः समुदायो गुणः स्मृत इत्यभिधानात् ॥ ३६ ॥ भवान्हयशिरस्तनुवं च बिभ्रत् श्रुतिगणांश्च । तस्मै ब्रह्मणेऽनयत् रजस्तमः सत्त्वं च प्रियतमां तनुं प्रीतिविषयप्रतिमां । देवताप्रजेश्वरराक्षसादिषु स्थित्वा लीलाकर्तृत्वात् ॥ ३७ ॥ भगवदवताराणां लोकविभावनधर्मपरिपालनदुष्टहननादिकमेव प्रयोजनमित्याशयेन स्तौति ॥ इत्थमिति । हे महापुरुष । नरावतारो ऋषभादिः । तिर्यगवतारो वरहादिः नृतिर्यगवतारो नृसिंह इति वा । ऋषिः कापिलादिः । देवो यज्ञादिः । झषो मत्स्यः । लोकान्विभावयासि । ऐश्वर्ययुक्तान्करोषि । जगत्प्रतीपान् दुष्टान्हंसि । धर्मं चतुष्पादं धर्मं पासि । युगानुवृत्तं कृताद्यनुवृत्तं । एतादृशस्त्वं । यतः कलौ छन्न उक्तप्रयोजनायावतीर्णः । अथ तस्मात्सः त्वं त्रियुगोऽभव इति योजना । उक्तप्रयोजनायेत्युक्तत्वात् दैत्यमोहनाय बुद्धावतारेऽपि

न दोष इति मंतव्यं ॥ ३८ ॥ इंद्रियेषु मनसः प्राधान्यात्तन्नैर्मल्यकामस्तद्दोषं वक्ति ॥ नैतदिति । हे वैकुंठनाथ । एतदेतादृशं मनस्तव
कथासु न संप्रीयत इति क्रियाकारकयोजना । कीदृशमित्यतः पंचविशेषणैर्मनसो दोषमुक्तं । तीव्रं वेगेन विषयसंचारवत् । ईषणं
दारापुत्रवित्तादीच्छा । भवत्वेवं किं तेऽनिष्टमित्यत आह ॥ तस्मिन्नित्यादि ॥ ३९ ॥ मनस उक्त्वेतरेंद्रियाणां दोषं वक्ति ॥
जिव्हेति । हे अच्युत । मा मामेकत्र स्वविषये रसास्वादनेऽवितृप्ताऽलंबुद्धिरहिता जिव्हा विकर्षति । तद्विषयकरागवंतं करोति ।
एवमुत्तरत्रापि मां विकर्षतीत्यनुवर्तनीयं । विषयवाचिपदाभावस्थलेऽन्यत इति । उदरस्यानिंद्रियत्वेऽपि अशनाया लक्षणबुभुक्षा-
जनकत्वेन तदुक्तिः । उक्तेतरपाण्यादिसमूहः सपत्न्यः स्वस्य विषये गेहपतिं यथा लुनंति तथेति योजना ॥ ४० ॥ एवं संसार-
पतित्वं स्वस्योक्त्वा भववैतरण्याः पारगमनं प्रार्थयते ॥ एवमिति । पश्यन्नित्यस्य विभक्तिव्यत्ययेन पश्यंतमित्यर्थो बोध्यः ।
द्वितीयांतानि जनस्य स्वस्याऽपि विशेषणानि । तथा चैतद्विशेषणविशिष्टं जनं पश्यंतं । एतद्विशेषणविशिष्टं मां पश्यंस्त्वं पारं वैत-
रिण्याः पारं तीरमातिपीपृहि अतिशयेन गमयेति योजना । पिपर्तेर्धातूनामनेकार्थत्वाद्गमनार्थत्वं । अभ्यासदीर्घश्छांदसः । अलि-
ङ्यपि कितिचिद्रूपा ह्रस्वी वेति ह्रस्वश्च । वैतरिण्यां पतितमित्यन्वयः । परस्परं जननमरणं च भवतीति तल्लक्षणान्यातिशयेन भीतं ।
स्वपरविग्रहयोर्देहयोर्यथायोग्यं वैरमैत्रे यस्य तं । मूढसत्त्वं पारगमनोपायाज्ञं प्राणिनं । हंतेति भगवद्दर्शनाल्हादास्वादने ॥ ४१ ॥
पूर्वत्र भववैतरिण्या उत्तारणा प्रार्थिता कथमुत्तारणं करोमीत्यत आह ॥ क इति । जगत उत्तारणं किमशक्यत्वान्न करोषि । उत
प्रयोजनाभावात् । द्वितीयेऽपि किं परप्रयोजनाभावाद्वा । आद्ये आह । हे अखिलगुरो । आर्त्तबंधो भगवन् । अस्य जगतो
भवसंभवलोपहेतो भव उत्पत्तिः संभवः सम्यक् स्थितिर्लोपो नाशस्तद्धेतोस्तेऽत्र जगद्विषये उत्तारणे कः प्रयासः । अन्याधीनो-
त्पत्त्यादिके प्रयासः स्यात् । त्वदधीनोत्पत्त्यादिके तव न कोऽपि प्रयास इति भावः । द्वितीयेऽपि परप्रयोजनमस्तीत्याह ।
मूढेषु उत्तारणोपायाज्ञेषु भक्तेषूत्तारणकरणं महदनुग्रहो महाननुग्रहः । आत्वस्यानित्यत्वादभावः । आत्यंतिकदुःखोच्छेदस्वरूपानं-
दाविर्भावस्य परप्रयोजनाभावात् । तृतीयमंगीकरोति ॥ किं तेन त इति । स्वप्रयोजनं नास्त्येवेत्यर्थः । तर्हि कथं करोमीत्यतो
दयालुत्वादिति भावेन ते बंधो इति संबोधनं । स्वभावश्चायमित्याह । प्रियजनाननुसेवमानः प्रियजनान् भक्तजनान् अनु भक्त्य-

नुसारेण फलदानैक सेवमानः । ताच्छील्ये शानच् । भक्तेषु फलप्रदानस्वभाव इति योजना ॥ ४२ ॥ एवं माहात्म्यं ज्ञात्वा स्तुवतस्तव निश्चिते उत्तारणे कुतः संसारादुद्वेग इत्यतो न मदर्थं प्रार्थये । किं तु संसारलोलुपयोग्यजनायेत्याह ॥ नैवेति । त्वत्तीर्थस्य वेदांतादि शास्त्रस्य गायनमहामृतेन मत्तचित्तः सुखीकृतचित्तोऽहं भवलक्षणाया अत्येतुमशक्यायाया वैतरण्या नोद्विजे । किं तु ततो भगवतो विमुखचेतस इंद्रियार्थजन्यप्रकृत्यात्मकसुखाय भरं संसारभरमुद्वहतो विमूढान् भक्तान् शोचे । कथमुत्तारयेदिति चिंतयामीति योजना ॥ ४३ ॥ नाहमुद्विजे किंतु अन्यान्योग्यान् शोच इत्यनेनान्योत्तरणा प्रार्थिता । एवमन्योनुकंपा कुतो मत्प्रसादेन तव मोक्षो भवति । अन्येषां भवान्वा मोक्षोऽन्यप्रसादेन भवेदित्यत आह ॥ प्रायेणेति । अन्यत्रानुकंपा कुत इत्यस्योत्तरं । एतानाश्रितान् अनुल्हादादीन् दैत्यबालकान्विना एको न विमुमुक्षे मोक्तुं नेच्छामि । एवं चाश्रितत्वादनुकंपाऽस्तीति भावः । अन्यप्रसादेन भवेदित्यस्योत्तरं । संसारे भ्रमतोऽस्य जगतस्त्वदन्यशरणं न पश्य इति । सर्वेषामपि त्वत्प्रसादो मोक्षसाधकः । न कस्यापि कस्यचिदिति भावः । अत्र देवमुनयः स्वविमुक्तिकामा विजने तप आदिकं चरंति । न परार्थनिष्ठा इत्यनेन देवादीनां स्वाश्रितेषु प्रसादो नेति मंतव्यं । देवानां प्रसादाभावे इंद्रियप्रेरणाभावे साधनानुष्ठानायोगात् । मुनीनां प्रसादाभावे तद्दृष्टवेदानां तत्कृतकल्पसूत्राणां च प्रचाराभावेन वैदिककर्मानुष्ठानुपपत्तेः । किंतु तत्त्वाद्यनियामकानां साधारणदेवानां वेदाद्यद्रष्टॄणां विशेषतः स्वेतरयोग्यजनपेक्षे निर्भरोऽस्तीति । अत एव प्रायेणेत्युक्तं । तदर्थे तात्पर्यं ॥ प्रायेण देवमुनयः । आश्रितेषु कृपा कार्या विशेषात्तात्विकैः सुरैः । मुनिभिश्च तथा कैश्चित्कैश्चित्कार्याखिलेष्वपि । तथाऽपि तात्विकसुरकृपाविषयतां गताः । एत एव विमुच्यंते तदन्ये न कथंचनेति च प्रमाणमुदाहृतं । तथा चेंद्रियप्रेरणाय स्वोपजीवकेष्ववश्यं तात्विकैर्विशेषाद्दया कार्येति भगवत आज्ञा । तथा कैश्चित्प्रबलैर्मुनिभिः स्वदृष्टवेदादिनाऽऽश्रितेषु स्वोपजीविकेषु विशेषतो दया कार्येति भगवताऽनुशासनं । कैश्चित्तद्भिन्नैः साधारणैरखिलेष्वपि । अपिरभिव्याप्तौ । साधारण्येन सर्वेषु गोब्राह्मणेभ्यः शुभं भवतु । ब्राह्मणाः संतु निर्भया इत्यादिरूपेणैव साधारणदया । न च देवादीनामपि साधारण्येन दयाऽस्तीति तथैवालमिति मंतव्यं । यद्यप्यस्ति तथाऽपि विषयतः । तात्विकसुरकृपाविषयतां गता एव विमुच्यंते नान्यथेति साऽऽवश्यकी । प्रकृते तु दैत्यबालानां स्वाश्रितत्वात्तेषु स्वस्य विशेषतो दयाऽ-

स्तीति तदुत्तारणप्रार्थना युक्तेति भावः ॥ ४४ ॥ एवं मोक्षयत्नेन मनोनिग्रहः कार्यः । तस्मिन्कार्ये तु वनितादि विषयजो मनसिजो बाधते । तत्सुखं च न लभ्यते । अतः कथं कार्यमित्यतस्तादृशं सुखं तुच्छं दुःखबहुलं चातः करयोः कंडूत्या भवत्सुखमल्पं । अनंतरं दुःखमधिकमतो यथा कंडूतिं सहते प्रेक्षावांस्तथा धीरः कामं विषहेतेत्याह ॥ यदिति । तदिति शेषः । हि शब्देन तुच्छत्वप्रसिद्धिमाह । देहकृपणा देहमात्रपोषणाः ॥ ४५ ॥ मनसिजं विषहेतेत्यतेन निग्रहपूर्वकं भगवच्छरणागतिः कर्तव्येत्युक्तं । इदानीं मौनादीनां समाध्यंतानामपवर्गसाधनानामपींद्रियनिग्रहपुरःसरभक्तभावे जीवनमात्रसाधनत्वं तदपि क्वचिन्नास्तीत्याह ॥ मौनेति । हे पुरुष । मौनादयः समाध्यंता आपवर्ग्या अपवर्गहेतवः प्रायः । परं परं तु । अजितेंद्रियाणां दांभिकानां मनोनिग्रहाभावेऽपि बाह्यव्यापारप्रदर्शकानां ते मौनादयोऽत्र लोके देहभरणोपाया भवंत्युत न वा भवंति । बाह्यव्यापारेण मनोनिग्रहभ्रांतौ पूजयंति । वित्तादिकं वितरंति । मनोनिग्रहाभावज्ञाने तु न किमपि ददति । प्रत्युतापहसंतीति भावः ॥ ४६ ॥ इंद्रियनिग्रहं विना मौनादेरप्रयोजकत्वमुक्त्वा इंद्रियनिग्रहस्यावश्यकत्वमुक्तं । तेन साध्यमुपासनं क्व कर्तव्यमित्यत आह ॥ रूपे इति । बीजांकुराविव कार्यकारणभूते । सदसती । मूर्तामूर्ते । द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेति वेदद्रष्टे । इमे तव रूपे । प्रतिमास्थानीये शरीरे इव त्वद्वशत्वात् । वस्तुतो रूपे एव किं न स्यातामित्यत उक्तं । न चान्यद्रूपकस्य । अरूपमक्षरं ब्रह्मेत्यादिश्रुत्या प्राकृतरूपरहितस्य अन्यत्प्राकृतरूपं न च । रूपं नैव । उपासनाऽधिकरणत्वं कथमनयोरित्यत आह ॥ युक्ता इति । योगेन मथनाद्युपायेन दारुषु वन्हिमिव । योगेन ध्यानयोगेन युक्ताः समाधिशीलाः । उभयत्र कार्याकारणयोस्त्वां समक्षं विचक्षते। तथा च ध्यानेनात्र तव प्रत्यक्षत्वादनयोः प्रतिमात्वं युक्तमिति भावः । ध्यानयोगादन्यस्य प्रत्यक्षोपायत्वं नास्तीत्याशयेनान्यतः कर्माद्युपायात्त्वेक्षणं न स्यादित्युक्तं । एतदभिप्रेत्योक्तं तात्पर्ये ॥ कार्यकारणरूपे तद्वशत्वापेक्षया साक्षात्स्वरूपापेक्षया स्वरूपादन्यद्रूपं नेति । कार्यकारणे इत्यनेन कार्यकारणभूतमूर्तामूर्तपरे सदसती इति व्याख्यातं । तद्वशत्वापेक्षयेत्यनेन रूपपदं गौणमित्युक्तं । मुख्यत्वमेव किं न स्यादित्यत उक्तं ॥ साक्षादिति । अप्राकृतशरीरस्य भावतः प्राकृतरूपाभावादित्यर्थः ॥ ४७ ॥ सदसतीत्युक्तं विवृणोति ॥ त्वमिति । प्राणेंद्रियाणि प्राणाः पंचप्राणा इंद्रियाणि ज्ञानेंद्रियाणि कर्मेंद्रियाणि हृदयं मनश्चिदनुग्रहो जीवः । अनुग्रह-

तेत्यनुग्रहः । चिद्वासावनुग्रहश्च । योग्य जीव इति यावत् । वायुरित्यादौ सर्वत्र त्वामिति संबंधः । त्व तदधीनमित्यर्थः । यदधीना यस्य सत्तेत्युक्तेः ॥ यस्य पृथिवी शरीरमित्युक्तेः । यस्यात्मा शरीरमित्यादिनाऽतर्यामिब्राह्मणः पृथिव्यादेः शरीरस्थत्वोक्तेः । उपलक्षणमेतत् । प्रकृत्यादिकं सर्वं त्वमेव त्वदधीनमेव । त्वं च सगुणो ज्ञानानंदादिगुणः । विगुणस्त्रैगुण्यवर्जितः । मनोवचसा निरुक्तं सर्वमपि त्वदन्यथा नास्ति । अनधीनप्रवृत्तिमान्नेत्यर्थः ॥ ४८ ॥ युक्ताः समक्षमुभयत्र विचक्षते त्वामिति कार्यकारणात्मकप्रपंचलक्षणप्रतिमायामुपास्य प्रत्यक्षीकुर्वतीत्युक्तं । तच्चोपासनं न साकल्येन । तदभिमानिदेवानामपि साकल्येन ज्ञानाभावेनेतरेषां कैमुत्यन्यायेन साकल्येनोपासनाभावात् । किंतु यथाशक्त्युपास्य साक्षात्कृत्य संसाराद्विरमंतीत्याह ॥ नैतादिति । हे उरुगाय विष्णो । ये गुणा गुणत्रयाभिमानिनो गुणिनो गुणविकारमहदाद्यभिमानिनो मनः प्रभृतयस्तदभिमानिनः सह देवमर्त्याः । रूपांतरेण विद्यमानैर्देवैर्मर्त्यैर्ऋषिभिश्च सहिता आद्यंतवंतः सृष्ट्यादौ प्रलये चोत्पत्तिविनाशवंतः । बहुकालीना इति यावत् । एते सर्वे सुधियस्त्वां साकल्येन न विदंति । एवं विमृश्य निश्चित्य । अन्येधिकारिणः शब्दाद्वेदात्सर्ववेदांतप्रत्ययन्यायेन यथायोग्यं श्रुत्वा मत्वा ध्यात्वा साक्षात्कृत्य च संसाराद्विरमाति । एवं निश्चिनोमीति योजना ॥ ४९ ॥ सुधियः संसाराद्विरमंतीत्युक्तं । सुष्ठुध्यानं च भक्तिज्ञाने विना न भवति । भक्तिज्ञाने च षडंगसेवया विना न भवत इति प्रदर्शयति ॥ तत्त्वे इति । तत्त्वे ध्यातव्ये योग्यगुणविशिष्टे रूपे मनः । तथा च मनसा ध्यानं । मनोंगकसेवा । दर्शने दृक् । स्तुतौ च वाक् । पूजादिकर्माणि करौ । कथायां श्रवणं । क्षेत्रानुगमने च पादाविति वक्तव्यं । चरणौ तौ तु सफलौ केशवालयगामिनावित्यन्यत्रोक्तेः । एवं प्रकारेण षडंगया सेवया विना जनः परमहंसगतौ परमहंसानां गतावाश्रयभूते त्वयि भक्तिं लभेत् । किं साधनांतरभावान्नाप्नोतीति योजना ॥ ५० ॥ एवं वर्णितो भगवान् शांतमन्युरभूदित्याह ॥ एतावदिति । योजना तु स्फुटा ॥ ५१ ॥ नृणां भक्तानामहं कामपूरस्तदपेक्षितकामपूरकोऽस्मि ॥ ५२ ॥ प्रसादं विना दर्शनमेव दुर्लभं । दर्शनानंतरं च संसारे तत्पुनर्नार्हतीत्याह ॥ मामिति । अप्रीणतोऽप्रीणयतः ॥ ५३ ॥ नानाविधश्रेयस्कामाः प्रीणंति प्रीणयंति । त्वमपि स्तोत्रेण मामप्रीणयः । अतो वरं वृणीष्वेति भावः ॥ ५४ ॥ एवं प्रलोभितत्वेऽप्येकांतत्वान्न वरमवृणोदित्याह ॥ एवमिति । तान्वरान् ॥ ५५ ॥ इति श्रीभागवत-

टिप्पण्यां मंदनंदिन्यां नवमोऽध्यायः ॥ ७—९ ॥ ॥

॥ हरिः ॐ ॥ भक्तेरेव पुरुषार्थहेतुत्वमिति तात्पर्यद्योतनाय पुनरत्राप्युच्यते । वरैर्लोभितः प्रल्हादः किमित्यतो नेत्याह नारदः ॥ भक्तियोगस्येति । यत्काम्यं तत्सर्वं भक्तियोगस्यांतरायतया मन्यमानोऽर्भकः स्मयमानो हृषीकेशमुवाच हेति योजना । अर्भकस्याप्येतादृशं दार्ढ्यमाश्चर्यमिति हेत्यनेनाह । मनासि विद्यमानं जानन् अपि वचसा प्रलोभयतीति स्मयमानत्वं ॥ १ ॥ उत्पत्त्या स्वत एव कामेषु सक्तं मां पुनर्वरैः काम्यैर्मा प्रलोभय । विषयासक्तं प्रति गुरुणा पुनर्विषयासक्तेरुपदेशस्य कर्तुमनुचितत्वात् । इदं च विषयासक्तत्वकथनं भक्ते नैवं वक्तव्यत्वात् । वस्तुतो विरक्तः प्रल्हादस्तत्संगभीतत्वाच्च पुनस्तत्संगोपदेशोऽनुचित इत्याह ॥ तत्संगभीत इति ॥ २ ॥ अनुचितं प्रलोभनं कुतो हरिः कृतवानित्यत आह ॥ भृत्येति । हे प्रभो । हृदयग्रंथिषु मनोबंधकेषु संसारबीजेषु कामेषु भवान् भृत्यलक्षणजिज्ञासुर्भक्तस्य दार्ढ्यमन्येषु जिज्ञासयिषुश्चोदयात् । लोड् वचनेन प्रतिपादयतीति योजना । वचसा प्रलोभने काम्यावरणे भक्तोऽयं दृढ इति लोको जानातीति भावः ॥ ३ ॥ भक्तलक्षणज्ञापनमेव वरं वृणीष्वेत्युक्तवचनप्रयोजनमित्युपपादयाति ॥ नान्यथेति । अन्यथा वस्तुतो वचनाभिप्रायो न घटते । अत्र हेतु द्वयं । अखिलगुरोः करुणात्मन इति । आश्रित इति पूर्वोक्त्याऽखिलेत्युक्त्या च शिष्यत्वं समर्थितं । दयाविषयत्वं समर्थयते ॥ नष्टदृष्टेरिति । संसारलक्षणेंऽधे तमासि नष्टदृष्टेः पारदर्शिनः पारं दृष्टुकामस्य त्वमेव पारः पारदशक्तश्चेति योजना ॥ ४ ॥ आशीराशासने भृत्यत्वमेव नेत्याह ॥ यस्त इति । ते सकाशात् । योजना तु स्पष्टा । स आशिष आशासानो वणिग्वै । शर्करादिकं दत्वा द्रव्याशासानवत् । स्वकृतं सुकृतं समर्प्य फलाशासनवत्वात् उक्तभक्तत्वनिषेधनसमर्थनाय स्वामिभृत्ययोः सामान्यतो लक्षणमाह ॥ स वै स्वामीति । गुणलुब्धौ स्वामीभृत्यगतभक्त्यादिगुणलुब्धः । भृत्यस्वामिगत इत्यादि महात्म्यगुणलुब्धः । कामुकौ सेवावेतनदानकामुकौ ॥ ५ ॥ गुणलुब्धाविति स्वामिभृत्ययोर्लक्षणं । न कामुकावित्यनेन तदभावे स्वामिभृत्याभावाभावश्चोक्तः । अधुना न कामुकावित्येतद्विवृणोति ॥ आशासान इति । स्वामिविषये स्वस्यवेतनादीन् आशासानो भृत्यो न वै । भृत्यतः स्वाम्यं स्वामिने देयं वस्त्विवच्छन् । आशिषो वेतनादीन् राति ददाति यः सः न स्वामीति योजना ॥ ६ ॥ अधुना भृत्यस्य स्वस्य स्थितिं

स्वामिनो नृसिंहस्य स्थितिं चाह ।। अहं त्विति । पूर्वार्धयोजना तु स्पष्टा । अनपाश्रयो भृत्यदेयद्रव्यानुपजीवीह लोके राजसेवकयोरिव देशाधिपत्यं प्रापितेन सेवकेन दीयमानं द्रव्यं राज्ञो राज्ञा दीयमानं वेतनादिकं सेवकस्य यथार्थस्तथाऽऽवयोरन्यथा । गुणलुब्धत्वं विनार्थो नास्तीति योजना ॥ ७ ॥ वरं वृणीष्वेत्याज्ञाऽनुल्लंघनीयेत्याशयेनाह ।। यदीति । हे वरदर्षभ । ईश स्वामिन् । यदि मे कामान्वरान् रासि ददासि । तर्हि कामानां मोक्षविरुद्धविषयेच्छानां हृद्यसंरोहं तु । अनुत्पत्तिमेव भवतो वरं वृण इति योजना । अत्रासंरोहमित्येतद्भक्त्यादीनामुपलक्षणं । अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दन इत्यादिनेश्वरादीनां मोक्षादिवरदानासामर्थ्येऽपि तव सर्ववरदानसामर्थ्यमिति द्योतयितुं वरदर्षभेत्युक्तं । अस्येतरेच्छाविषयत्वेऽपि मदिच्छाविषयत्वान्मत्कामत्वमस्तीति मे कामानित्युक्तं । तथा च म इत्यस्य चतुर्थ्यं । तस्य रासीत्यनेन षष्ठ्यंतस्य कामानित्यनेनान्वय इति सूचितं ।।८।। कामानामनिष्टत्वं कथं । येन तदसंरोहस्य वरत्वमित्यत आह ।। इन्द्रियाणीति । एषां दुर्विषयकामानां जन्मनेंद्रियादीनि नश्यन्ति तेषां कामानामसंरोहो वरमित्यत आह ।। इन्दियाणीति । पूर्वेण योजना । सर्वेंद्रियाणां जरयंति तेज इति श्रुतेः । आत्मा देहः । धर्मः पूर्वार्जितपुण्यं । धृतिः सर्वथा दुर्विषयांस्त्यजेयमिति धैर्यं । मतिः शास्त्रजनितज्ञानं । ह्रीरन्ये न पश्येयुरिति लज्जा । श्रीर्देहकांतिः । तेजो ब्रह्मवर्चसं । स्मृतिः शास्त्रानुभवजन्यस्मृतिः । कामात्क्रोधोऽभिजायत इत्यादेः । दुर्विषयलोलुपस्येंद्रियादीनि नष्टानि दुष्टानि भवन्तीति भावः ॥ ९ ॥ कामानामसंरोहस्य फलमाह ।। विमुंचतीति । योजना तु स्पष्टा । तर्ह्येव तदैव । न भवायापुनर्भवाय । मोक्षायेति यावत् । अवकल्पते समर्थो भवति । यदा सर्वे प्रमुच्यन्त इत्यादि श्रुतेश्च ॥ १० ॥ कस्य मंत्रस्य जपसिद्ध्या मद्दर्शनमभूदित्याह ।। नारदेनेति । ॐ नम इत्यारभ्य मंत्रस्त्रयास्त्रिंशदक्षरात्मकोऽनुष्टुप् छंदस्कः । वराहमंत्रवत् ॥ ११ ॥ एवमुक्तवंतं प्रह्लादमेकांतित्वेन प्रकाश्य कामासंरोहादिकं मनसि सिद्धवत्कृत्य तद्योग्यमासुराधिपत्यमपि कुर्वित्याज्ञापयति नृसिंहः ॥ नैकांतिन इति । यद्यपि भवादृशा मयि एकांतिनो मे सकाशादिह तथाऽमुत्राशिषो जातु नाशासते । तथाऽपि एतन्मन्वंतरं दैत्येश्वराणां भोगान् अनुभुंक्ष्वेति योजना । यद्यप्ययं कामो न त्वया कृतः । तथाऽप्ययमेवानुगृण्हामीति भावः ॥ १२ ॥ दैत्येश्वराधिपत्यकालेऽपि मुक्तावानंदातिशभूतमनुष्ठेयं साधनं शिक्षते ।। कथा इति । मदीयाः कथा जुषमाणः शृण्वन् प्रियस्तत्रा-

दरवान् सर्वं भूतेषु संतमेकं मां। आत्मनि मनस्यावेश्याधियज्ञं सर्वयज्ञभोक्तारमीशं योगेन ध्यानेन कर्म हिन्वन् उपमर्दयंस्त्वं यजस्व। योगेन पूजयेति योजना। अनेन श्रवणध्यानाकाम्यकर्मादिलक्षणमानंदातिशयसाधनं शिक्षितमिति ज्ञातव्यं ॥ १३ ॥ अधिपत्ये-भोगादिप्राप्तिरावश्यकीति न चिंतयितव्यं। भोगादेरपि प्रारब्धपुण्यक्षयादिसंपादकतया मत्प्राप्त्युपयोगित्वादित्याह ॥ भोगेनेति। पुण्यं प्रारब्धं काम्यपुण्यं कुशलेन प्रायश्चित्तादिना। पापं कालजवेन प्रारब्धप्राप्तं कलेवरं हित्वा विनाश्य सुरलोकगीतां विशुद्धां कीर्तिं विताय विस्तृत्य मुक्तबंधो मामेष्यति। भवानिति योजना। प्रारब्धपापं प्रति प्रायश्चित्तस्योपमर्दकत्वं ज्ञातव्यं। अनेनाधिपत्यदानं भोगेन काम्यपुण्यक्षयसंपादकतया पापोपमर्दककुशलानुष्ठानोपयोगितया प्रारब्धासुरदेहादिनाशकतया कीर्त्यादिसंपादकतया महाननुग्रह एव प्रल्हादे कृतः। स्वस्तोत्रकीर्तनस्यापि फलमाह भगवान् ॥ य इति। मह्यं मदुद्देशेन। काले प्रातरादिकाले ॥ १५ ॥ पुत्रेण पितुरुद्धारस्य कर्तव्यत्वात्। भगवतो भक्तवत्सलत्वात्। पितुर्दैत्यावेशप्रयुक्तनिंदनादिकारित्वेऽपि वस्तुतो भक्तत्वादुद्धारत्वं वरयते ॥ वरमिति। हे देवेश हे महेश्वर। ते सकाशादेतद्वक्ष्यमाणं वरं वरये प्रार्थये। एतत्किमित्यत उक्तं। ईश्वरं तेजः सर्वैश्वर्यमविद्वान् भ्रातृहेति हिरण्याक्षमनपराधिनं हंतेति मृषादृष्टिर्मिथ्याज्ञानवान् तेनैव बद्धामर्षाशयस्त्वद्भक्ते मयि च विषयेऽघवान् अपराधवान्मे पिता सर्वलोकगुरुं प्रभुं त्वां यदनिंदत्तस्माद्दुरंताद्दुस्तरादघान्मे पिता पूयेतेति। पूतत्वमपि सिद्धमेवेत्याह ॥ पूत इति। यदेति शेषः ॥ १६ ॥ न केवलमयं पिता। किंतु जन्मांतरपितरोऽपि पूता इत्याशयेनाह ॥ त्रिभिरिति। सुजंतं। गुणितैरिति शेषः। तथा चैकविंशत्येत्यर्थः। त्रिसप्तभिरिति समासे तु स्पष्टं। एवं च पूर्वजन्मत्रयं। एकैकस्मिन्सप्त। त्रयः पांचस्त्रयः। प्रत्यंच आत्मा सप्तम एतावंत एवैनममुष्मिल्लोके उपजीवंतीति श्रुतेः। एतदेवाभिप्रेत्य तात्पर्यं ॥ जन्मांतरपितृभिः सप्तभिरिति। प्रह्लादादेः पूर्वजन्मा प्रतिमन्वंतरे चैव प्रह्लादाद्या बभूविर इति मानासिद्धं। अस्य हिरण्यकशिपोः ॥ १९ ॥ कुलपावनस्य साधोः पुत्रजननमेव वंशोद्धारकमित्यन्यत्राप्युपदिशति ॥ यत्रेति। यत्र कुले कीटा अपि क्षुद्रा अपि। कीटका इति पाठे तत्तद्देशस्य पापसाधनत्वात्। लक्षणया पापिष्ठा अपीत्यर्थः। एतादृशा अपि ते तत्कुलीनाः पितरः पूयंत इति योजना ॥ २० ॥ भक्तान्विशिनष्टि ॥ सर्वात्मनेति। उच्चावचेषु तारतम्येन विद्यमानेषु भूतग्रामेषु प्राणिसमूहेषु न हिंसंति न क्रुध्यंति।

मद्भावेन भक्त्या गतस्पृहा विषयापेक्षारहिताः ॥२१॥ भक्तेषु श्रैष्ठ्यं मल्हादस्य वक्तुमाह ॥ भवंतीति । लोके मद्भक्ताः पुरुषास्त्वामनुव्रता भवंति । त्वमेवमेव भक्तानां प्रतिरूपधृक् दृष्टांतत्वधृक् । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तत इति वचनात् । भक्तेषु मल्हादस्य श्रेष्ठत्वात्तदनुव्रतत्वमन्येषामिति भावः । अत्र प्रह्लादस्य सर्वभक्तेषूत्तमत्वमनुपपन्नं । नारदाद्यधमत्वात् । अतः कान्विना भक्तेषूत्तमत्वामित्यतस्तात्पर्यं ॥ ऋते तु तात्विकान्देवान्नारदादींस्तथैव च । मल्हादादुत्तमः कोऽनु विष्णुभक्तो जगत्त्रय इति स्कांदे ॥ तात्विकान् अग्न्यादीन् । नारदादीन्नारदभृगुवसिष्ठादीन् ॥ २२ ॥ अवैष्णवाय दातव्यं नोदबिंदुं न तंडुलमित्युक्तेः । विष्णुद्वेषिणः पितुः कथं कर्म कर्तव्यमिति नाशंकनीयं । स्वभावतो भक्तत्वात् । त्वया पूतत्वस्य प्रार्थितत्वात् । मदपांगसंदृष्टत्वान्मदंगस्पर्शनाच्च तस्य पूतत्वात् । इत्याशयेन तत्कर्मकरणे नियुंक्ते ॥ कुर्विति । मदंगस्पर्शनेन पूतस्येति योजना । मदंगस्पर्शनेन पूतस्येति कथं । मधुकैटभयोर्हयग्रीविणो रौद्रत्वेऽपि तदभावादित्यतो भक्तत्वे सतीति विशेषणं देयं । अतो न व्यभिचार इत्याशयेन तात्पर्यं प्रवृत्तं ॥ मधुकैटभौ भक्त्यभावाद्धरी भगवतो मृतौ । तम एव क्रमादासौ भक्त्या चैद्यो हरिं ययाविति ॥ २३ ॥ ब्रह्मवादिभिरभिषेचनविषये उक्तानुसारेण पित्र्यं स्थानमास्थाय मयि मन आवेश्य मत्परःसन् यज्ञादि कर्माणि कुर्विति नियुंक्ते भगवान्पित्र्यमिति ॥ २४ ॥ भगवदुक्तप्रकारेण प्रह्लादोऽकार्षीदित्याह नारदः सार्धश्लोकद्वयेन । सांपरायिकमौर्ध्वदैहिकं । प्रह्लादेन प्रसाद्य स्वयं स्तौति ब्रह्मेत्याह ॥ प्रसादेति । ब्रह्मा स्तौति श्लोकचतुष्टयेन ॥ देवदेवेति । पूर्वज । धातोरनेकार्थत्वात्पूर्वस्थित । पूर्वमभिव्यक्तेति वा । दिष्ट्या दैवेन ॥ २७ ॥ सृष्टिभिः । कर्मणि क्तिन् । भावे क्तांतादिनिर्वा । मत्सृष्टैरिति यावत् । निगमान्वेदान् । अहन् अध्वंसयत् । वैदिकयज्ञादिलोपकर्तेति यावत् ॥ २८ ॥ दिष्ट्या दिष्ट शब्दो दिष्टापर्यायः । दैवेनेति यावत् ॥ २९ ॥ न केवलमेतद्वपुषो भूतमेव प्रयोजनं किंतु भविष्यच्चास्तीत्याह ॥ एतदिति । हे भगवन् परमात्मनस्ते एतद्वपुः स्वाध्यायतो भक्तस्य सर्वतः संत्रासाद्गोप्तृ । जिघांसतोर्मृत्योरपि गोप्तृ इति योजना ॥ ३० ॥ नृसिंहः पद्मसंभवं शिक्षते ॥ मैवं विध इति । ते त्वया क्रूरनिसर्गाणां क्रूरस्वभावानां । अत्र मैवंविधो देय इत्यनेन हिरण्यकशिपोरेवं विधो वरो भगवदनाभिमत एव दत्तः । एतदाज्ञामुल्लंघ्यैव रावणादिभ्यो पुनर्दास्यत इति न मन्तव्यं । हिरण्यकशिपुवरदानेंऽतःस्थितहरिणा तथैव प्रेरितत्वात् ।

एवं विध इति विशेषणेन दास्यमानवरस्यैवं विधत्वाभावेनाज्ञाया अप्यनुल्लंघनात् । एतदेवाभिप्रेत्य तात्पर्यं ॥ यथा हिरण्यकस्यादादंतःस्थितहरीरितः । तथा नादात्तदन्यस्य ब्रह्मा दैत्यस्य कस्यचिदिति च ॥ ३१ ॥ ब्रह्मनियोगानंतरं वृत्तमाह ॥ इत्युक्त्वेत्यादिना । सर्वभूतानामदृश्यः सम्यग्दृश्यो भगवान् ब्रह्मणा पूजितः । ततश्च तत्रैवांतर्दधे ॥ ३२ ॥ ततो भगवदंतर्धानानन्तरं प्रह्लादो भगवत्कला भगवतः प्रतिबिंबभूतान् विधिवत्परमेष्ठिनं भवं प्रजापतीन् देवांश्च संपूज्य ववन्द इति योजना ॥ ३३ ॥ ततः प्रह्लादवन्दनानंतरं काव्यादिभिः शुक्राचार्यप्रभृतिभिर्मुनिभिः ॥ ३४ ॥ प्रतिनंद्य सन्तोष्य ॥ ३५ ॥ शापप्राप्तं दैत्यभावं तन्निधनं चोपसंहरति । वैरानुभावेन वैरानुचिंतया हृदि ।स्थितेन हरिणा तौ हताविति योजना ॥ ३६ ॥ एवं प्रथमजन्मनिधने उक्त्वा द्वितीयजन्मनिधने आह ॥ पुनरिति । प्राक्तनजन्मनि राक्षसभावेन नृसिंहं संचिन्त्य यथा देहं जहतुरेवं राजेति भावेन राममनस्कौ देहं जहतुः ॥ ३८ ॥ पुनर्जातौ राजरूपेण जातौ शिशुपालकरूशिजौ हरिविषयकवैरयुक्तभक्त्या भगवानिति ज्ञात्वा तौ पश्यतो हरिं समीयतुः ॥ ३९ ॥ शिशुपालकरूशजावित्युपलक्षणं । अन्येऽपि वैरिणो बहुराजानः कृष्णेन हताः कृष्णमीयुरित्याह ॥ एन इति । ये ये कृष्णवैरिणो राजानः पौंड्रकनरकादयस्ते ते यत्पूर्वकृतमेनो दैत्यावेशप्रयुक्तनिंदनादिजन्यपापं तत्तस्मिन् कृष्णात्मनः कृष्णे आत्मन आविष्टाः कृष्णे आत्मा मनो येषां ते तथा भूताः । वैरानुबन्धेनेत्यावर्तते । अनुबन्धस्तु भक्तिः स्याद्बंधः स्नेह उदाहृत इति वचनात् । वैरोपसर्जनभक्त्या कीटः पेशस्कृतो वैरानुबन्धेन यथा पूर्वरूपं जहाति तथा जहुरिति योजना । अत्र ते कृष्णवैरिणो राजान इत्युक्तेर्वेनादीनामपि भगवत्प्राप्तिः प्रतीयते । तस्या वेनस्तमसि पातित इत्यादिना विरोध इति न मंतव्यं । दैत्याविष्टपौंड्रकनरकादीनामेव ग्रहणात् । केवलदैत्यानां वेनादीनामग्रहणात् । तेषामनुबंधपदोक्तभक्तेरभावाच्च । एतदेवाभिप्रेत्य तात्पर्यं ॥ पौंड्रके नरके चैव साल्वे कंसे च रुग्मिणि । आविष्टास्तु हरेर्भक्तास्तद्भक्त्या हरिमापिरे । असुरास्तु स्वयं ते तु महातमसि पातिता इति च ॥ तदात्मानस्तदाविष्टास्तद्भक्ताः । वैरोपसर्जनेनानुबंधेनेत्यन्वय इति ॥ ४० ॥ अत्र पौंड्रकादिपदेन देहो ग्राह्यः । तत्राविष्टाः प्रविष्टा इत्यर्थः । तेषु भक्तेष्वाविष्टस्त्वित्यर्थः । अनुबंधस्तु भक्तिः स्यादित्युक्तत्वादनुबंधेन भक्त्येत्यर्थः । द्वेषिणां चैद्यादीनां कथं मुक्तिरिति शंकायास्ते भगवतः पार्षदा अनादितो भक्ताः शापादिप्रयुक्तदैत्यावेशतो भगवद्द्वेषादिकं कृतवंतः ।

भगवांश्च दयालुः । वैरादिकमविगणय्य भक्तिमेव हि निमित्तीकृत्य मोचितवानित्युत्तरमुक्तं । तत्संक्षिप्योपसंहरति ॥ यथेति । यथा यथा योग्यता तथा तथा विद्यमानया परमया भगवतो भक्त्या तत्पूर्विकया तच्चिंतया चैद्यादयो नृपाः । भिदां सुखेऽवांतरविशेषयुक्तं । भेदो विशेषे दलन इत्यभिधानात् । साम्यं हरेर्निर्दुःखत्वादिना चतुर्बाव्हत्वादिना साम्यं ययुरिति योजना ॥४१॥ द्विषतामपि साम्यमसंभावितमिति यत्पृष्टवान् तदनादिभक्तत्वेनासंभवनिरासेनोपपादितमिति योजना ॥ ४२ ॥ एषोक्ता कथा पुण्या । आदिदैत्ययोर्हिरण्यकशिपुहिरण्याक्षयोर्भगवत्कृतवधलक्षणभगवन्माहात्म्यप्रतिपादकत्वादित्याशयेनोक्तं ॥ यत्रेति । प्रह्लादचरितमपि पुण्यकरमित्याह ॥ प्रल्हादस्येति । महाभागवतस्य प्रल्हादस्यानुचरितं च । च शब्दात्पुण्येत्यस्य लिंगव्यत्ययेनानुषंगः । पुण्यं । महाभागवतस्येत्यनेन पुण्यत्वमुपपादितं । आख्यानोक्तं संगृण्हाति ॥ भक्तिरिति । आख्यानेऽस्मिन्समाख्यातमित्यस्य लिंगविपरिणामेन सर्वत्रान्वयः । याथात्म्यमात्मविषयकयथार्थज्ञानं । गुणकर्मानुवर्तनं गुणकर्माणि यथा वृत्तेस्तथैवानुवर्तनं कीर्तनं । वृत्तानुकथनामिति यावत् । परावरेषामुच्चावचानां सत्यलोकादिस्वर्गांतानामव्यत्ययोऽव्यत्यासः ॥ ४५ ॥ धर्मो भक्त्यादिलक्षणः । येनेति भगवद्भक्तिज्ञानत्वोक्तेः । अत एव तात्पर्यं ॥ भगवान्येन गम्यत इत्यनेन भागवतधर्मेणैव भगवान् गम्यते । न द्वेषादिनेत्युपसंन्हियते । वृत्तानुकथनं च तदर्थत्वेनैव । ज्ञानस्य विशेषा याथात्म्यादयः । भक्तिज्ञानं विरक्तिश्च नवकः श्रवणादिकः । धर्मो भागवतः प्रोक्तस्तद्भक्तेषु तथा नवेति तंत्रसारे ॥ धर्मो भागवतानां चेत्युक्त्वा येनेत्युक्तेर्भागवतधर्मेण भक्त्यादिनैव गम्यत इत्युपसंन्हियत इत्यर्थः । वृत्तानुकथनस्य भागवतधर्मत्वाभावात्कथं भागवतधर्मेणोपसंहार इत्यत उक्तं ॥ तदर्थत्वेनेति । भक्त्यादेर्भागवतनिष्ठो धर्मो वृत्तानुकथनं च भक्त्यादिकं जनयतीति भावः । आत्मानं देहं मनो वा । अनतिक्रम्य विद्यमानमिंद्रियमनस्त्वादिकं यथात्मा तस्य भावः । कथं भागवतधर्म इत्यत उक्तं ॥ ज्ञानस्येति । तथा चात्मानं परमात्मानमनतिक्रम्य विद्यमानं ज्ञानं याथात्मा । स्वार्थे ष्यञ् । तदेव याथात्म्यं । तथा च भगवद्विषयकयथार्थज्ञानस्य भागवतधर्मत्वं युक्तं । तथापि भक्त्यादिरेव भागवतधर्म इत्यत्र किं मानमित्यत उक्तं ॥ भक्तिरिति । भक्तिरित्यस्यैव विवरणं ॥ श्रवणादिको नवक इति । भगवद्भक्तेष्वपि न श्रवणादयो भागवतो धर्मः ॥४६॥ एतदाख्यानश्रवणकीर्तनयोः फलमाह ॥ य एतदिति । वीर्योपबृंहितं पराक्रमोपबृंहितं ॥४७॥

पाठफलमाह ॥ एतद्य इति । एतादिति सामान्यं । तस्यैव विवरणं । मृगेंद्रलीलां सिंहचर्याप्रतिपादकं । दैत्येंद्रलक्षणस्य यूथपस्य गजस्य वधप्रतिपादकं । दैत्यात्मजस्यानुभावं माहात्म्यप्रतिपादकं । आख्यानं यः श्रुत्वा पठेत् । सोऽकुतो भयं मोक्षमेतीति योजना ॥ ४८ ॥ एवं प्रह्लादानुभवं वर्णयित्वा ततोऽप्यतिशयेन युधिष्ठिरादीन् स्तौति ॥ यं यामिति । हे युधिष्ठिरादयः । यं यं भूरिभागा बहुभाग्यशालिनः तत्र निमित्तमुक्तं । लोकं पुनाना मुनयोऽभियांति । एषां गृहानिति । एषां युष्माकं । ते यूयं भूरिभागा इति पूर्वेणान्वयः । लोकपावनमुन्यभिगमनमेकं निमित्तं । मुख्यं च निमित्तमाह ॥ साक्षादिति । साक्षात्परब्रह्म कृष्णाख्यं मनुष्यलिंगं मनुष्याकारं गूढं सर्वैर्भगवत्त्वेनाप्रतीयमानं । एषां गृहानावसतीति योजना ॥ ४९ ॥ परं ब्रह्म गृहानावसतां युक्तं । तत्किमित्यत आह ॥ स वा इति । यो वो युष्माकं प्रियः प्रीतिविषयः सुहृत् अत्यंतोपकारी । आत्मा स्वामी विधिकृदाज्ञाकृत् । गुरुर्हितोपदेष्टा । स वाऽयं कृष्णः । ब्रह्म पूर्णगुणं । महद्भिमृग्यं महद्भिर्ब्रह्मादिभिर्विमृग्यं । अनन्यमसाधारणं । अशरीरः स्वरूपसुखानुभवरूपामिति योजना । अत्र तात्पर्यं ॥ निर्वाणसुखमशरीरसुखं । एतद्बाणमवष्टभ्येति श्रुतेः ॥ एतद्बाणमित्यत्र शरीरं । बाण शब्दप्रयोगात् । व बयोरभेदान्निर्वाणमित्यस्याशरीरमिति व्याख्यानं युक्तं ॥ ५० ॥ एवं युधिष्ठिरादीनुक्त्वा स्वयं कृष्णप्रसादं प्रार्थयते ॥ न यस्येति । यस्य रूपं साक्षाद्धिया साक्षात्कारणविषयीकृत्य भवपद्मजादिभिर्वस्तुतया साकल्येन नोपवर्णितं । मौनेन मननेन भक्त्योपशमेन ध्यानेन पूजितश्च यः स सात्वतां पतिः कृष्णः प्रसीदतामिति योजना ॥ ५१ ॥ इति श्रीभागवतटिप्पण्यां मंदनंदिन्यां दशमोऽध्यायः ॥ ७—१० ॥ ॥

॥ हरिः ॐ ॥ अस्मिन्नध्याये प्रल्हादे कृतनृसिंहानुग्रहप्रसंगान्महोपासके रुद्रेऽपि तत्कृतोऽनिष्टनिवर्तकत्वत्रिपुरारित्वादिकीर्तिसंपादकत्वरूपोऽनुग्रहो वर्ण्यते । अत्रेदं पुरावृत्तमनुसंधेयं । भगवदुपोद्बलितैर्देवैर्निर्जितैरसुरैर्मयं शरणमुपेत्य तन्निर्मितपुरत्रयमवष्टभ्यस्थितैर्देवेष्वेको रुद्रो न द्वितीयावतस्थे इत्यादि वाक्यतात्पर्यमजानद्भिर्मंदजनैरीशानः सर्वविद्यानामीश्वरः सर्वभूतानामित्यादिमंत्रैः स्तूयमानेऽसुरावेशवशाज्जगद्विष्णवधीनं न वेति संशया वै रुद्रे संशयमकर्तुं त्रिपुरारित्वादिकीर्तिं चाहर्तुं वेदचतुष्टयरूपाश्वपृथिवीरूपरथमेकरूपचापस्वस्वरूपशरादिरूपपरिकरयुक्तं रुद्रं रथिकं कृत्वा रुद्रेण दैत्येषु जितेषु पुनर्मयेन रसहृदेनोज्जीवितेषु किं मय

कार्यमिति विषण्णो मदधीनं न किमपि सर्वं विष्ण्वधीनमेवेति विष्णुं प्रपन्ने ब्रह्मणोऽपि रुद्रादुत्तमत्वं ज्ञापयितुं ब्रह्माणं वत्सं कृत्वा स्वयं गोरूपेण गत्वा रसह्रदं वत्सेन सह निस्तुषं पीत्वा रुद्रं स्वयमुपोद्धल्य भूमौ पातितं रथं हरिवंशोक्तरीत्या महावृषभरूपेण विषाणद्वयेनोर्ध्वमुन्नमय्य शरे ते जनरूपेण स्वयमेव स्थित्वा सर्वानसुरानुन्मूल्य त्रिपुरारित्वकीर्तिं रुद्रे संपादयामासेति । इदं च तेषामसुराणां तिस्रः पुर आसन्नित्यादि तैत्तरीयश्रुत्यादिभिः प्रमितं । विशेषजिज्ञासायै सामान्यतः प्रस्तापयति नारदः ॥ स एष इति । अस्मिंल्लोके मयेनानंतमायिनेत्यनन्वितं । अतः किंचिदध्याहार्यं । तच्च तात्पर्ये उक्तं ॥ तदधीनं वा सर्वं नेति संशयं रुद्रस्याहनत् । अल्पकेनैव मयेन रुद्रस्य प्रतीकारं कृत्वेति । तथा चैवं योजना । हे राजन् । अनंतमायिना । अनंतपदं बहुपरं । एकशतसहस्रमायावताररुद्रस्य प्रतीतमालंब्यानंतपदं । वस्तुतस्त्वल्पकेनैव मयेन प्रतीपं कृत्वा कारयित्वा । करणमपि भगवदधीनमिति द्योतनाय णिचोऽप्रयोगः । तदधीनं विष्ण्वधीनं सर्वं न वेति संशयं न्यहनत् । शपो लुगभावः । छांदसत्वात् । अनंतरं स एष भगवान् रुद्रस्य विततं यशो व्यतनोदिति ॥ १ ॥ विशेषतः पृच्छति राजा ॥ कस्मिन्निति । अत्रापि कर्मणीति सप्तम्यंतपदमनन्वितमिति । अतः किंचिदध्याहार्यं । तच्च प्रदर्शितं तात्पर्ये ॥ कस्मिन्कर्मणि मयो विपरीतं चकारेति । तथा चैवं योजना । कस्मिन्कर्मणि मयो विपरीतं रुद्रकार्यविरोधि चकार । येन जगदीशितुर्देवस्य महादेवस्य यश उपचितमिति भावः । पुनश्चानेन कृष्णेन नारायणेन यथोपचिता च कीर्तिस्तत्कथ्यतामिति । पूर्वोक्तश्लोके मय इत्यादि न श्रुतमित्यतः सापेक्षत्वदोष इत्यतस्तात्पर्ये ॥ सापेक्षं न तु दोषाय यत्र सिद्धमपेक्षितमिति शब्दनिर्णये ॥ सिद्धं प्रमाणेन लोकन्यायेन वा । द्वारमित्यादौ लोकन्यायेनात्र पूर्ववाक्यादिबलेन प्रमाणांतरेण चेति ज्ञेयं ॥ २ ॥ पृष्टं स्पष्टमाह ॥ निर्जितानित्यादिना । युधि युद्धेऽनेन भगवतोपबृंहितैरुपोद्धलितैः । अत्र देवानां विष्णुसापेक्षत्वं न दोषः । तस्य सर्वकार्येष्वपि सिद्धत्वात् । एतदभिप्रायेणापि सापेक्षमित्यादिना तात्पर्ये योजनीयं । परमाचार्यमुत्तमं तर्क्षं ॥ ३ ॥ हैमरौप्यायसी । अत एवोक्तं तैत्तरीयेऽपि । अयस्मय्यवमाथरजताथहारिणीति । दुर्लक्ष्यावपायसंयोगौ यासां ता लक्षणादेवागच्छाति । अपगच्छाति चेति । अगमाविगमौ दुर्लक्ष्यावित्यर्थः । दुर्वितर्क्या इयंत इति परिच्छेत्तुमशक्याः परिच्छदा युद्धसामग्र्यो यासु ताः ॥ ४ ॥ ताभिः पूर्भिः । असुरसेनान्योऽसुरसेनानायकाः पूर्वं वैरं

स्मरंतः । अलक्ष्या अदृश्याः संतः । त्रीन् लोकान्नाशयांचक्रुरिति योजना ॥ ५ ॥ सेश्वरा रुद्रसहिता ईश्वरं भगवंतं नोऽस्मान् तावकांस्त्वद्दासान् त्रिपुरालयैरसुरैः ॥ ६ ॥ भगवान्विष्णुः शरं संधायास्त्रमभिमंत्रितं शरं व्यमुंचत । अत्र संधाय व्यमुंचतेति अंतर्णीत ण्यंतं । संधाय व्यमुंचयदित्यर्थः ॥ तथा हि तैत्तरीये ॥ त इषुं समकुर्वत । अग्निमनीकं सोमं शल्यं विष्णु ते जनमिति । सूर्यमंडलात् । यथा मयूखसंदोहास्तथा ततो धनुष उत्पेतुर्यतो यैः शरैः पुरः पुराणि नादृश्यंतेति योजना ॥ ८ ॥ तैः शरैः स्पृष्टाः संबद्धाः । व्यसवो गतप्राणास्तान्व्यसून् कूपरसे कूपे परिपूर्णमृतसंजीवनरसे ॥९॥ सिद्धामृतरसनस्पृष्टामृतसंजीवनरसस्नाता वज्रसारा दृढदेहा वैद्युता इव वन्हयोऽशनयः ॥ १० ॥ इदमेव मयकृतं विपरीतं कृष्णेन कृतमुपचयं वक्तुमाह ॥ विलोक्येति । विमनस्कमुपायानभिज्ञं ॥ ११ ॥ अयं विष्णुः स्वयं गौरिति योजना । काले मध्यंदिने ॥ १२ ॥ भगवता विमोहिताः पश्यं-तोऽप्यसुरा न न्यषेधन् । महायोगी मयः । इदं वक्ष्यमाणं ॥ १३ ॥ तदेवाह ॥ सरन्निति । शोकार्तानसुरान्स्मरन् पूर्वमसुराणां जयदायिनीमिदानीं विपरीतां दैवगतिं दैवेन विष्णुना दिष्टं प्रापितं फलं स्वस्य वाऽन्यस्य वेति द्वयोरपि व्यपोहितुं निराकर्तुं देवोऽसुरो नरोऽन्यो वा यक्षादिः कश्चन कोऽपि नेश्वरो न समर्थ इति योजना ॥ अत्र तात्पर्यं ॥ विष्णुनेत्यादि ॥ १४ ॥ रस-पानानंतरं भगवत्कृतमाह ॥ अथेति । असौ भगवान् रुद्रकृतैर्धर्मादिभिस्तज्जनितपुण्यैरुपोद्बलिताभिः शक्यंत इति शक्तिभिः रथ-धनुरादिभूमिमेर्वादिभिः शंभोः प्राधानिकं युद्धसाधनं व्यधादिति योजना ॥ १५ ॥ प्राधानिकमित्येतद्विवृणोति ॥ रथमिति । यत्तु भगवता कृप्तं तेन संनद्धो रथमास्थाय सशरं धनुराददे इति योजना ॥ १६ ॥ भगवत्तेजसा गुप्तस्तात्कालिकभगवदावेश-विशेषेण गुप्तः ॥ १७ ॥ विमानशतसंकुले अंतरिक्षे स्थिता इति शेषः ॥ १८ ॥ पुरहा त्रिपुरसंहर्ता । ब्रह्मादिभिः सनका-दिभिः । तद्गुणसंज्ञानो वा संभवति ब्रह्मणाऽपि समर्थ इति स्तुति संभवात् ॥ १९ ॥ यशो व्यतनोदित्येतदुपसंहरति ॥ एवमिति । स्वमायया स्वशक्त्यैव नृलोकं विडंबमानस्य स्वेन स्वकीयैश्च सज्जनरक्षणदुर्जनशिक्षणलक्षणव्यापारं कुर्वतः । एवं विधानि वीर्याणि लोकान्पुनंति पवित्रयंति ऋषिभिर्गीतानि । अपरमन्यत्किं वदामि । वीर्याणामनंतत्वाद्वक्तुमशक्त इति भावः ॥ २० ॥ ॥ २१ ॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ७—११ ॥ ॥

॥ हरिः ॐ ॥ भगवद्भक्त्या यथावद्विहितवर्णाश्रमाचारचरणेन निर्मलीकृतांतःकरणेन श्रवणादिद्वारा समुत्पन्नापरोक्षज्ञानेन प्रसन्नो हरिः स्वयोग्यां मुक्तिं ददातीत्येतदर्थं ज्ञापयितुमुत्तरेषामध्यायानामारंभः । तत्र वर्णाश्रमधर्मान् श्रोतुकामो युधिष्ठिरो नारदं पृच्छतीत्याह ॥ श्रुत्वेति । महत्तमाग्रण्यो महत्तमानां श्रेष्ठ उरुक्रम आत्मा मनो यस्य तस्योरुक्रमस्वरूपस्य वा । दैत्यपतेः प्रह्लादस्य पत्युर्नृसिंहस्य वा साधुसभासु सभाजितं प्रीतिविषयीभूतं सेवितं च । सभाजन प्रीतिसेवनयोरिति धातोः । ईहितं चरितं श्रुत्वा मुदान्वितः स्वयंभुवस्तनयं नारदं भूयः पप्रच्छेति योजना ॥ १ ॥ वर्णाश्रमे उचितो य आचारः शौचः स्नानादिस्तेन युतमध्ययन-यजनादिरूपं धर्मं श्रोतुमिच्छामि । येनानुष्ठितेन धर्मेण परं विन्दत इति योजना ॥ २ ॥ सुतानां दक्षादीनां सम्मतः ॥ ३ ॥ इतरान्विहाय मामेव कुतः पृच्छसीत्यत आह ॥ नारायणेति । गुह्यं गोप्यं । तद्विधा उक्तविशेषणविशिष्टाः । यथा विदुस्तथा नापर इति त्वामेव पृच्छामीति भावः ॥ ४ ॥ नमनरूपं मंगलं कृत्वा स्वगुरोर्नरनारायणस्य मुखाच्च्युतं धर्मं वक्ष्यत इति योजना । क्रियार्थोपपदस्य कर्मणि स्थानिन इति सूत्रेण भगवते इत्यादौ चतुर्थः ॥ ५ ॥ स्वगुरुं नारायणं स्तौति ॥ य इति । यच्छब्दस्य तस्मै भगवते इति पूर्वेणान्वयः । आत्मनः परात्मनो दाक्षायण्यां दक्षपुत्र्यां मूर्तिनाम्न्यां धर्मतो यमधर्मतः स्वस्तये मंगलाय । बदरि-काश्रमे । अधि शीङ्स्थासामिति कर्मत्वं नाश्रितं । तप उद्दिश्येति शेषः । मुनीनां तपः शिक्षितुमिति यावत् ॥ ६ ॥ धर्मे प्रमाणमादौ वक्ति ॥ धर्ममूलमिति । धर्मे प्रमाणमूलमित्यर्थः । सर्ववेदमयः सर्ववेदप्रधानः । अनेन भगवदुपदिष्टः सर्वो वेदः प्रमाणमित्युक्तं भवति । तद्विदां भग-वद्विदां वेदविदां वा । स्मृतिश्च । च शब्दाच्छीलं चानेन वेदोऽखिलं धर्ममूलं स्मृतिशीलेति तद्विदामिति वचनं संवादयाति । प्रमाणमुक्त्वा लक्षणमाह ॥ येन चेति । अनेन भगवत्प्रसादसाधनत्वे सत्यनुष्ठेयत्वं धर्मत्वमिति लक्षणमुक्तं भवति ॥ ७ ॥ वर्णाश्रमविशेषधर्मान्वक्तुं साधारणानादौ तावदाह ॥ सत्यमित्यादिना । सत्यं यथार्थवचनं । दया भूतदया । तपो विहितोपवासादि । शौचं क्षालनं । तितिक्षा सहनं । इज्या देवपूजा । ब्रह्मचर्यं स्वपत्नीनियमलक्षणं । ब्रह्मचर्यं गृहस्थस्याप्यस्तीति ज्ञेयं । त्यागो निषिद्धस्य । स्वाध्यायः शूद्रादेरपि स्वोचितनामसंकीर्तनादिः ॥ ८ ॥ समदृक् सर्वत्र भगवतः साम्यदर्शनं । सेवा महतां । शनैः क्रमेण ग्राम्येहोपरमो दुर्विषयेच्छापारित्यागः । विपर्ययेहेक्षा विपरीतप्रवृत्तिविमर्शनं । मौनं प्रलापनवर्जनं । आत्मविमर्शनमात्मविचारः

॥ ९ ॥ अन्नाद्यादेरत्तुयोग्यान्नतृणादेः । भूतेभ्यो मनुष्यपश्वादिभ्यो यथार्हतो यथायोग्यं संविभागो धर्मः । तत्रात कर्तव्यतामाह ॥ तेष्विति । तेष्वात्मदेवताबुद्धिर्भूतेषु परमात्माधिष्ठानबुद्धिः । तत्रापि नृषु विशेषतः ॥ १० ॥ श्रवणं गुरोः सकाशात् । यथोचितस्य कीर्तनं भगवन्नाम्नः । महतां गतेः संगतेः सेवासंपादनं । इज्यावनतिः पूज्येषु नम्रता । दास्यात्मसमर्पणयोर्भेद उक्तस्तात्पर्ये । अनाद्यनंतकालेष्वित्यादि तंत्रमालायामिति । अनाद्यनंतकालेष्वित्यस्य मुक्तौ संसारे चेति विवरणं । एवकारस्यैक एवेत्यन्वयः । संप्रीतिसंज्ञानं भक्तिपूर्वकसम्यग्ज्ञानं ॥ ११ ॥ अयं सत्यमित्यादिनोक्तः । भगवत्तोषसाधनत्वे सत्यनुष्ठेयत्वरूपलक्षणाक्रांतत्वात् । अहिंसादीनां धर्मत्वे धर्मांगत्वमप्यस्तीति ज्ञातव्यं । उक्तरीत्या त्रिंशत्संख्याकभेदयुक्तः । सर्वात्मा सर्वस्वामी परमात्मा येनोक्तधर्मेण तुष्यति अयमिति पूर्वेण योजना ॥ १२ ॥ एवं मनुष्यमात्रसाधारणं धर्मानुक्त्वा तत्तद्वर्णाश्रमोचिताविशेषधर्मान्वक्तुं त्रैवर्णिकसाधारणलक्षणं तावदाह ॥ संस्कारा इति । वैदिकादयः श्रौतस्मार्ताः । संस्कारा निषेकादयो यदि यस्याविच्छिन्नाः स द्विजः । स्त्रीषु मंत्रोच्चारणाभावेऽपि वैदिकसंस्कारणां तंत्रमात्रसद्भावात्प्रदानादीनामुपनयनादिस्थानापन्नत्वाच्च द्विजत्वं बोध्यं । स द्विज इति लक्षणं । विहितान्यग्निहोत्रसोमादीनि बृहस्पतिसवनराजसूयादीनि विशेषविहितानीज्याध्ययनदानानि द्विजन्मनां धर्माः ॥१३ ॥ निगमोदिताः क्रियाः । न केवलं द्विजन्मनामपि तु जन्मना कर्मणा चावदातानां शुद्धानामिति पूर्वेण योजना । द्विजन्मस्वापि विशेषमाह । विप्रस्याध्ययनादीनि । षडिति यावत् । ततोऽन्यस्य क्षत्रियादेरपरिग्रहः । अपरिग्रह इत्युपलक्षणं । अध्यापनायाजने न स्त इति बोध्यं ॥ १४ ॥ वा शब्दोऽवधारणे । अविप्रादेवजनात् करादिभिः । आदि पदादंडेभ्यः प्रसिद्धवित्ताहरणादिकं गृह्यते । वृत्तिर्जीवनोपायः । प्रजागोप्तुरित्यनेन गुप्तिरसाधारणो धर्म इति सूचितं । वार्ता कुशीदादिवृत्तिर्जीवनोपायो यस्य सा वार्तावृत्तिः । ब्रह्मकुलानुग इत्यनेन विप्रेषु विश्वासादिकं धर्म इति सूचितं ॥ १५ ॥ द्विजशुश्रूषाधर्मः । वृत्तिश्च स्वामिनस्तत्संबंधिद्रव्यान्नादिना । अध्ययनादीत्यनेन याजनाध्यापनप्रतिग्रहरूपावृत्तिः सूचिता । तथाऽपि तदतिरिक्तां वृत्तिं विभज्याह ॥ वार्तेति । वार्ता कुशीदादिरूपा । एषा चापदि । विचित्रशालीनं नानाक्षेत्रेभ्यो नानाधान्यार्जनं । यद्वा यायावर्यस्य विशेषणं । विचित्रधान्यविषयकामिति तदर्थः । एतत्पक्षे शिलोंछनमिति [illegible] वृत्तिद्वयं बोध्यं । यायावर्यं गृहे ये

धान्ययाचनं । शिलोंछनमुंछः कणश आदानं कणिशाद्यर्जनं शिलमित्युक्तेर्भेदो बोध्यः ॥ १६ ॥ उत्तरोत्तरा श्रेयसी विचित्रशालीनापेक्षया यायावर्यं तदपेक्षया शिलोंछं श्रेय इति ज्ञेयं । जघन्यो नरः क्षत्रियादिः । अनापद्युत्तमां विप्रादिसंबंधिवृत्तिमध्यापनं यायावर्यादि जीवनोपायं न भजेत् । जघन्यः शूद्रो वर्णहीनो वाऽनापदि विप्रसद्भावे वर्णसद्भावे वा । उत्तमां वृत्तिं तत्त्वज्ञानलक्षणामिति टीकारीत्या वाऽर्थो बोध्यः ॥ १७ ॥ आपदि वृत्तिमाह ॥ ऋत इति । राजन्यं विनाऽऽपत्सु सर्वेषां विप्रादीनां सर्वशः सर्वप्रकारेणापि वृत्तिः कर्तव्या । विप्रस्य स्ववृत्त्यसंभवे क्षत्रिया वृत्त्या जीवनं तस्याप्यसंभवे वैश्यवृत्त्यैवमेव क्षत्रियस्य प्राप्तौ ऋते राजन्यमित्यपवादः । एष च सामान्यापत्सु विशेषापत्सु तु विप्रवृत्त्या जीवनं । अत्यापत्सु विप्रक्षत्रशुश्रूषलक्षणशूद्रवृत्त्याऽपि जीवनं ज्ञेयं । वैश्यस्त्वापदि शूद्रवृत्त्यैव जीवेत् । सर्वेषामिति तूत्सर्गः । शूद्रस्तु वैश्यवृत्त्या कारुकवृत्त्या वा जीवेत् । वैश्यवृत्त्या जीवनेऽपि अध्ययनं न कुर्यादित्यादिकं ज्ञेयं । एतत्सर्वमापत्सु । विप्रः क्षात्रं तु विशां वा धर्ममाचरेत् । क्षात्रासिद्धौ न शूद्रस्तु विप्रक्षत्रिययोः क्वचित् । क्षत्रियो ब्राह्ममापत्सु तदापत्सु विशामपि । क्षत्रियो विप्रधर्माऽपि नैव भैक्ष्यप्रतिग्रही । वैश्य आपत्सु शौद्रं तु धर्ममेकं न चापरं । शूद्र आपत्सु विड्धर्मो तदापत्सु च कारुकः । शूद्रस्तु वैश्यधर्मोऽपि नैव वेदाक्षरो भवेत् । अनापदि क्षत्रियोऽपि पादशुश्रूषणं विना । शूद्रधर्मांश्चरन्विप्रः क्षत्रियेषु न दूष्यति । एषु कर्मसु याञ्चा स्यात्स्वामिनाऽपि न याचिता ॥ शौद्राण्यपि स्वधर्मत्वे क्षत्रियस्यापदो यदि । आत्मनश्चेद्बलाधिक्यं सा तु बंधादपि प्रभोः । धर्मार्थं सेवतोऽर्थं विप्रधर्मादिकाद्वरः । प्रभुणा याञ्चवृत्तिस्तु विशेषेणापि धर्मभाक् । बाहोर्बलाधिको यस्मात्क्षात्रियो विद्ययाऽधिकः । विप्रौ भागवतावेतौ सेशा लोकास्तयोरिमे । इति गीतातात्पर्योदाहृतव्याससस्मृतितोऽवगंतव्यं । तथा न्यायदीपिकायां । न केवलं क्षत्रियः शूद्रधर्मं चरन्न दूष्यतीत्येव किं तर्हीत्यत आह ॥ येष्विति । यदि क्षत्रियस्य स्वधर्मवृत्तावापदो भवंति तर्हि तस्य सानुबंधात्स्वामिनो बलाधिक्येऽपि धर्मार्थमनभिभूयेषु कर्मसु नियुक्तः स्वामिनाऽपि याच्यः स्यात् । न च स्वयं याचिता । तानि शौद्राण्यपि कर्माणि अर्थाद्यर्थं सेवमानस्य विप्रादिधर्मोपजीवनादपि परो धर्मो भवतीत्यर्थः । तत्र स्वाम्यननुभवादपि स्वामिना याच्यत्वं विशेषेण धर्मकारणमित्याह ॥ प्रभुणेति । विप्रधर्माद्याश्रयेण परोपजीवनाभावाच्छूद्रधर्मे तद्भावात्कथं सानुबंधात्प्रभोर्बलाधिक्यादौ सत्यपि तस्य वरत्वमित्यत

आह ॥ बाव्होरिति । सर्वस्य तदीयत्वान्न परोपजीवनमिति भावः ॥ १८ ॥ विप्रस्यैव जीवनोपायषट्कमाह ॥ ऋतामृताभ्या-
मित्यादिना । निषेधमाह ॥ न श्ववृत्त्येति । अर्थाप्रतीतेः ऋतादि पदसप्तकस्यार्थमाह ॥ ऋतमित्यादिना । सत्यानृतमित्येकवद्भावः
॥ २० जुगुप्सितां निंदितां श्ववृत्तिं । विप्रराजन्ययोर्वैशिष्टयमाह ॥ सर्वेति । वेदमयो वेदप्रधानः । वेदमूलमिदं ब्राह्ममित्युक्तेः ।
देवमयो देवप्रधानो विष्णोर्लोकपालानां चात्र संन्निधानात् ॥ २१ ॥ ब्राह्मणादीनां क्रमेण लक्षणान्याह ॥ शतमित्यादिना ।
अच्युतात्मत्वमच्युतमनस्कत्वं ॥ २२ ॥ त्याग औदार्यं । आत्मजयो मनोनिग्रहः । ब्रह्मण्यता ब्रह्मणि साधुता । प्रसादो मुख-
प्रसादः ॥ २३ ॥ त्रिवर्गैर्धर्मार्थकामैः । त्रिवर्गाणां ब्रह्मक्षत्रियविशां वा परितोषणं ॥ २४ ॥ अमायया ऽच्छद्मना ॥ २५ ॥
स्त्रीसामान्यलक्षणमाह ॥ स्त्रीणामिति । अनुकूलतोपकारित्वं । यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्धते । स्त्रीभिर्भर्तुर्वचः कार्यं एष
धर्मः परस्त्रिय इति वचनात् । तद्बंधुषु भागिनेयादिषु । तद्व्रतधारणं पातिव्रत्यं ब्रह्मण्यं तस्य यद्व्रतं तदेवास्या व्रतमिति वा
॥ २६ ॥ गृहमंडनवर्तनैर्गृहालंकारकरणैः ॥ २७ ॥ कर्मैर्विषयैः ॥२८॥ अलोलुपा अयोग्याभिलाषरहिताः । अपतितं ब्रह्महत्या-
दिभी रहितं ॥ २९ ॥ हरिभावेनास्मिन् पत्यौ हरिः संनिहित इति या बुद्धिः सा हरिभावस्तेन ॥ तदुक्तं तात्पर्ये ॥ हरिरस्मि-
न्नित्यादि । हर्यात्मना हरेर्विशेषसंन्निधानवता पत्या सह ॥ ३० ॥ ब्राह्मणस्य तिस्रोऽनुलोमजातयः । क्षत्रियस्य द्वेऽनुलोमजाती ।
एका प्रातिलोमजातिर्वैश्यस्यैकाऽनुलोमजातिः । द्वे प्रतिलोमजाती । शूद्रस्य तिस्रः प्रतिलोमजातयः । एवं द्वादश जातयः । एवं
तासां परस्परभिन्नजातिषु चतुर्वर्ण्यां च जाता जातयस्ततो जाता इति बव्ह्यः संकरजातयः । तासां तत्तत्कुलकृता स्वस्य कुला-
चारेण यत्कर्मणा जीवनं प्राप्तं सैव वृत्तिः । अंत्यजाः शूद्रा ब्राह्मण्यां जाताः । ततो जाता अंतेवसायिनः । पुल्कसमतंगादयः ।
एषां वृत्तिस्तत्तत्कुलकृता भवेदित्यन्वयः । ब्राह्मण्यां क्षत्रियाज्जातो वैश्याद्वैदेहिकस्तथा । शूद्राज्जातस्तु चंडालः सर्ववर्णविगर्हित
इति वचनात् ॥ ३१ ॥ एवं वृत्तिमुक्त्वा धर्ममाह ॥ प्राय इति । स्वभावविहितः स्वस्य भावो जातिः । यज्जातीयत्वामिति
यावत् । तज्जातीयस्य यो वेददृग्भिः स्मृतः स्मृतिरूपग्रंथेनोक्तः । सः युगे युगे प्रतियुगं प्रेत्य मृत्वा स्थितस्येह लोके स्थितस्य
शर्मकृत् सुखकृत् । प्राय इत्यनेन रागादिकलुषितत्वे शर्मकृत्वाभावः सूचितः । अनेन स्मृतिषु तत्तज्जातीयधर्माणां विस्तृत-

त्वादिहानुक्तिरिति सूचितं ॥ ३२ ॥ स्वस्वजातिविहितधर्मानुष्ठानेन न केवलं स्वर्गः किंतु मोक्षोऽपीत्याशयेनाह ॥ वृत्त्येति । स्वभावकृतया स्वस्वजातिप्रयुक्तया वृत्त्या धर्मानुष्ठानेन स्वकर्मणि वर्तमानः । स्वभावजं भाव इच्छा तज्जं कर्म काम्यं हित्वा शनैर्निर्गुणतां मोक्षमियात् । अनेन सर्वजातिविहितं कर्म अकामेनानुष्ठीयमानं मोक्षसाधनमित्युक्तं भवति ॥ ३३ ॥ अकाम्यं कर्म मोक्षहेतुरित्युक्तं । काम्यं न तद्धेतुरिति सदृष्टांतमाह ॥ उप्यमानमिति । पुनः पुनरुप्यमानं क्षेत्रं निर्वीर्यं सत् । सूत्यै बहुधान्यलाभाय न कल्प्यते । प्रत्युत बीजमपि नश्यति । तथा काम्यमपि पुनः पुनः कामायानुष्ठीयमानं निर्वीर्यं सत्कामान्न ददाति । स्वयं च व्यर्थं भवतीति भावः ॥ ३४ ॥ यथोप्यमानं क्षेत्रवत्कामाशयं चित्तं कामानामातिसेवया विरज्येत । अंतर्णीत णिच् । विरक्तं कुर्यात् । निर्वीर्यत्वादिप्राप्तेः । स्वतस्तु न विरक्तं भवति । किंतु कामबिंदुभिराभिवर्धमेव । आज्यबिंदुभिरग्निवत् ॥ ३५ ॥ वर्णाश्रमादिलक्षणोक्त्या भवद्व्यवहारादिलक्षणं प्रयोजनं चाह ॥ यस्येति । प्रोक्तं श्रुत्यादिषु । अन्यत्राप्यदृष्टपूर्वेऽपि वस्तुनि यदि व्यंजकं लक्षणं दृश्येत तत्तद्वस्तु तेनैव लक्षणेनेदृशवर्णोऽयमीदृशाश्रमोऽयमिति निर्दिशेत् । व्यवहरेदिति योजना ॥ ३६ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ७—१२ ॥ ॥

॥ हरिः ॐ ॥ वर्णधर्मानुक्त्वाऽऽश्रमधर्मान्विवक्षुराश्रमत्रयधर्मांस्तावदाह ॥ ब्रह्मचारीत्यादिना । दांतो निगृहीतेंद्रियः । गुरोर्हितमाचरन् । मनोवाक्कायकर्माभिरिति शेषः । दासवन्नीचो भृत्यवद्गर्भदासवद्वा नीचः । सुदृढं सौहृदं स्नेहो यस्य सः ॥ १ ॥ गुरूपदेशकं । अग्निमग्निकार्यार्थमर्कं प्रातः सायं वरुणं चेति ग्राह्यं । सुरोत्तमान् प्राच्यादिदिक्स्थितदेवान् । संध्ये संध्यादेवते । ब्रह्म गायत्रीं जपन् ॥ २ ॥ आहूतो गुरुणा । चरणौ । गुरोरिति शेषः ॥ ३ ॥ वासमुपरिवस्त्रं । यथोदितं शास्त्रोक्तं ॥ ४ ॥ नो चेदपराधादिनाऽननुज्ञातो नो चेत् । क्वचित्सायमाशे प्रातराशे वा ॥ ५ ॥ यावदर्थं यावत्स्वप्रयोजनं गुरुप्रयोजनं वा । यावत्तावदेवेत्यर्थः । स्त्रीनिर्जितेषु स्त्रीवशेषु ॥ ६ ॥ प्रमदागाथां वनितागीतां । बृहद्व्रत इंद्रियनिग्रहवतः । अगृहस्थ इत्यनेनाश्रमत्रयस्याप्ययं निषेधः ॥ ७ ॥ विशेषतो निषेधमाह ॥ केशेति । स्नपनं स्नानकरणं ॥ ८ ॥ कुत इत्युक्ते मनोद्रवणस्यानिवार्यत्वं रूपकेणाह ॥ नन्विति । कैमुत्यसिद्ध्यर्थं निषेधांतरमाह ॥ सुतामपीति । एतच्च गृहस्थविषयमितरस्याप्रसक्तेः । अन्यदा व्यवहारयोग्य-

समये ॥ ९ ॥ ननु बंधनिवृत्त्यर्थं किल निवृत्तधर्मानुष्ठानं । ज्ञानानंदादिस्वरूपस्य जीवस्य तद्विपरीतदुःखादिलक्षणो बंध एव कुतः। न च स्वातंत्र्यादि भ्रमाद्बंध इति वाच्यं । तस्यापि स्वत एव विरामसंभवादित्यत आह ॥ कल्पयेदिति । आभास्यत इत्याभासमिदं शरीरादिकं यावदीश्वर आत्मनः स्वस्य कल्पयेत्संपादयेत्तावद्द्वैतं स्वातंत्र्यभ्रमादिकं न विरमेन्न निरस्येत्ततो मिथ्याज्ञानादस्य ज्ञानानंदादिस्वरूपस्य जीवस्य विपर्ययो दुःखादिलक्षणो बंधोऽनुवर्तत इति योजना । तथा च भगवदिच्छयैव प्राप्तमिथ्याज्ञानादिनिबंधनसत्यबंधनिवृत्तेस्तत्प्रसादसाध्यत्वात्तत्प्रसादाय धर्मोऽनुष्ठेय इति भावः । अत्र द्वैत पदं मिथ्याज्ञानपरं । द्वि शब्दो विरुद्धवाची भावप्रधानश्च । तथा च द्वित्वेन विरुद्धत्वेन इतं युक्तं द्वीतं । प्रज्ञादित्वात्स्वार्थे णिच् । तदेव द्वैतं विरोधश्चाविद्यमानाकारावगाहित्वेन । एवं सम्यग्ज्ञानमद्वैतमित्येकत्ववेदनमिति चोच्यते । एकत्वेनाविरुद्धत्वेन युक्तं वेदनमेकत्ववेदनमिति मध्यमपदलोपीसमासात् । तथा च द्वैत पदस्योक्तार्थमभिप्रेत्य तात्पर्य प्रवृत्तं । बहुत्वेनैव वस्तूनामित्यादि । वस्तूनां वस्तुतो बहूनामिति शेषः । एवमेकस्यैकत्वेनेत्यपि ध्येयं । तथा च यद्वस्तुतो बहूनां वस्तूनां बहुत्वेनैवैकस्यैकत्वेनैव यथार्थज्ञानं तदेवाद्वैतज्ञानमुच्यते । अद्वैतं च तज्ज्ञानमिति विग्रहः । तदन्यथा बहूनामेकत्वेनैकस्य वा बहुत्वेन ज्ञानं तत् द्वैतज्ञानमुच्यते । यथा ज्ञानं येन प्रकारेण तथा तत्प्रकारवद्वस्तु । यथा यत्प्रकारवद्वस्तु । तथा तत्प्रकारावगाहिनी मतिः । भेदो विरोधः । ततो विरोधाभावादेकत्ववेदनमित्युच्यत इत्यर्थः ॥ १० ॥ ब्रह्मचारिण उक्तधर्मं गृहस्थादिष्वातिदिशति ॥ एतदिति । एतदुक्तं यथासंभवं गृहस्थस्येति । तेन भिक्षाचरणाग्निकार्यादेरभावः । तथा च ब्रह्मचारिणो विशिष्यधर्मोक्तिर्युक्ता । अन्यच्चान्यदपि यज्ञप्रजनातिथिभोजनादि । अनेन गृहस्थस्यापि विशिष्यधर्मोक्तिर्युक्तेति । यतेरपीत्यत्रापि यथासंभवं बोध्यं । अग्निकार्यादेरभावात् । अन्यदपीत्यनुवर्तनीयं । प्रणवजपलयन्यासादेर्विद्यमानत्वात् । गृहस्थस्य गुरुकुलवृत्तिर्विकल्पितेत्याह ॥ गुरुवृत्तिरिति । ऋतुगामिन इत्यनेन तदनिषिद्धमिति सूचितं ॥ ११ ॥ विकल्पश्च व्यवस्थित इत्याह ॥ अंजनेति । ये गुरुकुले धृतव्रता ब्रह्मचारित्वसंकल्पितव्रतास्तदाऽजनादींस्त्यजेयुः । यदि न धृतव्रतास्तदा कुर्युर्वा । स्त्र्यवलेपो मदकारी स्त्रीभोगार्थं सेवनीयः पदार्थः । आमिषं फले जंबीरं । धान्ये माषादि ॥ १२ ॥ गुरुकुलवासानांतरं कर्तव्यमाह ॥ उषित्वेति । अधीत्याक्षरावाप्तिफलकमध्ययनं कृत्वा यावदर्थं योग्यार्थं यथाबलं

यथाबुद्धिबलं । अवबुध्य विचार्य ॥ १३ ॥ गुरोः काममपेक्षितं वरं दक्षिणां दातुं यदीश्वरस्तर्हि दत्वा गृहस्थाश्रमं । वनं वानप्रस्थाश्रमं वा प्रविशेत् । प्रव्रजेद्वा । नैष्ठिकः स्यात्तत्रैव गुरुकुल एव वासयेदिति योजना । नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि चेति वचनात् । नैष्ठिकादन्यस्य तु दूरस्थस्य गुरुकुलादन्यत्रस्थस्य गृहाश्रमादि ज्ञेयं ॥ तदुक्तं तात्पर्ये ॥ गुरोराज्ञेत्यादि ॥ १४ ॥ गुर्वग्न्यर्कसुरोत्तमानुपासीदित्यादौ गुर्वाद्युपासनमुक्तं । तद्गुर्वादावधोक्षजसंनिधानदर्शनपूर्वमेवेत्याह ॥ अग्नाविति । अप्रविष्टं सर्वगतं भूतैः प्रभूतैः स्वधामभिः स्वसामर्थ्यैः । प्रविष्टवत् । नित्यवच्छ्रवणमित्यादौ इव स्वार्थे वतिः । प्रविष्टमनुरूपवंतं तत्तद्धृदयांतर्गतरूपवंतमधोक्षजं पश्येदिति योजना । अप्रविष्टादि पदार्थस्तु अप्रविष्ट इत्यादि तात्पर्ये द्रष्टव्यः ॥ १५ ॥ उक्तधर्मवतां फलमाह ॥ एवमिति । परं विज्ञानमपरोक्षज्ञानं विंदंति । अनंतरं परं ब्रह्माधिगच्छतीति योजना । वानप्रस्थधर्मानाह ॥ वानप्रस्थेति । ऋषिलोकं सप्तर्षिलोकं ॥ १७ ॥ कृष्टपच्यं कर्षणादिना भूम्यादौ जायमानं धान्यादिकं । अकृष्टमप्यकालतो जायमानं । अग्निपक्वं वा नाश्नीयादिति योजना । आमं वाऽर्कपक्वमुत वाऽऽहरेदिति योजना ॥ १८ ॥ वन्यैरारण्यकैर्देवव्रीह्यादिभिः । तदलाभेऽन्येन वा येन केनचिल्लब्धेन कालचोदितान् दर्शपूर्णमासादिकाले विहितांश्चरुपुरोडाशादीन्निर्वपेत् । पुराणं जीर्णं तु परित्यजेदिति योजना ॥१९॥ अग्न्यर्थमेवाग्निरक्षणार्थमेवोटजं पर्णशालामाद्रिकंदरं वाऽऽश्रयेत् । स्वयं तु हिमादींस्तत्सहनवान् भवेदिति योजना ॥२०॥ केशान् शिरसि विद्यमानान् रोमाणि कक्षोपस्थादौ विद्यमानान्नखान् श्मश्रूणि मुखे विद्यमानानि । एतद्रूपाणि मलानि देहसंपृक्तमृदं वा । एवं कमंडल्वादीनि वल्कलानि परिधानयोग्यानि वृक्षत्वग्रूपाणि । अग्निपरिच्छदान् दर्भान् दधत् ॥२१॥ मुनिर्वनस्थो बुद्धिः कष्टतो यथा न विपद्येत् । तथा द्वादशाब्दानष्टौ चतुरो वा द्वावेकं वा वने चरेदिति श्लोकद्वययोजना ॥ २२ ॥ उक्तो वनस्थो यदा व्याधिभिर्जरया वा स्वक्रियायामग्निहोत्रेष्ट्यादि क्रियायामान्वीक्षिक्यां ब्रह्मापरोक्षहेतुभूतायां विद्यायां ब्रह्मविद्यायां तदुपदेशेऽकल्पोऽसमर्थस्तदा प्राणांस्त्यक्तुमनशनादिकं कुर्यात् ॥ २३ ॥ अग्नीनाहवनीयादीन् आत्मनि देहे आरोप्याहं ममात्मतामहं स्वतंत्रो ममेदं शरीरादिकमित्यहंकारममकारौ संन्यस्य संत्यज्य संघातं कार्यं । यथार्हतो यथायोग्यं कारणेषु सम्यक् न्यसेत् । तत्र लीनं चिंतयेत् । यद्यपि योगिमृतकाले लयो नास्ति तथाऽपि तदज्ञानमेव विलापनं ॥

तदुक्तं तात्पर्ये ॥ यदज्ञानमित्यादि ॥ २४ ॥ तदेव विवृणोति ॥ ख इति । खानि मुखनासिकाश्रोत्रोदरविवराणि । आत्मवान् जितमनस्कः । शेषमुक्तादन्यत्कठिणभागशरीरं यथोद्भवं कार्यकारणभावमनुसृत्य । अनेनान्येषामपि पंचभूतकार्याणां लाघवादीनामाकाशादिषु लयसंग्रहो वचनांतरानुसारात्सूचितः । वचनंतु आकाशाल्लाघवं सौक्ष्मं शब्दं श्रोत्रं तथा बलं । वायोस्तु प्रेरणा चेष्टा व्यूहनं सौक्ष्म्यमेव च । अग्रेस्तु दर्शनं शक्तिरौष्ण्यं रूपप्रकाशकं । रसेभ्यो रसनं शैत्यं स्नेहक्लेदनमार्दवं । भूमेर्गंधस्तथा घ्राणं गौरवं मूर्तिरेव चेति टीकायामुदाहृतं ॥ २५ ॥ देहभागानां पंचभूतकार्याणां तत्तल्लयमुक्त्वा कर्मेंद्रियाणां सव्यापाराणामभिमानिदेवतासु अधीनत्वरूपलयचिंतनमाह ॥ वाचमिति । सवक्तव्यमिति क्रियाविशेषणं । वाचं वक्तव्यं स्वाहितं यथास्थानं । अधिष्ठातृतया स्वस्थितिमनुसृत्याग्नौ विनिर्दिशेत् । तदधीनत्वरूपलयं चिंतयेदिति योजना । एवमुत्तरत्रापि दक्षापेक्षयेंद्रस्य मुख्याभिमानित्वादिंद्रे शिल्पं करावपीत्युक्तं । विष्णौ दक्षिणपादाभिमानिनि जयंते एकं । वामपादाभिमानिशंभावित्यपि ज्ञेयं । प्रजापतौ दक्षे तत्समे मनौ चेति ग्राह्यं । तेन न प्रसिद्धिविरोधः ॥ २६ ॥ मित्रे तन्नामके सूर्ये । मृत्याविति पाठे मृत्यु पदेन मित्र एवान्यो वा कश्चनदेव इति ज्ञातव्यं । ज्ञानेंद्रियाणां यथास्थानं देवतासु लयमाह ॥ दिक्ष्विति । सनादेन श्रोतव्येन । अध्यात्मनि प्राणे । तस्यैव त्वगभिमानितयाऽऽत्म शब्दवाच्यसर्वदेहव्यापित्वात् ॥२७॥ ज्योतिषि सूर्येऽभिनिवेशयेदित्येतत्पूर्वत्राप्यन्वेति । जिव्हां रसनीयेन सहेति शेषः । अप्सु वरुणे । घ्रेयैर्घ्रातव्यैः क्षितावश्विनोर्मुख्याभिमानित्वेऽपि धराया अमुख्याभिमानित्वमस्तीत्येवमुक्तिः । मनो बुद्धिरहंकारश्चित्तं चेतनेति पंचविधमनसोऽभिमानिदेवतासु लयमाह ॥ मन इति । परे कवाविति पर शब्देन विशेषणाद्बृहस्पतिरेव ग्राह्यः ॥ तदुक्तं तात्पर्ये ॥ पर इत्यादि ॥ २८ ॥ अध्यात्मनाऽहंकारात्मकत्वेत्युक्तेन मनसा सह कर्माणि रुद्रे । कर्मणामहंकारसंबंधमुपपादयति ॥ यदिति । अहं करिष्यामीत्यभिमानेन कृतत्वात्क्रियाणामहं संमतत्वं । सत्वेन साधुपुण्येन सह चित्तं क्षेत्रज्ञे परमात्मनि । यद्यपि चित्तस्य स्वाभिमानिनि हिरण्यगर्भे लयः । तथाऽपि तद्द्वारा परमात्मनीति ज्ञातव्यं ॥ तदुक्तं तात्पर्ये ॥ चित्तमित्यादि । वैकारिकं चेतनात्वस्याभिमानिनं वैकारिकं तदाख्यं हिरण्यगर्भे गुणैः सह परे परमात्मनि ॥ २९ ॥ क्षितिमारभ्याव्यक्तांतं लयमाह ॥ अप्स्विति । कूटस्थे वैकारिकादि भेदेन समुदायस्थेऽहंकारतत्त्वे

॥ ३० ॥ अक्षरतयाऽक्षरलक्षणलयरहिततया । आत्मानं परमात्मानं । जडस्यांतर्लयाच्चिन्मात्रमवशेषितं ज्ञात्वाऽद्वयो भगवतोऽन्यत्स्मृतिवर्जितः । दग्धयोनिरिव दग्धारणिरनल इव कृत्यांतराभावाद्विरमेत् । उपरतो भवेदिति योजना ॥ अत्रात्मादि पदानां परमात्माद्याधारत्वे तात्पर्यं ॥ आत्मानमित्यादि ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ७—१३ ॥ ॥

॥ हरिः ॐ ॥ क्रमात्प्राप्तं यतिधर्मं निरूपयति अस्मिन्नध्याये ॥ कल्प इति । यदा कल्पः स्वक्रियायां व्याधिभिरित्यत्र कल्पस्यात्मारोपणेनानशनादिना विराम उक्तः। इदानीं कल्पस्तु वनस्थो विरक्तश्चेत्परिव्रजेदिति संन्यासं विधत्ते। वस्तुतो वैराग्यमात्रं सर्वाश्रमिणोऽपि संन्यासे निमित्तं। यदहरेव विरजेत्तदहरेव प्रव्रजेदिति श्रुतेः। एवमुक्तलयमनुसंधाय देहातिरिक्तं सर्वं परित्यज्य देहमात्रावशेषितो ग्रामैकरात्रविधिना निरपेक्षो वित्ताद्यनपेक्षो महीं चरेदिति योजना। कल्प इत्युक्त्या महीचरणासमर्थश्चेत्क्षेत्रादौ व्याख्यानादिना वसेदित्यपि ग्राह्यं ॥१॥ यदीत्यनेन वस्तुतो दिग्वासस्त्वमेवेति ध्वनितं । यदि वासो बिभृयाद्गुह्यं गूहनार्थं लोकप्रार्थनया वा वासो धर्तुमिच्छेत्कौपीनाच्छादनं । परं वासो बिभृयादिति योजना । कौपीनं चाच्छादनं च तयोः समाहारः कौपीनाच्छादनं। सर्वोऽपिद्वंद्वो विभाषयैकवद्भवतीत्युक्तेः । न तु कौपीनरूपाच्छादनं । कूपपतनमर्हतीत्यर्थे कुप शब्दात् खय् प्रत्यये नरकपतनसाधनं। पापं कौपीनं । तत्साधनत्वाल्लिंगमपि कौपीनं तदाच्छादनत्वाद्वस्त्रमपि निरूढलक्षणयोच्यते । तथैव वैयाकरणेषु निरुक्तेः। सत्कौपीनः पीनकृष्णाजिनश्रीरित्यादि प्रयोगाच्च। तथा च कौपीन पदेनैवाच्छादनलाभे तदन्यनितंबाच्छादनमेवाच्छादन पदेनैव ग्राह्यं। अत एव मध्वविजये ॥ शुभशुद्धनितंबबिंबराजन्नवकौशेयविशेषबाह्यवस्त्रं। ननु कुक्षिगलालिकेषु रेखात्रितयेन प्रकटेन शोभमानमिति ॥ कौपीनातिरिक्तं नितंबाच्छादनमुक्तं । परमुत्तमं । शीतातपादि निवारणदक्षमन्यदाच्छादनं । यथोक्तं मध्वविजये ॥ मृदुसूक्ष्मघनारुणाविकाच्छः प्रकटप्रावरणेन भासमानं । अतिनूतनतिग्मभानुभासां निकरेणेव सुवर्णसानुमंतमिति ॥ न च शीतातपनिवारणार्थमेकमाच्छादनं यतेः कौपीनात्परमित्याहुः । एकेनान्यद्विना वपुरिति वचनविरोधः । तत्रैक शब्दस्य शीतातपादिनिवारणदक्षत्वरूपमुख्यत्वपरत्वात् । अन्यथैकत्वपरत्वे कौपीनेन द्वित्वप्राप्त्या विरोधात् । नितंबाच्छादनप्रापकमध्वविजयविरोधाच्च । न चेदमेव शीतातपनिवारार्थं नितंबाच्छादनमपीति वाच्यं । बहिर्वाससो नाभेरधो निषिद्धत्वात् । मध्वविजये नितंबाच्छादनस्य कौशेय-

त्वस्य वातातपनिवारार्थस्याविकत्वस्योक्तेश्च । किंचैकत्वसंख्यार्थकत्वे करवस्त्रमपि न स्यात्। तथा च मध्वविजयविरोधः। करगपटपिंडार्थमतिक्रदिति तत्रोक्तेः। तस्मादेवमेव ज्ञेयं। त्यक्तमप्सु त्यक्तं वासो न पुनर्बिभृयात्। देहमात्रावशेषित इत्यस्यापवादांतरमाह ॥ लिंगदंडाभ्यामिति। लिंगं कमंडल्वादिकं। अत्र द्विवचनेन दंड एक इति सूचितं। न तु त्रिदंड इति। त्रिदंडधारिणं भिक्षुं द्विजं चापि त्रिशूलिनं। गार्दभं यानमारोप्य स्वराष्ट्राद्विप्रवासयेदित्यापि बहुवचनविरोधात्। न च चतुर्धा भिक्षवो विप्राः सर्वे चैव त्रिदंडिन इत्यादि त्रिदंडविधिविरोध इति वाच्यं। तस्य दंडो वाग्देहचेतसामिति वक्ष्यमाणरीत्या दंडत्रयदंडनविधिपरत्वात्। तथा च लिंगदंडाभ्यामन्यदनापदि न बिभृयादिति योजना ॥ २ ॥ एक एव पत्न्यादिराहित एव। तेन शिष्यपरिकृतत्वेऽपि न दोषः। आत्मारामः परमात्मालोचनलब्धसुखवान्। अनपाश्रयो ग्रामाद्यावासरहितः। यथाऽऽह याज्ञवल्क्यः ॥ एकारामः परिव्रज्य भैक्षार्थं ग्राममाश्रयेत्। अप्रमत्तश्चरेद्भैक्षं सायान्हे उपलक्षित इति ॥ सर्वभूतेषु सुहृद्धितो नारायण एव मुख्याश्रय इति ज्ञानवान् ॥ ३ ॥ नारायणपरायणत्वं विशदयाति ॥ पश्येदिति। अद्वये सदृशराहिते। सदसतो मूर्त्तामूर्त्तजगतः। परे उत्कृष्टे। उत्कर्षार्थकत्वादेव न सर्वनामसंज्ञा। आत्मानि परमात्मन्यथोक्तविशेषणायोगात्। अत एव परमात्मनीति तात्पर्यं। अदो विश्वं प्रामाणिकं सर्वजगत्। सदसन्मये मूर्त्तामूर्त्तात्मके सर्वत्र जगति परं सर्वोत्कृष्टं ब्रह्म गुणपूर्णमात्मानं परमात्मानं पश्येदिति योजना ॥४॥ सुप्तप्रबोधयोः संधौ शयनोत्थानयोः संधौ। आत्मदृगात्मज्ञानी। आत्मनः स्वस्य गतिं सत आगम्य न विदुः। सत आगच्छाम इति सति संपद्य न विदुः सति संपत्स्याम इत्युक्तप्रकारेण पश्यन् बंधं मोक्षं च वस्तुनः। स्वतंत्रवस्तुनो भगवतः सकाशात्स्थितं मायामात्रं भगवदिच्छया निर्मितं त्रातं च पश्यन् नाभिनंदेदिति योजना ॥ ५ ॥ ध्रुवमवश्यं भाविनं मृत्युं नाभिनंदेत्। नाकांक्षेत्। नाप्यध्रुवं स्वजीवितमभिनंदेत्। अन्यतरकांक्षावान्न स्यादिति यावत्। परं परंतु। भूतानां प्रभवाप्ययहेतुभूतकालाख्यं परमात्मानं प्रतीक्षेतेति योजना ॥६॥ असच्छास्त्रेष्वद्वैतादि शास्त्रेषु। कक्कोकादि शास्त्रेषु वा। न सज्जेत्। जीविकां वेतनादिलक्षणां याजनादिलक्षणां वा नोपजीवेत्। अतिवादान्वेदवादमतीत्य वर्तमानान् शुष्कतर्कांस्त्यजेत्। अप्रयोजकं कांचिदपि पक्षं न संश्रयेत्। अत एव तात्पर्यं ॥ अप्रयोजकमित्यादि ॥ ७ ॥ शिष्यान्नानुबध्नीयात्। सम्यग्ज्ञानलाभतदुपदेशरूपस्वप्रयोजनाभावे वृथा शिष्यबंधं

न कुर्यात्। बहून् असारानवैष्णवान् बहून् शृणुष्व वैष्णवं शास्त्रमिति वैष्णवशास्त्रश्रवणस्य विहितत्वात्। न व्याख्यानमुपजीवेत जीवनोपायं न कुर्यात्। नारंभान् आरब्धुमयोग्यान्कर्षणादीन् ॥ ८ ॥ नारंभान्नारभेदिति द्रव्यार्जनसाधनकर्षणादेर्निषेधे कथमन्न-दानादिधर्मः स्यादित्यत आह ॥ न यतेरिति। शांतस्य समे ब्रह्मणि चित्तवतो महात्मनो यतेराश्रमः प्रायोऽन्नदानादिधर्महेतुर्न स्यात्। पूजनेन स्वपरिवाराणां मिष्टमन्नं दीयते चेत्तदा बहुजनान्नदानलाभो भवतीति प्राय इत्युक्तं। यद्यनायासेन भरणं तदा बिभृयात्। नो चेत्त्यजेत्। यदाह याज्ञवल्क्यः ॥ नाश्रमः कारणं धर्मे क्रियमाणे भवेद्धि यः। अतो यदात्मनः पथ्यं परस्य न तदाचरेदिति ॥ अनायासेन क्रियमाणश्चेद्भवेत्। आत्मनः पथ्यमाचरेत् न परस्यैव पथ्यमित्यन्वयः ॥ ९ ॥ अपरोक्षज्ञानिनः संन्यासिनः प्रवृत्तिप्रकारमाह ॥ अव्यक्तेति। अव्यक्तं बाह्यलिंगं यस्य सः। व्यक्तोऽपरोक्षीकृतार्थो भगवान्यस्य मनीषी मननशीलः। कविर्यथोचितसार्वज्ञवान् संन्यासी अदृश्यो भवेत्। दृश्यश्चेदपि लौकिकव्यवहर्तृणामुन्मत्तवत्स्त्रीणां बालवत्। शतगोष्ठीवक्तृणां मूकवदात्मानं दर्शयेत् ॥ १० ॥ एतादृशाचारे इतिहासमाह ॥ अत्रेति। चिरपूर्वत्वदर्शनाय पुरातनमिति। आजगरस्याजगरवृत्ति-माश्रयतः ॥ ११ ॥ कावेर्यां कावेर्युत्पत्तिस्थाने। सैंह्यस्य गिरेः सानुशृंगसमीपे। तनूदेशैः शरीरभागैः रजश्वलैः रजः कुंठितै-र्निगूढममलं तेजो यस्य ॥ १२ ॥ लोकस्य जनस्य तत्त्वाजिज्ञासया ॥ १३ ॥ कथं भूतं तमित्यत आह ॥ कर्मणेति। जनो मुनिं कर्मणा संध्यावंदनादिना। आकृतिभिराकारविशेषैर्वाचाव्यवहारेण वर्णाश्रमादिज्ञापकैर्लिंगैः सोऽसाविति वा नेति वा नाविंदत्त-मिति योजना ॥ १४ ॥ एतादृशमपि पूज्य इति ज्ञात्वाऽपृच्छदित्याह ॥ तमिति। विधिवदभ्यर्च्यार्घ्यपाद्याद्युपचारं कृत्वा। विवक्षुः संवादं कर्तुमिच्छुः ॥ १५ ॥ प्रश्नप्रकारमाह सार्धश्लोकेन ॥ बिभर्षीति। सोद्यमो वित्तार्जनोपायवान्। उद्यमादीनां कार्यकारण-भावमाह ॥ वित्तमिति ॥ १६ ॥ शयानत्वं निरुद्यमादीनां प्रयोज्यप्रयोजकभावमुक्त्वा पीवानत्वं कथमित्याह ॥ न त इति। पीवा यतः कारणात्तद्वेदितुं क्षमं चेद्वद ॥ १७ ॥ पीनत्वातिरिक्तं भोगकार्यं चाह ॥ कविरिति। अन्नमयं हि सौम्यमन आपोमयः प्राण इत्यादि श्रुतेः। मन आदि करणपाटवस्य भोगसाध्यत्वाद्भोगाभावेऽपि पाटवमस्ति तत्र कारणं किमित्याशयः। कविरिति मनः पाटवं। कल्प इति देहपाटवं। अतिनिपुणदृगिति नेत्रपाटवं। चित्रप्रियकथ इति वाक्पाटवं। सम इत्यनेन साम्यं च ज्ञानि-

लक्षणं सूचितं । तस्योपपादनं कुर्वतो लोकस्य यत्कर्म तन्न द्वेक्षि न नौषि वेति ॥ १८ ॥ नारायणपादारविंदध्यानलक्षणमकरंद-पानेन पीनमित्याशयेन वक्तीत्याह ॥ नारद इति । तद्वागमृतयंत्रितः प्रह्लादप्रश्नवचनरूपामृतेन प्रेरितः ॥ १९ ॥ भगवत्पादार-विंदध्यानानंद एव पीनताकारीति भवानपि महाज्ञानित्वाद्वेदेत्याह ॥ वेदेति । अध्यात्मचक्षुषाऽध्यात्मज्ञानेन नृणामीहोपरमयोः प्रवृत्तिनिवृत्तिलक्षणयोर्मार्गयोः पदं निश्चितं विषयं स्थानं वेद ॥ २० ॥ इदमित्युक्तमेवाह ॥ यस्येति । ध्वांतमज्ञानं । अन्यत्राध-कारं ॥ २१ ॥ अथाऽपि तवज्ञाने सत्यपि प्रश्नान् ब्रूमहे प्रतिवच्मः । तत्र निमित्तमाह ॥ संभाषणीय इति । संभाषणस्यापि प्रयोजनमात्मनः शुद्धिमिति ॥ २२ ॥ स्वस्य पूर्ववृत्तमाह ॥ तृष्णयेति । भवं वहति प्रवहतीति भववाहिनी । ग्राम्यकामैर्मुक्तिसा-धनेतरविषयकामैरपूर्यया तृष्णया प्रयोजककर्त्र्या कर्माणि कार्यमाणोऽहं नानायोनिषु योजित इति योजना ॥ २३ ॥ यदृच्छया दैवेच्छयेमं लोकं ब्राह्मणमानुषदेहं स्वर्गापवर्गयोस्तिरश्चां तिर्यग्योनीनामस्य च मनुष्यशरीरांतरस्य द्वारं कारणभूतं कर्मभिर्भ्रमन् अधुना प्रापित इति योजना ॥ २४ ॥ अत्राऽपि मनुष्यलोकेऽपि दंपतीनां दंपती च दंपती चेत्येकशेषः । बहूनां गृहस्थाश्रमिणां सुखायान्यस्य दुःखस्यापनुत्तये कर्मकुर्वतां विपर्ययं सुखाप्राप्तिं दुःखप्राप्तिं च दृष्ट्वा गृहस्थाश्रमान्निवृत्तः ॥ २५ ॥ प्रायेण विपर्य-यदर्शनेऽपि कदाचिद्वैषयिकसुखस्यापि संभवाद्गृहाश्रमान्निवृत्तौ तदलाभात्कुतो निवृत्त इत्याशंकायामाह ॥ सुखमिति । अस्यात्मनः सुखं रूपं स्वरूपमेव । बलमानंदेति श्रुतेः । न त्वागंतुकं सुखमुत्पाद्यं तच्च सर्वेहोपरते सर्वकाम्यकामनाराहित्यात् । तथा सर्वेहे सर्व-चेष्टके उप अधिके भगवति रतेर्भक्तेर्यद्यस्मादभिव्यज्यते हि तस्मान्मनःसंस्पर्शजान्मनोऽधिष्ठितेंद्रियाणां विषयसंस्पर्शाज्जातानत एव नश्वरान् दुःखसंमिश्राश्च शस्तान् प्रशस्ततया प्रतीतान् । भोगान्वनितादिभोगान् दृष्ट्वा विमृश्य गृहस्थाश्रमं न संविशेत् । न प्रवि-शेदिति योजना । भगवद्भक्त्यादिनित्यस्वरूपसुखव्यक्तौ सत्यां कादाचित्कदुःखसंमिश्रसुखभोगार्थं गृहाश्रमो न संवेशनीय इति भावः । एतच्च स्वरूपतः संन्यासिमनुष्योत्तमादिविषयं ज्ञेयं ॥२६॥ तर्हि लोकः कुतः प्रवर्तत इत्यत आह ॥ इतीति । इत्ये-तत्पूर्वमुक्तं संतं समीचीनं स्वार्थं स्वप्रयोजनं शास्त्रसिद्धं विस्मृत्य । असत्यसमीचीने द्वैते दंपत्त्याश्रमे स्थितः पुमान् विचित्रां घोरां संसृतिमाप्नोति वै इति योजना । शास्त्रसिद्धस्वप्रयोजनविस्मृत्या [illegible] ॥ २७ ॥ वैषयिकसुखाय प्रवर्त-

मानं दृष्टांतप्रदर्शनेन निंदति ॥ जलमिति । तदुद्भवैः शैवलादिभिः छन्नं जलं स्वसमीपस्थितमज्ञो हित्वा जलकाम्यया मृगतृष्णां जलभ्रांतिविषयीभूतां । मरुमरीचिकामुपाधावेद्यथा तथाऽज्ञः स्वतः । ल्यब्लोपनिमित्ता पंचमी । स्वरूपसुखं विहायान्यत्र विषयेष्वर्थदृक् पुरुषार्थदृगुपाधावेदिति योजना ॥ २८ ॥ क्रियायामीषत्स्वातंत्र्येऽपि फले न सर्वथाऽस्तीति क्रियाणां वैफल्यमाह ॥ देहादिभिरिति । दैवतंत्रैर्दैवाधीनैर्देहादिभिरात्मनः सुखं दुःखाप्ययं वेहतोऽनीशस्य फलेऽस्वतंत्रस्य जीवस्य कृताः क्रियाः । मोघाः कृता भवंतीति योजना । वैफल्याच्च वैषयिकसुखाय क्रिया न कर्तव्येति भावः ॥ २९ ॥ आदावंते च दुःखोपबद्धत्वाद्वर्तमानदुःखविमुक्तिरहितत्वाच्चार्थानां कामानां च न पुरुषार्थत्वमित्याह ॥ आध्यात्मिकादिभिरिति । मन आदींद्रियदेहादिजन्यदुःखैराध्यात्मिकैरनूपदेशादिजन्यैराधिभौतिकैर्वर्षातपादिजन्यैराधिदैविकैश्चाविमुक्तस्य मर्त्यस्य मृतिभयजन्यदुःखवतः कृच्छ्रोपनतैर्बह्वायासागतैरर्थैः कामैश्च किं क्रियेत कार्यं किमिति योजना । बहुदुःखकवलितत्वान्नार्थादीनां प्रयोजनत्वमिति भावः ॥ ३० ॥ अर्थकामाद्युत्पत्त्यनंतरं सुखमेव दुःखं नास्तीत्यतस्तदाऽपि क्लेशोऽनुभवसीत्यत आह ॥ पश्यामीति । अत्र धनिनां चतुर्भिर्विशेषणैः क्लेश उपपादितः । अनेन त्यागिनो जितात्मनो भयरहितस्य विशंकारहितस्य च नेदृशः क्लेश इत्युक्तं भवति ॥ ३१ ॥ सर्वत इत्येतद्विवृणोति ॥ राजत इति । पशुपक्षितश्चत्वरादौ गोधूमादेः प्रसारणे महिष्यादि पशुतः कुक्कटादि पक्षितः कालतो वर्षादि कालतः स्वस्मात्स्वकीयादेव भृत्यात्प्राणार्थवतः प्राणिति प्रवर्ततेऽनेनेति व्युत्पत्त्या गजतुरगादिलक्षणः कामः प्राणस्तद्वतोऽर्थवतश्च भयमिति योजना ॥ ३२ ॥ बहुदोषाणां मूलत्वाच्च कामचित्तयोः स्पृहा न कार्येत्याह ॥ शोकेति । क्लैब्यमसामर्थ्यं ॥ ३३ ॥ स्वस्य वैराग्यपरितोषयोर्गुरू आह ॥ मधुकरा इति । नोऽस्माकं ॥ ३४ ॥ क्रमेण शिक्षाप्रकारमुपपादयति ॥ विराग इति । गुरुत्वं बुद्धिजनकत्वं मद्बुद्धिजनकत्वं तत्र वित्तं न संपाद्यमित्येतद्बुद्धिजनकत्वं मधुकरस्य । वित्तवत्कृच्छ्रसंपादितमध्वर्थमन्ये महत्त्वेन दृष्टस्य मधुकरस्य । यदृच्छालाभेन परितोषणीयमित्येतेनैवेष्टतया हृष्टस्य सर्पस्येति विवेचनीयं । पतिं वित्तपतिं ॥ ३५ ॥ यदृच्छयोपनतादनायासेन दैवेच्छयैव लब्धात् । नो चेदलाभे । शये शयनं करोमि । बह्वहानि बहुदिनानि सत्त्ववान् बलवान् ॥ ३६ ॥ यदृच्छालाभप्रकारमेव विशदयति ॥ क्वचिदित्यादिना । अल्पं परिमाणतः साधुस्वभावतो गुणोपेतं सहकारिसंपन्नं ॥ ३७ ॥ श्रद्धया विश्वास-

पूर्वक्रमानेन । कस्मिंश्चिद्दिने दिवा कस्मिंश्चिन्नक्तं रात्रौ ॥ ३८ ॥ शयने यदृच्छालाभप्रकारमुक्त्वा वसन आह ॥ [illegible]
पीतांबरं दुकूलं कार्पासं। अजिनं कृष्णमृगादि चर्म । वल्कलं वसनयोग्यवृक्षत्वगादि। चीरं वस्त्रं । एतच्च विशेष्यं। अन्यत्कटपर्णादि।
वसे आच्छादयामि । वस आच्छादन इति धातुः । दिष्टभुक् दैवप्राप्तभुक् । तुष्टधीस्तुष्टमनस्कः ॥ ३९ ॥ शयने यदृच्छालाभ-
प्रकारमाह ॥ क्वचिदिति । धरोपस्थे भूमितले पर्यंके कशिपौ तल्पे कार्पासादिगर्भतया मृदुशयने ॥ ४० ॥ देहालंकारादौ यदृच्छा-
लाभप्रकारमाह ॥ क्वचित्स्नात इति । चरे चरामि । ग्रहवत्पिशाचवत् ॥ ४१ ॥ मनोवृत्तिप्रकारमाह ॥ न निंद इति । स्वभावविषमं
गुणत्रयस्वभावकृतवैषम्योपेतं जनं योग्यं । अयोग्येषु निंद्यान् निंदेतेति निधानात् । उतापि तु महात्मनि भगवत्यैकात्म्यं मुख्य-
स्वामित्वं यैर्ज्ञातमेतेषां ॥ ४२ ॥ एवं स्ववृत्तिमुक्त्वा संन्यासी लयचिंतनेन कृतकृत्यो भवेदिति तात्पर्येण संकोचेन तत्प्रकार-
माह ॥ विकल्पमिति । विविधः कल्पः समर्थो देवसमूहः । तं चित्ते चित्ताधीनत्वाद्वाक् चित्तमित्युच्यते । यन्मनसा ध्यायति
तद्वाचा वदतीति श्रुतेः । वागभिमानिन्यग्नौ जुहुयादधीनत्वे दद्यात् । द्यु दानादनयोरिति धातुः । दानं च चिंतनं । अग्नौ सर्व-
देवलयश्च अग्नौ सर्वे देवा विलीयंत इति श्रुतिसिद्धः । तच्चित्तमग्निमिति यावत् । अर्थानां शब्दादीनां विपरिणामहेतुमनोऽभिमा-
निनींद्रे । मन इंद्रं वैकारिके तदभिमानिनि गरुडेऽमुं गरुडं मायायां प्रकृतिजन्यत्वान्माया शब्दवाच्यमहत्तत्त्वाभिमानिनि ब्रह्माणि ।
तां मायां ब्रह्माणमात्मानुभूतावात्मनः परमात्मनोऽनु अनुकूला भूतिर्महालक्ष्मीः । स्वामीयके सप्तमी । तद्वारा न तु तत्र देहलयः ।
विलीनो हि प्रकृतौ संसारमेतीति श्रुतेः । स्वानुभूतेर्लक्ष्म्या आत्मानि विष्णौ जुहुयात् । ततः परमात्मनि स्थितमनस्कः सत्यदृक्
परमात्मापरोक्षी मुनिः संन्यासी विरमेत् । बाह्यकृत्यात्कृतकृत्यो भवेदिति यावत् । विस्तरतो लयस्तु सूर्याग्नियुक्त इत्याद्यनुव्या-
ख्यानतोऽवगंतव्यः । अत्र तात्पर्यं ॥ चित्ते मनोवृत्त्यभिमिनिनीत्यादि ॥ ४४ ॥ भगवत्प्रियत्वात्प्रह्लादस्यात्यंतमितरेभ्यो गुप्तमपि
स्ववृत्तमानुपूर्वेण वर्णितमित्याह ॥ स्वात्मवृत्तमिति । वृत्तं चरित्रं । अत्र वृत्तस्य लोकशास्त्राभ्यामपेतत्वमनुपपन्नं । अवधूतवृत्तस्य
ज्ञानिसंमतस्य शास्त्रादपेतत्वायोगादित्यतस्तात्पर्यं प्रवृत्तं ॥ अशास्त्रीयत्वादित्यादि । मुखत आपाततः । शास्त्रनिर्णयगम्यत्वादुपक्र-
मादिना विचार्यमाणे शास्त्रतात्पर्यविषयनिर्णयविषयत्वाद्वस्तुतः शास्त्रीयमित्यर्थः ॥ ४६ ॥ संवादानंतरं प्रल्हादस्य स्वगृहगमन-

माह ॥ नारद इति । पारमहंस्यं परमहंसाश्रमकर्तव्यं । असुरेश्वरः मह्लादः । आमंत्र्य गच्छामीति स्वगमनं निवेद्य गृहान् । गृहाः पुंसि च भूम्न्ये वेति कोशात् ॥ ४७ ॥ इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥ ७—१४ ॥ ॥

॥ हरिः ॐ ॥ वर्णाश्रमधर्माणां सर्वेषां गृहस्थाश्रममूलत्वात्तदाश्रमधर्मान्विवक्षुः प्रश्नागतिप्रकारमाह ॥ युधिष्ठिर इति । एनां पदवीमवधूतादिसाध्यां मोक्षपदवीं येन विधिना गृहस्थाश्रमोचितधर्मेण । तं ब्रूहीति योजना ॥ १ ॥ लोकानां लोकान् ॥ तत्त्वेन याथार्थ्येन ॥ २ ॥ गृहोचितपंचमहायज्ञादिरूपाः क्रियाः कुर्वन् साक्षात्काम्यार्थत्वं विना मुख्यतो वासुदेवार्पणं । कुर्वन्निति शेषः । महामुनीनपरोक्षज्ञानिन उपासीतेति योजना । तथा च काम्यकामतां विना भगवत्प्रीत्यर्थमेव क्रियमाणं गृहाश्रमोचितं कर्म महामुन्युपासनसहितं मोक्षाय भवतीति भावः ॥ ३ ॥ इत्थं भावांतरमाह ॥ शृण्वन्निति । भगवतोऽवतारकथामृतं । अभीक्ष्णं पुनः पुनः । श्रद्दधानोऽतिविश्वासवान्सन् शृण्वन् उपशांतजनेन स्वोपासितमहाभक्तिमत्संन्यासिजनेनादृतः प्रीतिविषयो यथाकालं विहितकालं ॥ ४ ॥ सतां संगात्सहवासजनितवैराग्यादात्मजायाऽऽत्मजादिषु । आत्मनि देहे जायादिषु मुंचमानेषु दैवात्संत्यजत्सु परस्परं संगम्य वा मुंचमानेषूत्थितः स्वप्नवत्स्वान् पुत्रादिष्विव संगं स्नेहं शनकैः क्रमेण स्वयं मुंचेदिति श्लोकद्वययोजना । अनेन श्रद्धापूर्वकभगवत्कथाश्रवणतद्भक्तप्रीतिसंपादन स्वकीयजनस्नेहपरित्यागः कर्तव्य इत्युक्तं भवति ॥ ५ ॥ इत्थं भावांतरमाह ॥ यावदिति । यावान् स्वस्य परलोकसाधनीभूतस्नानध्यानयागादिकमनुष्ठानपाटवं देहेनातिथ्यादिभोजनवासनादिकं च गेहेन । तस्मिन्नेवप्रयोजने तत्रोपासीनो वस्तुतो विरक्तो रक्तवद्दृश्यमानो नृलोके स्थिरतां नरतामायुः पूर्त्यनंतरं न्यसेत् क्षिपेदिति योजना । अनेन देहगेहादेः पारलौकिकप्रयोजनायैवानुसरणं कर्तव्यमित्युक्तं भवति ॥ ६ ॥ इत्थं भावांतरमाह ॥ ज्ञातय इति । अनेन स्वस्य महासाम्राज्यसत्वे ज्ञात्याद्युक्ताभीष्टदानादिकमपि भगवत्तोषसाधनमित्युक्तं भवति ॥ ७ ॥ इत्थं भावांतरमाह ॥ दिव्यमिति । दिव्यभौमांतरिक्षभोगसाधनवित्तं स्वयमेव न स्वीकुर्यात् । किंत्वितरेऽप्युपभुंजरिन् । अनेन भोगयागादिकमितरैरपि कारयेदित्युक्तं भवति ॥ ८ ॥ इत्थं भावांतरमाह ॥ यावदिति । अनेन स्वभोगसाधनपरिमितमेव स्वभोगसाधनं करणीयं । अन्यत्स्वं स्वत्वत्यागेनातिथ्याभ्यागतबंध्वादिभिर्भोजनीयं । नो चेत्स्तेह एवेति भावः । गोशतादपि गोक्षीरं प्रस्थं मानशतादपि । प्रासादादपि

खट्वार्धं । शेषाः परविभूतयः ॥ ९ ॥ न केवलं बंधुजनादिसंरक्षणं कर्तव्यं किंतु भृत्यगवादिसंरक्षणमपीत्याह ॥ नृगोखरेति । मर्को मार्जालः । आखुभुक् पृथुदंशश्च मार्जारो मर्क उच्यत इत्यभिधानात् । वयः पक्षिणः । अन्तरं भेदः । अत्र यथायोग्यं लालनीयत्वे पुत्रदृष्टांतो न तु सर्वथा। तेन भृत्यानां वेतनेन यवसेन गवां खराणां यवसभूमिविसर्जनेन शुनामुच्छिष्टदानेन मर्काणां चलितपय आदिनाऽऽखूनां धान्यशेषादिना पक्षिणां भूमौ न्यस्तान्नादिना मक्षिकानां गुडसंपर्कादिना पालनं बोध्यं । अनेनापि भगवत्प्रीतिरिति भावः ॥ १० ॥ विहितं धर्मार्थकामलक्षणत्रिवर्गमपि दुष्प्रतिग्रहादिलक्षणात्यायासेन विनाऽनायासेन प्राप्तेनैव भजेत्। तथैव करणे भगवत्तुष्टिरित्याह ॥ त्रिवर्गमिति । अतिकृच्छ्रेणात्यायासेन न भजेत् । किंतु यथादेशं यथाकालं यावद्दैवोपपादितं भजेतेति योजना ॥ ११ ॥ पुत्रवत्पश्येदित्युक्तं पालनं दर्शयति ॥ आश्वभ्य इति । यथा यथायोग्यं । तान् अन्नादीन् श्वपर्यंतमंतेवसायिपर्यंतं च विभजेत् । उच्छिष्टेन भूमौ निक्षिप्तान्नादिना च यथाऽश्वादीनां प्रीतिस्तथा संपादयेदिति भावः । उक्तगृहस्थधर्माद्यनुष्ठानेऽनुकूलया भार्यया भवितव्यं । तत्प्रातिकूल्ये कथमित्यत आह ॥ आत्तेति । यत एभ्यो दारेभ्यो नृणां सत्त्वग्रहो यावद्बलधैर्यादिनिरासो भवेत् । यदर्थं यादृशदाराभीष्टार्थं । स्वान्प्राणान् जह्यात् । गुरुपितरं वा हन्यात् । एतानेतादृशान्महतो दोषैर्युक्तान् दारान्कर्मवशादाप्त्वा तस्यां स्त्रियां तेषु दारेषु स्वत्वं स्वकीयाभिमानं जह्यात्परित्यजेत् । यस्तेन स्वत्वाभिमानेनाजितः स एवाजितो हि । सर्वथा स्त्रीजितो न भवेत् । इति योजना । एतादृशदुष्टदारान्परित्यजेदिति भावः । हृताधिकारां मलिनां पिंडमात्रोपजीविनीं । परिभूतामधःशय्यां वारयेद्व्यभिचारिणीमिति वचनात् । यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तस्य वर्धते । मृते जीवति वा पत्यौ या नान्यमुपगच्छति । सेह कीर्तिमवाप्नोति मोदते ह्युमया सह । स्त्रीभिर्भर्तृवचः कार्यं एष धर्मः परः स्त्रिय इति । भगवत्तुष्टेरेव सर्वाश्रमेषु सम्पादनीयतया तत्साधनत्वाभावेन भार्यायां स्वत्वं त्याज्यमभिप्रेतं । मा भूद्द्रवांस्तुष्टो कलेवरकारणकरत्याधारभार्या स्वत्वं न त्याज्यं । त्यागे ईदृशसुखालाभादित्यत आह ॥ कृमीति । कृम्यादेर्निष्ठाभावोंऽते यस्य तत् । कुणपस्य तथैव स्थितो कृमिभावः । श्वसृगालादि भक्षणे विड्वराहः । दाहे भस्मभाव इति बोध्यं । तुच्छं फल्गु कलेवरं रागादिग्रस्तं परिदृश्यमानं क तदीय इति । एतादृशशरीरकारणकरत्याधारभूताभार्या क । नभश्छादर्निभासि छदिर्व्याप्यस्थितिर्यस्य सः ।

एतादृगात्मा परमात्मा केति योजना । सर्वदेशकालव्यापिपरमसुखावहपरमात्मतोषविरोध्यतितुच्छकलेवरकारणकरत्वाधारत्वी स्वत्वं सर्वथा त्याज्यमिति भावः । अत्र तात्पर्यं ॥ नभश्छादिरित्यादि ॥ १३ ॥ गृहस्थस्यैव पुनरित्थं भावांतरमाह ॥ सिद्धैरिति । यज्ञावशिष्टार्थैः । यज्ञ शब्दस्यावृत्त्यादिः । यज्ञो विष्णुरिति श्रुतेः । यज्ञस्य विष्णोः पूजासाधनी भूतो यज्ञादिस्तदवशिष्टार्थैः । अन्नवित्तादिभिरात्मनो वृत्तिं देहधारणादिकं कल्पयेत् । शेषे ततोऽपि शिष्टे स्वत्वं परित्यजेत् । बंध्वतिथ्यादिभ्यो दद्यात् । एवं भूतश्चेन्महतां पदवीं संन्यासिनां स्थानं मोक्षमियादिति योजना ॥ १४ ॥ पुनरित्थं भावांतरमाह ॥ देवानिति । भूतानि मनुष्यादीन् स्ववृत्त्यागतेन स्ववर्णाश्रमोचितशिलोंछकरस्वीकारादिना । तेन वित्तेन तत्तदंतर्गतं पुरुषं पूर्णषड्गुणमात्मानं परमात्मानं पृथगधिष्ठानात् स्वस्माच्चात्यंतभिन्नमुद्दिश्यान्वहं प्रतिदिनं यजेत्पूजयेदिति योजना । पूजनं च यथायोगं यज्ञतर्पणान्नदानादिनेति ध्येयं ॥ १५ ॥ गृहस्थस्य यज्ञादिकमावश्यकमित्याह ॥ यर्हीति । यर्हि यदाऽऽत्मनोऽधिकारोस्ति अर्थित्वं समर्थत्वं विद्वत्त्वादिकं जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिनोक्तं मध्यवयस्त्वं । सर्वाःस्युर्यज्ञसंपदो यज्ञसामग्र्यो वैतानिकेन विधिना । वेदोक्तप्रयोगविधिनाऽग्निहोत्रादिना स एष यज्ञः पंचविधः । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यं पशुः सोम इत्याद्युक्तरीत्या पंचविधयज्ञेन यजेत्पूजयेदिति योजना ॥ १६ ॥ अवैश्वदेवमतिथिवर्जितं चेत्यादिना अतिथिरहितयज्ञादेर्निषिद्धया यज्ञांगत्वेन स्वप्राधान्येन चातिथिभोजनमावश्यकमिति ब्राह्मणभोजनं स्तौति ॥ नहीति । यथा हुतैर्दत्तैर्घृतान्नादिभिरिज्येत पूज्येत तथाऽग्निमुखतो न हीज्येतेति योजना ॥ १७ ॥ ब्राह्मणभोजनं देवयजनं च कर्तव्यमित्याह ॥ तस्मादिति । ब्राह्मणेषु देवेषु च मर्त्यादिषु । मर्त्येष्वमर्त्येषु यथार्हतो यथायोगं तैः कामैर्ब्राह्मणाभीष्टैर्देवाभीष्टैश्च ब्राह्मणा आननं यस्येति एनं क्षेत्रज्ञं भगवंतं यजेदिति योजना ॥ १८ ॥ देवयज्ञमुक्त्वा पितृयज्ञप्रकारमाह ॥ कुर्यादिति । प्रोष्ठपदे भाद्रपदे पित्रोर्मातापित्रोस्तद्बंधूनां प्रत्यहं तर्पणाविषयाणां श्राद्धं कुर्यादिति योजना । पंचापरपक्षानां मध्यमस्यात्युत्तमत्वात्प्रोष्ठपदे इत्युक्तिः ॥ १९ ॥ पितृश्राद्धादौ पुनः कालविशेषमाह ॥ अयने इति । अयने कर्काटकायने मकरायने तयोरेव महाऽयनत्वात् । विषुवे मेषतुलासंक्रमयोः । कुव्हां नष्टेंदुकलायाममायां । पारणयोग्यद्वादश्यां श्रवणेषु श्रवणादिषु ॥ २० ॥ शुक्लपक्षे तृतीयायामक्षय्यायां । कार्तिके नवम्यां महानवम्यां

हेमंते शिशिरे विद्यमानासु चतसृष्वप्यष्टकासु सप्तम्यादि त्रये । त्रयोदश्यां च । तदुक्तं तात्पर्ये ॥ सप्तम्यादित्यादि । हेमंत शिशिर
चैव नित्यश्राद्धं गुणोत्तरमिति । अत्रापि हेमंतशिशिराधिष्ठानकाष्टकाचतुष्टयमेव ग्राह्यं । षण्णवत्यनुष्ठातृभिस्तथैवानुष्ठानात् । एवं च
सप्तम्यादि दिनत्रयं त्रयोदशी चेति दिनचतुष्टयमार्गशीर्षाद्यपरपक्षचतुष्टयं ग्राह्यं ॥ २१ ॥ मघाया राकायाः पूर्णनिशाकरयुक्तया
पौर्णमास्यां समागमे । राकयाऽनुमत्या वा कलाहीननिशाकरयुक्तया पौर्णमास्यां वा । युतानि मासर्क्षाण्याश्लेषामघापूर्वफल्गुन्यः ।
प्रथमा सप्तम्यर्थे ॥ २२ ॥ यद्यनुराधा स्याच्छ्रवणो वा । उत्तरा उत्तरोत्तराषाढ उत्तरभाद्रपदास्तद्युक्तद्वादश्यां । आसु तिसृष्वनु-
राधाश्रवणोत्तरासु । उत्तरासु वा तिसृष्वेकादशी चेज्जन्मर्क्षं सोत्पत्तिनक्षत्रं सौम्ययोगयुक् मृगशीर्षायोगयुक् च ॥२३॥ त एते उक्त-
कालाः श्रेयसो हेतवः । विहितकरणे श्रेयोवर्धनाः । तदेवाह ॥ अमोघायुषेति । अमोघममोघत्वं । साफल्यमिति यावत् ॥२४॥
उक्तकालेषु कर्तव्यमेव विविच्याह ॥ येष्विति । स्नानादीनां मध्ये होमो युक्तदिने कार्यः । एवं श्राद्धमपि हरिवासरे न जुहुयान्न
श्राद्धं कुर्यादिति विशेषनिषेधात् । तत्रैकादशीग्रहणं निरवकाशमिति वाच्यं । जपादिविषयत्वेन विद्धैकादशीविषयत्वेन सावका-
शत्वात् ॥ २५ ॥ आत्मनो जायाया अपत्यस्य च संस्कारकाले गर्भाधानजातकर्मादौ प्रेतसंस्था मृताहश्चेति । प्रथमा सप्तम्यर्थे ।
पित्रोः प्रेतसंस्था मृताहकालेऽभ्युदयेऽभ्युदयार्थं क्रियमाणकर्मणि पितृदेव इत्यादि पूर्वेणान्वयः ॥ २६ ॥ देशे काले पात्रे च
तद्दानं सात्त्विकं स्मृतमित्यादिना देशाद्यानुगुण्यस्य दानाद्यंगत्वोक्तेर्देशादिकमाह ॥ अथेति । श्रेय आवहान् श्रेयःसंपादकान्
सत्पात्रं यत्र लभ्यते स वै पुण्यतमो देश इत्यनेन देशापेक्षया पात्रस्यैव मुख्यांगत्वं स्वाधिष्ठानेन पुण्यदेशत्वापादनात् ॥ २७ ॥
सत्पात्रं विशिनष्टि ॥ विश्वमिति । भगवत उदरे स्थितं विश्वं सर्वं चराचरात्मकं जगद्यत्र पात्रे तादृशं सत्पात्रं यत्रेति पूर्वेणान्वयः ।
भगवता धृतस्य पात्रे स्थितत्वं कथमिति न चोदनीयं । भगवत एव तत्र स्थितत्वात् । यतिर्यस्य गृहे भुंक्ते तत्र भुंक्त हरिः स्वयं ।
हरिर्यत्र गृहे भुंक्ते तत्र भुंक्ते जगत्त्रयमिति स्मृतेः । ब्राह्मणानां कुलं समूहो यत्र स देश इत्युत्तरेणान्वयः ॥ २८ ॥ अर्चाः प्रतिमा
वेंकटेशजगन्नाथादयः । पुराणेष्वष्टादशपुराणोपपुराणेषु ॥ २९ ॥ सरांसि मानससरःप्रभृतीनि । अर्हाश्रितान्युत्तमयोगिभिराश्रिता-
न्यपि ॥ ३० ॥ फल्गुनं स्थानं दूरपुरं कन्यातीर्थं वा । कन्यातीर्थं फल्गुनं स्यात्स्थानं दूरपुरं च तादित्यभिधानं । कुशस्थाली

द्वारवती ॥ ३१ ॥ नंदा सीतेति भिन्नं पदं । आश्रमपदेन समस्तं वा ॥ ३२ ॥ हरेरर्चाश्रिता इति पुनर्वचनं वैशिष्ट्यद्योतनाय ॥ ३३ ॥ देशानुगुण्यप्रयुक्तं धर्मस्य वैशेष्यमाह ॥ धर्म इति । उक्तो धर्मोऽत्रोक्तक्षेत्रेषूदितः । अनुष्ठितश्चेत्साधारणदेशानुष्ठित-धर्मापेक्षया सहस्राधिकफलोदयो भवति । पात्रेष्वपि तारतम्यमस्ति । तत्र हरिर्मुख्यपात्रमित्याह ॥ पात्रं चेति । पात्रज्ञानिश्रेष्ठैः कविभिः पात्रं निरुक्तं वै ॥ ३४ ॥ पात्रं निरुक्तमित्युक्तं तत्किमित्यत आह ॥ हरिरिति । हे उर्वीश । चराचरजगत् । यन्मयं यत्प्रधानकं यत्स्वामिकं च स हरिरेक एव पात्रमिति पूर्वेणान्वयः ॥ ३५ ॥ अतश्च पूज्य इत्याह ॥ देवेति । देवार्षिलक्षणार्हत्सु पुज्येषु तथा ब्रह्मणि तदात्मजेषु वसिष्ठादिषु सत्सु तत्र राजसूयेऽग्रपूजायामच्युतो भगवान् कृष्ण एव पात्रतया मतः । भीष्मादिभिः संमतः । अतो हरिरेव पात्रमित्यन्वयः । तरोर्मूलसेचनवद्भगवत्पूजनस्यैव सर्वजीवराशितृप्तिसाधनत्वाच्च भगवानेव पूज्य इत्याह ॥ जीवेति । जीवराशिभिर्ब्रह्मादिशाखाभिराकीर्णो व्याप्तो ब्रह्मांडकोशलक्षणोंऽघ्रिपः पादपः ॥ ३६ ॥ तन्मूलत्वादच्युतस्य तदिज्या सर्वजीवात्मतर्पणं तृप्तिहेतुरिति योजना । ननु भगवत एव पूज्यत्वे साक्षात्तदलाभे पूजाविलोपप्रसंग इत्यतः सर्वशरीरेष्वपि भगवतः सत्वान्न तदनुपपत्तिरित्याशयेन पुरुष शब्दं भगवति निर्वक्ति ॥ पुराणीति । असौ भगवान् हि यस्मात्पुरेषु देहलक्षणेषु जीवेन रूपेण प्रतिरूपेण प्रतिबिंबेन सह शेते । अतः पुरुष इत्युच्यते । सर्वासु पूर्षु शेत इति श्रुतिप्रसिद्धिं द्योतयति हि शब्देन । अनेन जीवस्यापि पुरुषत्वे इदमेव निमित्तमिति सूचयति । पुरीति सप्तम्यंते उपशेतेर्ड प्रत्यये सप्तम्या अलुकि इकारस्योकारे शकारस्य षकारे च रूपं । पुराण्यपि नान्यनिर्मितानीत्युक्तं । नृतिर्यगृषिदेवता एतल्लक्षणानि । उपलक्षणमेतत् । यक्षरक्षःपिशाचादीनां सर्वेषां पूज्यत्वाभिप्रायेणैतदुक्तिः । तिर्यंचो गवाश्वादयः पुराणि । अनेन सृष्टानीति योजना । अत्र रूपेण स्वरूपेणेति न मंतव्यं । अभेदस्य सर्वमानविरुद्धत्वात् । किंतूक्तरीत्या सहयोगे तृतीया । अत एव तात्पर्यं ॥ जीवरूपेण सहेति ॥ ३७ ॥ नन्वेवं भगवतः सर्वशरीरस्थत्वेन पूज्यत्वे पात्रतारतम्यं न स्यादित्यत आह ॥ तेष्विति । राजन् । तेषु ब्रह्मादिषु तारतम्येनाधिष्ठानतारतम्येन निमित्तेन स्वयमपि संनिधानतारतम्येन वर्तते हि यस्मात्तस्माद्यावान्सर्वत्राप्येकप्रकारेण सर्वगुणवीशिष्टोऽपि । आत्मा परमात्मा यथाऽधिष्ठानतारतम्यानुसारिसंनिधानतारतम्येनेयते प्रमाणैर्ज्ञायते । तथा पुरुषो ब्रह्मादिः पात्रं भवतीति योजना । भगवतः

सर्वत्रैकप्रकारत्वेपि अधिष्ठानतारतम्यानुसारेण संन्निधानतारतम्यात्पात्रतारतम्यं युक्तमिति भावः । अत एव तात्पर्यं ॥ ब्रह्मादित्यादि । व्यक्तिमात्रं विशेषेणाधिष्ठानतारतम्यानुसारिस्वमाहात्म्यप्रकटनमात्रतारतम्येनेत्यर्थः ॥ ३८ ॥ यावानात्मा यथेयत इत्यनेनाधिष्ठानतारतम्यानुसारेण भगवतो व्यक्तितारतम्योक्त्याऽधमैरुत्तमपुरुषेषु भगवान् पूज्य इत्यायातं । एवं चलप्रतिमायां सत्यामचलप्रतिमायां पूजासंप्रदायः कुत आगत इत्याशंकायामाह ॥ दृष्ट्वेति । तेषां नृणां पूज्यपुरुषाणां मिथः परस्परं । तदपेक्षया मय्येवात्मा विशेषतः सांनिहित इत्येकेनोच्यते । एवमपरेणेत्येवमात्मनो हरेरवज्ञामधिष्ठानावज्ञां दृष्ट्वा । कलहं दृष्ट्वेति यावत् । त्रेतादौ युगे क्रियायै सपर्यायै कविभिरर्चा कृतेति योजना । कृते ब्राह्मणानां परस्परतारतम्ये कलहाभावात्तारतम्येन चलप्रतिमासु पूजासंभवेऽपि त्रेतादौ कलहेन तदसंभवात् । अर्चायां पूजासंप्रदायः कृत इति भावः ॥ ३९ ॥ संप्रदायानुसारेणार्चायां पूजा क्रियते । कृताऽप्युत्तमपुरुषद्विषामर्थदा न भवतीत्याह ॥ तत इति । ततः संप्रदायागतेरुत्तमद्वेषासंपादनेऽर्चायां पूजा तंत्रसारोक्तरीत्याऽनुष्ठिता पुमर्थचतुष्टयसाधनं भवतीति भावः ॥ ४० ॥ पुरुषाणां पात्रत्वमुक्तं । तत्रापि विशेषमाह ॥ पुरुषेष्विति । पुरुषेषु मध्ये ब्राह्मणमत्यंतपात्रं विदुः किं वर्णमात्रेणेत्यत उक्तं ॥ तपसेति । तपसाऽनशनादि तपसा विद्यया ब्रह्मविद्यया । तुष्ट्यां विषयालंबुद्ध्या हरेस्तनुं प्रतिमाभूतमिदं शरीरं धत्ते । चो यत इत्यर्थे । इति योजना । प्राणप्रतिष्ठादिना शिलायाः प्रतिमात्ववद्ब्राह्मणशरीरस्यापि हरेः प्रतिमात्वं तप आदिनेति ज्ञेयं । अत एव तात्पर्यं ॥ शिलावदित्यादि । संतस्तपोविद्यादिमंतः । आद्य पदेन क्षत्रियाद्या अपि स्वधर्मवर्णानां पूज्या इत्युक्तं भवति । अत्र स्वोत्तमवर्णे तप आधिक्येऽत्यंतपूज्यत्वं । तदभावे पूज्यतामात्रं । अधमवर्णे विद्याद्याधिक्ये तु मानसिकवाचनिकपूजनं कार्यं न तु शारीरमित्यादिकमवगंतव्यं ॥ ४१ ॥ ब्राह्मणान्स्तुत्वोपसंहरति ॥ नन्विति । हे राजन् । जगत्स्वामिनः कृष्णस्य प्रतिमास्थानीया ब्राह्मणाः । पादरजसा त्रिलोकीं पुनंतोऽस्य जगतो महद्दैवतं तं नन्विति योजना ॥ ४२ ॥ इति श्रीभागवतटिप्पण्यां पंचदशोऽध्यायः ॥ ७—१५ ॥ ॥ ॥

॥ हरिः ॐ ॥ उक्तसर्वधर्मान्ज्ञानादींश्च संगृह्य तत्तारतम्यं फलतारतम्यं चाह । तत्रादौ ब्राह्मणान्विभजते ॥ कर्मेति । कर्माग्निहोत्रादि । तपोऽनशनादि । स्वाध्यायो वेदाध्ययनं । प्रवचनं शिष्येभ्यो वेदाध्ययनकीर्तनं । ज्ञानं भगवन्माहात्म्यविषयकं ।

योगः समाधिः ॥ १ ॥ कव्येति पितृभ्यो दीयमानान्यन्नादीनि । पैत्रे इति शेषः । तदुद्देशेन क्रियमाणे कर्मणि । हव्यानीत्यपि शेषः । देवेभ्यो दीयमानानि । दैवे च तदुद्देशेन क्रियमाणे कर्मणि । तस्य कर्मण आनंत्यमनंतफलकत्वमिच्छता । ज्ञाननिष्ठस्य देयानि । तस्य ज्ञाननिष्ठस्याभावे इतरेभ्यः कर्मनिष्ठादिभ्यो यथार्हतो यथायोग्यं देयानीति योजना ॥ २ ॥ श्राद्धभोक्तृत्वसंख्या-नियममाह ॥ द्वाविति । दैवे विश्वेषां देवानां स्थाने ॥ ३ ॥ स्वजनः स्वकीयो भोजनीयो जनः । तदीयार्पणाद्विस्तराद्विस्तरेण क्रियमाणात् । एतानि देशादीनि सम्यक् न भवंति अविकलानि भवंति । बहूनामुद्देश्यत्वे मनोविक्षेपादिना कैवल्यस्याप्राप्तेरिति भावः ॥ ४ ॥ तद्देशकालादावुत्पन्नं संप्राप्तमयाचनादिना प्राप्तं यत्तदेव हरिदैवतं पात्रे भोजनपात्रे न्यस्तं कामधुगक्षयं भवतीति भावः ॥ ५ ॥ देवर्ष्यादिभ्योऽन्नं विभजन्विभागेन समर्पयन्सर्वतः सर्वपुरुषात्मकं परमात्मस्वामिकं पश्येदिति योजना । परमात्मैव सर्वाधिष्ठानेषु भुंक्त इति चिंतयेदिति भावः ॥ ६ ॥ ज्ञाननिष्ठानां परमहंसानां भोक्तृत्वे मांसं निषेधति ॥ न दद्यादिति । धर्म-तत्त्वविद्धोक्ता मुनिरपि नादद्यात् । तथा यतः पशुहिंसया परा प्रीतिः मुनीनां न स्यात् । अत इति योजना । मांसमधुदक्षिणा-शिषामंगानां लोपेन न यतिर्भोक्तव्यः । किंतु तं विहायान्यो ब्राह्मण इति तु न शंकनीयं । विना मांसेन मधुना विना दक्षिणया-शिषामक्षयं भवति । श्राद्धं यतिषु श्राद्धभोजिषु । ग्रामे वा नगरेऽरण्यं ज्ञानी भिक्षुर्वसेद्यदि । तमंतरेण यः श्राद्धं तदासुरमथो भवेत् । इत्यादि स्मृतिभिर्मांसाद्यभावेऽप्यक्षयत्वस्य यतिपरित्यागे आसुरस्य चोक्तत्वात् ॥७॥ अहिंसाधर्मं स्तौति ॥ नैतादृश इति । मनोवाक्कायजस्य दंडस्य हिंसाया भूतेषु न्यासः परित्यागो य एतादृशः परोधर्मः सद्धर्ममिच्छतां नृणां नास्तीति योजना ॥ ८ ॥ कर्मयज्ञानधिकारिणामपि यज्ञांतरमाह ॥ एक इति । एके यतयोऽकर्ममयान् यज्ञान्मानसहविरादीन् ज्ञानदीपिते आत्मसंयमने मनो-निग्रहरूपेऽग्नौ जुव्हतीति योजना ॥ ९ ॥ मानसयज्ञं स्तोतुं द्रव्ययज्ञं निंदति ॥ द्रव्येति । द्रव्ययज्ञैः पश्वादिद्रव्यकयज्ञैर्भूतानि पशवोऽतज्ज्ञो भगवदर्पणकर्तृत्वाभिमानत्यागकामनाराहित्यभक्त्यादिसाहित्यादिरूपयज्ञांगज्ञानरहितः । हविः शेषमांसादिनाऽसुतृप् स्वप्राणतर्पको माकरुण इत्येकं पदं । करुणारहित एषोऽस्मान् द्रव्यादिति बिभ्यतीति योजना । एतादृशभयहेतुत्वाभावान्मानसो यज्ञः प्रशस्त इति भावः ॥ १० ॥ देशकाले इत्युपसंहरति ॥ तस्मादिति । तस्मात्परपीडादेरकर्तव्यत्वादुत्पन्नेन देशकालादुत्पन्ने-

नानायासप्राप्तेन तुष्टो धर्मविदहरहः प्रतिदिनं नित्यनैमित्तिकाः क्रिया नित्यं कुर्यादिति योजना ॥ ११ ॥ धर्मज्ञस्याधर्मत्यागवत्तच्छा-खात्यागोऽवश्यक इत्याह ॥ विधर्म इति । ॥ १२ ॥ उक्तानां लक्षणमहाधर्मबाध इति धर्मबाधः । धर्मस्य ब्राह्मणैः क्रियमाणस्य धर्मस्य बाधो बाधको विधर्मः स्वगृहे क्रियमाणब्राह्मणभोजनलक्षणतदभीष्टधर्मविरोधी । सर्वब्राह्मणभोजनादि लक्षण इति यावत् । क्षत्रियस्य चोदितः शत्रुदंडनादिर्ब्राह्मणस्य परमधर्मः । पाषंडो वेदाप्रामाण्यवादिभिः क्रियमाणः सप्तघटिकाभ्यंतरभोजनादिः । दंभो वा आंतरभक्तिरहितो भक्तक्रियमाणेन सदृशो वोपधर्मः स एवोपमेति ज्ञेयं । धर्मभिद्वैदिकधर्मविरुद्धः सोत्प्रेक्षयैव धर्मत्वेन कल्पितः । राजशिरोभी रुद्राहुत्यादिरूपो जरासंधकल्पितछलधर्मः ॥ १३ ॥ इच्छया काम्येच्छया पुंभिः कृतः स आभासः । तर्हि कीदृशो धर्मो मोक्षायेत्यत आह ॥ आश्रमे इति । वर्णस्याप्युपलक्षणं । तत्तद्वर्णे आश्रमे उचितः । स्वस्य परमात्मनो भावेन भक्त्या विहितोऽनुष्ठितो धर्मोऽस्य यजमानस्योपशांतये मोक्षाय कल्पते हि प्रमाणप्रसिद्धमेतत् ॥ १४ ॥ अयाचितवृत्तिं स्तौति ॥ धर्मार्थमिति । धर्मार्थं यज्ञाद्यर्थं । यात्रार्थं देहयात्रार्थं । अधनः परकीयधनं नेहेत न याचेत् । स्वतः सिद्धं नीवारादिनाऽयाचित-प्राप्तधनादिना वा । धर्मयात्रादिकं कुर्यादिति भावः । लोके याच्नायामपि न ददाति धनिको धनं कथमयाच्नायां वृत्तिः स्यादि-त्यत आह ॥ अनीहेति । अनीहमानस्यायाचकस्यानीहाऽनीहया तुष्टो भगवान् महाऽहेरजगरस्येव वृत्तिदा वृत्तिप्रदो भवति । एतादृशधर्मसंतुष्टो भगवानदित्सताऽपि धनादिकं दापयतीति भावः ॥ १५ ॥ निरीहस्य भवत्सुखमर्थं याचमानस्य नास्तीत्याह ॥ संतुष्टस्येति । संतुष्टादेर्यत्सुखं तत्कामया लोभेन काम्यस्यार्थस्य लोभेन विद्यमानस्यात्यागेच्छयाऽधिकस्य लाभेच्छया दिशो धावतः कुतो भवेदिति योजना । मनस एव सुखसाधनतया तत्संतोषस्यैवाभावात् । देहायासस्याधिकस्य सत्वाच्चेति भावः ॥ १६ ॥ अर्थेहया धावतः कुतः सुखमित्यनेनानीहया धावतः सुखमित्यायातं । कथमिदं धावनाऽविशेषादित्यत आह ॥ सदेति । उपानद्‌ पदस्तद्युक्तपदः शर्करकंटकादिभ्यो वेधाभावादिग्जातं यथा शिवं । एवं सदा संतुष्टमनसो अर्थलाभव्यथाऽभावेन सर्वा दिशः शिवमया इति योजना ॥ १७ ॥ पुनः संतुष्टत्वमेव विधत्ते ॥ संतुष्ट इति । केन वा दैवोपनीतेनांततो वारिणाऽपि नञ् श्चार्थे । लब्धेनासंतुष्ट इत्यनेनान्वयः । असंतुष्टं निंदति ॥ औपस्थ्येति । औपस्थ्यजैव्हकार्पण्याद्‌गुह्यरसनेंद्रियलौल्याद्गृहपालायते

सारमेयवदाचरति । तर्जनभर्त्सनादिविषयो भवतीति भावः ॥ १८ ॥ असंतुष्टस्य भवदानिष्टमाह ॥ असंतुष्टस्येति । न केवलं तेज आदिकं चलति । किंतु ज्ञानं च वकीर्यते विक्षिप्यते । स्मृत्यजनकं भवतीति यावत् । विद्या वेदादिकं ज्ञानं तज्जन्यमिति भावः ॥ १९ ॥ कामक्रोधापेक्षया लोभस्य दुर्निरासत्वमाह ॥ कामस्येति । कामो विषयभोगेच्छा क्रोधस्तदपकारकः । जनहननादीच्छाविनाभूतो मनोविकारविशेषभूतः । लोभश्च लब्धद्रव्यराज्यादेः कियन्मात्रस्याप्यपरित्यागेच्छाविनाभूतो वृत्तिविशेषः । तत्र जनः क्षुत्तृड्भ्यां विषयिवाचिनो विषये लक्षणाऽन्नपानाभ्यां । उपलक्षणमेतत् । लब्धेन काम्येन कामस्यांतं निरासं याति । एवमेतत्फलस्य क्रोधफलस्यापकारिजनहननादेरुदयात्क्रोधस्यांतं याति । दिशो जित्वा भुवो भुक्त्वा विद्यमानोऽपि जनो लोभस्यांतं न यातीति योजना । बहुद्रव्यराज्यादिमतो किंचित्त्यागेच्छाप्रतिबंधको लोभो नापैतीति भावः ॥ २० ॥ न केवलमसंतुष्टस्य विद्यादिनाशः किं त्वधःपातोऽपीत्याह ॥ पंडिता इति । पंडिता आगमजन्यज्ञानवंतो बहुज्ञा युक्त्यादिसिद्धमतिमन्तः सदसस्पतयः सभापतयः । एतादृशानां मध्येऽप्येकेऽसंतोषान्निमित्तादधः पततीति योजना ॥ २१ ॥ कामादीनां दोषाणां जयोपायमाह कतिपयैः श्लोकैः ॥ असंकल्पादिति । प्रधानस्वर्गस्वाराज्यादीच्छानिर्भरः संकल्पस्तदभावात्तत्तदुपायकामान् तत्काले च भोगकामान् जयेदभिभवेत् । प्रधानेच्छाभावे तदुपायेच्छातत्साध्यभोगेच्छाश्च स्वत एव न प्रादुर्भवंतीति भावः । कामविवर्जनात्क्रोधं जयेदिति । एवं सर्वत्रापि जयेदित्यन्वेति । कामविरोधमूलत्वात्क्रोधस्य तद्विवर्जने स्वत एवानुत्पत्तिः । अर्थेष्वनर्थस्य राजचोरादिनिमित्तकस्येक्षया पर्यालोचनया लोभं जयेदिति । अर्थेष्वनर्थदर्शनेन त्यागेच्छासंभवेन लोभो नश्यति । तत्त्वावमर्शनात् । सर्वभूतानि भगवदाश्रितानि भगवांश्च सर्वभूतेषु रक्षकत्वेन स्थित इत्येवं ज्ञानाद्भयं जयेत् । एवं जानतो भयं नोत्पद्यते । ततो न विजुगुप्सत इति श्रुतेरिति भावः ॥ २२ ॥ आन्वीक्षिक्या ब्रह्मतर्काद्युक्तयुक्तिसाध्यनित्यानित्यत्वादिनिश्चयेन शोकमोहौ स्वस्नेहविषयापगमनिमित्तं शोकं तत्र नित्यत्वादि मोहं च जयेत् । नित्यत्वानित्यत्वनिश्चये न तदागमापगमनिमित्तौ मोहशोकौ भवत इति । महतां विनीतानामुपाश्रयात्सेवनात् । दंभामल्पस्यापि स्वस्य महत्त्वप्रदर्शनं जयेत् । सत्यपि महत्त्वे तन्न प्रदर्शयंत्येते । ममत्वविद्यमानमहत्त्वप्रदर्शनं जुगुप्सितमिति बुद्धिर्भवतीति भावः । मौनेन वागादींद्रियनियमेन योगांतरायान् इंद्रियाणां

बहिर्व्यापारलक्षणोपासाविघ्नान् । कामाद्यनीहया स्वर्गस्वाराज्याद्यनीहया हिंसां पशुहिंसां जयेदित्यनुवृत्त्तेन योजना । कामाद्यनीहायां हिंसा दोषाय न भवतीति भावः । तस्मान्नेष्टियाजुकः स्यादिति निषेधात् ॥ २३ ॥ कृपया नृसिंहाद्युपासनासंपादितदयया जलवाय्वादिशरीरकजलग्रहपिशाचादिजं दुःखं । समाधिना भगवध्यानेन । दैवं नवग्रहादिप्रयुक्तं । योगवीर्येण श्वासजयेनात्मजं देहजं हिक्कादिकं । सत्त्वनिषेवया सात्त्विकगोघृतादिद्रव्यनिषेवया निद्रां जह्यादिति योजना । नृसिंहोपासनया पिशाचादेर्भगवदंघ्रिध्यानेन ग्रहचारविपत्तेः श्वासनिरोधेन दैहिकरोगादेः सात्त्विकपदार्थसेवनया तामसनिद्रादेस्त्यागस्य प्रसिद्धत्वादिति भावः । सत्त्वेन सत्त्वगुणवृध्द्या रजस्तमस्युपशमेन भगवन्निष्ठया सूक्ष्मसत्त्वासादितया सत्त्वं स्थूलं जह्यात् । सर्वमपि जेतव्यं । हरिं गुरुभक्त्यादिना जय्यं भवतीत्याह ॥ एतदिति ॥ २४ ॥ हरिगुरुभक्त्यभावे श्रवणादेर्वैयर्थ्यमाह ॥ यस्येति । भगवतीति विषयसप्तमी । यस्य श्रुतं श्रवणादिकं साक्षाद्भगवद्विषयकज्ञानलक्षणदीपप्रदे गुरौ चातिसंधिः संधानं हरिगुरुमाहात्म्यानुसंधानमतिक्रांतं । तस्य सर्वश्रवणादिकं कुंजरशौचवद्व्यर्थमिति योजना । कुंजरस्नानं यथा पुनर्धूल्युद्वहनकारि तथा श्रवणादिकं संसारावहमिति भावः ॥ २५ ॥ भक्तिहीनेन श्रुता वेदविधयोऽपि श्रमावहा इत्याह ॥ षडिति । सर्वा निगमचोदनाश्चोदितानुष्ठानेन मनोनैर्मल्यद्वारा षण्णामिंद्रियाणां वर्गस्य संयमनामितरपरित्यागेन भगवदेकनिष्ठत्वमेकांत उद्देश्यो यासां तास्तदंतास्तस्य भगवतोऽतो निर्णयो याभिः । तत्प्रयोजका इति यावत् । एतादृशा अपि यदि योगं मनोयोगं भक्तियोगं च नावहेयुस्तदा केवलं श्रमावहा इति योजना ॥ २७ ॥ इष्टापूर्तानुष्ठानेन सफला निगमचोदनाः कथं विफला इत्यत आह ॥ यथेति । वार्तादयः क्रयविक्रियादिविषयाः पुंसो यथा विद्यापर्यालोचना वणिजः केवलं स्वार्थमभीष्टवृद्धिं न विभ्राति । प्रत्युत वृद्धीच्छया दत्ते पदार्थे मूल्यस्यैवादानेऽनर्थाय बभूवुस्तथाऽसतो भगवद्भक्तिहीनस्य पूर्तमिष्टं स्वार्थं स्वर्गादिकं न बिभर्ति । प्रत्युतासतो भगवद्द्वेषवतोऽनर्थाय तमसे भवेच्चेति योजना ॥ २८ ॥ मनोजयस्यावश्यकत्वमुक्तं । तदिच्छोस्तदुपाययोगं सांगं विधत्ते श्लोकचतुष्टयेन ॥ य इत्यादिना । चित्तविजयोऽनायासेन भगवद्विषयीकरणं तदिच्छुः स्यात् । तर्हि वक्ष्यमाणांगविशिष्ट आसीत् । प्राणापानौ सन्निरुध्यात् । मनःसन्निरुध्यात् । इति योजना । निःसंगो दुर्विषयसंगरहितः । संगात्संजायते काम इत्यनिष्ठोक्तेः । निष्परिग्रहोऽसत्यनिग्रहरहितः । असतां च प्रतिग्रहं पुनंत्विति श्रुतेः ।

एको जनताप्रवेशरहितः । तस्मान्न जनतामियादिति वचनात् । विविक्तशरणो विविक्तदेशीभिक्षुः । परमहंसो भैक्ष्यमिताशनः । भैक्ष्ये भिक्षालब्धेऽपि मिताशनः । लघ्वाशी विविक्तदेशी लघ्वासीत्युक्तेः ॥ २९ ॥ एवं यमनियमादिकमुक्त्वाऽऽसनमुच्यते । ऋज्वंगः समं कायशिरोग्रीवः । ॐ इति । अनेन भुवं संमृज्येत्यर्थः । आसनप्रकारश्चासीनः संभवादिति सूत्रे समं कायशिरोग्रीवमित्यादिना भाष्ये विवृतः ॥ ३० ॥ पूरकेति । रेचकपूरककुंभकानां क्रमेणानुष्ठानं ज्ञेयं । अनेन प्राणायाम उक्तः ॥ ३१ ॥ ततस्ततस्तस्मादुपाहृत्य प्रत्याहृत्य । अनेन प्रत्याहार उक्तः । संनिरुध्याद्भगवति मनः क्रमेण धारणध्यानसमाधियुक्तं कुर्यात् ॥३२॥ एवमनुष्ठाने चित्तविजयाख्यं फलं सिद्धतीत्याह श्लोकद्वयेन । एवमभ्यसतो मनः साक्ष्युपष्टब्धं चित्तं प्राकृतं मनः । अनिंधनवन्हिवन्निर्वाणं विषयोपद्रवशांतिं परं ब्रह्म वा यातीति योजना ॥ ३३ ॥ प्रशांतोऽखिलवृत्तिविषयसंचलनव्यापारवर्जितं यच्चित्तं तद्ब्रह्मसुखस्पृष्टं ब्रह्मसाक्षात्काराभिव्यक्तसुखयुक्तं ब्रह्मणःसकाशात्कर्हिचित्कदाचिदन्यत्र नो तिष्ठेन्न गच्छेदिति योजना ॥ ३४ परिव्राजकं पुनस्त्रिवर्गसाधने प्रवृत्तं निंदति ॥ य इति । तांस्त्रिवर्गावपनान् गृहान् ॥ ३५ ॥ देहात्मविवेकेन भाव्यमित्यभिप्रेत्य देहं श्लाघयतो निंदति ॥ यस्येति । षष्ठी प्रथमार्थे । यो देहो वस्तुतो नात्मा कृमिविड्भस्मवद्भवति । स्वार्थे वातिः । कृम्यादिरूपःस्मृतः । तमेव देहं स्वात्मसात्कृत्य । वत्यर्थे सातिः । स्वात्मानमिव कृत्वा ये श्लाघयंति तेऽसत्तमा असुरा इत्यर्थः ॥ ३६ ॥ चतुराश्रमिणो नियमत्यागे उपेक्षेत नाद्रियेतेत्याह ॥ गृहस्थस्येति श्लोकद्वयेन । क्रियात्याग औपासनाग्निहोत्रत्यागः । व्रतत्यागोऽग्निकार्यवेदाध्ययनादित्यागः । तपस्विनो वानप्रस्थस्येंद्रियाणां लौल्यं विषयलोलुपत्वं तस्यभावः ॥ ३७ ॥ एते आश्रमापसदा आश्रमाभासा आश्रमान्विडंबयंत्यनुकुर्वंतीत्याश्रमविडंबनाः । वेषधारिण इति यावत् । भगवदिच्छया विमूढांस्तांश्चतुराश्रमापसदान्कृपया वृथा नश्यंतीति शोकेनावैक्षत् ॥ ३८ ॥ तमेव स्वात्मसात्कृत्वेति देहपोषकाणामसत्तमत्वमुक्तं । देहातिरिक्तात्मज्ञानस्य परमात्मज्ञानस्य च सुतरामभावात् । ज्ञानसत्वे तु कथं तं पुष्णीयादित्याह ॥ आत्मानमिति । आत्मानं देहातिरिक्तं जीवं । परमात्मानं चैवमुक्तध्यानाद्युपायेन गम्यं विजानीयाच्चेत् ज्ञानधूताशयः सम्यग्ज्ञानेन निगृहीतांतःकरणः किं प्रयोजनमन्विच्छन्नुद्दिशन् कस्य वा हेतोः केन वा निमित्तेन निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनमिति षष्ठी । विषयलंपटो देहं पुष्णाति पुष्णीयात्त्विति योजना । अविवे-

किंवद्विवेकी देहं न पुष्णातीति भावः ॥ ३९ ॥ तर्हि शरीरेंद्रियादीनामुपयोगो नास्ति किमित्यतः सदसतां मोक्षतमःसंपादनप्रकारं रथसाम्येनाह कतिपयैः श्लोकैः ॥ आहुरित्यादिभिः । रथिकसामग्रीं दर्शयति । इंद्रियश्रेष्ठं मनः । अभीषुं प्रग्रहं । मात्रा विषया वर्त्मानि । धिषणां बुद्धिं । सूतं सारथिं । आहुरित्यन्वयः । ईशस्य धाम । सत्त्वमंतःकरणविशेषं गुणविशेषं वा । बृहद्बंधुरं मनीडं ॥ ४० ॥ स्थानीयमधर्मधर्मौ चक्रे । मणीवादित्वात्प्रगृह्यत्वं । अभिमन्यत इत्यभिमानं । जीवं रथिनं । तस्य जीवस्य प्रणवं धनुः । जीवमेव शरं । लक्ष्यं प्राप्ते निर्मितात् । परं परब्रह्मैव पठंतीति योजना ॥ ४१ ॥ रथिनः शत्रूनाह ॥ राग इत्यादिना । मानोऽपूज्ये पूज्य बुद्धिस्तु मानः सद्भिरुदाहृत इत्यभिधानं । अभिमानोऽहंकारः ॥४२॥ रजोरक्तिर्विद्यमानेषु । रागस्त्वविद्यमानेच्छा । आदि पदेन दंभादयः । रागादीनां मध्ये कचित्केचित् रजस्तमप्रकृतयः केचिच्च सत्त्वप्रकृतयः सत्त्वरजस्तम इत्यारभ्य निबध्नंतीति सत्त्वस्यापि बंधकत्वोक्तेः । सूक्ष्मसत्त्वस्यैव मोक्षोपयोगित्वात् ॥ ४३ ॥ उक्तरीत्या नृदेहादेर्महोपयोगसत्त्वाद्यदा नृदेहोऽस्ति यदा द्विजत्वं यथा च पंक्तीकरणं तदेवं नैजं पदमीक्षितव्यमित्युक्तेर्नृदेहकाल एव मोक्षसाधनं संपाद्य संसारं जह्यादित्याह ॥ यावदिति । आत्मवशेन स्वेच्छयोपक्लृप्तं साधनसमर्थं नृकायाख्यं रथं धत्ते तावत्तदैव गरिष्ठचरणानामुत्तमगुरूणामर्चनयोपासात्तिपूर्वकश्रवणादिलब्धयोपासनया निशातं तीक्ष्णीकृतं ज्ञानासिना दधदच्युतबलो भगवद्बलोऽप्रच्युतमननलक्षणबलो निरस्तरागादिश्च स्वाराज्येन निश्चिंतन मोक्षेण तुष्ट इदं संसारजातं जह्यादिति योजना ॥ ४४ ॥ शरीरं रथमिंद्रियाणीत्युक्तदिशा यावन्नृकायमित्युक्तरीत्या वा । धनुर्ग्रहणेन वा । शत्रुच्छेदाभावेऽसदिंद्रियादयस्तमसि संसारकूपे वा पातयंतीत्याह ॥ नोचेदिति । प्रमत्तं प्रमादशालिनं राथिनमसदिंद्रियवाजिसूता उत्पथं नीत्वा विषयदस्युषु निक्षिपंति । तमोयोग्यं तमोंऽधे नित्यसंसारिणं संसारकूपे ॥ ४५ ॥ संसारमुक्तिकारणकर्माणि विवेचयति ॥ प्रवृत्तमिति । तयोः फलमाह ॥ आवर्तत इति ॥ ४६ ॥ इष्टापूर्तिभेदेन प्रवृत्तं द्विविधमित्याह ॥ हिंस्रमिति । द्रव्यमयमजाश्वादिद्रव्यसाध्यं । हिंस्रं हिंसेति कर्तव्यताकमग्निहोत्रादि दर्शः पूर्णमासश्चातुर्मास्यः पशुर्निरूढपशुर्हुतं वैश्वदेवं प्रहुतं बलिहरणं । एतदिष्टं । इदमेव काम्यं चेदिष्टाख्यं प्रवृत्तमुच्यते । तच्चाशांतिदं मोक्षसाधनं न भवति । आजीव्यं लोकोपकारककुट्टिमादि । उष्मविपाको द्रव्यं । ऊष्मणा विपच्यमानं ब्राह्मणेभ्यो दीयमानमन्नादि च । पूर्तमेतदपि काम्यं चेत्प्रवृत्तं । एव-

मिष्टापूर्ताख्यं प्रवृत्तं संसारावृत्तिदं । प्रवृत्तकर्मानुष्ठातो मार्गमाह ॥ धूम इति । अपक्षयः कृष्णपक्षो धूमरात्रिकृष्णपक्षदर्शदक्षिणायनाभिमानिनां सोमस्य लोकाः पितृयानं । अत्राभ्रमेघादिकमपि ग्राह्यं । ओपधिवीरुधान्नेरतश्च पुनर्भव ओपधिवीरुत्सु वा प्रविशान्नं रेतो द्वारा जायत इति भावः ॥ ४९ ॥ एकैकस्य धूमादेः स्थानमानुपूर्व्याद्गत्वा पुनः पुनः प्राप्येह मनुष्यलोके जायते । आनुपूर्व्यं च न गतिक्रमानुसारेण गताविति मंतव्यं । यथेतमनेवं चेति सूत्राद्धूमादभ्रमभ्रादाकाशमिति गतिश्रुतेः । धूमो भूत्वाऽभ्रं भवतीत्यागतिश्रुतेश्च ॥ ५१ ॥ आवर्तते प्रवर्ततेति पुनः पुनरावृत्तिरुक्ता । तस्याः पुनः पुनर्गतिसापेक्षत्वाद्गतिसाधनसंस्कारानाह ॥ निषेकेति । निषेको गर्भाधानं । स्मशानोंऽत्यक्रिया । एवं षोडशसंस्कारैर्युतो द्विजास्त्रिवर्णः प्रवृत्तं कुरुते । तेन पुनर्गच्छति पुनरागच्छतीत्यपर्यवसानं प्रवृत्तकारिण इत्यर्थः । अतएव तद्य इह रमणीयचरणा अभ्यासो ह यते रमणीयां योनिमापद्यंत इति । पुनः कर्म कुरुते पुनरागच्छतीति च श्रुतिः । निवृत्तेनाश्नुतेऽमृतमित्युक्तं । तत्रार्चिरादिमार्गस्मृतिसहकारिणीति तन्मार्गं वक्तुं तत्पूर्वभाविलयचिंतनप्रकारमाह ॥ इंद्रियेष्विति । क्रिया यज्ञान् क्रियात्मकयज्ञाभिमानिनो देवान् ज्ञानदीपेष्विंद्रियेषु ज्ञानं दीपयंतीति ज्ञानकरणेंद्रियाभिमानिषु जुव्हति तद्वशत्वेन स्मरंति ॥ ५२ ॥ एवमिंद्रियाणि तदभिमानो मनसि नदभिमानिनि सुरेंद्रे वैकारिकं मनः । वैकारिकत्वोक्त्या तैजसेंद्रियेभ्यो वैलक्षण्यं सूचितं । मनस्तदभिमानिनं सुरेंद्रं वाचि । वेदाभिमानिन्यां पार्वत्यां । तां वर्णसमाम्नाये अकारोकारमकारलक्षणप्रणवायवाभिमानिनि रुद्रे । ॐकारे स्वरे एकदा संभूतोंकाराभिमानि शेषे । अकारोकारमकार इति तानेकधा समभवत्तदेतत्तदोमिति श्रुतेः । न्यसेद्वशगत्वेन चिंतयेत् । अनेन जुव्हाति वशगत्वेन चिंतयंति ज्ञानिनोऽत उत्क्रामिष्यमाणोऽपि न्यसेत् । वशगत्वेन चिंतयेदिति सर्वत्र पदद्वयमन्वेतीति सूचयति ॥ ५३ ॥ ॐकारं तदभिमानिनं शेषं बिंदु । सप्तम्याः सुपां सुलुगिति लुक् । बिंदौ तदभिमानिना तदभिमानिन्याः सरस्वत्यां । तां नादे मूलस्थानादभिमानिन्यां सरस्वत्यामेव । अत्र बिंदु शब्दे विभक्तिलोपो मध्ये तमध्याहारः सरस्वत्या एवोभयमानित्वं तत्रापि नादाभिमानिन्या जनकत्वमित्यादिकं वक्ष्यमाणतात्पर्यतो गम्यते । तं च । नाद शब्दस्य पुल्लिंगत्वात्तमिति निर्देशः । नादाभिमानिनीं सरस्वतीं प्राणे ब्रह्मणि । अमुं ब्रह्माणं महति परमात्मनि । प्राण शब्देन मुख्यवायोर्ग्रहणे तु बिंदुनादोभयमानिनीरूपयोः । महतीत्यस्यावृत्तिः । आद्यस्य लक्ष्म्यामिति ।

द्वितीयस्य परब्रह्मणीति । अथोऽनुसंधेयः । तदेतत्सर्वमभिप्रेत्य तात्पर्यं ॥ यज्ञाभिमानिन इत्यादि । वायौ ब्रह्मणि मुख्यप्राणस्य ग्रहणपक्षेत्वाह प्रकृताविति । प्रकृतौ लक्ष्म्यां जयाख्यायां तामेव तद्वारेत्यर्थः । पुरुषोत्तमे संकर्षणाख्य इत्यर्थः । अर्चिरादिमार्गमाह ॥ अग्निरिति । अग्निर्ज्योतिरिरिति द्वेधाऽर्चिर्लोके संप्रतिष्ठिताऽग्निःक्रमेण प्राप्यस्ततो वायुरातिवाहिकस्ततोऽभिजित्ततो दिवा ततः शुक्लस्ततो राका तत उत्तरस्ततः संवत्सरतद्विरुणप्रजायाः क्रमेण ग्राह्याः । ततः सूर्यस्ततोऽनंतरं सोमवैश्वानरौ ततः स्वाराण्णामेंद्रः। अत्र तात्पर्यं ॥ स्वराडिंद्र इति ॥ ५३ ॥ अथेंद्रानंतरं ध्रुवः । अनंतरं विश्वतैजसप्राज्ञाः । भगवदन्ये ग्राह्याः । ते च देवविशेषाः संप्रदायतो ज्ञेयाः । अनंतरमनिरुद्धप्रद्युम्नसंकर्षणाश्च भगवदन्ये ज्ञेयाः । एतच्चैतन्नाम्नैव प्रसिद्धाः । एते षडपि द्युनाम्न्या भारत्याः पुत्राः । ततो द्युलोकाभिमानिनी भारती । ततो मुख्यवायुः । ततो वैकुंठः परमात्मा । ततो ब्रह्मणा सह बहिर्गमनानंतरं संवावरणातिक्रमे विश्वादिरूपप्राप्तिः । विश्वोऽथ तैजस इत्यत्रोक्ता ज्ञेया । ततोऽनिरुद्धप्राप्तिरपि । ततोऽनिरुद्धं देवेशं प्रद्युम्नं च ततः परमित्यादि मानांतरादवगंतव्या । ततः समन्वयः सर्वेषामवताराणां सम्यगव्ययाधारः । आततत्वादात्मा नारायणः । अत्र ब्रह्मांडांतो विश्वादि त्रयानिरुद्धादि त्रयवत्तुरीयो वासुदेवश्च भगवदन्यो न ज्ञेयः । तन्नामकदेवस्याप्रसिद्धेः । अत्रोत्क्रांतिस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव वेत्यादि भाष्योदाहृतं प्रमाणं ज्ञेयं । अत्र तात्पर्यं ॥ विश्वाद्या इत्यादि । विश्वाद्या अनिरुद्धाधार इत्यत्र त्रय एव ग्राह्याः । तुरीयवासुदेवयोर्विष्णोरन्यत्व निषेधेत्स्यमानत्वात् । दिवस्पुत्रा द्युनाम्न्या भारत्याः पुत्राः द्युसमीपगाः । भारत्यभिमन्यमानद्युलोकसमीपगाः । विश्वादिरूपं हरिमित्यन्वयः । अनिरुद्धादिरूपमित्यपि ग्राह्यं । नापरो विष्णोरन्यो नेति । इममुक्तमेव मार्गं देवयानं प्राहुरानुपूर्वशः । क्रमेण पूर्वपूर्वलोकापेक्षयोत्तरोत्तरलोके सुखादिभिरधिको भूत्वाऽधिक इति सुखादिभिरिति च पदद्वयमध्याहार्यमित्यत्र तात्पर्यं ॥ अधिक इत्यादि ॥ ५४ ॥ आत्मयाजी जीवपरमात्मपूजकः । उपशांतात्मा सर्वोपरितनसुखातिशयस्वरूप आत्मस्थः परमात्मसमीपे वैकुंठादिलोके स्थितो न निवर्तत इति योजना । उक्तमार्गज्ञानस्य फलमाह ॥ य एते इति । एते देवेन भगवता निर्मिते पितृदेवानामयने याते ये शास्त्रेण चक्षुषा वेद । सो जनस्थोऽपि मर्त्यलोकस्थोऽपि न मुह्यति नीचां गतिं नाप्नोतीति योजना । अत्र तात्पर्यं ॥ भक्तिमानित्यादि । भक्तिमानिति विशेषणान्नातिप्रसंगः ॥ ५५ ॥

सर्वस्यापि भगवदधीनत्वमुपदिशति ।। आदाविति । सृष्टौ प्रलये च जनानाशं जायमानं नश्यच्च । जनी प्रादुर्भाव इत्यस्मात्कर्त र्यकार प्रत्ययः । नश्यते च । कर्तरि घञ् द्वंद्वैकवद्भावः । ब्रह्मांडस्य बहिरंतर्विद्यमानं परावरमुच्चावचं ज्ञानं ज्ञेयं वचो वाच्यं तमोऽज्ञानमंधकारो वा । तमु ग्लानेरवाप्रेपि अंतर्णीत ण्यर्थादसत् । अत एव तात्पर्ये ।। ग्लापकत्वात्तम इति । ज्योतिः प्रकाशः । तदेतत्सर्वं स्वयं भगवान् सर्वस्वामीत्यर्थः । यदधीना यस्य सत्तेत्यादेः ।। ५६ ।। ननु सत्यस्याधीनत्वं न संभवति । प्रपंचस्य त्वाभासत्वाद्दृश्यत्वान्मिथ्यात्वेन कथं तदधीनत्वमित्यत आह ।। अबाधित इति । प्रपंच आभासोऽपि दृश्यमानोऽपि यथावस्तु ब्रह्म । तथैव सत्यत्वेन स्मृतः । अदृश्यत्वहेतोः सर्वदोषदुष्टत्वात् । मिथ्यात्वे बाधस्यैव प्रयोजकत्वात् । अयं चाबाधितः । असंभावितोत्पत्त्यादिमत्वात्कथं ब्रह्मवत्सत्यं स्यादित्यत उक्तं ।। दुर्घटत्वादिति । भगवतो दुर्घटघटनाशक्तिमत्वाद्ब्रह्मवदर्थेनेति भावप्रधानो निर्देशः अर्थत्वेनार्थक्रियाकारित्वेन विविधतया कल्पितमुत्पादितमैंद्रियकमिति प्रत्यक्षादि प्रमाणप्रसिद्धत्वं सूचयति । अतः सत्यमिति योजना । न हि भगवान्सत्यसर्जनासमर्थः । येन मायया मोहयेदिति भावः । अत्र तात्पर्ये ।। दुर्घटत्वादित्यादि । इतरैर्दुर्घटत्वात् । स्वस्य दुर्घटघटनाशक्तिमत्वाद्वा । परमेश्वरेणैव कल्पितमित्यर्थः ।। ५७ ।। दुर्घटघटनाशक्त्या जगदुत्पादितमित्युक्तं तदनंगीकारे केनापि प्रकारेणोत्पत्तिर्न संभवतीत्याह ।। क्षित्यादीनामिति । इह कार्यप्रपंचे क्षित्यादीनामर्थानां कार्याणां कतमा छाया । कः प्रकारः । ना । ईश्वरशक्त्यनंगीकारेऽपि कोऽपि प्रकारो न संभवति । तथा श्रुतिः । किं क्षितिरपां संघातः । आपस्तेजसामित्येवं क्षित्यादिः । मापराश्यादिवत्संघातलक्षणं कार्यं । यद्वा । चूतफलादेः पीततादिवच्छ्वेतजलस्य कालुष्यलक्षणं कार्यं । अथवा । समुदायात्पृथग्भूतैकदेशलक्षणं कार्यं प्रस्थात्पृथग्भूतमानवत् । यद्वा । सहावस्थितक्षीरनीरादि वस्तुद्वयवत्कार्यं । आद्ये जलबुद्बुदैर्द्रवत्वस्य पर्वतादिमज्जनस्यापत्तिरित्यादि दोषः । द्वितीयेऽप्येतद्दोषतादवस्थ्यं । तृतीयेऽप्येत एव दोषाः । चतुर्थे जलातिरिक्तस्यार्थस्याभावो भावे वा परस्परकार्यकारणभावानुपपत्तिश्चेति दूषणमभिप्रेत्यैतान् प्रतिक्षिपति ।। न संघात इत्यादिना । विकारोऽपीत्यपि शब्दात् नञनुवर्तते । दुर्घटघटनाशक्त्यनंगीकारे तु गंधतन्मात्रायुक्तं पृथिवीभूतसूक्ष्मान्युपादानीकृत्याऽभूतैकदेशैरुपचित्य काठिण्यं संपाद्य पृथिवीलक्षणभूतं परिणामयतीत्यंगीकारे न कोऽपि दोषः । अत्र तात्पर्ये ।। छाया रीतिरित्यादि ।

क्षित्यादीनां पदार्थानां कतमोऽपि प्रकारो न घटते । परमेश्वरकल्पितत्वात्कार्यमित्येव वक्तुं युक्तं । न हि वह्न्यपां संघातमात्रं पृथिवी । न च विकारमात्रं । न हि कालुष्यादिविकारमात्रेण पृथिवी भवति । न चाद्भ्यः पृथक् स्थितिः । न च वस्तुद्वयवत्सहावस्थानमात्रामिति । प्रकारस्थायेति रीतिारिति च भाव इति चाभिधीयत इत्यन्वयः । परमेश्वरे कल्पितत्वादेवेत्यन्वयः । परमेश्वरपदं च दुर्घटघटनाशक्तिमत्परं । न हीत्यादिपक्षानिषेधे उक्तदोषा हेतवो द्रष्टव्याः ॥५८॥ ननु क्षित्यादेः संघातादिप्रकारः कोऽपि मा भूत् । तथाऽप्युक्तरीत्या तन्मात्रलक्षणावयवैः क्षित्यादिलक्षणावयविनोऽभ्भूतोपचयेन कार्यत्वं युक्तमेव । अत्र नेश्वरदुर्घटघटनाशक्तेरपेक्षेति चेन्न । द्रवद्रव्योपचितस्य काठिन्याद्ययोगेनेश्वरशक्तेरवश्योपक्षणीयत्वात् । किंचावयवावयविभावेऽपि ईश्वरशक्त्यपेक्षेति वक्तुं अवयवावयविभावं तावन्निश्चिनोति ॥ धातव इति । धातवः पृथिव्यादि भूतानि तन्मात्रलक्षणावयवैर्विना न स्युः । अवयवित्वादेव । न ह्यवयवं विनाऽवयव्यस्ति । अवयविनि पटेऽसत्यासन्नावयवा व्यातिषंगविशेषाविशिष्टास्तंतव इव सिद्धे त्ववयवावयविभावेऽवयाविनि स्थूलत्वादिविधिः । अवयवेषु तन्निषेधः । एवमवयवेषु सूक्ष्मत्वाविधिः । अवयाविनि तन्निषेधः । एवं विधितन्निषेधलक्षणो विशेषः । ईश्वरशक्तिं विना नोपपद्यते । तयोरभिन्नत्वात् । न च भेदेनोपपत्तिः । भेदाभेदसमावेशस्यापीश्वरशक्तिं विनाऽयोगात् । न च विशेषेणोपपत्तिः तस्यापीश्वरशक्त्या विहितत्वात् । एवं चाघटितघटकशक्तिर्भगवान्विशेषं विरोधमाशंकीकृत्य क्वचिच्छेदनकार्यविशेषं घटयति । सर्वथाऽपीश्वरशक्तिरंगीकार्या । तदेतदभिप्रेत्योक्तं तात्पर्ये ॥ एवमित्यादि । एवं रीत्येश्वरे दुर्घटघटनाशक्तिरंगीकार्येति ॥ ५९ ॥ नन्ववयवावयविनोरभेदे सति कार्यविशेषनिर्वाहायेश्वरशक्त्यपेक्षा । अभेद एव नास्ति । किंतु सादृश्यमात्रं । तेनैव परस्परभ्रम इत्यत आह ॥ स्यादिति । वस्तुनो विकल्पेऽवयविनोऽवयवस्य च भेदे सादृश्येनाभेदभ्रमः स्यात् । स एव नास्ति । तंतुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गत इत्युक्तेः । अस्त्ववयवावयव्यभेदस्तथाऽपि कः कार्यविशेषः । कुत्र वेश्वरशक्त्या निर्वाह्यो दृष्ट इत्यत आह ॥ जाग्रदिति । यथा स्वप्ने स्वप्नविशेषे । जाग्रत्स्वप्नौ जाग्रद्ग्राह्यशब्दादिः स्वप्नो वासनामयगजादिश्चेत्युभावीश्वराघटितघटकशक्त्या दृश्येते । तथा विधिनिषेधताऽवयवावयविनोः स्थूलसूक्ष्मत्वविधिनिषेधलक्षणो विशेष उक्तशक्त्या निर्वाह्य इति । अत एव तात्पर्ये ॥ न चेत्यादि । न च सादृश्यमित्यतः परं तेन चाभेदभ्रमोऽवयवावयविनोरिति वाक्यशेषः ।

तत्साहस्यं विशेषतः । ईश्वरशक्तिविशेषतः । विशेष उक्तविधिनिषेधलक्षणः । ईश्वरकल्पनया सामर्थ्येन विशेष ईश्वरशक्तिं विनाऽन्येनात्यंतभेदादिना न निर्वाह्यः । ईशेच्छयेशशक्त्या । नियतोऽप्यन्वयाविन्येव कश्चिदवयवे एव कश्चिदिति ॥ ६० ॥ एवं भगवतो माहात्म्यमुक्त्वा समर्पणं कार्यमित्याशयेनाह ॥ भावेति । मुनिः स्वानुभूत्याऽऽत्मनः परमात्मनो भावाद्वैतादिकं वर्तयन् पुनः पुनर्विषयीकुर्वन् । त्रीन्स्वप्नान् स्वप्नाद्यवस्थात्रयं । संसारमिति यावत् । धुनुते जहातीति योजना ॥ ६१ ॥ भावाद्वैतादिस्वरूपं विविच्य दर्शयति ॥ कार्येत्यादिना । पटतंतुवत्तद्वतरूपभगवद्रूपद्वयवत् । कार्यकारणवस्तुषु । प्रकृतिमहदहंकारादिषु विद्यमानभगवद्रूपैक्यस्य दर्शनं यत् । अविकल्पस्य भेदस्यावस्तुत्वात् असत्यत्वात्तदैक्यदर्शनं । भावाद्वैतमुच्यत इति योजना ॥ ६२ ॥ मनोवाक्तनुभिः क्रियमाणेत्यध्याहृतं । सर्वकर्मेत्यनेन संबध्यते । यत्समर्पणं तत्क्रियाद्वैतमुच्यत इति योजना ॥ ६३ ॥ स्वार्थकामयोस्तद्वतयोर्भगवद्रूपयोरैक्यं तद्द्रव्याद्वैतमुच्यत इति योजना । आत्मजायेत्यादिना स्वार्थकामयोर्विवरणं मंतव्यं ॥६४॥ अनापदि दैवलब्धेनानिषिद्धेन साधनेनार्चनं कार्यमित्याह ॥ यदिति । यत्तुलस्यादिकं यस्याधिकारिणो येन शिष्यादिना यत्र देशे यतो वनादितो लब्धमनिषिद्धं । स तेन कर्माणि भगवदर्चनादीनीहेत्कर्तुमिच्छेत् । नान्यैरिति योजना ॥ ६५ ॥ वेदोक्तैरेतैरुक्तैर्गृहस्थधर्मैः । अन्यैश्च स्वकर्मभिर्गृहे वर्तमानोऽपि । अस्य गतिं भगवतो गतिं तद्भक्तिभाङ्नरः । यायादिति योजना ॥ ६६ ॥ गृहस्थाश्रमधर्माचरणे धर्मराजमेवोदाहरति ॥ यथेति । हे प्रभो । यत्पादपंकेरुहसेवया यूयं । हे नृपदेव । दुस्त्यजादापद्गणादुत्तारिताः । ननु । यथा भवान्निर्जितदिग्गजः । दिग्गज शब्देन दिगंतो लक्ष्यते । निर्जितदिगंतः सन् । क्रतुं राजसूयमहार्षीदकार्षीत् । अस्य गतिं यायादिति पूर्वेण योजना ॥ ६७ ॥ स्वस्य ब्रह्मपुत्रतां वक्तुं स्ववृत्तांतमाह ॥ अहमिति । नाम्नोपबर्हणः । अतीते महाकल्पे । अत्र तात्पर्यं ॥ अतीते इत्यादि ॥ ६८ ॥ पेशलमवयवमार्दवं सौगंध्यं तैः प्रियदर्शनं यस्य सः ॥ ६९ ॥ विश्वसृग्भिर्दक्षादिभिः प्रजेश्वरैः ॥ ७० ॥ तद्विदित्वाऽहमगायं । तच्च गानं मदादिपूर्वकमिति ज्ञेयं । तच्च हेलनं ज्ञात्वांऽजसा शेपुरिति योजना ॥ ७१ ॥ शापप्रकारमाह ॥ याहीति । तत्रापि शूद्रजन्मन्यपि ॥ ७२ ॥ अनुषंगेन भक्त्या । तीव्रस्नेहोऽनुषंगोऽथ नैरंतर्यानुवेशनमित्यभिधानात् ॥ ७३ ॥ उपवर्णितगृहस्थाश्रमधर्ममुपसंहरति ॥ धर्मइति ॥ यूयमिति । येषां गृहान् मुनयोऽभियांति । तथा

साक्षाद्गूढं मनुष्यलिंगं परं ब्रह्म आवसत इति । तस्मादूयं नृलोके भूरिभागा बत ॥ ७४ ॥ भगवंतं कृष्णमेव साक्षात्परब्रह्मत्वेनोपदिश्य तत्संबंधबाहुविध्यात्पार्थान् स्तौति ॥ स वाऽयमिति । कैवल्येन जडामिश्रतया निर्वाणसुखानुभूतिः स्वरूपसुखानुभवो यस्य स तथा । एतादृशः सोऽयं महद्भिमृग्यं परं ब्रह्म । एतादृशः कृष्णो वः प्रियसुहृन्मातुलेय आत्मा स्वामी । अंतर्यामी । अर्हणीयो विविधकृताज्ञाकारी गुरुश्चेति योजना ॥ ७५ ॥ स्वस्य भगवत्प्रीतिं प्रार्थयते नारदः ॥ नेति । यस्य रूपं वस्तुतया साकल्येन भवादिभिर्धिया मनसोपवर्णितं । स एष सात्वतां पतिः । मौनेन मननेन भक्त्योपशमेन विषयालंबुध्या पूजितः प्रसीदतामिति योजना ॥ ७६ ॥ अनंतरं वृत्तमाह शुकः ॥ इतीति । सुप्रीतो भक्त्युद्रेकयुक्तः प्रेमविव्हलः प्रेम्णाविगतविषयस्मरणः ॥७७॥ उपामंत्र्य स्वाश्रमं गच्छामीत्युक्त्वा ॥७८॥ पूर्वं पृष्टा दाक्षायणीवंशा उपवर्णिता इति सूचयति शुकः ॥ इतीति । यत्र वंशेषु देवासुरमनुष्याद्या लोका जनाः । एषां वंशाश्चराचराश्च त इमे वंशा इत्युक्ताः प्रकारेण पृथक् प्रकीर्तिताः । इति योजना ॥ ७९ ॥

इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ७-१६ ॥ हिरण्यकशिपोर्वक्षोविदारिनरकेसरी ॥ शरण्यः सर्वभक्तानां मुदामार्भिं तनोति मे ॥ १ ॥ नभः कृष्णभवाष्टम्यां दृष्ट्वा मंदनंदिनीं ॥ स्मयन्नानंदसांद्रोऽयं नंदयेन्नंदनंदनः ॥ २ ॥ व्यासप्रोक्तं भागवतं पूर्णप्रज्ञप्रकाशितं ॥ अत्र टीका मदीयाऽपि तुष्ट्यै दूर्वेव मापतौ ॥ ३ ॥ प्रमादबहुले ग्रंथे गुणानेवान्ववेषयेत् ॥ ग्रावग्रामयुतेद्यद्रावन्वेषयति हीरकं ॥ ४ ॥ यो तनोत्प्रभया विष्णुतत्त्वकर्मविनिर्णयौ ॥ तमोनिरासाच्च तमाचार्यसूर्यमहं भजे ॥ ५ ॥ सृतिकूपे निपतितं द्विजमुद्धृत्य मापतेः ॥ पदांबुजे जहंसतं भुवनेंद्रमहं भजे ॥ ६ ॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां सप्तमस्कंधटीकायं व्यासतत्त्वज्ञतीर्थकृतायां मंदनंदिन्यां सप्तमःस्कंधः समाप्तः ॥ ७ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

( श्रीमन्मध्वाचार्याः )

## ॥ अथ श्रीमद्भागवतटिप्पणी छलारी प्रारभ्यते ॥

## ॥ अष्टमः स्कंधः ॥

॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ स्वायंभुवाद्रिपातारं सुरानमृतपायिनं ॥ इंद्रस्य राज्यदं विष्णुं वंदे यज्ञादिरूपिणं ॥ १ ॥ दुर्मताख्यपलाशानि विधूयामृतवर्त्म तु ॥ स्पष्टं कृतं भजे येन मध्वाख्यं तं महानिलं ॥ २ ॥ अभेद्यमध्ववाक्यानि व्याख्यातानि सतां धिये । येन तं जयतीर्थार्यं लोकोपकृतिकारणं ॥ ३ ॥ विद्यापत्याप्तिसंपत्तीर्यद्वृंदावनसेवया ॥ लभते मद्गुरुं मर्त्यो तं श्रीसत्यनिधिं भजे ॥ ४ ॥ श्रीमध्वदर्शनाचार्यं ममानुग्रहपूर्वकं ॥ छलारीनरसिंहार्यं वंदेऽहं श्रेयसे मम ॥ ५ ॥ श्रीभागवतटीकायाः कर्तॄनपिपुरातनान् ॥ प्रणम्य ज्ञानसिद्ध्यर्थं विजयध्वजपूर्वकान् ॥ ६ ॥ छलारिनरसिंहार्यशिष्यः शेषाभिधो बुधः ॥ अष्टमस्कंधविवृतिं कुरुते मंदबोधिनीं ॥ ७ ॥ अथास्मिन्नष्टमस्कंधे चतुर्दशमन्वन्तराणि निरूप्यंते । तत्र तावत्प्रथमाध्यांये स्वायंभुवस्वारोचिषोत्तमतापसाख्यमनुचतुष्टयं निरूप्यते । तत्रादौ परीक्षिद्राजा वृत्तानुपूर्वकं शुकाचार्यं श्रोतव्यकथां प्रार्थयते ॥ राजेति । श्रुतश्चतुर्थस्कंधोपक्रमे । यत्र स्वायंभुवमन्वंतरे विश्वसृजां मरीच्यादिप्रजेश्वराणां सकाशात् । आकूत्यादि स्वायंभुवकन्यासु । सर्गः पुत्रपौत्रादिसर्गोऽभूत् । अन्यान् स्वायंभुवव्यतिरिक्तान् ॥ १ ॥ तद्वर्णने आवश्यकत्वमाह ॥ तत्रेति । हि यस्मात् ॥ तत्र तेषु मन्वन्तरेषु धर्माः प्रवर्तिताः। तस्माद्वदस्वेत्यन्वयः । अन्यच्च प्रार्थयते । ॥ यत्रेति । यत्र यत्र मन्वंतरे महीयसः सर्वोत्तमस्य हरेर्जन्मान्यवतारान्कर्माणि चरितानि गृणंति कीर्तयंति ॥ २ ॥ तदेव विशेषतः प्रार्थयते ॥ यदिति । विश्वेषु चतुर्दशमन्वंतरेषु भावयाति । स्वार्थे णिच् । प्रादुर्भाव इति विश्वभावनः । मन्वंतरेषु प्रादुर्भावः सन्नित्यर्थः । यस्मिन्नतीते मन्वंतरे यत्कर्म कृतवान् । यस्मिन्ननागते भविष्यन्मन्वंतरे यत्कर्मकर्ता करिष्याति । अथवा । वर्तमान मन्वंतरे यत्कर्म कुरुते तानि वदस्वेत्यन्वयः ॥ ३ ॥ अतीतानागतेऽथवेत्यनेन मन्वंतराणामतीतत्वादिकमुक्तं । तत्रातीतमन्वंतरकथां वक्तुमतीतमन्वंतरसंख्यां तावदाह ॥ मनव इति । अस्मिन् ब्रह्मदिनकल्पे स्वायंभुवादयः स्वायंभुवस्वारोचिषोत्तमतापसरैवतचाक्षुषाख्याः षण्मनवो व्यतीताः । वैवस्वतश्च सत्यधर्मोऽव्यतीतः । तर्हि प्रथममन्वंतरकथा वक्तव्येत्यत आह ॥ आद्य इति । आद्यः स्वायंभुवः कथितः । चतुर्थोपक्रमे । यत्र स्वायंभुवमन्वंतरे देवादीनां । आदि पदेन मनुपुत्रसप्तर्षींद्रहरेर्वराहाद्यवतारा ग्राह्याः । तेषां संभव उत्पत्तिः । अभूदिति शेषः ॥ ४ ॥ ननु तर्हि स्वायंभुवमन्वंतरस्थं यज्ञनामकहरिकथावर्णनं कुतः क्रियत इत्यतः स्वायं-

ध्रुवमन्वंतरेऽवतीर्णस्य यज्ञनाम्नोहरेस्तन्मनुरक्षणादिरूपावतारप्रयोजनस्य पूर्वमनिरूपितत्वात् । तद्वक्तुमाह ॥ आकूत्यामिति । तस्य स्वायंभुवस्य मनोर्दुहित्रोराकूत्यां यज्ञनामकत्वेन देवहूत्यां कपिलनाम्ना पुत्रतां गतः प्राप्तः ॥ ५ ॥ तत्र कपिलनाकमस्य भगवतः कृतं चरितं । पुरा तृतीयस्कंधे ॥ ६ ॥ शतरूपानामिकायाः पतिर्भर्ता स्वायंभुवः सुनंदायां तन्नामकविष्णुपद्यां घोरं दुष्करं तपः तप्यमानः समाधिस्थितः सन् इदमन्वाह स्तुतिरूपं स्तवनमाह । स्वायंभुवो मनुः । स्वदौहित्रं यज्ञनामानं विष्णुं वक्ष्यमाणमंत्रोपनिषदाऽतुष्टावेति भावः । स्वायंभुवः स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः । ईशावास्यादिमंत्रैस्तुष्टावावहितात्मनेत्युक्तेः । तमेवोपनिषदर्थमनुवदति ॥ येनेत्याद्यष्टभिः श्लोकैः । अयमादित्यो येन हरिणा प्रेरितः सन्विश्वं तपते प्रकाशयति । यमादित्यस्तपति तेजसा चेति श्रुतिः । विश्वस्य जगतः सृष्टौ वीर्यं सामर्थ्यप्रदं तपो यतो हरेः सकाशाच्चतुर्मुखस्य भवति । अस्मिन् जीवे शयाने निद्रिते सति यो हरिर्जागर्ति । य एषु सुप्तेषु जागर्तीति श्रुतेः । तं चतुर्मुखनियामकेत्यादिनिरतिशयमाहात्म्योपेतं हरिमयं जीवो न वेद साकल्येन न जानाति । सः हरिः सर्वं चेतनाचेतनात्मकं विश्वं सम्यग्वेद । यः सर्वज्ञः सर्वविदिति श्रुतेः ॥७॥८॥९॥ उपदिष्टमपि तत्त्वं वैराग्यवत एव हृदयेऽवतिष्ठते । नान्यस्येति तत्त्वं विवक्षुः प्रथमं तावद्वैराग्यं विधत्ते ॥ आत्मेति । यदि तत्सर्वं विश्वं आत्मन ईशस्यावास्यमावासयोग्यं स्वप्रवृत्त्यर्थमीशानुप्रविष्टमित्यर्थः । तदेवानुप्राविशदित्यादेः । अतोऽस्वतंत्रमिति भावः । किंच जगत्यामीश्वराधीनप्रकृतौ । जगत्स्थावरजंगमात्मकं सर्वं । आश्रितमिति शेषः । अतोऽपि सर्वमस्वतंत्रमिति भावः । ततः किमित्यत आह ॥ मन इति । हे मनः । यत ईश्वर एव स्वतंत्रस्तेन कारणेन तेनेशन त्यक्तेन दत्तेन धनेन । यदृच्छया लब्धेनेति यावत् । भुंजीथा भोजनादिकं कुर्याः । यतश्चेश्वरादन्यत्सर्वमस्वतंत्रं तेन कारणेन । तस्य दाने सामर्थ्याभावात् । कस्यचित्कस्मादपि राजादेः सकाशाद्धनं मा गृधो माकांक्ष । अनेनेशावास्यमिदं सर्वमिति श्रुतिर्गृहीता ॥ १० ॥ एवं वैराग्यमुपदिश्येदानीं हरिं भजस्वेत्युपदिशति ॥ यमिति । जनः पश्यंतं सर्वं प्रत्यक्षत एव जानंतं यं विष्णुं न पश्यति । तत्प्रसादाभावे नापरोक्षीकरोति । न चक्षुषा पश्यति कश्चिदेनमिति श्रुतेः । ननु तर्हि घटनाशे देवदत्तस्य तद्विषयं चाक्षुषं ज्ञानमिवेश्वरस्यापि तद्विषयकं ज्ञानं नश्येदित्यत आह ॥ चक्षुरिति । यस्य हरेः पश्यतो चक्षुर्ज्ञानं नरिष्यति न नश्यति । रीङ् क्षये लट् । विषयनाशेऽपि यन्न नश्यति । स्वरूपभूतत्वात्ज्ञानस्य । न हि सवितृप्रकाशः

प्रकाशे नश्यति । विषयनाशस्तु वृत्तिज्ञानस्यैव । वृत्तिज्ञानं त्वीश्वरस्य नास्त्येवेति भावः । भूतानि निलयो यस्य तं । तत्सर्वांतर्यामिणं । भूतानां निलयं वा । सुपर्णं शोभनपरमानंदरूपं तं देवमुपधावत भजध्वं । हे जनाः ॥ ११ ॥ ईश्वरस्य परिच्छेदशून्यत्वादिमहिमांतरमाह ॥ यस्येति । यस्य हरेराद्यंतावादिः पूर्वावधिरंतश्चरमावधिर्न । अत एव न मध्यमं च परः । विप्रकृष्टो न दूरो न व्याप्तत्वादिति भावः । विश्वस्यामून्याद्यंतादीनि यस्माद्भवंति विश्वं च यद्यदधीनसत्ताकं । यदधीना यस्य सत्ता तत्तादित्येव भण्यत इति वचनात् । तद्ब्रह्म ऋतं सत्यं महद्गुणपूर्णं । तदेवर्तं तत्सत्यमाहुस्तदेव ब्रह्म परमं कवीनामिति श्रुतेः ॥ १२ ॥ ब्रह्मणो जन्मादिकर्तृत्वरूपमहिमानमाह ॥ स इति । स सृष्टावात्मनः शक्त्या शक्तिविषयया‌ऽजया प्रकृत्यास्य जगतो जन्मादि धत्ते करोति । स एव प्रलये तां प्रकृतिं विद्यया स्वस्योदस्य निर्व्यापारीकृत्य निरीहः सृष्ट्यादि व्यापारशून्य आस्ते । कीदृशः । प्रलये विश्वं काये यस्य सो विश्वकायं । उदरांतर्गतप्रपंच इत्यर्थः । सृष्टौ विश्वमेव कायः शरीरं यस्य स तथा प्रतिमास्थानीयः प्रपंच इत्यर्थः । स्वसृष्टजगति भगवतः प्रविष्टत्वादिति भावः । पुरुहूतः पुरूणि बहूनि हुतानि नामानि यस्य स तथा । सर्वे नामा सर्वे कर्मेति श्रुतेः । सर्वनामवाच्यत्वे हेतुः ॥ ईश इति । तच्छब्दप्रवृत्तिनिवृत्तिसामर्थ्योपेत इत्यर्थः । अत एव सत्यं साधुगुणपूर्णः परंज्योतिर्मुक्तप्राप्यपरंज्योति शब्दवाच्यः । परंज्योतिरुपसंपद्य स्वेन रूपेणापि निबध्यत इति श्रुतेः । अज उत्पत्तिशून्यः पुराणः पुरातनः । अजो नित्यः शाश्वतोऽयं पुराण इति श्रुतेः ॥ १३ ॥ एवं परमात्मस्वरूपं निरूप्येदानीं तत्प्राप्तिसाधनज्ञानादिकर्माणि कुर्यादित्याशयेनाह ॥ अथेति । यतो ज्ञानप्रतिबंधके दुष्कर्मणि सति सर्वं दुःसाधनं स्यादथ तस्माल्लोकसंग्रहार्थं ऋषयोऽग्रे प्रथमं कर्महंतवे कर्मणां दुष्कर्मणां हंतवे परिहाराय योगादि कर्माणीहंते कुर्वंति । यज्ञशिष्टाशिनः संतो मुच्यते सर्वकिल्बिषैरिति श्रुतेः । एवं ज्ञात्वा ज्ञानार्थी पुरुष ईहमानः कर्मकुर्वाणोऽनीहां मुक्तिसाधनीभूतज्ञानपदवीं प्रपद्यते । कश्चित्फलार्थ्यन्यथाऽपि भवतीति प्राय इत्युक्तं । अनेन कुर्वन्नेवेह कर्माणीति श्रुतिर्गृहीता ॥ १४ ॥ नन्वीहमानः कर्मभिरवकुंठितः केशकार इव बद्ध्यतेत्यत आह ॥ ईहत इति । हि यस्माद्भगवान् रामकृष्णादिरूपो लोकसंग्रहार्थमीहते वेदोक्तं कर्म करोति तत्र न विषज्जते । अतस्तैर्येऽनुवर्तमानास्ते कर्म कुर्वाणा अप्यात्मलाभेन भगवल्लाभेन पूर्णार्थाः संता नावसीदंति न बध्यंते ॥ १५ ॥ एवं हरिं स्तुत्वा स्वाभीष्ट-

माशास्ते ॥ तमिति । अहं तं पूर्वोक्तमहिमोपेतं यज्ञनामकं हरिं प्रपद्ये शरणं प्राप्नुयामित्यन्वयः । कथं भूतं । ईहमानं कर्माचरंतं । तर्हि जीवसाम्यं स्यादित्यतो जीववैलक्षण्यमाह । निरहंकृतं निराशिषं अनन्यचोदितमिति विशेषणत्रयेण । निरहंकारे हेतुः ॥ बुधं ज्ञानिनमिति । निराशिषं फलापेक्षारहितं । तत्र हेतुः ॥ पूर्णमवाप्तसमस्तकाममिति । आप्तकामस्य का स्पृहेति श्रुतेः । अनन्यचोदितं अन्येन नियुक्तो न भवतीत्यनन्यचोदितस्तं । अनियम्यमित्यर्थः । तत्र हेतुः ॥ प्रभुः स्वतंत्रमिति । एतादृशस्यापि कर्मानुष्ठानहेतुर्निजवर्त्ममूढान्मुक्तिमार्गानभिज्ञान्नृन्स्वभक्तान्स्वावरेण शिक्षयंतमिति । तदपि किमर्थं तत्राह ॥ अखिलेति । अखिलान्धर्मान्भावयतीति प्रवर्तयतीतित्यखिलधर्मभावनं ॥ १६ ॥ समाहितं समाधिस्थमेव संततमिति पूर्वोक्तमंत्रोपनिषदं व्याहरंतं स्वायंभुवं दृष्ट्वा । तत्कृतं स्तोत्रं श्रुत्वैवेति यावत् । असुरा असुभिः परप्राणैरेव स्वप्राणान् रमयंतीत्यसुराः । नरभक्षका इत्यर्थः । यातुधाना राक्षसाः क्षुधानिमित्तेन जग्धुं भक्षितुमभ्यद्रवन् अभिदुद्रुवुः ॥ १७ ॥ सर्वगतः सर्वत्र व्याप्तः । हेतुगर्भमेतत् । यज्ञो यज्ञनामा हरिस्तथाऽत्तुमवसितान्निश्चितमनस्कान् राक्षसान्निरीक्ष्य हत्वा । मनुममोचयदिति शेषः । रक्षोभिरुग्रैः संप्राप्तः खादितुं मोचितुं तदा । स्तोत्रं श्रुत्वैव यज्ञेन तां हत्वा वध्यतां गतानित्युक्तेः । ततः स्वयमेवेंद्रो भूत्वा यामैर्यामाख्यैर्देवैः परिवृतस्त्रिविष्टपमशासदपालयत् । तत्र प्रतिमन्वंतरं मन्वादयः षट् प्रत्येकं भवंति । तथा हि वक्ष्यति द्वादशस्कंधे । मन्वंतरं मनुर्देवाः प्रियव्रतोत्तानपादौ मनुपुत्रौ मरीचिमुखाः सप्तर्षयो यज्ञो हरेरवतारः । इंद्रश्च स एव पुनरन्य इंद्र इति । तं मन्वंतरं यं च विधमेवेदं चतुर्थस्कंधोपक्रमे वर्णितं ॥ १८ ॥ द्वितीयादिषु मन्वंतरेषु क्रमेण मन्वादिषु षट्कमाह ॥ स्वारोचिष इत्यादिना । तस्य स्वारोचिषस्तस्य मनोः ॥ १९ ॥ तत्र स्वायंभुवादि वैवस्वतांतेषु सप्तसु मन्वंतरेषु विष्णुवायुयमा अश्विनौपुरंदरश्चैते क्रमेणेंद्रा भवंति । तत्र पुरंदर एव मन्वंतरद्वये इंद्रो भवति ॥ तदुक्तं श्रीमन्महाभारततात्पर्यनिर्णये द्वादशेऽध्याये ( १३३–१३५ श्लो० ) ॥ अतीतेंद्रा एव ते विष्णुषष्ठाः पूर्वेंद्रोऽसौ यज्ञनामा रमेशः । सवै कृष्णो वायुरथ द्वितीयः स भीमसेनो धर्म आसीत्तृतीयः । युधिष्ठिरोऽसावथ नासत्यदस्रौ क्रमात्तावेतौ माद्रवतीसुतौ च । पुरंदरः षष्ठ उतात्र सप्तमः स एवैकः फल्गुनो ह्यत इंद्रा इति । तथा चाद्ये हरिर्यज्ञनामेंद्र उक्तः । द्वितीये इंद्रमाह ॥ तत्रेति । तत्र स्वारोचिषमन्वंतरे वायू रोचनस्तन्नामेंद्र

आसीत् । तुषितादयस्तन्नामकदेवविशेषाः । आदि शब्देन देवविशेषा ग्राह्याः । ऊर्जस्तंभादयस्तन्नामकाः ॥ २० ॥ तत्र हरेरवतारमाह ॥ ऋषेस्त्विति । वेदशिरसस्तन्नामकस्य तस्यां तुषितायां ततो वेदशिरसो देवो विष्णुर्नाम्ना विभुरित्युक्तः ॥ २१ ॥ अवतारप्रयोजनमाह ॥ अष्टाशीतीति । ये धृतव्रता धृतनियमास्ते मुनयः कौमारब्रह्मचारिणो बालब्रह्मचारिणस्तस्य विभुनामकस्य हरेः सकाशाद्व्रतं मुक्तिसाधनभूतमनुशिक्षितवंतो विभूपदेशात्तत्त्वज्ञानं संपादयामासुरिति भावः ॥ २२ ॥ तृतीयमन्वंतरस्थमन्वादि षट्कमाह ॥ तृतीय इति । प्रियव्रतस्य स्वायंभुवमनुपुत्रस्य सुतः । तत्सुता उत्तमनाममनुसुताः । अत्र यमधर्मो नाम्ना सत्यजिदिंद्र आसीत् ॥ २४ ॥ हरेरवतारमाह ॥ धर्मस्येति । सूनृताख्यायां सत्यसेन इति ख्यातः प्रसिद्धः सत्यव्रतैस्तन्नामकैः सोदरैः ॥२५॥ अवतारप्रयोजनमाह ॥ स इति । सत्यसेननामको विष्णुरनृतवादिरूपं व्रतं । दुराचारश्च येषां तान्भूतद्रुहः प्राणहिंसकान्भूतगणान्पिशाचादीन्सत्याजित्सुतः सत्यजितेनेंद्रेण स्तुतः सन् ॥ २६ ॥ चतुर्थमन्वंतरगतमन्वादि षट्कमाह ॥ चतुर्थ इति । उत्तमस्य प्रियव्रतपुत्रस्य तृतीयमनोर्भ्राता चतुर्थमनुः । स च हरिरित्याहुतः । स हरिनाम्नैव प्रियव्रतेन तपसि क्रियमाणे सति । जातत्वान्नाम्ना तापसश्चोक्तः । तत्कार्यमाह ॥ येनेति । येन तापसेन मनुना गजेंद्रो ग्रहाज्जलजंतुविशेषान्मोचितः । ननु पुस्तकेष्वेवं पाठदर्शनक्रमात्कथमेवं व्याख्यानमिति चेन्न । तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धमिति दशमाध्यायगीताभाष्यटीकायां जयतीर्थाचार्यैः । चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः । हरिरित्याहुतो येन गजेंद्रो मोचितो ग्रहादित्येवं पाठक्रमस्य श्रवणात्तदनुसारेणैवं व्याख्यातं । तथा यादुपत्याचार्यो द्वितीयस्कंधतात्पर्यटिप्पण्यां सप्तमाध्याये । एवमेव पाठक्रमस्याश्रवणाच्च । अनेन गजेंद्रमोचकत्वलिंगेन तापसस्य मनोर्हर्यवतारमुक्तं भवति ॥ तदुक्तं द्वितीयस्कंधतात्पर्ये ॥ हरिस्तापसनामाऽसौ जातस्तपासि वै मनुः । गजेंद्रं मोचयामास ससर्ज च जगत्प्रभुरिति ॥ २७ ॥ तत्सुतास्तापसमनुसुताः । आश्विनोर्मध्ये नासत्यो नाम्ना त्रिशिख इतीश्वर इंद्रो बभूव । तापसमन्वंतरमपि स्वायंभुवमन्वंतरवत्पंचविधमेव तापसस्यैव मनोरीश्वरावतारत्वान्न पुनरीश्वरावतार इति ज्ञेयं ॥ २८ ॥ हे बादरायण । एतद्गजेंद्रमोचनं ते तव सकाशाद्धरिर्नामविष्णुर्गजपतिं गजेंद्रं यथा येन प्रकारेणामूमुचन्मोचयामास ॥ २९ ॥ श्रवणेच्छायां हेतुमाह ॥ तत्कथास्त्विति । यत्र यत्र यासु यासु कथामृत्तमैर्निर्दोषैर्देवैर्ब्रह्मादिभिर्वा श्लोक्यते

कीर्त्यते इत्युत्तमश्लोको भगवान्गीयते । तासु कथासु श्रुतासु धन्यत्वप्रदं स्वस्त्ययनं क्षेमप्रदं शुभमिष्टरूपं महत्पुण्यं भवति । अतः श्रोतुमिच्छामह इत्यन्वयः ॥ ३० ॥ प्रायोपविष्टेनानशनव्रतकारिणा कथासु विषये चोदितः प्रार्थितः । हे विप्रा इति शौनकादीन्संबोधयते श्रीसूतः । पार्थिवं राजानं प्रतिनंद्य साधु पृष्टमिति बहुमानं कृत्वा ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ८—१ ॥ ॥

॥ हरिः ॐ ॥ गजेंद्रमोक्षप्रकारवक्तुमुपोद्धातमाह ॥ आसीदिति । आसीदस्ति । क्षीरोदेन क्षीरसमुद्रेणावृतः परिवृतः ॥१॥ तावता योजनायुतेन पर्यक् परितः। त्रिकूट इति समाख्याबीजमाह ॥ त्रिभिरिति । रौप्यायसहिरण्मयै रजतलोहसुवर्णमयैस्त्रिभिः शृंगैः प्राधान्यैः । पयोनिधिं दिशश्च रोचयन् उद्योतयन् ॥ २ ॥ रत्नैर्धातुभिश्च विचित्रितैर्नानाविधानां द्रुमाणां लतानां गुल्मो येषु तैरन्यैश्च शृंगैर्निर्झरांभसां प्रवाहोदकानां निर्घोषैश्च सर्वाः ककुभो दिशो रोचयान्नास्त इति पूर्वेणान्वयः ॥ ३ ॥ पय ऊर्मिभिरुदकतरंगैः समंतादवनिज्यमानाः प्रक्षालयमाना अंघ्रयः पादामूलमांता यस्य स तथा । सः पर्वतः शुभैरन्याश्ममिश्रितैर्मरकताश्माभिरिंद्रनीलरत्नैर्भूमिं श्यामलां नीलकांतिं करोति ॥ ४ ॥ पुनः कथं भूतो गिरिः । क्रीडद्भिः सिद्धादिभिर्जुष्टकंधरो नित्यसेविता गुहा यस्मिन्सः ॥ ५ ॥ यत्र पर्वते किन्नरादीनां संगीतसन्नादैर्गायनध्वनिभिर्नदंत्यः प्रतिध्वनन्तो गुहा यस्मिन्प्रवेशे तं अभि उद्दिश्य परशंकया शत्रुशंकयाऽमर्षयाऽसहनेन श्लाघिनो मत्समः कोऽस्तीति मन्यमाना हरयः सिंहा गर्जयंति । यत्रेत्यस्य स चेति पूर्वेणान्वयः ॥ ६ ॥ नाना येऽरण्या अरण्यसंबंधिनः पशवस्तेषां व्रातैर्गणैः संकुलाभिर्द्रोणीभिर्निम्नभूमिभिरलंकृताश्चित्रिता द्रुमा येषु तेषु सुरोद्यानेषु कलकंठा मधुस्वना विहंगमाः पक्षिणो यस्मिन्सः ॥ ७ ॥ किंचाच्छोदैः सुनिर्मलजलैः सरित्सरोभिश्च मणय एव वालुकाः सिकता येषु तैः पुलिनैर्जलमध्यसरिद्वीपैश्च युतो देवस्त्रीणां मज्जनेन स्नानेनात्यंतो य आमोदो विमर्दस्तस्मादुद्धृतं यत्सौरभं परिमलस्तेनाक्तैर्युक्तैरनिलैश्च युतो गिरिरास्ते । विमर्दःस्यात्परिमल इत्यमरः ॥ ८ ॥ तस्य गिरेराक्रीडं क्रीडास्थानं ॥ ९ ॥ नित्यं पुष्पफलवद्भिर्द्रुमैः सर्वतोऽलंकृतं वरुणस्योद्यानमिवास्ते । गिरिमुपवर्ण्य वनं वर्णयाति ॥ मंदारैरित्यादि चतुर्भिः । उद्यानं मंदरादिभिर्विशेषैः । लिंगाविपरिणामेनावृतमित्यन्वयः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तस्मिन्नुद्याने वने सरः पद्माकर

आस्ते । तद्वर्णयति ॥ सुविपुलमित्यादिभिः सार्धैः पंचभिः श्लोकैः । सुविपुलमत्यंतविशालं लसंति कांचनपंकजानि यस्मिंस्तत् ॥ १४ ॥ कुमुदादीनां पुष्पाणां श्रिया कांत्योर्जितं । मत्तषट्पदैर्भ्रमरैर्निर्जुष्टं कूजितं कलं मधुरस्वनो येषां तैः शकुंतैः पक्षिभिश्च निर्जुष्टं ॥ १५ ॥ चक्राव्हैरप्याकीर्णं संकुलं । जलकुक्कुटादीनां कुलेन कूजितं ॥ १६ ॥ मच्छनां कच्छपानां कूर्माणां जलजंतूनां संचारेण चलतां पद्मानां रजसा परागेण युक्तो पयं यस्मिंस्तत् । जलजान्द्रुमानुक्त्वा स्थलजानाह कदंबेत्यादिना ॥ १७ ॥ कुदादिभिः पुष्पवृक्षैश्च शोभितं ॥ १८ ॥ अन्यैरुक्तेभ्यो नित्यं ऋतवः फलपुष्पादि संपत्तिहेतवो वसंतादयो येषां तैर्द्रुमैरलं शोभितं । अलं द्रुमः स विज्ञेयो नित्यपुष्पफलो द्रुम इत्यभिधानात् । तन्नामकवृक्षविशेषैर्वा ॥ १९ ॥ तद्गिरिकाननाश्रयस्तत्पर्वतवनाश्रयो वारणयूथपो गजेंद्रः करेणुभिर्गजादिभिश्चरन् एकदा तत्रोद्याने । प्रविवेशेति शेषः । किं कुर्वन् यदनुग्रहेण ॥ २२ ॥ सकंटकं कीचकवेणुवेत्रवंतं विशालं गुल्मं लतादिसंदर्भं वनस्पतीन्वृक्षांश्च प्ररुजन्प्रभंजयन् ॥ २० ॥ पर्वताश्रयेण संचरंतं गजेंद्रं वर्णयति ॥ यद्गंधेति । यद्गंधमात्राद्यस्य गजेंद्रस्य मदगंधादेव जाताद्भयाद्धरयः सिंहास्तदा वनजंतवो द्रुवंति पलायंते । व्यालमृगाः सर्पाकारमृगाः खड्गास्तन्नामका मृगाः सगौरकृष्णाः सहिताः कृष्णसाराः ॥ २३ ॥ वृषादयः क्षुद्रा अल्पबलाः । यस्य गजेंद्रस्यानुग्रहेण भीताः संतोऽन्यत्र दृष्टिपथं त्यक्त्वा चरंति । सिंहादिभयाभावात् ॥ २२ ॥ उद्यानं प्रविष्टस्य गजेंद्रस्य सरोवराभ्याशगमने निमित्तमाह ॥ स घर्मतप्त इति । घर्मेणातपेन तप्तः । मदच्युतैर्मदस्राविकरिभिर्गजैः करेणवैश्च वृतः कलभैः कपोतैर्गरिम्णा गुरुत्वेन निमित्तेन गिरिं प्रकंपयन्मंदमश्नंतीति तथा तैरालिकुलैर्भ्रमरगणैः ॥ २३ ॥ पंकजपरागेण वासितं सरोनिलं सरः संबंधिवायुं दूराज्जिघ्रन्मदेन विव्हालितेक्षणश्चंचलनेत्रः ॥ २४ ॥ तस्मिन्सरसि विगाह्य प्रविश्य हेमारविंदानामुत्पलानां च परागेण परिमलीकृतं ॥ निजपुष्करेण तुंडाग्रेणोद्धृताद्भिरात्मानं स्नपयन् सिंचन् गतक्लमोऽपगतश्रमः सन् अमृतांबु स्वादूदकं निष्कामं पपौ ॥२५॥ हे नृप । देव चोदितोऽदृष्टप्रेरकेश्वरेण प्रेरकः कश्चिद्ग्राहो नक्रनामकजलजंतुश्चरणपादरुषा पादाक्रांतनिमित्तकोपेन यदृच्छयाऽदृष्टप्रेरकेश्वरेच्छया । एवं व्यसनं कष्टं यथाशक्ति विचक्रमे पराक्रमं कृतवान् ॥ २६ ॥ तथाऽऽतुरमेवं व्यसनं प्राप्तं बलीयसा ग्राहेण तरसा वेगेन जलांते विकृष्यमाणं यूथपतिं गजेंद्रं दीनधियः खिन्नचित्ताः करेणवः केवलं विचुक्रुशुः । पार्ष्णिग्रहाः पृष्ठतः सहा-

यकारिणोऽपरे गजाश्च तारयितुं नाशकन्। शक्लृ शक्तौ इत्यस्माद्धातोः कर्तरि अशकत् अशकती अशकन् लङ् ॥ २७ ॥ नियुध्यतोर्द्वंद्वयुद्धं कुर्वतोरिभेंद्रनक्रयोर्गजेंद्रग्राहयोः समा वत्सरा युद्धं चित्रममंसत मेनिरे ॥ २८ ॥ सहः सहनशक्तिर्बलं शरीरसामर्थ्यमोज इंद्रियबलं। तेषां व्ययो ह्रासो जले विकृष्यमाणस्यावसीदतः क्लेशितस्य गजेंद्रस्य जलौकसो जलवासिनो नक्रस्य सकलं बलादिविपर्ययो गजेंद्रबलाद्यपेक्षया विपरीतमधिकं ॥ २९ ॥ गजेंद्रो देही । हेतुगर्भविशेषणमेतत्। देहधारित्वात्। इत्थं प्राणस्य संकटं मरणबाधा यदाऽऽपत्तदाऽऽत्मविमोक्षणेऽपारयन्नशक्तो यदृच्छया हरीच्छया विवशः स्मरणरहितः सन् चिरं दध्यावितः परं किं कार्यमिति चिंतितवान्। अथेमां वक्ष्यमाणां बुद्धिमभ्यपद्यतैवं करिष्यामीति निर्णीतवान् ॥ ३० ॥ तामेव बुद्धिमाह ॥ नमामीति। ज्ञातयः स्वजातीया इमे गजा आतुरं ग्राहपीडितं मां ग्राहान्मोचयितुं न प्रभवंति न शक्ताः। करिण्यः कुतो न शक्ता इति किम्वहं न प्रभवामीति। यतो ग्रहरूपेण विधातुरदृष्टप्रेरकेश्वरस्याधीनेन पाशेन कर्मलक्षणपाशेनावृतो बद्धः। अपि शब्दो हेत्वर्थे। तस्मात्परेषां ब्रह्मादीनामयनमाश्रयभूतं परमेश्वरं शरणं यामि ॥ ३१ ॥ कोऽसौ यं शरणं यासीति तत्राह ॥ य इति। कश्चन लोकविलक्षणो य ईशः प्रचंडवेगादवार्यवीर्यादभिधावत आपततोऽतक एव मृत्युरेवोरगः सर्पस्तस्माद्भीतं प्रपन्नं स्वशरणं प्राप्तं परिपाति। यस्य भयादीदृशान्मृत्युरंतकः प्रधावति देहिनं प्राप्नोति। मृत्युर्धावति पंचम इति श्रुतेः। तमीश्वरमरणं शरणमीमहि व्रजेम ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥ ८—२ ॥ ॥

॥ हरिः ॐ ॥ शरणागति प्रकारमेवाह ॥ एवमिति। व्यवसितो निश्चयवान्गजेंद्रो मनोऽतःकरणं हृदि। अंतरे बहिरिंद्रियसंयोगं विहायेत्यर्थः। समाधाय विधाय। जाप्य मंत्रं जाप्यस्तोत्ररूपमंत्रं। तिर्यग्योनेरेतदसंभावितमिति तत्राह ॥ प्रागिति। प्राग्जन्मनींद्रद्युम्नजन्मन्यनुशिक्षितं स्वेनाभ्यस्तं ॥ १ ॥ तस्मै नमोऽस्तु। तमभिधीमहि ध्यायेम च। अथवा। तस्मै नमो नमः अभिधीमहीत्यन्वयः। केवलं ग्राहगृहीतत्वेन कायप्रणामस्याशक्यत्वात्। तस्मै च नमनहेतुमाह ॥ यत इति। यस्माद्धरेरेतच्चेतनावृतं चिदात्मकं चिदात्मवच्चेतनस्वरूपभूतं कं सुखं यस्य तद्भवति। तत्प्रसादाच्चेतनजातस्य मुक्तिसुखमाविर्भवति। तस्मा इत्यर्थः। स च कुत्रास्त इत्यत आह ॥ पुरुषायेति। पुरि देहे शेते इति। षष्ठी तत्पुरुषः। तस्मै परात्परं पुरिशयं पुरीषमक्षित इति

श्रुतेः । जीवस्यापि देहस्थत्वात्तद्व्यावृत्त्यर्थमाह ॥ आदिबीजायेति । आदिकरणायेत्युपादानकारणं जडप्रकृतिं व्यावर्तयति ॥ परेशायेति । परेषां रमादीनां नियामकायेत्यर्थः ॥ २ ॥ पूर्वं मुक्तिमदत्वमुक्तमिदानीं सृष्ट्यादि हेतुत्वमाह ॥ यस्मिन्निति । इदं जगद्यस्मिन्हरौ तिष्ठति । विष्ण्वाधीनमित्यर्थः । इदं यतः । यतो वा इमानि भूतानि जायंत इति श्रुतेः । इदं येन प्रवर्तते । येन जातानि जीवंतीति श्रुतेः । इदं विश्वं यः स्वयं स्वाधीनसत्ताकं । सर्वं खल्विदमिति श्रुतेः । य इदं स्वयमित्यनेन तादात्म्यं किं न स्यादित्यत आह ॥ योऽस्मादिति । योऽस्मात्प्रत्यक्षसिद्धप्रपंचात्परस्मात्परोक्षान्मुक्तप्रपंचाच्च पर उत्तमस्तं स्वयंभुवं स्वत एव प्राप्तसत्ताकं हरिं शरणं प्रपद्ये ॥ ३ ॥ ननु जगतो मिथ्यात्वाद्भगवतोजगत्सृष्ट्यादिकं कथमिति तत्राह ॥ य इति । यः प्रलयकाले स्वात्मनि स्वोदरे निजमायया स्वेच्छयाऽर्पितं प्रकाशितमिदं जगदीक्षते पश्यति । तथा सृष्टिकालेऽपि जीवानां तज्जगत्क्वचिज्जाग्रदादौ विभातं प्रकाशितं क्वचित्सुप्त्यादौ तिरोहितमप्रकाशितं । एवमुभयं तज्जगदीक्षते पश्यति । तदीक्षणं स्वातंत्र्येणेत्याशयेनाह ॥ साक्षीति । साक्षाद्द्रष्टा स्वातंत्र्येण द्रष्टेत्यर्थः । नेदमीक्षणमयथार्थमित्याह ॥ अविद्धेति । अबाधितज्ञानमित्यर्थः । कुत इत्यत आह अविद्धेति । अविलुप्तज्ञानमित्यर्थः । तथा च जगतः सर्वदेश्वरेण दृश्यमानत्वान्नमिथ्यात्वमिति भावः । स मामवत्वित्यन्वयः । कथं भूतः । आत्मा स्वयमेव मूलमाश्रयो यस्य स तथा । स्वे महिम्नीति श्रुतेः । पराच्छ्रीतत्वात्पर उत्तमः । अक्षरात्परतः पर इति श्रुतेः ॥४॥ परात्परत्वं स्पष्टयति ॥ कालेनेति । कालनाम्ना हरिणा लोकेषु भूतकार्येषु कृत्स्नशः साकल्येन पंचत्वं पृथिव्यादि पंचभूतात्मनां । नाशमिति यावत् । एतेषु प्राप्तेषु सत्सु सर्वहेतुषु पृथिव्यादि महत्तत्त्वांतेषु सर्वकारणेषु स्वस्वकारणतां प्राप्तेषु सत्सु तदा गहनं दुरवगाहं गंभीरमगाधं यत्तमो दुर्गाभिमन्यमानमासीत्तस्य तमसः पारेतमः संपर्करहिते देशे यो विभुरभिविराजते प्रकाशते । आदित्यवर्णं तमसस्तु पारेति श्रुतेः ॥ ५ ॥ हरेर्दुर्ज्ञेयत्वं वदन्प्रार्थयते ॥ न यस्येति । देवा यस्य हरेः पदं स्वरूपं न विदुर्यतोऽतः को जंतुरर्वाचीनः प्राणी तत्पदं गंतुं ज्ञातुं पुनरीरितुं वक्तुं वाऽर्हति । तत्र दृष्टांतमाह ॥ यथेति । आकृतिभिर्भिन्नभिन्नस्त्रीपुरुषाद्याकारैर्विचेष्टितः प्रवर्तमानस्य नाट्यं कुर्वतः पुरुषस्य स्वरूपं निर्धार्येदृशमिति ज्ञातुं वक्तुं वा यथा नार्हति जनस्तथेति । सुदुरत्ययं दुर्ज्ञेयमनुक्रमणं चरितं यस्य दुरत्ययानुक्रमणो हरिर्मामवतु ॥ ६ ॥ नन्वेतादृशमहिम्नो भगवतो ज्ञानं कथं स्यादित्यतो तज्ज्ञानोपायं

कथयन्प्रार्थयते ॥ दिदृक्षव इति । सुमंगलं यस्य पदं दिदृक्षवो द्रष्टुकामा मुक्तसंगा विषयासक्तिर्येस्ते विरक्ता मुनयो मननशीलाः सुसाधवो वनेऽव्रणं निच्छिद्रमलोकव्रतं लोकैः कर्तुमशक्यं व्रतं तप आदि कर्माचरंति कुर्वंति । सो हरिर्मे गतिः प्राप्यः । अस्तु कथं भूताः साधवः । सर्वात्मना सर्वस्वामिनि भूताः स्थिता ब्रह्मनिष्ठाः सुहृदः शुद्धांतःकरणाः फलेच्छाशून्या इत्यर्थः ॥ ७ ॥ देवदत्तवद्भगवतो जन्मादिकं नास्तीत्याह ॥ न विद्यत इति । कर्मक्लेशहेतुर्नास्ति । हरेरप्रसिद्धत्वान्नाम नास्ति । प्राकृतरूपराहित्याद्रूपं च नास्ति । गुणदोषः सत्त्वादिगुणनिमित्तकदोषोऽज्ञानदुःखादिश्च । निरनिष्टो निरवद्य इति श्रुतेः । ननु रामकृष्णादि रूपेण जन्मादिदर्शनात्कथमेतदित्यत आह ॥ तथाऽपीति । यद्यपि देवदत्तस्येव हरेर्जन्मादिकं नास्ति तथाऽपि यो हरिः स्वमायया स्वेच्छया लोकत्रयस्थसंभवाय सुखप्राप्तये तानि जन्मादीन्यनुकालं काले काले ऋच्छति स्वीकरोति तस्मै नम इत्युत्तरेणान्वयः ॥ ८ ॥ उरुरूपाय बहुरूपाय । आश्चर्यकराणि कर्माणि यस्य तस्मै नमः ॥ ९ ॥ आत्मैव प्रदीपः प्रकाशो यस्य तस्मा आत्मप्रदीपाय स्वप्रकाशकायेत्यर्थः । गिरां वचसां मनसश्चेतसामपि चित्तवृत्तीनामपि विदूराय साकल्येनाविषयाय । यतो वाचो निवर्तंतेऽप्राप्य मनसा सहेति श्रुतेः ॥ १० ॥ विपश्चितां नैष्कर्म्येण निवृत्तधर्मलब्धेन सत्त्वेन ज्ञानेन प्रतिलभ्याय प्राप्याय कैवल्यनाथाय मुक्तिस्वामिने निर्वाणसुखसंविदे निर्वाणसुखस्य स्वरूपसुखस्य संविदनुभवो यस्य तस्मै ॥ ११ ॥ शांताय सतां सौम्यरूपाय खलानां घोराय क्रूरायासतां गूढाय मोहजनकाय । मुह वैचित्त्य इति धातोः । मूढायेति पाठेऽव्यक्तायेत्यर्थः । गुणकर्मणे तत्तद्योनिगुणकर्महेतवे निर्विशेषायावतारेषु विशेषरहिताय साम्याय । भावप्रधानो निर्देशः । तत्तद्योग्यतानुसारेण साम्यं ज्ञानघनाय ज्ञानमूर्तये ॥ १२ ॥ क्षेत्रमव्यक्तं महदहंकारादिकं जानातीति क्षेत्रज्ञस्तस्मै महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । एतत्क्षेत्रं समासीनेति गीतावचनात् सर्वाध्यक्षाय सर्वव्यापिने साक्षिणे जीवकर्मद्रष्ट्रे पुरुषाय पूर्णषड्गुणायात्मनां जीवानां मूलायाश्रयमूलप्रकृतये मूलप्रकाराय ॥ १३ ॥ सर्वेंद्रियाणां ये गुणाः शब्दादि विषयास्तेषां द्रष्ट्रे सर्वेषां प्रत्ययानां ज्ञानानां कारणायासत्यादसाराद्विमुक्ताय नित्यमुक्तायेत्यर्थः । अनृताद्विमुक्तायेति वा । सदाभासाय सत्त्वायुराभासः प्रकाशो यस्य तस्मा इति वा ॥ १४ ॥ पूर्वोक्तविशेषणविशिष्टः क इत्यतस्तं निर्दिशति ॥ नारायणायेति । आर्तेर्दुःखस्य नाशाय । एवं भूते

नारायणे किं प्रमाणमित्यत आह ॥ सर्वागमेति । सर्वागमानां पंचरात्रादीनामाम्नायानां तदंगवेदादीनां च महार्णवाय नदीनामिव पर्यवस्थानाय वेदादि मुख्यतात्पर्याय विश्वासाय विपयायेत्यर्थः । अपवर्गाय मोक्षहेतवे परायणाय परेषां मुक्तानामाश्रयाय ॥ १५ ॥ सत्त्वादिगुण एवारणिः काष्ठविशेषस्तत्र छन्नं तिरोहितं चिदुष्मपाय ज्ञानाख्याग्निं पाति व्यंजयतीति गुणारणिछन्नचिदुष्मपाय तस्मै । तेषां गुणानां क्षोभोऽपि कार्योन्मुखत्वे विस्फूर्जितमेकप्रकारं मानसं यस्य तस्मै । सत्त्वादि गुणशक्त्युद्रेकावस्थायामपि मनोविकारशून्यायेत्यर्थः । युक्तात्मभिर्वशीकृतमन आदींद्रियैः पुरुषैः परिभाविताये श्वराय। चैर्यैश्वर्ययुक्ताय ॥ १६ ॥ भजतां सर्वपुरुषार्थावाप्तिरनेनैव स्यादिति भावेन स्वापेक्षितं प्रार्थयते ॥ यमिति । यं भजंतस्तत्प्रसादादिष्टां गतिं स्वापेक्षितं पुरुषार्थमाप्नुवंति । कामितमेव प्राप्नुवंति किमिति शंकते ॥ किं त्विति । उत्तरमाह ॥ आशिष इति । प्रार्थितान्पुत्राद्यवांतरपुरुषार्थानपि प्राप्नुवंतीत्यन्वयः । मोक्षमपि साकारमेव ददाति न निराकारमित्याशयेनाह ॥ रातीति । अव्ययं नाशरहितं देहमपि मुक्तिं च राति ददाति । यः सोऽदभ्रदयो बहुदयो हरिर्मे विमोक्षणमेव केवलं करोतु नाधिकं प्रार्थय इति ॥ १७ ॥ अल्पभक्तत्वादहं पुरुषार्थं प्रार्थये । एकांतभक्तास्तु न पुरुषार्थं प्रार्थयंत इत्याह ॥ एकांतिन इति । एकांतिनो ये ते यस्य सकाशात्कंचनार्थं न वांछंति । तं हरिमीड इत्युत्तरेणान्वयः । एकांतिन इत्यस्य विवरणं ॥ भगवत्प्रधाना इति । भगवानेव प्रधान इष्टत्वेन प्रार्थ्यो येषां ते तथोक्ताः । अनाकांक्षणे निमित्तमाह ॥ अत्यद्भुतमित्यादिना । उपनिषद्गुणवत्तया हरिं स्तौति ॥ तमक्षरमित्यादिना । कथं भूतं । अक्षरं नाशरहितं । अक्षरात्संभवतीह विश्वमिति श्रुतेः । जीवस्यापि नाशरहितत्वात्तद्व्यावृत्त्यर्थं ॥ परं ब्रह्मेति । परब्रह्मशब्दवाच्यमित्यर्थः । ब्रह्मविदाप्नोति परमिति श्रुतेः । एतादृशं ब्रह्म कुतो न दृश्यत इत्यत आह ॥ अव्यक्तमिति । अव्यक्तमचलं शांतमिति श्रुतेः । नन्वव्यक्तस्य ज्ञानं कथं स्यादिति तत्राह ॥ आध्यात्मिकेति । अधिकश्चासावात्माचाध्यात्मा हरिस्तत्संबंध्याध्यात्मिको येन योगेन श्रवणादिसाधनेन तज्जन्यप्रसादेनेत्यर्थः। गम्यं गेयमध्यात्मयोगादि गमनेन देवमत्येतीति श्रुतेः । अतींद्रियं साकल्येन सर्वेंद्रियागोचरं । न चक्षुर्गच्छति न वाग्गच्छति न मन इति श्रुतेः । सूक्ष्ममणुपरिमाणं । सूक्ष्मात्सूक्ष्मतरं प्रपद्यत इति श्रुतेः । महत्परिमाणमप्यस्तीति सूचनायेव शब्दः । महतोऽपि महीयानिति श्रुतेः । अतिदूरमभक्तानामप्राप्यं ।

कालीनं । तं च ब्रह्मेति श्रुतेः । आत्मा वा इदमेक एवाग्र आसीदिति श्रुतेः । परिपूर्णं सर्वरूपेषु सर्वगुणपूर्णं । पूर्णमदः पूर्णमिदमिति श्रुतेः ॥ १९ ॥ इदानीं जगत्सर्जकत्वं वर्णयति ॥ यस्येति । यस्य नारायणस्य कलया पुरुषरूपेण जल्प्या वचसा । चशब्दोऽनुक्रमसमुच्चायकः । प्रकृत्या ब्रह्मादयो नामभेदेन भिन्नभिन्ननामवत्तया रूपभेदेन भिन्नभिन्नाकारतया कृता उत्पन्नाः । हरिर्जडप्रकृतिमुपादानीकृत्य ब्रह्मादि स्थावरांतं जगच्चतुर्मुखपंचमुखत्वादिभिन्नभिन्नाकारं सृष्ट्वा वागिंद्रियेण विरिंचरुद्रेत्यादि नाम चकारेति भावः । यच्छब्दस्य स जयतादिति तृतीयेनान्वयः ॥ २० ॥ सृष्टिं विवृण्वन् भगवतः सकाशाज्जगतो लयप्रकारमपि दृष्टांतमुखेनाह ॥ यथेति । यथाऽग्नेः सकाशादर्चिषो ज्वाला यथा वा सवितुर्गभस्तयः किरणा असकृत्पुनः पुनर्निर्यांत्युद्गच्छांति संयांति लीयंति च स्वरोचिषः स्वेन रोचिः प्रकाशो यस्य तस्मात्। इदं चाग्निं सूर्यविशेषणं । तद्वत्कुं यतो यस्माद्धरेर्गुणसंप्रवाहोऽसकृद्भवति लीयते च । स जयतादित्युत्तरेणान्वयः । गुणसंप्रवाहः क इत्यत आह ॥ बुद्धिरित्यादिना । खानींद्रियाणि । शरीरसर्गः कार्यदेहप्रवाहश्च । असकृदित्युक्त्या जगत्प्रवाहस्य नित्यत्वं ज्ञापितं भवति ॥ २१ ॥ सर्ववैलक्षण्यं प्रतिपादयन्स्वाभीष्टमाशास्ते ॥ स इति । यो देवादि जगत्कर्ता सः । अत एव देवासुरमर्त्यतिर्यक् नैको देवादीनां मध्ये कोऽपि न भवति । पश्वादि न स्त्री न । नियतस्त्र्याकाराभावात् । न षंढो नपुंसको न भवति । सर्वथा तदाकाराभावात् । पुमान्न । नियतेन पुल्लिंगाभावात् । किं बहुना न जंतुः कृम्यादि प्राणिमात्रं न भवति । अयं गुणो रूपाद्याकारोऽपि न । कर्मा परिस्पंदादि रूपो न । स तु सच्छब्दवाच्यं पृथिव्यप्तेजाख्यभूतत्रयं न । असच्छब्दवाच्यवाय्वाकाशरूपभूतद्वयं च न भवति । यदन्यद्वा चांतरिक्षं चासीदिति श्रुतेः । किं त्वेवं सर्वस्य निषेधे सर्वविलक्षणत्वेन विशिष्यते ॥ अवशिष्यत इति । निषेधशेषः । सर्वविलक्षण इत्यर्थः । स एष आत्मा नेतीत्यादि श्रुतेः । शेषत्वेनाप्राधान्यशंकां वारयाति ॥ अशेष इति । शेषो न भवतीत्यशेषः स्वप्रधान इत्यर्थः । एतादृशो हरिर्जयतात् । मद्विमोक्षणायाविर्भवतु ॥ २२ ॥ स्वापेक्षितं मोक्षं प्रकटयाति ॥ जिजीविष इति । अहमिह शरीरे गृहाद्विमोक्षणेन न जिजीविषे । जीवितुं नेच्छामि । कुतः । अंतर्बहिश्चावृतायामविवेकव्याप्तं यत्तिर्यग्योनित्वेन ज्ञानहेतुनाऽमुयाऽनयेभयोन्या गज-

शरीरेण किं प्रयोजनं न किमपि । इति यत अत इत्यर्थः । तर्हि किमिच्छसीत्यतआह ॥ इच्छामीति । आत्मलोकावरणस्यात्मन स्वात्मनः परमात्मनो लोकस्य ज्ञानस्यावरकस्य तस्य लिंगशरीरस्य मोक्षणमिच्छामि । अस्यापि कालेन नाशः स्यात्किं तन्मोक्षप्रार्थनेनेत्यत आह ॥ कालेनेति । यस्य हरेरपरोक्षज्ञानमंतरेण विप्लवो नाशो नास्ति तस्येत्यर्थः । भिद्यते हृदयग्रंथिस्तस्मिन्दृष्टे परावर इति श्रुतेः ॥ २३ ॥ तिर्यग्योनित्वेन साधनांतरानुष्ठानासंभवान्मोक्षार्थं भगवत्प्रणाममाचरति ॥ सोऽहमिति । सः मुमुक्षुरहमुत्तमं पद्यत इति पदं गम्यं ब्रह्म नारायणं प्रणतोऽस्मीत्यन्वयः । तस्य परमगम्यत्वमुपपादयति ॥ विश्वसृजामित्यादिना । विश्वसृजं जगत्स्रष्टारं विशति प्रविशतीति विश्वनियमनार्थं स्वसृष्टजगत्प्रविष्टमित्यर्थः । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । बहिष्ठत्वादविश्वं । विश्वस्माद्विलक्षणमिति श्रुतेः । गात्रा शरीरादिजगतो वशेऽपि ज्ञानलोपो नास्तीत्याह ॥ विश्ववेदसमिति । विश्ववेदास्तं सर्वज्ञमित्यर्थः । विश्वात्मानं विश्वस्य स्वामिनमजमुत्पत्तिशून्यं ॥ २४ ॥ स तादृशेश्वरसद्भावे ज्ञानिप्रत्यक्षं प्रमाणमित्याशयेन तं नमति ॥ योगरंधितेति । योगेन ज्ञानेन रंधितानि दग्धानि कर्माणि येषां ते योगरंधितकर्माणो योगिनो ज्ञानिनो योगेन निष्कामकर्मणा विभाविते शुद्धे हृदि यं पश्यंति । तं योगानां मोक्षोपायानामीशं नियामकं हरिमहं नतोऽस्मि ॥ २५ ॥ आदराद्गुणाद्विशिष्टत्वेन पुनर्नमति ॥ नम इति । असंत्यो वेगा यासां तास्तथाऽप्रतिहतमित्यर्थः । तादृशानां शक्तीनां प्रभुमैत्रोत्सहविषयाणां त्रयं यस्य तथा तस्मै । अखिलधीगुणायाखिलाऽप्रतिहता धीर्गुणो यस्य स तथा तस्मै । प्रपन्नानां शरणागतानां पालाय दुरंताऽपरिमितशक्तिरघटितघटकशक्तिर्यस्य तस्मै । बुद्धींद्रियाणामनवाप्यवर्त्मने बुद्धेर्मनस इंद्रियाणां चानवाप्यमविषयं वर्त्म स्वरूपं यस्य तस्मै ॥ २६ ॥ ननु तर्हि मोक्षप्रदं भगवंतं सर्वेऽपि कुतो न भजंतीत्यतस्तत्र कारणं वदन् स्तुत्या परममेव हेतुं वदन् शरणं प्रार्थयते ॥ नायमिति । अयं जनो यच्छक्त्या यस्य शक्त्या मोहकशक्त्याऽहंधियाऽहं बुद्ध्या स्वस्वातंत्र्याश्रयेणेत्यर्थः । हतो बद्धः सन् स्वं स्वात्मानमात्मानं परमात्मानं च न वेद न जानाति । स्वस्वातंत्र्याश्रयेण स्वस्वातिरिक्तपरमात्मज्ञानाभावान्न भजंत इति भावः । तं दुरत्ययमाहात्म्यं दुर्जेयमाहात्म्यमनंतमाहात्म्यमित्यर्थः । हरिमहमित आश्रितोऽस्मि । अनंतमाहात्म्यस्य हरेः साकल्येन मम स्तुतौ सामर्थ्याभावादुपरम इति भावः

॥ २७ ॥ अनंतरं किमभूत् । उपवर्णितमिति । एवं पूर्वोक्तप्रकारेणोपवर्णितं स्तुतं निर्विशेषं ब्रह्म येन स तथा तं । उच्चजातौ दया नीचजातौ तदभाव इत्यादि वैषम्यरहितमित्यर्थः । अवतारमूलरूपयोर्विशेषशून्यामिति वा निर्विशेषमित्यर्थः । पूर्णमदः पूर्णमिदमिति श्रुतेः । गजेंद्रं प्रति ब्रह्मादय एते देवा यदा नोपसस्रुपुर्नागतास्तदाऽखिलामरवरः सकलदेवनायको हरिर्मनुत्वेनावतीर्णस्तापसनामा हरिनामको नारायणो यत्र गजेंद्रोऽभूत्तत्राविरासीत् । हरिस्तापसनामाऽसौ जातस्तपसि वै मनुः । गजेंद्रं मोचयामास ससर्ज च जगत्प्रभुरिति वचनात् । ब्रह्मादीनामनागमने हेतुमाह ॥ विविधेति । विविधानि लिंगानि हंसवृषभादीनि चिन्हानि तेषां भिदा भेदेन जातोऽभिमानो येषां तेऽभिमानिनोऽहं हंसवाहनोऽहं वृषभवाहन इत्यादि लक्षणो येषां ते तथा । हंसवाहनत्वाद्यसाधारण-स्वस्वनाम्नाऽऽहूतत्वान्नागता इति भावः । हरिस्तु निखिलात्मकत्वात्सर्वस्वामित्वात्पूज्यते । गजेंद्रस्तुतिज्ञानमसन्निहितस्य हरेः कथ-मित्यतोऽपीदमेव पदं निखिलात्मकत्वात्सर्वांतर्यामित्वादिति ॥ २८ ॥ आगमनमेव विशदयति ॥ तमिति । तद्दर्शनेन यथा कृपा भवेत्तथा आर्तं दुःखितमुपलभ्य ज्ञात्वा द्विविजैः सह छंदोमयेन हरीच्छानुसारिणा हरीच्छया शीघ्रगतिमित्यर्थः । यद्वा । गरुडो हरिमूढ्वा हरिगमनागमनसमये स्वपक्षाभ्यामभिव्यक्तं सामगायनं श्रीहरिं श्रावयतीति हेतोः छंदोमयेन युक्तं सामवेदप्रधानेनेत्यर्थः । आवर्णयन् पत्ररथेंद्रपत्रोच्चरितं स्तोममुदीर्णसोमामिति तृतीयस्कंधोक्तेः । गरुडेन समुह्यमानः समारूढो यतो यत्र तत्रागमत् ॥ २९ ॥ स गजेंद्रमुरुबलेन बहुबलेन ग्राहेण गरुत्मत्यारूढं खे आकाशे दृष्ट्वोपात्तमुद्यतं चक्रं येन तं । सांबुजकरं पद्मसहितशुंडमुत्क्षिप्योर्ध्वमुखं कृत्वा कृच्छ्रात्कष्टाद्गिरं वचनं । किं तद्वचनमित्यत आह ॥ नारायणेत्यादिना । नमस्त इत्यतः परमिति शब्दोऽध्याहार्यः । इति गिरमाहेत्यन्वयः ॥ ३० ॥ पीडितं महांतं वीक्ष्येति गरुडोऽपि मंदगतिरिति गरुडात्सहसाऽतिशीघ्रमवतीर्यावरुह्य सग्राहं गजेंद्रं सरसः सरोवरादुज्जहारोर्ध्वं चकर्ष । अरिणा चक्रेण विपाटितं विदारितं मुखं यस्य तस्माद्ग्राहान्नक्रात् । उस्रियाणां देवानां संपश्यतां सतां । उस्रिया विजया देवा इत्यभिधानं । अमूमुचन्मोचयामास । मुचि मोचने इत्यस्माद्धातोः कर्तरि लिट् ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ॥ ८—३ ॥ ॥

॥ हरिः ॐ ॥ देवादीनां गजेंद्रमोक्षणमहिमानं दृष्ट्वा पुष्पवर्षादिकमाह ॥ तदेति । तदा गजेंद्रमोचनकाले कुसुमानामासारं

दृष्टिं मुमुक्षुश्चक्रुः । तत्र गजेंद्रमोचनरूपं कर्मचरितं ॥ १ ॥ नेदुरवाद्यंत । दिव्या देवसंबंधिन्यः ॥ २ ॥ नक्रगजेंद्रयोर्मध्ये प्रथमं नक्रस्य स्वरूपमवदत् । तस्य गतिमाह ॥ योऽसाविति । योऽसौ ग्राहो देवलस्य ऋषेः शापेन शापप्राप्तग्राहयोनेः सद्यो मुक्त. परमाश्चर्यरूपं पुरुषाकारं धरतीति तथोक्तः । उत्तमश्लोकमगायतेत्यन्वयः । स पूर्वं क इत्यत आह ॥ हूहूनामको गंधर्वसत्तम इति । अत्रैव हि कथा । कस्मिंश्चित्सरसि स्त्रीभिः सह जलक्रीडां कुर्वन्नसौ हूहूगंधर्वस्तत्र स्नातुं प्रविष्टं देवलं मुनिं पदि प्रगृह्य विचकर्ष । स कुपितः सन् ग्राहो भवेति तं शशाप । पुनस्तेन प्रसादितः सन्नुवाच । एवमेव गजेंद्रं गृणीष्व । तदा गजेंद्रमुद्धृतवान्हरिस्त्वामपि शापान्मोचयिष्यतीति ॥३॥ यशसः कीर्तेर्धामाश्रयं । अत एव कीर्तन्यगुणसत्कथां कीर्तनीया गुणाः सतो निर्दोषाः कथा यस्य तं गुणसत्कथा गुणैर्निदुष्टा कथा यस्य तं ॥४॥ सोऽनुकंपित ईशेन नारायणेन स गंधर्वोऽनुकंपितः कृपापात्रीकृतः परिक्रम्य प्रदक्षणीकृत्य प्रणम्य नमस्कृत्य पश्यतः सतो मुक्तकिल्बिषो गतपापः सन् स्वलोकं प्रत्यगात्प्राप । गम्लृ गतौ ॥५॥ इदानीं फलमभूदित्यतः स्तुत्या प्रसन्नस्य हरेर्दर्शनेन मुक्तकिल्बिषस्य तत्सारूप्यं फलमभूदित्यत आह॥ गजेंद्र इति। अनेन बंधयतीत्यज्ञानबंधनं गजयोनिस्तस्माद्रूपं समाकारं सारूप्यमित्यर्थः । तदेवाह ॥ पीतवासाश्चतुर्भुज इति ॥६॥ गजेंद्रः पूर्वजन्मनि क इत्यत आह ॥ सवा इति । पांड्यः पांड्यदेशाधिपो द्रविडसत्तमो द्राविडो विष्णोर्व्रतमर्चनमेव परं मुख्यमयनमाश्रयो यस्य स तथा । इंद्रद्युम्नस्तन्नामकराजाऽभूदासीत् । भू सत्तायां लङ् ॥ ७ ॥ तस्य गजयोनिप्राप्तौ निमित्तं वक्तुमुपोद्घातं रचयति ॥ स एकदेति । आत्मवान्मनोजयवान् । परमात्मज्ञानीति वा । आराधनकाले गृहीतं मौनव्रतं लौकिकसंभाषणराहित्यं व्रतं येन स तथा । तापसस्तपस्व्याप्लुतः स्नातः कुलाचलपर्वतमाश्रयतीति स तथोक्तः ॥ ८ ॥ इदानीं तन्निमित्तमाह ॥ यदृच्छयेति । तत्रेंद्रद्युम्नाश्रमे मुनिरगस्त्यः परिश्रितः परिवृत इत्यर्थः । अकृतमर्हणादिकं प्रत्युत्थानाद्यर्चनादिकं येन तं तूष्णीं रहस्युपासीनमिंद्रद्युम्नं वीक्ष्य ऋषिर्ज्ञानी चुकोप कोपं चकार ॥ ९ ॥ इमं वक्ष्यमाणं शापमेवाह ॥ असाधुरिति । आकृताऽशिता बुद्धिर्यस्य स तथा मम हेलनादवज्ञानान्निमित्तात्तमिस्रमज्ञानजं प्रविश्यतां प्राप्नुयात् । अज्ञानजन्मैवाह ॥ यथेति । गजो यथा स्तब्धमतिस्तथैवायं राजा स्तब्धमतिरभूदिति यतोऽतः स एव । गज एव त्विति शेषः ॥ १० ॥ भगवान्पूज्यः सानुगः स शिष्यस्तद्गजजन्मदिष्टं परकेश्वरेण प्रापितमवश्यमनुभोक्तव्य-

मित्युपधारयन्नालोचयन् ॥ ११ ॥ आत्मनः स्वपरमात्मनश्च स्मृतिविनाशिनीं कौंजरीं गजसंबंधिनीं योनिं जन्म प्रपन्नः प्राप्तवान् । तर्होतादृशगजजन्मनि पूर्वजन्मस्मृतिः कथं जातेत्यत आह ॥ हरेरिति । गजत्वेऽप्यात्मस्मृतिविनाशकगजजन्मन्यप्यनुस्मृतिः पूर्वजन्मस्मृतिरभूदिति यद्धरेरर्चनस्य पूर्वजन्मनि कृतस्यातिशयितपूजाया अनुभावेन महिम्नेति ज्ञेयं ॥ १२ ॥ गजेंद्रस्य गजयोनिप्राप्तौ निमित्तमुक्त्वेदानीं गजेंद्रमोक्षणानंतरं किं कृतवानित्याकांक्षायामाह ॥ एवमिति । पार्षदगतिं पार्षदस्वरूपं गमितेन प्रापितेनापींद्रद्युम्नेनाप्युपगीयमानानि कर्माणि चरितानि यस्य स तथा । अद्भुतं स्वभवनमावासस्थानं ॥ १३ ॥ गजेंद्रमोक्षणरूपहरिमाहात्म्यश्रवणे आदरजननाय तत्स्तौति ॥ एवमिति । गजराजमोक्षणं नाम कृष्णस्योत्कृष्टानंदरूपस्य हरेरनुभावो महिमा तवेरितः कथितः । कथं भूतं गजेंद्रमोक्षणमित्यत आह ॥ स्वर्ग्यमिति । शृण्वतां स्वर्गसाधनं यशः साधनं कलिदोषनाशनं ॥ १४ ॥ आदरजननाय शिष्टाचारमप्याह ॥ अथेति । श्रेयस्कामाः पुरुषार्थकामा द्विजातयो ब्राह्मणवर्याः प्रातरुत्थाय शुचयः संतो दुःस्वप्नादीनां दुःस्वप्नप्रभृत्यपायानामुपशांतये नाशाय यथावद्भक्तिपूर्वकमित्यर्थः । एतद्गजेंद्रमोक्षणस्तोत्रमनुकीर्तयंति ॥ १५ ॥ अनेन स्तोत्रेण श्रेयो भवतीति कस्माज्ज्ञातं । साक्षाद्भगवद्वचनादेवेत्याह ॥ इदमिति । सर्वभूतमयः सर्वभूतेषु प्रधानः । स्मर्यमाणपदार्थानां भगवदधिष्ठानत्वं ज्ञेयमिति भावेनेदं विशेषणं । अत एव त्रिभुव्याप्तः ॥ १६ ॥ ये मां चेत्यादि श्लोकेषु सर्वेषां द्वितीयांतानां स्मरंतीति । कंदरं गुहा गुल्मानि समूहान् ॥ १७ ॥ शृंगाणि शिखराणि । धिष्ण्यानि गृहभूतानि । प्रसंगादन्यस्यापि स्मरणे फलमाह ॥ क्षीरोदमित्यादिना । क्षीरोदं क्षीरसमुद्रं ॥ १८ ॥ मम कलांऽशो यस्यां सा तां सूक्ष्मामणुपरिमाणां मदाश्रयां मद्वक्षस्थलाश्रितां लक्ष्मीं भवं रुद्रं ॥ २० ॥ अनंतपुण्यप्रदाने कर्माणि चरितानि ॥ २१ ॥ प्रणवमोंकारं सत्यं यथार्थभाषिणीमव्यक्तजडप्रकृतिमव्ययं धर्मं विष्णुभक्तिलक्षणं दाक्षायणीं दक्षपुत्रीं धर्मस्य यमस्य पत्नीं सोमकश्यपयोरपि दाक्षयणीं पत्नीं ॥ २२ ॥ ये अपररात्रांतेऽरुणोदयप्रारंभे उत्थाय प्रयता नियमवंतः शुद्धाः सुसमाहिता एकाग्रचित्ताः संतो मम रूपाणि विभूतिरूपाणि ये मां चेत्यादि पूर्वोक्तानि स्मरंति तेऽखिलादंहसः पापान्मुच्यंते ॥ २४ ॥ फलांतरमाह ॥ यो मामिति । अनेन गजेंद्रमोक्षणस्तोत्रेण । हे अंग प्रिय । निशात्ययेऽरुणोदये प्राणान्यये देहात्प्राणोत्क्रमणसमये विमलां निर्दोषां ॥ २५ ॥ आदिश्योपाविश्य जलजोत्समं

शंखोत्तमं प्राध्माय वादयित्वा विबुधानीकं देववृंदं ॥ २६ ॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ ८—४ ॥ ॥

॥ हरिः ॐ ॥ इदानीं क्रमात्प्राप्तमन्वंतराधिपकथां प्रसंजयति ॥ राजन्निति । रैवतमंतरं रैवतमन्वंतरं ॥ १ ॥ तापसस्य मनोः सोदरो भ्राता बलविंध्यावादी येषां ते तथा । अर्जुनः पूर्वः प्रधानो येषां ते तथा ॥२॥ तदाऽश्विनोर्मध्ये दस्रो विभुस्तन्नामेंद्र आसीत् । द्विजाः सप्तर्षयः ॥ ३ ॥ शुभ्रस्य शुभ्रनामकस्य ऋषेर्विकुंठनाम्नी पत्न्यासीत् । तयोः शुभ्रविकुंठयोर्विकुंठापुत्रत्वेन वैकुंठैर्देवश्रेष्ठैः सह विशेषो भगवान्विष्णुः स्वयं साक्षात्कलयांऽशेन विकुंठायाः पुत्रो वैकुंठस्तन्नामाऽऽत्मन् जज्ञे ॥ ४ ॥ अवतार-प्रयोजनमाह ॥ वैकुंठ इति । येन वैकुंठेन तत्प्रियकाम्यया तस्या लक्ष्म्याः प्रियचिकीर्षया ॥ ५ ॥ तस्य वैकुंठस्यानुभावो महिमा गुणाश्च ब्रह्मण्यादयः परमोदया महासमृद्धा याश्च कथितास्तृतीयादिषु स्कंधेषु । यः सर्वसत्वेन प्रसिद्धो ब्रह्मा । भूमान् रेणून् पृथिवीरजांसि विममे गण्यात् । परिच्छिन्नत्वात् । विष्णोर्गुणांस्तु यः को वर्णयेत् । साकल्येन वदेत् न कोऽपि । अपरिच्छिन्न-त्वादिति भावः ॥ ६ ॥ चाक्षुषमन्वंतरं निरूपयति ॥ षष्ठश्चेति । चाक्षुषस्तन्नामस्य ऋषेः पुरुषादयश्चाक्षुषस्य मनोरात्मजाः ॥ ७ ॥ तथा चाक्षुषमन्वंतरेऽपि वैराजस्य तन्नामकस्य संभूत्य। तन्नाम्न्यां पत्न्यां अजितो नामाऽजित इति ख्यातः सन् अंशेन स्वकलया ॥ ९ ॥ अवतारप्रयोजनमाह ॥ पयोब्धिमिति । येनाजितनाम्ना हरिणा धृतः स्वपृष्ठे तेनैव हरिणा कूर्मरूपेण कूर्मावतारेण मंदर-गिरिः ॥ १० ॥ हरेः क्षीराब्धिमथनादिकं चरितं विशेषाकारेण श्रोतुं राजा पृच्छति ॥ राजोवाचेति । यथा कथं यदर्थं किमर्थं यतः कुतो हेतोरंबुचरात्मना कूर्मरूपेण ॥ ११ ॥ दैत्येषु सत्सु सुरैर्यथा कथममृतं प्राप्तं । ततोऽमृतप्राप्त्यनंतरं ॥ १२ ॥ सात्वतां ब्रह्मादीनां पतेः । हरेस्तापैराध्यात्मिकादिदुःखैस्तापितं क्लेशितं ॥ १३ ॥ द्वैपायनसुतो वेदव्यासपुत्रः शुकः । हे द्विजा इति शौनकादीन् सूतः संबोधयति ॥ अभिनंद्य साधु पृष्टमिति । अनुमोद्य वीर्यं चरितं अभ्याचष्टुं वक्तुं प्रचक्रमे आरब्धवान् ॥१४॥ यदा युद्धे देवासुरयुद्धे शितानि निशितान्यायुधानि येषां तैर्गतासवो मृतप्रायाः संतो भूयशो बहुशो देवाः ॥ १५ ॥ यदा च दूर्वाससो मुनेः शापान्निःश्रीका ऐश्वर्यभ्रष्टाश्चाभवन् । तत्र तदेज्यादयो यागादयो नेशुः । शापप्रकारस्तु इत्थं । दुर्वाससा हि कदाचिन्मार्गे गच्छंतमिंद्रं दृष्ट्वा स्वकंठस्थमालेंद्राय दत्ता । तेन च श्रीमदेनानादृत्यैरावतस्य कुंभस्थले निक्षिप्ता । स च गजराट्

भूमौ पातयामास । ततः कुपितो दुर्वासास्तमिंद्रं शशाप । त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति ॥ १६ ॥ स्वयं मंत्रैः स्वविचारैः कार्यनिश्चयं नाध्यगच्छन्न प्रापुः ॥ १७ ॥ मेरोर्मूर्धनि स्थितां ब्रह्मसभां । निःसत्त्वान्विगतबलान्विगतप्रभान्कांतिरहितान् । इंद्रवायाग्न्यादीन्देवान् अमंगलप्रायान् अमंगलप्रचुरान् । लोकांश्चासुरांश्चान्यथा देवविलक्षणत्वेन बलयुक्तानित्यर्थः ॥ १९ ॥ समाहितेन सावधानेन पुरुषं पूर्णं हरिं परं भक्ताभीष्टरूपकं । पालकं वा । पालन पूरणयोरिति धातोः । संस्मरन्नुत्फुल्लवदनः परः सर्वदेवोत्तमः ॥ २० ॥ हे इंद्रादयो देवाः । अहं भवो रुद्रो यूयं सुरादयो । आदि शब्देन दैत्याः । मनुष्य शब्देन जरायुजाः सर्वेऽपि गजाश्वादयो ग्राह्याः । तिर्यंचोऽडजाः पक्ष्यादयो द्रुमा उद्भिज्जा घर्मजादय स्वेदजा मूर्धजाः कृमयः । एते सर्वे जीवा यस्य मूलनारायणस्यावतारः पुरुषनामा तस्यांशो भिन्नांशो ब्रह्मा तस्य कला मरीचादयस्ताभिर्विसर्जिताः पुत्रपौत्रद्वारा जनिताः । यद्वा । तस्यावतारः पुरुषस्तस्यांशः सामर्थ्यं तस्य कलयैकांशेन विसर्जिता उत्पन्नाः । मच्छक्त्यैकांशसंभूतं जगदेतच्चराचरमिति व[illegible]नात् । तं हरिं ॥ २१ ॥ ननु तर्हि सर्वदेवस्य समत्वेनानादरणीयत्वेनादरणीयपक्षाभावात्किं तच्छरणाश्रयेण । सत्यं । तथाऽपि । अनुग्राह्यतयोपदेवानामात्माऽर्थतो हरेरित्युक्तेः । देवानामनुग्रहपात्रत्वेनादरणीयपक्षत्वादस्मत्पक्षापाती भाविष्यतत्याशयेनाह ॥ न यस्येति । द्वाभ्यां । उपेक्षणीययुक्तश्चासावादरणयिपक्षश्चेति । मध्यमपदलोपी समासः । यद्यपि हरेः स्वार्थं वध्यादि पक्षो नास्ति तथाऽपि परार्थं काले तत्तत्कालविशेषे सृष्टिस्थितिसंहारार्थं रजः सत्त्वतमोगुणान्क्रमेण धत्ते ॥ २२ ॥ ते च देहिनां प्राणिनां भवाय सुखाय सत्त्वं जुषाणस्य सत्त्वगुणधारकस्य हरेरयं स्थितिपालनस्य पालनरूपायाः स्थितेः क्षणः कालस्तस्माद्रक्षणकालत्वात्तत्रापि भक्तवशत्वात्सुरप्रियः स हरिः स्वानां स्वभक्तानां नः सुराणां शं सुखं विधास्यति अतः शरणं प्रव्रजाम इति ॥ २३ ॥ वेधा ब्रह्माऽरिंदमं शत्रुसंहारहेतुं राजानं संबोधयति । अजितस्य हरेस्तमसः परं दूरे विद्यमानं प्रकाशात्मकं साक्षात्सर्वदा प्रत्यक्षत्वेनावासयोग्यं पदं क्षीराब्धिरूपं स्थानं जगाम ॥२४॥ अदृष्टस्वरूपं यस्य तस्मै । अद्भुताभिर्लोकेऽप्रसिद्धत्त्वेनाद्भुताभिर्देवीभिर्देवस्य क्रीडादिगुणविशिष्टस्य हरेः संबंधिनीभिर्हरिगुणगणं प्रतिपादकादिभिरित्यर्थः । गीर्भिर्वेदवाग्भिः स्तुतिं व्यधात् । देवैः सहेति शेषः । अवहितेंद्रियो वशीकृतेंद्रियः ॥ २५ ॥ ब्रह्मा वेदांतोक्तविशेषणविशिष्टत्वेन हरिं स्तुवन्प्रणमतीत्याह ॥ ब्रह्मोवाचेति । हे विष्णो । वयं देववरं त्वां नमामो नमाम । हे देववरं त्वां नमामेति वा । कथं भूतं अविक्रियं

शुद्धयादिविकारशून्यं । न कर्मणा वर्धते नो कनीयानिति श्रुतेः । सत्यमबाधितस्वरूपं । सच्छब्द उत्तमं ब्रूयादानंदंतीति वै वदेत् । येति ज्ञानं समुद्दिष्टं पूर्णानंदस्य दर्शितमिति वचनात् । सत्यं पूर्णानंदज्ञानरूपं वा । अनंतं । सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः । आद्यं जगदादौ वर्तमानं । आत्मा वा इदमेक एवाग्र इति श्रुतेः । गुहाशयं हृदयगुहायां निहितं नियामकत्वेन स्थितं । हृदय आहितं यदिति श्रुतेः । न विद्यंते कला भिन्नावयवा यस्य तं निष्कलं । निष्क्रियं शांतमिति श्रुतेः । अप्रतर्क्यमनुमानाविषयं । नैषा तर्केण मतिरापनेयेति श्रुतेः । मनोग्रयाणं मनसापेक्षयाऽधिकवेगयुतं । अनेजदेकं मनसो जवीयानिति श्रुतेः । वचसाऽनिरुक्तं निर्वक्तुमशक्यं साकल्येन वागिंद्रियाविषयत्वात् । यद्वा । वक्तुमशक्यमिति श्रुतेः । देववरं देवोत्तमं । आत्मा देवानां भुवनस्य गर्भ इति श्रुतेः । वरेण्यं वरणीयं । तत्सवितुर्वरेण्यमिति श्रुतेः ॥ २६ ॥ इदानीमिंद्रियत्वादित्यादिना हरिं स्तुवन् प्रार्थयत इत्याह ॥ विपश्चितामिति । प्राणमनोधियात्मनां बुद्धिदेहिनां विपश्चितं ज्ञातारं । अर्थान् शब्दादिविषयान् इंद्रियाणि श्रोत्रादीनि चाभासयति दीपयतीत्यर्थेंद्रियाभासस्तं । अर्थेंद्रियाणां संनिकर्षमुत्पाद्य तद्विषयज्ञानं जनयतीत्यर्थः । तस्य भासा सर्वमिदं विभातीति श्रुतेः । अक्षरं न क्षरतीत्यक्षरं । एतद्ध्येवाक्षरं ब्रह्मेति श्रुतेः । खं ज्ञानरूपं । कं ब्रह्म खं ब्रह्मेति श्रुतेः । त्रियुगेष्ववताराद्युगनामकं स्वयंभूस्त्रियुगः कृष्ण इत्यभिधानात् । यत्र हरौ । गृधु कांक्षायामिति धातोः । सर्वमाकांक्षमाणस्य जीवस्य पक्षौ पत्रवद्वर्तमानौ पृथग्गृध्रो मार्गोर्ध्वमार्गौ छायाऽविद्याऽऽतपः शास्त्रजन्यविद्यैतौ न स्तः । छाया त्वविद्या संभोक्ता जन्यविद्याऽऽतपः स्मृतः । जीवगृध्रस्य तौ पक्षावधोर्ध्वपथोः पृथक् । तौ विष्णोस्तु न विद्येते नित्यं विद्यास्वरूपिणमित्युक्तेः । तं शरणं व्रजामह इत्यन्वयः ॥ २७ ॥ इदानीं जगच्चक्राधारत्वेन परमात्मानं स्तौतीत्याह ॥ अजस्येति । चक्रं चक्रवत्पुनः प्रवाहरूपेण हरौ वर्तमानत्वाच्चक्रसंज्ञं जगद्यदक्षयः केशवोऽक्षोऽक्षस्थानीयो यस्य तद्यदक्षयं यदाधारमाहुः । चक्रं न वृत्तं व्यतीर्ये वीविपदिति श्रुतेः । तं ऋतं ऋतशब्दवाच्यं प्रपद्ये । तदेवमिति श्रुतेः । कथं भूतं । अजस्य विष्णोः । आधीनमिति शेषः । अजया प्रकृत्येर्यमाणं प्रेर्यमाणं । कार्यते ह्यवशः कर्म सर्वप्रकृतिजैर्गुणैरिति स्मृतेः । मनोमयं मनःप्रधानं । मन एव मनुष्याणां कारणं बंधमोक्षयोरिति स्मृतेः । पंचदशारमिंद्रियाणि दश शब्दादयः पंच पृथिव्यादीनि वा पंचेत्येवं पंचदशारा दलानि यस्य स तथा । आशु शीघ्रं नाभित्रितयः

सत्त्वादयो गुणा नाभिरिव यस्य स तथा। विशेषेण द्योतमानत्वात्। विद्युद्ब्रह्मबलं यस्य स तथा। विद्युद्ब्रह्मेत्युपासीतेति श्रुतेः। जगच्चक्रस्याक्षभूतो बलरूपश्च केशव इत्युक्तेः॥ अष्टनेमिमिति। अष्ट देवदानवमानवगंधर्वराक्षसपिशाचतिर्यक्स्थावराणि नेमयो यस्य स तथा॥ २८॥ एवं जगच्चक्राधारत्वेन स्तुत्वेदानीं सर्वजीवनियंतृत्वेन हरिं स्तौतीत्याह॥ यदिति। एकवर्णमेको मुख्यो वर्ण ओंकारो यस्य स तथा तं। प्रणवप्रतिपाद्यमित्यर्थः। प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितमिति श्रुतेः। तमसः प्रकृतेः परं। अक्षरात्परतः पर इति श्रुतेः। सीदति जानातीति सत्। षद्लृ गताविति धातोः। गत्यर्थस्य ज्ञानार्थत्वात्। निर्दोष ज्ञानमित्यर्थः। एकात्मप्रत्ययसारमिति श्रुतेः। अलोकं लोकविलक्षणं। स आत्मा नेति नेतीति श्रुतेः। अव्यक्तं स्वप्रसादमंतरेणाप्रत्यक्षं। यमेवैष वृणुते तेन लभ्य इति श्रुतेः। न विद्यतेऽतपारौ यस्येत्यनंतपारं कालतो देशतश्चापरिच्छिन्नमित्यर्थः। एतादृशं यद्रूपमुपसुपर्णपत्रं सुपर्णो जीवः। द्वा सुपर्णा स युजेति श्रुतेः। पत्रं वाहनं। पत्रं वाहनपक्षयोरित्याभिधानात्। जीवाख्यवाहनस्योपोपर्यासांचकार तं नियंतृत्वेनोपविवेश। प्राज्ञेनात्मनाऽन्वारूढ इति श्रुतेः। तदेतद्रूपं धीरा ज्ञानिनो योगरथेन योगेन भक्तिपूर्वकध्यानलक्षणेन रथेन विष्णुप्राप्तिसाधनेनोपासते भजंते। तं नमामीत्युत्तरेणान्वयः॥ २९॥ इदानीं मायानियंतृत्वेन स्तौतीत्याह॥ न यस्येति। यस्य हरेराधीनां यां मायां प्रकृतिं कश्च कोऽपि तत्प्रसादं विना नातिपिपर्ति नातिक्रामत्यत्येतुं समर्थो न भवति। दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यंते मायामेतां तरंति त इति स्मृतेः। तं नमामीत्यन्वयः। मायाकार्यमाह॥ ययेति। यया प्रकृत्या जनो मुह्यति। बद्ध्यते तेनार्थं भगवत्स्वरूपं स्वस्वरूपं च न वेद न जानाति। न चानिष्टं प्राप्नोतीति भावः। अनीशया शोचति मुह्यमान इति श्रुतेः। कथं भूतं। निर्जितात्मगुणं नितरां जीताऽऽत्मा प्रकृतिरात्मगुणाः प्रकृतिर्यस्य दुःखाज्ञानादिदोषा येन तं। यद्वा। निर्जितात्मान आत्मगुणा रागादयो येन तमिति। निरनिष्टो निरवद्य इति श्रुतेः। परेषां मुक्तानामीशं। उतामृतत्वस्येशान इति श्रुतेः। भूतेषु सर्वेषु प्राणिषु विषये समं तत्तद्योग्यतानुसारेणाचरंतं प्रवर्तकं॥ ३०॥ इदानीं साकल्येनाज्ञेयत्वेन हरिं स्तौतीत्याह॥ इम इति। यस्य हरेः प्रियया तन्वा प्रतिमास्थानीयेन सत्त्वेनैव ज्ञानहेतुसत्त्वगुणेनैव सृष्टा उत्पादिताः। यत्कृपयैव सृष्टा इति पाठे यस्य कृपया सृष्टाः संबद्धाः कृपाविषयभूता इत्यर्थः।

अत एव ऋषयश्च ज्ञानिन एतादृशा अपीममेव यं देवाः । हे विभोः सर्वत्रव्याप्त । बहिरंतरं ब्रह्मांडाद्बहिरंतरश्च सूक्ष्ममाकाशवदाति-व्याप्य द्योतत्वेन स्थितं । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेः । तवगतिं त्वद्रूपं न विद्महे न जानीमः । साकल्येनेति शेषः । इतरप्रधाना इतरौ तमोगुणरजोगुणौ प्रधानौ प्रचुरौ येषां ते तथा तामसराजसस्वभावा असुराद्याः । असुर शब्देन तामसा स्तमोयोग्या ग्राह्याः । आदि शब्देन राजसा नित्यसंसारिणो ग्राह्याः । कुतो हेतोर्न जानीयुरिति शेषः । तं नमामीति पूर्वेणान्वयः ॥ ३१ ॥ इदानीं विराड्रूपेण स्तुवन्प्रार्थयते ॥ पादौ महीति । यत्र यस्यां मह्यां जरायुजांडजस्वेदजोद्भिज्जत्वेन चतुर्विधो भूतसर्गो जीवसृष्टिरभूत् । सेयं स्वकृतैव स्वपादोत्पन्नैव । पद्भ्यां भूमिर्दिशमिति श्रुतेः । मही भूमिर्यस्य विराड्रूपस्य पादाविव न स्वरूपपादौ । स महापुरुषः स्थूलरूपी पुरुषनामा हरिः । सहस्रशीर्षा इति श्रुतेः ॥ ३२ ॥ अप्स्रष्टृत्वमंभसा त्रिलोकजीवनादिप्रदत्वरूपमाह । विभूतियुक्तत्वेन परमात्मानं स्तौति ॥ अंभस्विति । उदारमुत्कृष्टं वीर्यं शक्तिर्यस्य तदुदारवीर्यमंभो यद्रेतो यस्य रेतसो जातं । शिश्नात्तारो रेतस आप इति श्रुतेः । सप्तसु प्रथमेति सूत्रात् । रेत इति प्रथमा पंचम्यर्थे । सः प्रसीदतां । उदारवीर्यत्वमेवाह ॥ सिद्ध्यंतीति । त्रयो लोकास्त्रिलोकस्था जना अथाखिललोकाश्च येनांभसा सिद्ध्यंति जायंते । जीवंत्युत जीवनमपि प्राप्नुवंति । वर्धमानाः पुष्टिबलादिनाऽभिवृद्धा भवंति ॥ ३३ ॥ यः सोमो दिवौकसाः स्वाधमानां देवानां बलमंधोऽयमायुर्बलाभिवृद्धिहेतुः । नागानां वृक्षाणामंकुरजननसामर्थ्यप्रदत्वेनेशः । प्रजानां प्रजनः सुरतानंदहेतुः । तं सोमं चंद्रं यस्य मनो मनसो जातं समामनंति विदंति । चंद्रमा मनसो जात इति श्रुतेः । स इत्यन्वयः । देवादिबलादिप्रदसोमजनकत्वलक्षणमहाविभूतिः ॥ ३४ ॥ अग्निर्यस्य मुखं मुखाज्जातः । मुखादिंद्रश्चाग्निश्चेति श्रुतेः । कथं भूतः । जातं वेत्तीति जातवेदाः । क्रियाकांडं कर्मप्रतिपादकवेदप्रतिपाद्यं यज्ञादिकर्मनिमित्तं जन्म यस्य सः क्रियाकांडनिमित्तजन्मा । अग्निर्वै देवानां मुखमिति श्रुतेः । अग्निमुखेनेंद्रादिदेवानां स्वस्वहविर्भागमाप्त्यर्थमग्निहोत्रादौ मथनादग्नेर्जन्मनः प्रसिद्धत्वात् । पुनः कथं भूतः । अंतः समुद्रेऽनुचरन् । अत्र समुद्र शब्देन यज्जनकः कुक्षिर्लक्ष्यते । कुक्ष्यः समुद्रा गिरयोऽस्थिसंघा इत्युक्तेः । तथा चांतःसमुद्रे उदरांतः स्थितत्वा स्वधातून् स्वपाकार्हान् अन्नादीननुप्रचरन् । तथा प्रसिद्धसमुद्रेऽपि वडवानलरूपेणोदकान्यनुप्रचरन् । सः सर्वो-

पक्काराग्निजनकत्वलक्षणमहाविभूतिः ॥ ३५ ॥ तरणिः सूर्यो यच्चक्षुर्यस्य चक्षुष आसीत् । चक्षोः सूर्योऽजायत इति श्रुतेः । कथं भूतः । देवयानमर्चिरादिमार्गदेवता त्रय्या वेदेन मीयते ज्ञायत इति त्रयीमय एष तरणिर्ब्रह्मणो विष्णोर्धिष्ण्यमुपासनास्थानं । य एषोत्तर आदित्य हिरण्मयः पुरुष इति श्रुतेः । ध्येयः सदा सवितृमंडलमध्यवर्तीति स्मृतेः । अरिष्टस्वरूपात्संसारान्मुक्तेर्द्वारं देवयानमार्गात्सुखदुःखात्मकत्वेन मुक्तेर्द्वैविध्यात्तदुःखात्मकतमोरूपमुक्तिव्यावृत्त्यर्थममृतस्येति मुक्तेर्विशेषणं । अमृतरूपायाः सुखरूपाया मुक्तेरित्यर्थः । एतादृशमाहात्म्योपेतसूर्यजनकत्वमहाविभूतिः सन् प्रसीदतां ॥ ३६ ॥ यश्चराचराणां जंतूनां सहः सहनशक्तिर्बलं शारीरमोजोऽवष्टंभशक्तिश्च सहनादिधर्महेतुः स्वयं तादृग्गुणोऽधिभूतं वायुनामाऽध्यात्मं प्राणनामा पंचप्राणमनुगा भृत्याः सम्राजमिव वयं सूर्यादयो देवा अन्वास्मानुसृत्य वर्तामहे । यथा सम्राडेवाधिकृतान्नियुंक्त एतान्ग्रामानधितिष्ठस्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान् पृथगेव संनिधत्त इति श्रुतेश्च । यद्वा । उक्तगुणो वायुर्यस्य प्राणाद्भूत् । यंतेति श्रुतेः । वयं ब्रह्मादयो देवाः पंचपरमात्मानमनुगाः सम्राजमिवान्वास्मानुसृत्य वर्तामह इति योजना । स सर्वोत्तमः प्राणजनकमहाविभूतिर्नः प्रसीदतां ॥ ३७ ॥ यस्य पुरुषस्य पुरुषनामकस्य श्रोत्राद्दिशो जज्ञिरे । दिशः श्रोत्रादिति श्रुतेः । हृदो हृदयात् । खानींद्रियाणि प्रजज्ञिरे । नाभ्यो नाभेः खमंतरिक्षं जज्ञिरे । नाभ्या आसीदंतरिक्षमिति श्रुतेः । स प्रसीदतामित्यन्वयः । कथं भूतः । प्राणान् प्राणापानादीन् इंद्रियाणि च व्याप्य तिष्ठतीति प्राणेंद्रियात्मा स्वशरीरबंधुः स्वशरीरभूतायाः पृथिव्या बंधुः । यस्य पृथिवी शरीरमिति श्रुतेः । दिङ्नामदेवतादिसर्जनप्रतीतमहाविभूतिः ॥ ३८ ॥ यस्य हरेर्बलादिभ्य इंद्रादयो जाताः । स विरिंचादिदेवजनकमहाविभूतिः प्रसीदतां । मन्योः क्रोधात् । नायं क्रोधो दोषरूपः । किंतु क्षमादिरूपत्वाद्गुणरूप एव । क्रोधः क्षमात्मकस्तस्य चिदानंदात्मकस्य तथेत्युक्तेः । धिषणाद्बुद्धेः खेभ्यो गायत्र्यादि सप्त छंदांसि ऋषयो मरीच्यादि सप्तर्षयश्च जज्ञिरे । मेढ्तः शिश्नात् कः दक्षप्रजापतिः ॥ ३९ ॥ यस्य पुरुषस्य वक्षसः श्र्यादिभ्यश्च श्र्यादय आसन् स इत्यन्वयः । इतरोऽधर्मो द्योः स्वर्गलोकः ॥४०॥ यस्य मुखाद्यवयवेभ्यो ब्राह्मणादयो वर्णास्तत्कर्माण्यभवन् स इत्यन्वयः । गुह्यं रहस्यं ब्रह्म वेदश्च ब्राह्मणवृत्तिर्भुजयोः सकाशात् बलं च क्षत्रियवृत्तिरूर्वोः सकाशात् विशो वैश्यास्तेषां वृत्तिश्च क्रियादि । अंघ्रेरंघ्रिभ्यां शूद्रास्तद्वृत्तिस्त्रिवर्णसेवा च ॥४१॥

अधरादोष्ठादुपर्योत्तरोष्ठात्मीतिर्धृतिः कांतिश्च नस्तो नासिकायाः पशव्यं पशुजीवनं। तृणादि शब्देनौषधानि। नावश्विनावभवतामित्यर्थः। स्पर्शेन गुणेन कामः स्त्रीविषयेच्छा। कालो मृत्युः पक्ष्मभवश्चक्षुः पक्ष्मजन्यः। यस्याधरादिभ्यो लोभादिकमुत्पन्नं स इत्यन्वयः ॥४२॥ एवं स्थूलरूपमुपवर्ण्येदानीं सूक्ष्मरूपमुपवर्णयन्प्रार्थयते ॥ द्रव्यमिति। द्रव्यं भूतपंचकं वय आयुर्लक्षणं कर्मादृष्टं गुणा भक्त्यादयः। शब्दादयो वा। शेषं स्वभावजीवकालादिकमेते यस्य हरेर्योगमायया स्वरूपभूतेच्छयाऽपहिता उपेक्षिताः पतंति प्रच्युतस्वरूपा भवंति। द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः संति न संति यदुपेक्षयेति वचनात्। किंचिद्रूपं दुर्विभाव्यमेवं विधमिति चिंतयितुमशक्यं। स एष आत्मा नेति नेतीति श्रुतेः। प्रबुधावबोधं प्रबुधानां तत्त्वज्ञानयोग्यानामवबोधो ज्ञानं यस्मात्तथा। अनेन हर्यनुग्रहेण तद्विषयं ज्ञानं सुखमित्युक्तं भवति। अज्ञानां ज्ञानदो विष्णुरिति श्रुतेः। यमेवैष वृणुत इति श्रुतेश्च। द्रव्यादि सत्ताप्रदत्वेन ब्रह्माद्यचिंत्यमाहिमत्वेन ज्ञानदातृत्वेन च पूर्णैश्वर्यः सः नोऽस्माकं प्रसीदतामिति ॥ ४३ ॥ इदानीं भगवत्प्रसादसाधनं नमस्कार एवेत्यादराद्भगवंतं नमतीत्याह ॥ नमोऽस्त्विति। तस्मिन्पूर्वोक्तमहिम्ने हरये नमो नमोऽस्त्वित्यन्वयः। कथं भूताय। उपशांता अव्यक्ताः शक्तयो यस्य तस्मै। उपोऽधिके समीपे चेति वचनात्। उप सर्वाधिका अघटितघटकाः शांताः सुखस्वरूपशक्तयो यस्य तस्मा इति वा। परास्य शक्तिर्विविधैव श्रूयते इति श्रुतेः। स्वाराज्यलाभप्रतिपूरितात्मने स्वाराज्येन स्वयं प्रकाशमानेन लाभेनानंदेन प्रतिपूरितः पूर्ण आत्मा स्वरूपं यस्य तस्मै। सर्वदाऽऽविर्भूतानंदस्वरूपायेत्यर्थः। मायया स्वाधीनप्रकृत्या रचितेषु निर्मितेषु गुणेषु देहेषु। विषयेषु वा। प्रवर्तकत्वेन विद्यमानाया अपि तद्योग्याभिर्वृत्तिभिर्दुःखलक्षणाभिर्मनोवृत्तिभिर्न सज्जमानायालिप्ताय। निरनिष्टो निरवद्य इति श्रुतेः। दुःखानुभूतिरहितायेत्यर्थः। स्वभूतये स्वरूपभूताणिमाद्यष्टैश्वर्याय ॥ ४४ ॥ प्रसीदतामित्युक्तं। इदानीं तत्प्रसादफलमाशास्त इत्याह ॥ स त्वमिति। सस्मितं प्रसन्नं ते तव मुखांबुजं दिदृक्षूणां द्रष्टुमिच्छतां प्रपन्नानां त्वच्छरणप्राप्तानां नोऽस्माकं त्वन्मुखं प्रसन्नत्वेन यथाऽस्मत्करणगोचरमस्मच्चक्षुर्विषयो यथा भवेत्तथा सः त्वमात्मानं स्वरूपं दर्शय। प्रसन्नमुखः सन् प्रसन्नो भवेत्यर्थः ॥ ४५ ॥ भक्तानुकंपामंतरेण तवान्यप्रयोजनं नास्तीत्याशयेनाह ॥ तैस्तैरिति। नोऽस्माकं दुर्विषहमशक्यं यत्कर्म धर्मसंरक्षणं तत्कर्म भगवान्स्वयमेव करोति हि। कथं। काले काले

तत्तत्काले विशेषे स्वेच्छया भक्तानुजिघृक्षया कृतैः प्रादुर्भूतैस्तैस्तै रूपै रामकृष्णादिरूपैः। यद्वा हे विभो। यद्यदा दुर्विषहं सोढुम-
शक्यं कर्म दुःखरूपमसुरादेः। सकाशादिति शेषः। तदा भगवान्स्वयमसुरादीनां दुर्विषहं कर्म पराक्रमरूपं करोति। शेषं पूर्ववत्।
धर्मसंस्थापनार्थाय दैत्यानां निधनाय चेत्यादि स्मृतिप्रसिद्धिं हि शब्देनाह। अतोऽस्मत्प्रयोजनाय प्रीत्या प्रत्यक्षो भवेति भावः
॥ ४६ ॥ किंचित्त्वद्भक्तैरस्माभिस्त्वत्प्रीत्यर्थं कृतानि त्वयि समर्पितानि पूर्वपुण्यानि सकामानामिव विफलानि भवितुं नार्हंति।
अतश्च प्रत्यक्षो भवेत्याशयेनाह ॥ क्लेशभूरीति। विषयार्तानां सकामानां देहिनां कर्माणि त्वय्यनर्पितत्वाद्यथा विफलानि विरुद्ध-
फलान्यभीष्टफलरहितानि च स्युः। तथा त्वय्यर्पितं कर्म न विफलं स्यादित्यन्वयः। कथं भूतानि क्लेशभूरीणि। बहुक्लेशेन कृता-
न्यल्पसाराण्यैहिकाल्पफलानि च ॥ ४७ ॥ तत्र वैकल्यमुपपादयति ॥ नाधम इति। पुरुषस्य कर्मकल्पः कर्माभासोऽगसाकल्येन-
रहितोऽधमोऽप्यल्पोऽपीश्वरार्पितश्चेत्। विफलाय न कल्पते न भवति। किंतु फलवानेव स्यात्। कुतः। यत्प्रियायैव कर्म कृत्वा
तस्मिन्समर्पयति। स आत्मा परमात्मा हितः प्रेष्ठकारी दयितोऽनिमित्तबंधुर्हि यस्मात्तस्मादित्यर्थः। नाधर्म इति पाठे कर्माभास-
त्वादधर्मतुल्योऽपीत्यर्थो ज्ञेयः। अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान्। महानपि कृतोऽधर्मो ह्ययोग्यान्निष्फलो भवेदित्युक्तेः
॥ ४८ ॥ ननु भगवदर्पितकर्मणा भगवत्प्रीतिरेव स्यान्न देवानां। तत्प्रीत्यभावे स्वस्य फलं न स्यादित्यत आह ॥ यथा हीति।
यथा तरोर्मूले जलावसेचनं स्कंधानां शाखानामुपशाखानां च तृप्तिं। जनयतीति शेषः। परं विष्णोराराधनं सर्वेषामिंद्रादि
देवानां तृप्तिकरं भवति। आत्मनः स्वस्यापि स्वरूपानंदानुभवकरं भवति। अनेनेंद्रादीनां नारायणावयवत्वेन शाखास्थानीयत्वं
दर्शितं भवति ॥ ४९ ॥ स्वाभिप्रेतं सूचयन् प्रणामेन स्तुतिमुपसंहरतीत्याह ॥ नम इति। अनंतायापरिच्छिन्नाय। दुर्वितर्क्या-
त्मकर्मणेऽचिंत्यानि ऋतकर्माणि स्वभावचेष्टितानि यस्य तस्मै। निर्गुणाय सत्त्वरजस्तमोगुणकार्यशून्याय। गुणानां सत्त्वादि-
गुणानामीशाय। सृष्ट्यादौ प्रवर्तकाय। अधुना सत्त्वस्थाय सत्त्वगुणप्रवर्तकाय। तुभ्यं नमः। सांप्रतं सत्त्वस्थायेत्यनेन यतस्त्वं
पालनार्थमिदानीं सत्त्वगुणं प्रवर्तयासि तस्मादस्मान्न आपदः पालयेति भावः सूचितो भवति ॥ इति श्रीभागवतटिप्पण्यां
पंचमोऽध्यायः ॥ ८—५ ॥ ॥

॥ हरिः ॐ ॥ हरेराविर्भावप्रकारं वर्णयति ॥ एवमिति । सहस्रार्काणामुदये द्युतिरिव द्युतिर्यस्य सः ॥ १ ॥ महता तेजसा प्रतिहतानि तिरस्कृतानीक्षणानि चक्षूंषि येषां ते । क्षमंतरिक्षं क्षोणीं भूमिमान्मानं । जातावेकवचनं । स्वान् अग्रतः पुरतः स्थितं विभुं विष्णुं च ॥ २ ॥ आविर्भूतं परं पुरुषं विरिंचो दृष्ट्वा तुष्टावेति सप्तमश्लोकेनान्वयः । स्वच्छे निर्मले कंजगर्भवदरुणे लोहिते ईक्षणे यस्य तं ॥ ३ ॥ तप्तहेमवदवदातेन पीतेन । अवदातोऽरुणे पीते श्वेते श्यामे च कथ्यत इत्यभिधानात् । लसत्कौशेयवाससा युक्तेन । प्रसन्नानि पुष्टानि चारूण्यंगानि करचरणाद्यवयवा यस्य तं । सुमुखं प्रसन्नवदनं । महांतो मणयो यस्मिंस्तेन किरीटेन । कर्णाभरणाभ्यां मकरकुंडलाभ्यां भांतौ दैदीप्यमानौ कपोलौ ताभ्यां श्रीः कांतिः मुखांबुजं यस्य तं ॥ ४ ॥ ५ ॥ कांच्याख्यकलापेन कटिभूषणेन । वलयाभ्यां कंकणाभ्यां पादभूषणाभ्यां करभूषणाभ्यां । हारैर्मुक्तावलिभिः कंठभूषणैः । नूपुराभ्यां च शोभितं । कौस्तुभ आभरणं यस्य कंठे तं । लक्ष्म श्रीवत्साख्यं लक्षणं दक्षिणस्तनादूर्ध्वं बिभ्रंतं । लक्ष्मीमिति पाठे लक्ष्मीं वक्षसि बिभ्रंतमित्यर्थः । वैजयंती वनमालया युक्तं ॥ ६ ॥ सुदर्शनादिभिः सुदर्शनचक्रादिभिः स्वास्त्रैः स्वायुधैः । अस्त्रं प्रहारे चापे इत्यभिधानं । मूर्तिमद्भिः शरीरधारिभिः कामादिभिः । देवप्रवरो ब्रह्म सर्वांगैरुरसा शिरसेत्युक्तांगैरवनिं गतैर्भूमौ पतितैः साष्टांगप्रणामैरित्यर्थः ॥ ७ ॥ हे विष्णो । तव ते नमो नमः । कथं भूताय । उत्पत्तिस्थितिशून्याय । जन्मस्थितिसंयमाय जन्मादिकारणायेत्यर्थः । जन्मादीनां तदैकाधीनत्वाद्भेदव्यपदेशः । अजातजन्मस्थितिसंयमायेति पाठे न जातास्ते जन्मादयो यस्येत्यर्थः । गुणाय ज्ञानादिरूपाय । विज्ञानमानंदं ब्रह्मेति श्रुतेः । निर्वाणसुखार्णवाय निर्वाणसुखस्य शरीरजन्यरूपसुखस्य समुद्राय । अणोरप्यतिसूक्ष्मादपि वस्तुनोऽणिम्नेऽतिसूक्ष्मरूपाय । अपरिगण्यमियत्तारहितं धाम देहो यस्य तस्मै । अनेन महतो महीयस्त्वमुक्तं भवति । न चैकस्यैव युगपदणुत्वं महत्वं चासंभावितमिति वाच्यं । महान् अघटितघटकोऽनुभावः सामर्थ्यं यस्य तस्मै । अचिंत्यैश्वर्यादित्यर्थः । अगण्यप्रभवायेति वा ॥ ८ ॥ हे पुरुषर्षभ । तवैतद्रूपं श्रेयोऽर्थिभिर्मोक्षादिपुरुषार्थकांक्षिभिः पुरुषैर्वैदिकैर्वेदोक्तेन तांत्रिकेण पंचरात्राद्यागमोक्तेन च योगेन साधनेनेज्यं पूज्यं । हे धातः । भुवि सर्वाधारेऽमुष्मिन् रूपे नोऽस्मांस्त्रिलोकांश्च सह युगपत्पश्यामि । तत्र हेतुः । हे विश्वमूर्ते विश्वं जगन्मूर्तौ देहे यस्य स तथा ॥ ९ ॥ विश्वमूर्तित्वमुपपादयति ॥

त्वयीति । इदं जगदात्मतंत्रे स्वतंत्रे त्वय्यग्रे सृष्टिकाले मध्ये स्थितिकालेंऽते प्रलयकाले आसीदस्ति । यथा मृत्तिका घटस्यादिरंतो मध्यं च । आद्यंतमध्यावयवेषु मुख्यं कारणं । तथा त्वमेवास्य जगत आदिरंतो मध्यं चाद्यंतमध्यभागेषु मुख्यं कारणं । नान्यः । यथा महत्येकस्मिन्कार्येऽनेककर्तारो भवंति । यथा जगद्रूपे महाकार्ये त्वां विनाऽन्यो मुख्यकारणं नेत्याशयः । तत्र हेतुः । परस्मात्प्रकृतेरपि पर उत्तम इति ॥१०॥ अत्र मृत्तिकादृष्टांतो मुख्यकारणत्वे एव न तूपादानकारणत्वे । ब्रह्मणोजगन्निमित्तकारणत्वस्य ज्ञानिप्रत्यक्षसिद्धत्वादित्याशयेनाह ॥ त्वामिति । हे हरे । त्वमात्मैवाश्रयो यस्याः सा तथा । अत एव स्वतया स्वाधीनमाययोपादाने भूतया प्रकृत्येदं विश्वं निर्माय तदनुप्रविष्टस्तन्नियमनार्थं तस्मिन् जगति प्रविष्टः । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । इति मनीषिणो विवेकिनो विपश्चितः शास्त्रज्ञा युक्ता ध्यानयुक्ताः संतः त्वां मनसा पश्यंति । ननु गुणकार्ये प्रवेशे तन्निमित्तदोषः स्यादित्यत आह ॥ गुणेति । गुणानां व्यवाये कार्ये स्थितमप्यगुणं गुणनिमित्तदोषरहितमित्यर्थः ॥ ११ ॥ गुणकार्ये प्रविष्टत्वेनैव पश्यंति सोपादेयत्वेत्येतत्सदृष्टांतमाह ॥ यथेति । यथाऽग्निमेधसि काष्ठे मथनेनामृतं क्षीरं घृतं वा गोषु दोहनादिना अन्नं व्रीह्यादिकर्षणादिना तथा भुव्येवांबु खननेनोद्यमेन पुरुषप्रयत्नेन वृत्तिं जीविकां वाणिज्यादिना योगैः पूर्वोक्तमथनाद्युपायैर्मनुष्या अधियंति प्राप्नुवंति । काष्ठादिषु विद्यमाना एवाग्न्यादयः साधनेनोपलब्धा इति जानंति । तथा कवयो विवेकिनो बुध्या साधनेन त्वां गुणेषु गुणकार्येषु विद्यमानमेवाधियंति जानंति तथा वदंति । अत्र भेदस्य दोषलेपराहित्यस्य ज्ञानायाग्निनिदर्शनं सर्वस्मात्सारः स्वभक्तमुक्तिदश्चेति प्रदर्शनायामृतदृष्टांतं । उपजीव्यत्वं दर्शयितुमन्ननिदर्शनं । तापहरत्वद्योतनायांबुदृष्टांतः । हे नाथ सरोजनाभ पद्मनाभ । अतिचिरेण बहुतरकालेनेप्सितार्थं समुज्जिहानं भक्तैर्बहुजन्मसु प्रार्थितं मोक्षादिपुरुषार्थप्रदमित्यर्थः । यद्वा । अतिचिरेण वांछितार्थभूतं उक्तगुणसंपन्नत्वात्सम्यगुज्जिहानमाविर्भवंतं प्रत्यक्षतो दृष्ट्वाऽद्य वयं निर्वृतिं सुखं गताः प्राप्ताः । तत्र दृष्टांतः । दवार्त्ता वनवन्हिना पीडिता गजा यथा गांगं गंगासंबंध्यंभः प्राप्य सुखभरिता भवंति तद्वत् ॥ १२ ॥ यत्कर्तव्यं तत्कथयेत्याह ॥ संत्वमिति । योऽर्थो येषां ते यदर्था यत्प्रयोजना अखिललोकपाला वयं तव पादमूलं समागतास्तमर्थमस्मभ्यो विधत्स्व कुरुष्व । असावर्थः क इत्यत आह ॥ से बहिरिति । हे आत्मन् स्वामिन् । बहिरंतोऽशेषसाक्षिणः सर्वं पश्यतस्ते तवा-

यास्माभिर्विज्ञाप्यं किं वा प्रमेयमस्ति ॥ १४ ॥ अग्नेः सकाशात्केतवो विष्फुलिंगा यथोत्पद्यंत तथाऽहं गिरिशः शिवः सुरादयः। आदि शब्देन ऋष्यादयो दक्षादयः प्रजेश्वराश्च । ते मदादयः सर्वे । हे ईश । त्वत्तः पृथग्विभाविता उत्पन्ना ये । किं वा शं सुखोपायं विदामो विद्मः । अग्निस्फुलिंगदृष्टांतकथनेन यतो बहुप्रकाशाग्निवत्त्वं सर्वज्ञो वयं त्वल्पप्रकाशस्फुलिंगवदल्पज्ञा अतो यं सुखोपायं न जानीम इत्युक्तं भवति । अतस्त्वमेव सर्वज्ञत्वात्त्वमेव नः शं सुखोपायं विधत्स्व । इदं कुरुतेति सुखोपायमुपदिशेत्यर्थः । हे द्विजानां ऋषीणां देवानां मित्रानिमित्तबंधो । द्विजदेवमंत्रमिति पाठे द्विजदेव त्वं ब्रह्मण्यदेव मंत्रमुपायं विधत्स्वेत्यर्थः ॥ १५ ॥ तद्धृदयं यथैव यथावद्विज्ञाय जगाद । सुरकार्यसाधनोपायमुपादिदेशेत्यर्थः । जीमूतवन्मेघवद्गंभीरया । संवृतानि गृहीतानि सर्वाणि कार्याणींद्रियाणियैस्तान् भगवत्येव निष्ठायुक्तानीत्यर्थः । संवृतसर्वकामानिति पाठेऽप्रकाशितस्वाभिप्रायानित्यर्थः ॥१६॥ ननु हरेरेव सुरकार्यसमर्थत्वाद्देवान्प्रति समुद्रमथनादिरूपोपायोपदेशः किमर्थमित्यत आह ॥ एक एवेति । सुरेश्वरो हरिरेवैकः परापेक्षारहितः सन् सुर-कार्यविषये ईश्वरः समर्थो यद्यपि तथा समुद्रमथनादिभिरमृतार्थं देवदैत्यैः सहामृतरूपेण समुद्रमथनं कूर्मरूपेण मंदरोद्धारणं नारायणी-रूपेण दैत्यमोहनमित्यादिभिर्विहर्तुकामः क्रीडाकर्तुकाम एव तान् प्रत्याह। उपायमुपादिदेश न त्वसमर्थत्वादित्यर्थः ॥१७॥ उपायमुप-देष्टुं ब्रह्मादीन्स्वाभिमुखीकरणाय संबोध्य फलेन हर्षयति ॥ हंतेति । भाषितं वचनमवहिताः सावधानाः । मदुक्तप्रकारेणोपाय-मनुतिष्ठेत । पूर्ववद्वो युष्माकं श्रेयः संपत्तिः स्यात्। अतो मम भाषितं श्रुणुतेत्यन्वयः ॥ १८ ॥ इदानीमुपायमुपादिशति ॥ यातुधानैरिति । हे देवाः । बलिचक्रगृहं प्रति यात गच्छत । गत्वा दानवैर्दैतेयैश्च तावत्पर्यंतं संधिं विधीयतां । कुतः । कालेन कालनामकहरिणाऽनुगृहीतोऽस्मिन्काले हर्यनुग्रहेण प्रबलैरित्यर्थः । कियत्पर्यंतं संधिः । कालेन फलानुसारेणानुगृहीतैरनुकूलत्वे-नैकमत्येन गृहीतैः स्वीकृतैरसुरैर्यावद्वो युष्माकं सुराणामात्मनः स्वामिन इंद्रस्य भवो वृद्धिः स्यात्तावदित्यर्थः ॥ १९ ॥ ननु वैरि-भिर्दैत्यैः सह दैन्येन संधानं कथं कार्यमित्यत आह ॥ अरयोपीति । हे देवाः । कार्यस्यार्थस्य कर्तव्ये प्रायो जनस्य गौरवे महत्वे सति । अरयोऽपि हि संधेयास्ततोऽर्थस्य प्रयोजनस्य पदवीं सिद्धिं गतैः कार्यसिद्ध्यनंतरमित्यर्थः । अहिमूषकवत् । मध्य-कांतकभावेन वर्तितव्यामिति शेषः। यावन्मयूरसंत्रस्तः सर्पो मूषकवेश्मनि निलीयन्निर्भयः पश्चाद्भक्षित्वा मूषकं गत इति तांत्रिकोक्तेः।

यद्वा। अर्थस्य पदवीं गतैः कार्यं साधयितुं प्रवृत्तैः पुरुषैः प्रथममरयोऽपि संधेयाः कथं। अहि सर्पवत् । सर्पग्राहिणा पट्टिकायां सर्पमूषकौ निरुद्धौ। तत्र सर्पो बहिर्निर्गमनार्थं मूषकं प्रथमं संबोध्यते। हे मूषक। आवयोर्बहिर्निर्गमनार्थं पेटिकायाश्छिद्रं कुरु तेन रंध्रेण बहिर्निर्गच्छाव इति। ततस्तत्कृतेन छिद्रेण ततो निर्गत्य मूषकं भक्षितवान्सर्प इति। किं वदंती ॥ २० ॥ ततस्तैः सह यत्कार्यं तदाह ॥ अमृतोत्पादन इति। अविलंबितं शीघ्रं यस्यामृतस्य पीतस्य सतो मृत्युग्रस्तो जंतुरमरो मरणरहितो भवेत् ॥ २१ ॥ मंदरं पर्वतं रज्जुं। रज्जौ च रश्मिषु नेत्रं स्यादित्यभिधानं। वासुकिं तन्नामकं सर्पं ॥ २२ ॥ ननु दैत्यैः सह मथने तेऽप्यमृतपानेनामराः स्युः। तत्राह ॥ क्लेशभाज इति ॥ २३ ॥ बलिभिः सहकारिभिः साध्या येऽर्थास्तदनुसारिणं विना न सिध्यतीति कृत्वा सामादिकमुपदिशति ॥ यूयमिति द्वाभ्यां। असुरा मथनेन समुद्रोत्पन्नवस्तुषु यदिच्छंति हे असुराः। यूयं यदनुमोदध्वमंगीकुरुध्वं। संरंभेण कोपेन वा सांत्वया मार्गेण यथा सिद्ध्यंति तद्वो युष्माभिर्जातु कदाऽपि वस्तुषु मथनादुत्पन्नेषु काम इच्छा रोषः कोपः ॥ २४ ॥ स्वच्छंदगतिरिच्छानुसारप्रवृत्तिः ॥ २६ ॥ सुरास्तु बलिमुपेयुर्जग्मुः। गम्लृ गतौ लिट् ॥ २७ ॥ दैत्यराट् बलिररीन्सुरान् असंयतानपि युद्धसामग्रीरहितानपि दृष्ट्वा जातक्षोभान् जातक्षोभः कोपाटोपो येषां तान्स्वनायको येषां तान् स्वभृत्यान्न्यषेधयत्। शस्त्रादिकं परित्यज्यागच्छमानानपि सुरान्दृष्ट्वा जातकोपेन तान्निवारणे प्रयतमानान्स्वभृत्यान् सर्वेषामपि ज्ञानार्थमुच्चैर्ध्वनिना निवारयामासेति भावः। निवारणे हेतुः। संधिविग्रहयोः कालं वेत्तीति स तथोक्त इति संधिकालं विरोधिकालं च जानातीत्यर्थः ॥ २८ ॥ वैरोचनं विरोचनपुत्रं बलिमशेषं त्रैलोक्यं येन तं ॥ २९ ॥ श्लक्ष्णया मधुरया। तत्सर्वममृतमथनादिकं। शिक्षितमुपदिष्टं ॥ ३० ॥ तन्महेंद्राद्दैत्यस्य बलेररोचंत। तत्र समीपे येऽन्येऽसुराधिपाः पौलोमादयः शंबरादायश्च ये च त्रिपुरवासिनस्तेषामप्यरोचंतेत्यन्वयः। महेंद्रोक्तं बल्यादयः सर्वेऽप्यंगीकुर्वन्निति भावः ॥ ३१ ॥ संविदं संधिं ॥ ३२ ॥ सुदुःसहो मदो येषां ते दुर्मदाः। नदंतो गर्जंतः। परिघ इव बाहवो येषां ते ॥ ३३ ॥ दूरदेशे प्रतिभारभूतस्य गिरेरुद्वहनेन श्रांता अपारयंतः पारं गंतुमशक्नुवंतः संतो विजन्हुरपातयत् ॥ ३४ ॥ चूर्णने हेतुमाह ॥ महता भारेणेति। बहुभाररूपत्वादित्यर्थः ॥ ३५ ॥ भगवान् गरुडध्वज इति नामा सन् प्रादुर्बभूव

॥ ३६ ॥ ईक्षया स्वदर्शनेन निर्जरान् जरारहितान्निर्व्रणान् क्षतरहितान् यथा सम्यगित्यर्थः ॥ ३७ ॥ गिरिं चेति । च शब्दः समुच्चये । स्वयं गरुडे आरुह्य ॥ ३८ ॥ पततां वरः पक्षिश्रेष्ठः सुपर्णसंज्ञः । गिरिं स्कंधादवरोप्य जलांते समुद्रजलमध्ये उत्सृज्य प्रक्षिप्य । हरिणा विसर्जितः । इतः परं त्वं गच्छेति प्रस्थापित इत्यर्थः । सुपर्णे तत्र स्थिते वासुकेरागमनाभावोऽत्र गरुड इति वक्तव्ये सुपर्ण इति विशेषेण संज्ञाग्रहणेनायमर्थः सूचितः । चाक्षुषमन्वंतरेऽमृतार्थे मथनं भवति । तत्र वैवस्वतमन्वंतरेऽनंतनाम्ना सुपर्णेन मंदरः पर्वत ऊढश्चाक्षुषमन्वंतरे सुपर्णनाम्ना गरुडेनोढ इति । अनंतोढो मंदरस्तु यदा वैवस्वतांतरं । अमृतार्थे सुपर्णोढ इति तात्पर्योदाहृत वचनात् ॥ ३९ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ८—६ ॥ ॥

॥ हरिः ॐ ॥ इदानीं मथनप्रकारं वर्णयति ॥ त इति । ते सुराः फलभागेन तवाप्यमृतभागो भविष्यतीति । आमंत्र्य वासुकिं नेत्रं रज्जुं कृत्वा गिरौ परिधाय संवेष्ट्याब्धिं मथितुमारेभिरे । यत्ताः सन्नद्धाः ॥ १ ॥ वासुकेर्मुखं तीक्ष्णं दैत्यान् ग्राहयितुमेव पूर्वं प्रथमं हरिः पुरस्तादग्रभागं मुखं जग्रहे । देवा अभवन् मुखं जगृहुः ॥ २ ॥ महापुरुषस्य विष्णोश्चेष्टितं नैच्छन्नांगीचक्रुः । अमंगलमहेरंगं पुच्छं बालं गृण्हीम इत्यात्मस्तुतया स्वेषां पुच्छग्रहणायोग्यत्वमुपपादयति ॥ स्वाध्यायेति । वेदाध्ययनेन शास्त्रश्रवणेन च संपन्नाः सत्कुलजन्मना सदाचारेण प्रख्याताः प्रसिद्धाः ॥ ३ ॥ ४ ॥ अग्रं मुखं परित्यज्य । कृतो धारणास्थानभागो यैस्ते कश्यपनंदनाः कश्यपपुत्राः ॥ ५ ॥ आपो जलान्यविशज्जलमध्ये मग्नोऽभूदित्यर्थः । कुतः । हि यस्मादनाधारगौरवत्वाद्गुरुनिमित्तेन स्वपौरुषे नष्टे सति ॥ ६ ॥ ७ ॥ विघ्नेशस्य गणेशस्य गतिं तेन विरचितं विघ्नं दुरंतवीर्येऽपारशक्तिः । अवितथसंधिः सत्याभिसंधिः संकल्पो यस्य सः । काच्छपं कस्यपस्य विद्यमानं वपुः कृत्वा कूर्मावतारो भूत्वा ॥ ८ ॥ कुलाचलं मंदरं । सः कूर्मरूपी भगवान् लक्षयोजनप्रस्तारो विस्तारोऽस्यास्तीति तथा । तेन पृष्ठेन द्वीप इव दधार ॥ ९ ॥ भुजवीर्येण वेपितं कंपितं । हे अंग । तदा वर्तमानं तस्य गीरेरावर्तनं परिभ्रमणमादिकच्छप आदिकूर्मोऽगस्य देहस्य कंडूयनं मेनेमन्यत । कूर्मस्य पृष्ठे गिरिभ्रमणं क्षतादि पीडाकरं नाभूदिति भावः । तत्र हेतुः ॥ अप्रमेयोऽचिंत्य इति ॥ १० ॥ विष्णुं विना कस्यापि व्यापारो न संभवतीत्याशयेन विष्णोः सुरासुरादिषु सर्वत्र प्रवेशमाह ॥ तथेति । असुरेणासुराकारेणेरयन्देवानामपि बलं वीर्य-

मभिवर्धयन् दैवेन देवाकाररूपेण नागेंद्रं वासुकिमबोधरूपास्तिर्यग्रूपः सर्पाकार इत्यर्थः ॥ ११ ॥ हरिः सहस्रबाहुस्तादृशरूपः सन् गिरिराडिवागेंद्रं हस्तेन हस्तसहायेनाक्रम्योपरि पर्वतपृष्ठे तस्थौ । कथं भूतः। दिव्यभिष्टुवद्भिः स्तुतिं कुर्वद्भिर्ब्रह्मादिभिः। सुमनाभिः पुष्पैरभिवृष्टः ॥१२॥ आत्मनि देवदैत्यमध्ये पर्वतमध्ये च गोत्रे गिरौ दार्ढ्यरूपेण नेत्रे रज्जावभेद्यरूपेण प्राविशता प्रविष्टेन परमेण परमात्मना समेधिताऽभिवृद्धास्तरसा वेगेन मंदनोत्कृष्टाः क्षोभितं चलितं नक्राणां जलजंतुविशेषाणां चक्रं समूहो यस्मिंस्तमब्धिं समुद्रं ममंथुर्ममंथ । ममंथतुः । ममंथुः । लिट् ॥१३॥ अहींद्रस्य सहस्राणि करालानि दिश इव विशालानि च यानि मुखानि तेषां श्वासा इवाग्नयस्तेषां धूमैराहतं वर्चः कांतिर्येषां ते तथा सरला द्रुमविशेषाः ॥ १४ ॥ चस्त्वर्थः । देवास्तु भगवद्वशाः । हरिप्रेरिता इति यावत् । घना मेघाः समभ्यवर्षन् । समुद्रस्योर्मिभिस्तरंगैरुपगूहाः संस्पृष्टाः । शीतला इति यावत् । वायवश्च ववुर्वांति स्म । कथं भूतान् । तस्याहींद्रस्य श्वासाग्नीनां शिखाभिर्ज्वालाभिर्हतप्रभा येषां ते तान् । धूम्रवर्णान्यंबरादीनि येषां तान् । अंबरं वस्त्रं कंचुकं कवचमित्यभिधानं ॥ १५ ॥ देवासुरवरूथपैर्देवासुरश्रेष्ठैर्यदा सुधा न जायेत नोत्पन्ना तदाऽजितोनाम चाक्षुषमन्वंतरे प्रादुर्भूतो हरिः स्वयं निर्ममंथ । लिट् ॥ १६ ॥ धृतोऽद्रिर्येन स धृताद्रिरजितो नाम भगवान् अथो गिरिधारणानंतरं अशोभतेत्यन्वयः । कथं भूतः । कनकवत्परिधिः परिधानरूपं वस्त्रं यस्य सः । पीतांबरः कनकमयः परिधिः कांची यस्य स इति वा । कर्णयोर्विद्य-माना विद्युन्मकरकुंडललक्षणा यस्य स तथा कर्णयोर्विद्युद्वत्प्रकाशमानकुंडलयुक्त इत्यर्थः । मूर्ध्नि भ्राजंतो विलुलिताश्चलिताः कचाः केशाः । केशाः शिरोरुहा इत्यभिधानात् । यस्य स तथा स्रग्धरो वनमालाधरः । पुनः कथं भूतः । जैत्रैर्जयशीलैर्दो-र्भिर्भुजैर्दंदशूकं सर्पंगृहीत्वा मथ्ना मंदरेणाब्धिं मथ्नन् । क इवाशोभत । प्रतिगिरिरिव प्रतिद्वंद्वसर्प इव ॥ १७ ॥ महोल्बणं केना-प्यवार्यं हालाहल इत्याव्हं नाम यस्य तत् । अग्रतः प्रथमं संभ्रांता मीना उत्पतिताः सर्पाः कूर्माश्च यस्मिंस्तस्मात्तिमिर्नाम बहुयो-जनमीनो मत्स्यविशेषः । द्विपाः जलस्थगजाः । ग्राहा नक्राः । तिमिं पूर्वोक्तमत्स्यविशेषं गिलिति ग्रसतीति तिमिंगिलः । तिम्य-पेक्षया बहुयोजनो मीनविशेषः ॥ १८ ॥ उत्सर्पत्समुद्रादुद्गच्छद्विषमप्रतिमं प्रतिक्रियाशून्यामिति वा । कुतः । उग्रो वेगो यस्य तत् । तदेवाह ॥ दिशीति । सर्वदिक्षूपर्यधश्च विसर्पदत एवासह्यं विलोक्य भीता अन्येन केनाप्यरक्षमाणाः प्रजाः सदाशिवं शरणं

दुद्रुवुर्जग्मुः ॥ १९ ॥ त्रिलोक्या भवायैहिकश्रेयसेऽपवर्गहेतोर्मोक्षार्थं च देव्योमया सहाद्रौ कैलास आसीनं मुनीनामभिहितं हरिप्रीत्यर्थमेव तपो जुषाणं तपः कुर्वंतं । ननु समर्थस्य हरेर्विद्यमानत्वात्कथमरक्ष्यमाण इति चेन्न । रुद्रस्य यशो दातुमेव हरेरुपेक्षया स्थितिः स्यात् । रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं प्रभुः । न संजह्रे समर्थोऽपि वायुंचोचे प्रशांतये इति वचनादिति ज्ञेयं ॥ २० ॥ भूतात्मन् भूतानां स्वामिन् भूतानां भावयतीति भूतभावन ॥ २१ ॥ सर्वजगतो बंधमोक्षयोस्त्वमेक ईश्वरः कर्ता कुशलाः पुण्यवंतो मोक्षार्थिनो वा ॥ २२ ॥ सदेहाभिमानी हरये प्रणमेत्केवलायचेति वचनाद्रुद्रांतर्यामिणमपि स्तुवंति ॥ गुणमय्येति । हे प्रभो रुद्रांतर्यामिन् । गुणमय्या त्रिगुणात्मिकया स्वशक्त्या स्वाधीनप्रकृत्या ज्ञानादिगुणात्मिकया स्वरूपशक्त्याऽस्य जगतो यदा स्वर्गादीन् धत्से । तदा हे भूमन् स्वदृक् सिद्धज्ञानो ब्रह्मादि संज्ञां धत्से धारयसि सदसतः सुरासुरतिर्यगादि रूपान् भावान् जीवान् भावयत्युत्पादयतीति तथा नानाशक्तिभिर्विचित्रशक्तिभिः आ समंताद्भासो भासमानं यस्य स तथा । त्वं जगतामनादिकर्ता जगदीश्वरो जगन्नियामकः ॥ २३ ॥ शब्दः सदागमो योनिर्ज्ञप्तिकारणं यस्य शब्दयोनिर्जगदादि महत्तत्त्वं आत्माऽहंकारप्राण इंद्रियाणि द्रव्याणि भूतानि गुणाः शब्दादयः । त्वमेव महदादिसत्ताप्रदस्तत्स्वभावप्रवर्तकः । ऋतुः संकल्पः सत्यं सच्चिदानंदरूपं ऋतं सर्वदैकप्रकारं । ऋगताविति धातोः । पूर्वाविगतवत्सदा स्थितं ब्रह्म नामेत्युक्तवचनात् । धारकत्वाद्धर्मः । अकारोकारमकाराख्यवर्णत्रयात्मकमक्षरमक्षराख्यं तत्त्वयि त्वद्वाचकत्वेन प्रवर्तत इत्यामनंति पठंति । ॐ मित्येकाक्षरमित्यादि वेदांताः। यद्वा । त्रिवृत्त्रिगुणात्मकं यदक्षरं प्रकृतिस्तत्त्वयि त्वदाश्रयमामनंति त्वं जगदादिरित्यादिना हरेर्महत्तत्त्वाद्यैक्येनोक्तिः । तत्तत्सत्तायास्तदधीनेति ज्ञेयं । यदधीनं यस्य सत्ता तत्तादित्येव भण्यत इत्युक्तेः । एवं सर्वं न ज्ञेयं ॥ २५ ॥ अखिलदेवतात्माऽखिलदेवताभ्यो हविर्भागदाताऽग्निस्ते मुखं विदुः । हे लोकभावन जगत्कर्ता । द्वितीयांतेषु विदुरित्यस्य संबंधः । कालं ते गतिं गमनमाखिलदेवतानामंतर्यामिणः ॥२६ नभोंऽतरिक्षं श्वसनं श्वासं नभस्वान् वायुरात्मा मध्यदेहः परेऽपरे च ये आत्मानो जीवास्तेषामाश्रयणं । द्यौः स्वर्गलोकः ॥ २७ ॥ कुक्षिरुदरं छंदांसि गायत्र्युष्णिगनुष्टुप् बृहती पङ्क्तिस्त्रिष्टुप् गत्याख्यानि सप्त छंदांसि ते सप्त धातवः । त्वक्चर्ममेदोमांसरुधिरमज्जाऽस्थ्याख्याः। त्रयीमयात्मन्वेदत्रयप्रतिपाद्यमर्ते ॥ २८ ॥ हे ईश रुद्र । पंचोपानिषदः

सद्यो जातं प्रपद्ये वामदेवाय नमो जेष्ठायाघोरेभ्यस्तत्पुरुषाय विद्महे ईशानः सर्वविद्यानामिति मंत्राः । तव मुखानि तव मुखेभ्यो जाताः । ये मंत्रैस्त्रिंशदष्टोत्तरमंत्रवर्गोऽष्टोत्तरत्रिंशन्मंत्राणां वर्गः तेषामेव पंचमंत्राणां पदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मका मंत्रा उत्पन्ना इत्यर्थः । यच्छिवाख्यं परमात्मतत्त्वं तदंतर्यामित्वेन विद्यमानं परमात्मरूपं वस्तु तदेव तत्स्वयंज्योति शब्दवाच्यं तत्त्वावस्थितिरवस्थानमाश्रयं ॥ २९ ॥ मृग्यैः सत्त्वादिभिर्विसर्गो विविधः सर्गस्तानि सत्त्वादीनि तव नेत्रत्रयं । हे देव । साक्षान्मनुर्मुख्यतो बोधस्वभावः पुराणोऽपौरुषेयछंदोमयो गायत्र्यादि छंदोरूपो ऋषिर्वेदशास्त्रकर्तुस्तवेक्षेक्षणेनाभिव्यक्ता इति ॥ ३० ॥ हे गिरित्र ते तव परंज्योतिरूपमखिललोकपालैर्विरिंचादि वैकुंठसुरेंद्रैर्वैकुंठस्थितदेवश्रेष्ठैश्च मुक्तामुक्तैरित्यर्थः । गम्यं साकल्येन ज्ञेयं न भवति । किंतु तस्य ज्योतिः । यस्य रज आदिकं नास्ति । यच्च ब्रह्म निरस्तभेदो अवताराणां गुणक्रिया हस्ताद्यवयवानां च यस्मात्तत्तथा ॥ ३१ कामश्च दक्षश्च यज्ञश्चाध्वरश्च तथा त्रिपुरकालहराद्यनेकप्राणिहिंसकाश्च तान्क्षपयतः कालगरमतिश्यामं विषकामाध्वरौ सर्वभूतहिंसकान् त्रिपुरविषादींश्च नाशयत इत्यर्थः । गरभक्षणस्याप्यवश्यं भावित्वेन सिद्धवन्निर्देशः । तत्कामादि नाशनं स्तुतये नालमित्यर्थः । स्तुतये नालमित्यत्र हेतुमाह ॥ यदिति ॥ यस्मादात्मकृतमिदं जगदंतकाले प्रलयकाले तव स्वनेत्रान्मुख्यात्तृतीयनेत्राज्जातवन्हेः स्फुलिंगस्य शिखया ज्वालया भसितं भस्मीभूतं तस्माल्लोकत्रयनाशकस्य तवैकदेशत्रिपुरादि नाशनं नाश्चर्यमिति भावः ॥ ३२ ॥ एतादृशं त्वां ये निंदंति ते मूर्खा इत्याहुः ॥ ये त्विति । ये उमया सह चरंतं त्वां तस्यां निरतमत्यासक्तं कामिनं कत्थंते प्रलपंति । तथा स्मशाने चरंतमुग्रं वपुषं क्रूराकारं कत्थंते । कथं भूतं त्वां । आत्मारामो गुरवो हितोपदेष्टारस्तैर्हृदि चिंतितमंघ्रिद्वंद्वं यस्य स तथा भूतमपि तपसाभितप्तमपि तपः कुर्वंतमपि ते जनास्तव भूतभूतिं पूर्णैश्वर्यमाविदन्न जानंत इत्यर्थः । मूर्खा इति भावः । अत एव हीनलज्जास्त्यक्तलज्जाः कथमात्मारामैः सेवितचरणयुगलस्य कामीत्यसंभवः । कथं वा शांतस्य तपस्विन उग्राकारत्वं संभवतीत्यविचार्यैव प्रलपंतीत्यर्थः ॥३३॥ आस्तां तावन्निंदकानां वार्ता महतोऽपि तव स्वरूपं न जानंतीत्याहुः ॥ तत्तस्येति । यतस्तव चर्या दुर्बोधा । तत्तस्मात्सदसतो मूर्त्तामूर्त्तजगतोः । मूर्त्तं सदिति संप्रोक्तममूर्त्तमसदुच्यत इत्युक्तेः । परतो विलक्षणायाः प्रकृतेः परस्य भूम्नः पूर्णस्य ते तवांजः साकल्येन स्वरूपगमने स्वरूपज्ञानेऽपि ब्रह्मादयो न प्रभवंति न समर्थाः

संस्तवने न शक्ता इति किमु वाच्यं । यदा ब्रह्मादयोऽप्यसमर्थास्तदा वयं संस्तवने न शक्ता इति किमु । कुतः । यतो वयं तेषां ब्रह्मादीनां सर्गे सृष्टिप्रवाहे सर्गविषया उत्पन्ना अत्यंतावार्चीनाः । अपि तथाऽपि अस्मत्कृतस्तवनं भक्तिमात्रं भक्तिप्रकटनमात्रमित्यर्थः। शक्तिमात्रमिति पाठे एतत्स्तवनमात्मशक्तिपरिमितमात्रमित्यर्थः ॥३४॥ असामर्थ्यमेवाहुः ॥ एतदिति । एतत्पुरतः स्थितं तव वपुः परं केवलं प्रपश्यामः । परं केवलं सर्वोत्कृष्टं तवैतदंतर्यामिरूपं न पश्यामः । तथाऽपि त्वद्दर्शनादेव कृतार्था इत्याशयेनाहुः ॥ मृडनाय हीति । अव्यक्तकर्मणस्ते व्यक्तिः प्रादुर्भावो लोकस्य मृडनाय पालनायेत्येतत्परं केवलं प्रपश्यामो विभ्रः । परमन्यत्ते तव प्रयोजनं प्रपश्यामः । कस्मादस्माद्विषाद्रक्षेति भावः । अत्र देवदेवेत्यारभ्य रुद्रस्तुतौ रुद्रेऽसंभाव्यमानप्रकृतिपरत्वब्रह्माज्ञेयत्वादि गुणाधिक्यकथनं रुद्रांतर्यामिविषयत्वेन । न तु हरिहरयोरभेदाभिप्रायेण । सर्वात्माप्रीतये हरिरित्युक्तं । यत्र रुद्रेणैव विषपानेन मम हरिः प्रीतो भवतीति भवानीं प्रत्युक्तत्वेन भेदस्यैव प्रतीतेः ॥ ३५ ॥ तासां प्रजानां व्यसनं क्लेशं भृशपीडितो द्रवीभूतचित्तः सन् ॥ ३६ ॥ विषपाने प्रवृत्तं मां मत्प्रभावमविचार्य कथंचिदियं प्रिया वारयेदिति शंकया तामनुमोदयन्नाह ॥ अहो बतेति । हे उमे । वैशसं दुःखमुपस्थितं प्राप्तं ॥ ३७ ॥ प्राणपरिप्सूनां प्राणरक्षणेच्छूनां विधेयं कर्म मे मया कृतः । हि यस्मात्प्रभोः समर्थस्यैतावानर्थः प्रयोजनं ॥ ३८ ॥ दीनपरिपालनविषये शिष्टाचारोऽप्यस्तीत्याह ॥ प्राणैरिति । आत्ममाययेश्वरमोहकशक्त्या मोहितेषु भूतेषु बद्धवैरेषु सत्सु परस्परं जिघांसुषु सत्सु क्षणभंगुरैः प्राणैः पांति रक्षंति । लोके हि साधवः प्राणिषु केनचिन्निमित्तेन मिथो हंतुमिच्छत्सु स्वप्राणं दत्वाऽपि तान् आपत्सु मोचयंति । तद्वदहमप्येतान्प्राप्तापदो मोचयिष्यामीति भावः ॥ ३९ ॥ कृपयतः कृपां कुर्वतः सर्वात्मा सर्वांतर्यामी सर्वस्वामी वा प्रीयतेऽस्यां चराचरसहितः सन् ॥४०॥ प्रभावज्ञा रुद्रसामर्थ्यं जानंती ॥४१॥ करतलीकृत्य करतलपरिमितमात्रं कृत्वा व्यापि सर्वत्रप्रसारितं हालाहलं विषं रुद्रोऽभक्षयत् ॥ ४२ ॥ तस्यापि महासमर्थस्यापि रुद्रस्य वीर्यं स्वसामर्थ्यं गलकल्मषो गलदोषो विषं । किं तद्वीर्यं यस्माद्गले नीलं नीलरूपं चकार । तच्च गलनैल्यं साधोर्दयालो रुद्रस्य विभूषणमभूत् ॥ ४३ ॥ ४४ ॥ दयालूनां लोकोपकारार्थं प्रवृत्तानामेतादृशासह्यकार्यकरणं स्वभाव इत्याह ॥ तप्यंत इति । लोकतापेन तप्यंते लोकानां तापं दृष्ट्वा स्वयमपि संतापं प्राप्नुवंति । तेन च परतापं परिहरंतीति भावः । अनेन

किं प्रयोजनमित्यत आह ॥ परमेति । अखिलांतर्यामिणः पुरुषस्य हरेस्तत्परमाराधनं महापूजा भवति ॥ ४५ ॥ मीढुषोऽभीष्ट-कर्तुर्दाक्षायणी उमा वैकुंठो हरिः । शशंसिर इत्यनेन रुद्रस्य यशो दातुमेव हरिणा विषं न पीतमिति ज्ञायते ॥ ४६ ॥ पाणेर्हस्तात्प्रस्कन्नं गलितं । अहयोऽजगरा विषौषध्यो वृक्षादयोऽपरे च ये दंदशूका महासर्पास्ते विजहुः ॥ ४७ ॥ इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ॥ ८–७ ॥ ॥

॥ हरिः ॐ ॥ वृषांकेण वृषध्वजेन शिवेन । हविर्धानी कामधेनुः ॥१॥ तासामग्निहोत्रीं कामधेनुं देवानां सोमपानं यस्मिन्नस्य यज्ञस्य संबंधिने मेध्याय पवित्राय हविषे । देवयानस्येति पाठे ब्रह्मलोकमार्गप्रापकस्य यज्ञस्येत्यर्थः ॥२॥ चंद्र इव पांडुरः । स्पृहामिच्छां । ईश्वरशिक्षया मथनात्प्रागेव कृतया ॥ ३ ॥ चंद्रपांडुर इत्यनुवर्तते । वारणेंद्रो गजश्रेष्ठश्चतुर्भिर्दंतैः शिखरतुल्यैः । भगवतो रुद्रस्य श्वेताद्रेः कैलासस्य महं महत्त्वं हरन्विनिर्गत उदभूत् ॥४॥ सुरलोकं स्वर्गलोकं विभूषयतीति तथा । तन्महिमानमाह ॥ पूरयतीति । अर्थैरिष्टैः शश्वत्सर्वदा । परीक्षिद्राजानमेव दृष्टांतयति ॥ भुवि यथा भवानिति ॥५॥ पद्मरागः पद्मरक्तवर्णः । निष्कमाभरणविशेषः । वल्गुभिः सुंदरैर्गत्यादिभिः स्वर्गिणां रमण्यो रतिं कुर्वंत्यः ॥ ६ ॥ विद्युद्विद्योतमाना सौदामिनी यथा तद्वत् । स्वकांत्या दिशो रंजयंती श्रीर्भगवत्प्रिया साक्षाद्रमाऽऽविरभूदित्यर्थः ॥ तस्यां रूपादिमहिम्नाऽऽक्षिप्तमाकृष्टं चेतो येषां ते तथा । ज्ञानिनामपि रागजनकलोकविलक्षणसौंदर्यं लक्ष्म्यामस्तीति द्योतयितुं सुरग्रहणं कृतमित्यवधेयं ॥८॥ इदानीं लक्ष्म्याः स्वयंवरं वक्तुमादावभिषेकमहोत्सवमाह ॥ तस्याश्चेत्यादिना । मूर्तिमत्यः शरीरधारिण्यः ॥ ९ ॥ अभिषेचनिका अभिषेकोचिताः सकलौषधीः सकलधान्यानि पंचपवित्राणि गोमयादीनि पंचगव्यानि वसंतो वसंतत्वाभिमानिदेवता मधुमाधवं चैत्रवैशाखफलसंभवं फलपुष्पादिकं ॥१०॥ अभिषेकमभिषेकविधिं भद्राणि मंगलानि गायनानि । नर्तक्यो नटनस्त्रियः ॥ ११ ॥ शंखादीनां तुमुलो गंभीरा निःस्वना येषु तान्मृदंगादीन् ॥ १२ ॥ दिगिभा दिग्गजाः ॥ १३ ॥ मधुना मकरंदपानेन मत्ताः षट्पदा भ्रमराः । तस्यां तां वैजयंतीं स्रजं । अत्र समुद्रो वरुणस्यैव रूपांतरं न पृथगिति ज्ञातव्यं ॥ १४ ॥ प्रजापतिर्विश्वकर्मा । अजो ब्रह्मा । नागः सर्पः ॥१५॥ इदानीं स्वयंवरप्रकारमाह ॥ तत इति । कृतस्वस्त्ययनाः कृतपुण्याहवाचनाः । नदंतो हुंकारं कुर्वंतो द्विरेफा भ्रमरा यस्यास्तामुत्पलमालां

चचाल निरगात् ॥१६॥ अतिकृशोदरी सूक्ष्ममध्या निरंतरमन्योन्यमत्यंतसंबद्धं सममेकप्रकारं स्तनद्वयं च दधती चंदनेन कुंकुमेनोक्षितं लेपितं नुपूरयोर्वल्गुभिः श्राव्यैः सिंजितैर्ध्वनिभिर्युक्ता ततस्ततस्तत्र तत्र विसर्पंती शनैः शनैर्गच्छंती ॥ १७ ॥ गंधर्वादीन्विलोकयंती रमा तेषु मध्ये आत्मनः स्वस्याः पदं पद्लक्षणमाश्रयं ध्रुवं निरवद्यं निर्दोषमव्याभिचारिणो नित्याः संतो निर्दुष्टा गुणा यस्मिंस्तन्नान्वविंदत नामन्यत। त्रिविष्टपेशास्त्रिविष्टपसंबंधिनो देवाः ॥१८॥ कुतो नामन्यत इत्यतः। कचित्कस्यचिद्दोषस्य सद्भावादित्याह ॥ नूनमित्यादिना। कचिद्गुरुशुक्रादिषु ज्ञानमस्ति। तज्ज्ञानं संगेन फलासक्त्यारहितं न कचिकाचिद्ब्रह्माऽस्ति। तस्य कामनिर्जयो नास्ति। प्रजापतिः स्वां दुहितरमभ्यध्यायदिति श्रुतेः। यः परतो व्यपाश्रयः परापेक्ष इंद्रादिः स ईश्वरः किं नैवेत्यर्थः ॥२०॥ क्वाचित्संयमिन्यां धर्मो यमस्तस्य भूतसौहृदं भूतेषु प्राणिषु सौहृदं दया नास्ति। निरनुक्रोशाधिकारप्रवृत्तत्वात्। क्वाचित्पुंसि पुण्यलक्षणधर्मोऽस्ति। तस्य भूतसौहृदं नेति सामान्य निषेधोवा। क्वचित्पुरुषे त्यागो नामार्थिभ्यो देवतादिभ्यो वा न्यायार्जित धनत्यागः। तच्च यजनमपि मुक्तिकारणं न। भगवदर्पण बुध्याऽननुष्ठितत्वात्। कस्यचित्पुंसः कार्तवीर्यार्जुनादेः सामर्थ्यमस्ति। तदजवेगन कालवेगेन परिहृतं न भवति। अनित्यमित्यर्थः। गुणसंगेन नित्यसंगेन विषयसंगेन वर्जितः स न कदाऽपि द्वितियो मम वरो न हि। समाधिनिष्ठत्वात्। वरस्य वध्वापेक्षया द्वितियत्वाद्वितीय इत्युक्तं। अत एव वध्वा वधुवरा इति प्रथमतो निर्देशः ॥२१॥ क्वचिन्मार्कंडेयादौ चिरायुर्दीर्घायुषमस्ति। तत्र शीलमंगलं मंगलशीलमनुकूलस्वभावो नास्ति। इंद्रियादमनशीलत्वात्। क्वचित्पुंसि तदपि तादृशं शीलमप्यस्ति। तत्रायुषः स्थैर्यं न वेद्यं दुर्ज्ञेयं। अकस्मादेव मृत्युसंभवात्। यत्र कुत्र च रुद्रादाविंद्रियदमनाद्यभावात्। मंगलं शीलमायुषः स्थैर्यं निश्चयश्चेत्युभयमप्यस्ति। तथाऽपि सोऽप्यमंगलः। स्मशानवासाद्यमंगलचेष्टितैर्गर्हितः। ब्रह्माऽतिवृद्धः। सूर्यः संतापकर्ता। वायुश्चंचलो रुद्रो दिगंबर इंद्रो गर्वी चंद्रः प्रतिदिनं क्षययुक्तः। एवमादि प्रकारेणापि रमादेव्या ब्रह्मादीनां दोषाश्चिंतिता इति ज्ञेयं। एष ब्रह्मातिवृद्धस्तपति दिनपतिश्चंचलो मातरिश्वा दिग्वासा नीलकंठस्त्रिदशपतिरसौ गर्वितः क्षीयतेऽब्जः। इत्थं देव्याऽपि चिंत्य भ्रमरकुलकलागीतशब्दप्रफुल्ला दत्ता माला मुरारेः सुरतरुकुसुमालंकृता पातु युष्मान् इत्यादि पुराणवचनात्। तर्हि सर्वेषां सदोषत्वेन तव निर्दोषः पतित्वेन स्वीकार्यः क इत्यतो मुकुंदं लक्षीकृत्याह ॥ कश्चनेति। लोके विलक्षणः सुमंगलो निर्दोषश्च मां कांक्षते। तं

वरं वृणोमीत्याशयः । यद्वा । कश्चनेत्येतत्पदद्वये कश्च यः कश्चिल्लोकविलक्षणः सुमंगलो निरवद्यश्चास्ति । सोऽपि मां न हि कांक्षते । आत्मारामादित्याशयः ॥२१॥ एवं विमृश्य विचार्य रमा निरपेक्षमपि मुकुंदमेव वव्रे । तत्र हेतुः ॥ अव्यभिचारिणेत्यादि । अव्यभिचारिभिरन्यत्राविद्यमानैः परिपूर्णैरित्यर्थः । सद्भिः कल्याणैः ज्ञानैश्वर्यप्रभवानंदतेजःशक्त्यादिभिर्वरं सर्वोत्तमं निजैकाश्रयता केवलं स्वाश्रयता परानपेक्षत्वं स एव गुणस्तस्याश्रयं स्वातंत्र्यमित्यर्थः । सुशीलत्वादि सर्वैर्गुणैर्निमित्तैरपेक्षितं वरणीयं ममेप्सितमतिप्रियं । यद्यपि भगवान्स्वयमात्मारामत्वेनान्यनिरपेक्षस्तथाऽपि तद्गुणलुब्धाऽसमा तदपेक्षयाऽहं तत्सेवया कृतार्था स्यां किमन्यैः प्राकृतैरपि तमेव वव्र इति भावः ॥२२॥ वरणप्रकारमाह ॥ तस्येति । तस्य मुकुंदस्यांसे स्कंधदेशे उशतीं मनोहरां नवकंजमालां निधाय निकटे तत्समीपे तूष्णीं तस्थौ । कथं भूता । सव्रीडहासेन लज्जायुक्तमंदहासेन विकसितनयनेन । स्वधाम स्वस्य स्थानभूतं तदुरो विष्णोर्वक्षो भीता । पश्यंतीति यावत् । कथं भूतां मालां । माद्यतो मकरंदयुता ये मधुव्रातास्तेषां वरूथस्य वृंदस्य गिरा झंकारेणोपघुष्टां नादितां ॥२३॥ भगवानपि तस्या लक्ष्म्या वक्षस्थलं ददावित्याह ॥ स्वस्या इति । त्रिजगतो जनको हरिर्विभूतयो विभवा यस्यास्तस्यास्त्रिजगतो जनन्याः श्रियः स्ववक्षः परमं सुस्थिरं निवासमकरोत् । यत्र वक्षसि स्थिता श्रीः स्वाः प्रजाः साधिपतींस्त्रिलोकांश्च सकरुणेन निरीक्षणेनैधयतावर्धयत् ॥२४॥ वादित्राणां वाद्यानां पृथगनेकविधः ॥२५॥ अंगिरोनाम प्रजापतिर्ब्रह्मपुत्रः । अवितथैरबाधितार्थैर्वेदमंत्रैस्तल्लिंगैर्विष्णुलिंगप्रतिपादकैर्विष्णुं हरिं तल्लिंगैः श्रीलिंगोपेतैः श्रीसूक्तैर्विभुं श्रियमिति वा ॥२६॥ परामतिशयितां निर्वृतिं सुखं ॥२७॥ लक्ष्म्या दैत्यादयो यदोपेक्षितास्तदा ते निःसत्त्वा धैर्यरहिता उदरपोषण एव रता निरुद्योगा आलस्यवंतो गतत्रपा निर्लज्जा बभूवुरित्यन्वयः ॥२८॥ वारुणी सुरभिमानिनी देवता ॥२९॥ काश्यपैः कश्यपपुत्रैर्देवदैत्यादिभिः । पुरुषो हरिः ॥३०॥ दीर्घौ पीवरौ पुष्टौ दोर्दंडौ भुजदंडौ यस्य सः । कंबुवद्रेखात्रययुक्तग्रीवा यस्य सः ॥३१॥ नीलकुंचितः केशानामंतो यस्य सः । सुभगः सुंदरः सिंहविक्रमः प्रसिद्धपराक्रमः ॥३२॥ अमृतेनापूर्णं संपूर्णं कलशं बिभ्रत् । वलयाभ्यां कंकणाभ्यां भूषितः । विष्णोरंशस्य पद्मनाभस्यांशेनैकदेशेन संभवः प्रादुर्भावो यस्य सः ॥३३॥ आयुर्वेदं वैद्यशास्त्रं जानातीति स तथा । अमृतेनाभृशं परिपूर्णं सर्ववस्तूनि कामधेन्वादीनि ॥३४॥ लिप्संतः प्राप्तकामा अपहरन् अपहृतवंतः । अमृतपानेन जरामरणशून्याः संतः सर्वमाप्स्याम

इति भाजनममृतकलशमपाहरमिति भावः । अमृतभाजनेऽमृतपात्रे ॥३५॥ मा खिद्यत खेदं नाप्नुत । वोऽर्थं प्रयोजनं स्वमायया स्वसामर्थ्येन दैत्यानां मिथः कलहोत्पादनेन साधयिष्ये । इत्याहेति शेषः ॥३६॥ तदेवाह ॥ मिथ इति । तदर्थेऽमृतार्थे तर्षः कामस्तद्युक्तानि चेतांसि येषां ते । तेषामित्येवं समबलानां कलिरभूत् ॥३७॥ दुर्बलानां तु क्रोशप्रकारमाह ॥ देवा इति । एतास्मिन्नेवामृतसाधने तुल्येनायासेन हेतवो ये देवास्ते स्वभागं प्राप्तुमर्हंति । यथा सत्रयागे सर्वेषां समबलं तद्वत् ॥३८॥ इति दुर्बला दैत्या स्वेषाममृताभावेन गृहीतकलशान् प्रबलान् दैत्यान् प्रत्याहुः । किमिति । देवाः स्वभागमर्हंति । कुतः । तुल्यायासहेतवोऽतः सत्रयाग इव इत्युक्ताः । दुर्बला दैत्याः प्रबलान्स्वान्दैत्यान् प्रत्यषेधन् ॥३९॥ एतस्मिन्नंतरे दैत्यानां मिथः कलहकालेऽनिर्देश्यमिदमेतादृशमिति निर्देष्टुमशक्यं ॥४०॥ तद्भगवतः स्त्रीरूपं वर्णयति ॥ प्रेक्षणीयेत्यादिना । प्रेक्षणीयमुत्पलमिव श्यामं समानयोः कर्णयोराभरणयोः कुंडले यस्मिन्सुकपोलं च तदुन्नसमुन्नतनासिकं चाननं यस्मिंस्तत् ॥४१॥ नवयवनानिवृत्तयोर्नितरां पुष्टयोः स्तनयोर्भारेण मुखमोदे मुखपरिमलेऽनुरक्तानां निरतानामलीनां भृंगाणां झंकारेणोद्विग्ने भ्रांते लोचने यस्य तत् ॥४२॥ सुष्ठु ग्रीवा यस्मिंस्तत् सुग्रीवं कंठे आभरणं यस्य तत्कंठाभरणं च तथोक्तं । सुभुजयोरंगदाभ्यां च भूषितं ॥४३॥ विरजांबरेण स्वच्छवस्त्रेण संवीतं परिवेष्टितं नितंब एव द्वीपो विशालत्वात्तत्र शोभा यस्यां तया कांच्या प्रकर्षेण विलसत् । वल्गु मनोहरं यथा भवति तथा चलतोश्चरणयोर्नूपुरे यस्मात् । सव्रीडेन स्मितेन सह विक्षिप्ता कंपिता या भ्रूस्तस्या विलासेन सह यान्यवलोकनानि तैर्दैत्ययूथपानां चेतः सुमुहुरातिशयेन कामसुद्दीपयन् ॥४४॥॥४५॥ ते दैत्या दस्युधर्मेणान्योन्यतः परस्परमपहरंतः क्षिपंतः परुषं वदंतः संतः ॥४६॥ अहो रूपं सौंदर्यं अहो धामेति वदंतो हृच्छयवंतः ॥४७॥ त्वं का देवादिमध्ये किं जातिर्या कुतः कस्माद्देशादागताऽसि । कस्य पुत्र्यासि । मथ्नतीव क्षोभयतीव ॥४८॥ त्वाममरादिभिः स्पृष्टपूर्वा ॥४९॥ सर्वेंद्रियाणां मनसश्च प्रीतिं विधातुं सघृणेन दयालुना विधिना नूनं हरिणेव प्रेषिताऽसि किं ॥५०॥ एकवस्तुन्यमृतविषये । शं सुखं विधत्स्व कुरुष्व ॥५१॥ दायादाः पुत्राः । भेदो मिथो विग्रहो न भवेत्तथा ॥५२॥ मायया स्वेच्छया स्त्रीरूपं यस्य सः ॥५३॥ पुंश्चल्यां वेश्याशीलगुणवत्यां मयि कथं संगताः सक्ताः । भवतां ऋषिषु पुत्रत्वा-

दित्यर्थः ॥५४॥ कुतो विश्वासं न यांतीत्यत आह ॥ सालावृकाणामिति । मृगविशेषाणां स्वैरिणीनां पुंश्चलीनां । हे सुरद्विषः । नूत्नं नूत्नं प्रतिक्षणं नूतनमेव विचिन्वतां मृगयंतीनां ॥५५॥ क्ष्वेलितैः छलमिश्रितवचनैराश्वस्तमनसः समाहितांतर्भावेन केनाप्यभिप्रायेण गंभीरं यथा भवत्येवं जहसुः ॥५६॥ ईषत्स्मितेन शोभा यस्यास्तया गिरा । क्वच कुत्रचित्तथा कृतं साधु वाऽसाधुवा यद्यभ्युपेतमंगीकृतं तर्हि सुधां विभजे ॥५७॥ प्रमाणमियत्तां तन्न जानंतीत्यप्रमाणविदस्तस्याः स्वभावस्थितिं न जानंत इत्यर्थः ॥५८॥ द्विजैः कृतस्वस्त्ययनाः कृतपुण्याहवाचनाः ॥५९॥ यथोपजोषं यथा प्रहतानि नूतनानि । प्राक्कूलेषु प्रागग्रेषु कुशेषु प्राविशन् उपाविशन् ॥६०॥ धूपैरामोदितायां सुरभिकृतायां जुष्टायां मंगलकृतायां ॥६१॥ अथ तस्यां शालायां । हे नरेंद्र । कलशपाणिराविवेश । कथं भूता । कलभो गजपोतस्तेन तच्छुंडालवत्कलभसदृशयोरुर्वोर्लसद्दुकूलं यस्याः सा । स चासौ श्रोणीतटे मंडलेऽलसा मंदगतिर्यस्याः सा मदेन विव्हले चंचलेऽक्षिणी यस्याः सा सिंजितेन शब्देन कूजती ॥६२॥ श्रीमुखीं परदेवताख्यां संवीक्ष्य देवासुराः संमुमुहुः । कथं भूतां । कनकमये कुंडले यस्याः सा कनककुंडल चारवः कर्णादयो यस्याः सा कनककुंडला च सा चारुकर्ण नासाकपोलवदना च । तामुत्स्मितवीक्षणेन स्मितपूर्वकावलोकनयुक्तां विगलितो विस्रस्तः स्तनोपरि बद्धपाट्टिकाया अंतो यस्याः सा ॥६३॥ एवं तान्मोहयित्वा यत्कृतवान्हरिस्तदाह ॥ असुराणामित्यादिना । असुराणां सुरादानममृतदानं । सर्पाणां सुधादानमिव । सुधा पयसि देवान्ने इति वचनात् । दुर्नयमन्याय्यं महाजात्यैव स्वभावेनैव नृशंसानां क्रूराणां दैत्यानां तां सुधां नैव व्यभजत् ॥ अयं भावः ॥ दैत्यैर्मया कृतं साधु वाऽसाधुवा सर्वमनुमतमेवातो मद्भक्तान्देवानेव सुधां पाययिष्यामि । किंच तैर्यथा न्यायं विभजस्वेत्युक्तं । न चैतेभ्यो जात्यैव क्रूरेभ्योऽमृतदानं न्याय्यं न । अमृतं सुधामुभयेषां न ददामीति ॥६४॥उभयेषां देवासुराणां पंक्ती पृथग्विविच्य कल्पयित्वा विधाय तासु पंक्तिषु स्वेषुजातीयेषु जनेषु मध्ये तान्देवासुरान् उपवेशयामास । तत्रासुराणां प्रतारणार्थमेवोपवेशनं ज्ञेयं ॥६५॥ उपसंचरैः समीपगमनबहुमानाप्रियवाक्यादिभिर्वंचयन् दूरस्थानपि देवान् समयं कालविशेषं पालयंतः प्रतीक्षंतस्तस्यां कृतस्नेह आसक्तियैस्ते स्त्रिया सह विवादस्य जुगुप्सया । निंदितत्वादिति यावत् ॥६६॥६७॥ कुतः । अतिप्रणयोऽत्यंतप्रीतिर्यैस्ते प्रणयस्यापायेन नाशेन कातरा भीताः । किंचैते देवास्तावत्कृपणाः पूर्वं किंचित्पिबंतु यूयं तु धीराः

क्षणं प्रतीक्षध्वमित्यादि बहुमानेन चाबद्धा नियंत्रिता दैत्याः । समयपालनत्वं स्नेहत्वं स्त्रीविवादजुगुप्सितत्वं कृतातिप्रणयत्वं प्रणयापायकातरत्वं बहुमानेनाबद्धत्वं चेत्येतैः षड्भिर्निमित्तैर्विप्रियं किंचन नोचुः । तूष्णीमासंश्च ॥६९॥ देवसंसदि देवपंक्तौ । देवलिंगेन देववेषेण प्रतिच्छन्नोऽप्रकटितस्वरूपः स्वर्भानू राहुश्चंद्रार्कयोर्मध्ये प्रविष्ट उपविष्टः सोमममृतमपिबत् । चंद्रार्काभ्यां सूचितो ज्ञापितः ॥६९॥ हरिस्तस्य राहोरमृतं पिबतोऽसतः क्षुरवच्छुरिकावद्धाराः प्रांता यस्य तेन चक्रेण शिरो जहार कबंधः शिरोरहित देहः सुधया आप्लावितः संस्पृष्टः ॥७०॥ अमरतां नाशरहितं नीतं प्राप्तं । शिरोग्रहं सूर्यादिवद्ग्रहत्वादिकारणं कल्पयामास । यो राहुश्चंद्रार्कयोर्वैरधीः पर्वाणि पौर्णिमायाममावास्यां च चंद्रार्कौ प्रतिग्रासितुमभिधावति । तद्ग्रहं राहुनामकं ग्रहमचीक्लृपदिति संबंधः ॥ ७१ ॥ स्वरूपं पुरुषरूपं ॥ ७२ ॥ हरिभक्तानामेवोद्यमफलं नान्येषामित्येव व्याख्याय तात्पर्यमाह ॥ एवमिति । समादेशादयो येषां ते तादृशा अपि हेतुर्मंदराद्रिरर्थः समुद्रे क्षिप्तवीरुधादि द्रव्यं विविधः कल्पः केषांचित्फलं नियतं केषांचिन्नेति वैचित्र्यमित्यर्थः । तथा च केवलविकल्पो वैचित्र्यं येषां ते फले विकल्पाः फलवैषम्यवंतो बभूवुरित्यर्थः । निमित्तं वदन् फलवैषम्यमाह ॥ तत्रेति । तत्र देवासुरेषु मध्ये सुरगणा यस्य हरेः पादपंकजयो रजसः परागस्याश्रयणादंजसा । अंजः शब्दोऽवधारणे । सेवनादेवेत्यर्थः । आपुः प्राप्नुवन् । दैत्यास्तु न प्रापुः । स हरिः सेव्य इत्यर्थः ॥ ७४ ॥ एतदेवोपपादयति ॥ यदीति । असुः प्राणो वसु धनं प्राणादिभिर्देहात्मजादिषु देहापत्यकलत्रादिषु यद्युज्यते प्रयुज्यते केवलं देहाद्युद्देशेन वित्तादिना पोषणादिरूपं यत्कर्म क्रियत इत्यर्थः । तदसदल्पफलं भवति । कुतः । पृथक्त्वात्पोषणादेः केवलं देहादिविषयमात्रत्वेन हरिविषयादित्वाभावात् । तथा तैरेव वित्तादिसाधनैरीश्वरोद्देशेन यत्कर्म क्रियते तत्सन्महाफलं भवति । कुतः । अपृथक्तत्वात्तत्कर्मण ईश्वरं विनाऽकृतत्वात् । ईश्वरभक्त्यैव कृतत्वादिति यावत् । तर्हीतो देवताद्यर्चनाभावात्कथं महाफलं स्यादित्यत आह ॥ सर्वस्येति । यन्मूलस्य प्रधानस्य हरेर्निषेचनमर्चनं तत्सर्वस्येतरदेवादेरपि भवति । कुतः । अपृथक्त्वात्परिवारतया स्थितत्वादित्यप्यर्थो ग्राह्यः । यस्य कस्यापि पूजेश्वरप्रीत्युद्देशेन कृता चेत्सफला नान्यथा । अतो देवानां तादृशत्वात्फलप्राप्तिर्न दैत्यानामभक्तत्वादिति भावः ॥ ७५ ॥ इति श्रीभागवतटिप्पण्यामष्टमोऽध्यायः ॥ ८—८ ॥ ॥

॥ हरिः ॐ ॥ पूर्वाध्यायांतोक्तमेवानुवदन् हरेर्गमनप्रकारं वक्ति ॥ इतीति । कर्मण्यमृतमथनेयुक्ता यत्ताः सन्नद्धा अप्यमृतं नाविंदन्न प्राप्ताः । विदू लाभ इति धातोः । वासुदेवपराङ्मुखा इति हेतुगर्भविशेषणं ॥ १ ॥ सुरान् स्वभक्तान् । पश्यतां सतां ॥ २ ॥ स आयासवद्भिर्देवैः स्वान्परित्यज्यामृते पीते दैत्याः किमु कुर्वन्निति तत्राह ॥ सपत्नानामिति । सपत्नानां वैरिणां परामृद्धिं समृद्धिं । दितिनंदना दैत्याः ॥ ३ ॥ यैधिता वर्धिताः प्रतिसंयुयुधुराभिमुखा बभूवुः ॥ ४ ॥ रणं युद्धमुदन्वतः समुद्रस्य रोधसि तीरे तुमुलोऽतिशयितः ॥ ५ ॥ रणे संरब्धमनस आग्रहयुक्तांतःकरणा अन्योन्यं समासाद्य विजघ्नुः ॥ ६ ॥ डमरीति वाद्यविशेषः ॥ ७ ॥ द्वंद्वयुद्धमभूदित्याह ॥ रथिन इति । समसज्जंत संसक्ताः ॥ ८ ॥ तेषां वाहनान्याहुः ॥ उष्ट्रैरिति । द्वीपिभिः शार्दूलैः । हरिभिः सिंहैः कपिभिर्वा ॥ ९ ॥ श्येनभासैः श्येन पक्षिभिः । तिमिंगिलैर्मत्स्यविशेषैः । खड्गैर्मृगविशेषैः । अरुणैर्वनसत्त्वविशेषैः ॥ १० ॥ शिवाभिर्गोमायुभिः । आखुभिर्मूषकैः । कृकलासैः सरटाभिः । बस्तैर्मेषैः ॥ ११ ॥ जलस्थलखगैर्जलस्थलपक्षिभिः । विकृता विकृतावयवा विग्रहा येषां तैः सत्त्वैर्जंतुभिः ॥ १२ ॥ चित्रध्वजपटादिभिर्देवदानववीराणां ध्वजिन्यौ सैन्ये रेजतुरित्यन्वयः । सितैर्धवलैरमलैर्निर्मलैर्महाधनैरनर्घ्यैर्वज्रमयदंडोपेतैः । बार्हचामरैः पिच्छाविरचितचामरैः ॥ १३ ॥ वातोद्धूतैरूर्ध्वं क्षिप्तैरुत्तरैरुष्णीषैः शिरोवेष्टनवस्त्रैश्च सत्कृतैः संमृष्टैर्वर्मभूषणैः । कवचैर्भूषणैश्च सूर्यरश्मिभिश्च सुतरां स्फुरद्भिः ॥ १४ ॥ तत्र दृष्टांतः सागरे यादसां जलजंतूनां वरूथिन्यौ वीचीनां तरंगाणां मालाभिः राजाभिर्यथा रेजतुस्तद्वत् ॥ १५ ॥ संख्ये युद्धे वैरोचनो विरोचनपुत्रोऽसुराणां या चमूस्तस्या यानमास्थित उदये उदयाद्रौ स्थितश्चंद्र इव रेजतुरित्यन्वयः । विहायसाऽऽकाशमार्गेणैव गच्छमानमत एव वैहायसं नाम । येन । दैत्यैस्तक्षकेण निर्मितं ॥ १६ ॥ सर्वसांग्रामिकैर्युद्धसाधनैरुपेतमप्रतर्क्यमेतादृशमिति निर्देष्टुमशक्यं च । दृश्यमानं समदर्शनं दृश्यते न दृश्यते च विद्युद्वत् ॥ १७ ॥ बालेति । चामरादिभिः ॥ १८ ॥ तस्य बलिविमानस्य सर्वतः परितो यानैः सह यूथानां पतयो असुरा आसन् । यूथपतीनाह ॥ नमुचिरित्यादिना ॥ १९ ॥ विरोचनो बलिपिता ॥ २० ॥ हयग्रीवस्तन्नामको दैत्यः ॥ २१ ॥ पौलोमादयो गुणविशेषाः ॥ २२ ॥ सोमस्यामृतस्यालब्धो भागो यैस्तथा बहुशो नितरां जिताः पराभूता अमरा यैस्ते तथा ॥ २३ ॥ महारवान् महाशब्दजनकान् ।

उत्सिक्तान् बलगर्वितान् सपत्नान् शत्रून्दृष्ट्वा बलभिद्देवेंद्रो दिक्करिणां दिग्गजानां स्वराट् स्वर्गपतिः । स्रवत्प्रस्रवणं स्रवंति गलंति प्रस्रवणानि मदजलानि यस्मिन् गजे तं । उदयगिरिपक्षे स्रवंति स्यंदमानानि प्रस्रवणानि निर्झरोदकानि यस्मिंस्तं । अहःपतिः सूर्यः ॥ २४ ॥ २५ ॥ यस्येंद्रस्य सर्वतः समंतात् । नानाविधानि वाहनानि येषां ते । वाय्वग्निवरुणादयो लोकपालाः सहगणैः स्वस्वगणैः सह ॥ २६ ॥ क्षिपंतः परुषवचनैः धिक्कुर्वंतो मिथो नामभिराह्वयंतोऽग्रे प्रथमे द्वंद्वयोधिनं द्वंद्वेन योधिनः संतः ॥२७॥ द्वंद्वान्याह ॥ युयुधेत्यादिना । गुहः स्कंदोऽस्यतायुध्यत ॥ २८ ॥ सवित्रा तन्नामकसूर्येण ॥ २९ ॥ सूर्यो विवस्वान्नामक एव शतेन शतसंख्याकैर्बाणज्येष्ठो येषां तैः ॥ ३० ॥ अनिलो भूतवायुः । निशुंभशुंभाभ्यां । भद्रकाली दुर्गा ॥ ३१ ॥ वृषाकपी रुद्रः । विभावसुरग्निः । ब्रह्मपुत्रैर्दक्षप्रजेश्वरैः ॥ ३२ ॥ मातृभिर्ब्रह्मादिसप्तमातृभिर्ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेंद्राणी चामुंडा सप्त मातर इत्युक्तेः । उशनसा शुक्राचार्येण ॥ ३३ ॥ मरुत एकोनपंचाशन्मरुद्गणाः । वसवो वसुनामका गणाः । रुद्रा रुद्रगणाः ॥ ३४ ॥ एवं द्वंद्वेन संहत्य ॥ ३५ ॥ विनष्टमरणधर्माणां देवानां पराक्रमं वर्णयति ॥ भृशुंडिभिरिति । निस्त्रिंशैः खड्गैर्भिंदिपालसहितैः पूर्वोक्तायुधविशेषैः शिरांसि दैत्यानां चिच्छिदुः । देवा इति शेषः ॥ ३६ ॥ सारोवाहा आरोहंतीत्यारोहाः पुरुषास्तै रहिता अन्ये वाहा उष्ट्रादीनि वाहनानि च । खंडनमेव विशदयति ॥ निकृत्तेति । निकृत्ताश्छिन्ना बाह्वादयो येषां ते शिरोधरा ग्रीवा इष्वास इषोर्बाणस्यासमासनं धनुस्तनुत्रं कवचं छिन्नानि ध्वजादीनि येषां ते ॥ ३७ ॥ तेषां देवादीनां पदाघातैः पादप्रहारै रथांगै रथस्यांगभूतैश्चक्रैश्च चूर्णितादायोधनाद्युद्धभूमेः सकाशादुत्थितो रेणुर्धूलिर्दिशः खमाकाशं द्युमणिं सूर्यमाच्छादयन्सन् तदैव न्यवर्तत सूर्यादेः सकाशान्निवृत्तोऽभूत् । कथं भूतः । असृक् स्रुतिभी रक्तस्रावैः परिप्लुतः सिक्तः सन् ॥ ३८ ॥ शिरोभिर्महाभुजैश्च करभोरुभिः करिकरसदृशैरुरुभिश्च सा भू रणभूमिः प्रकर्षेणास्तृताऽऽच्छादिता सती बभौ । कथं भूतैः शिरोभिः । उद्धृतान्युत्पातितानि किरीटानि कुंडलानि च येभ्यस्तैः । संरंभयुक्ताः कोपाकारयुक्ता दृशो येषु तैः परिदष्टा दशच्छदा ओष्ठा येषु तैः ॥ ३९ ॥ कबंधाः शिरोरहितदेहाः । पतितानि यानि शिरांसि तत्रत्यैरक्षिभिः पश्यंत उद्यतान्यायुधानि यैस्ते दोर्दंडैर्युक्ता आधावंतो द्रुवंतो मृधे युद्धायोत्पेतुरभ्यपद्यंत ॥ ४० ॥ वाहान् ऐरावतपादचतुष्टयरक्षवान् ।

आरोहं गजयंतारं । आच्छैयद्वित्याथ ॥ ४१ ॥ तावद्भिः कलिमुक्तशरसंख्याकैर्भल्लैः शरैः ॥ ४२ ॥ उत्तमं कर्मपात्वं दुर्मर्षोऽपद्यमानो वह्निर्महोल्काभो महोल्मुकसदृशी हस्तस्थां । हरिरिंद्रः ॥ ४३ ॥ विभुरिंद्रः ॥ ४४ ॥ असुरो बलिः सुरानीकोपरि देवसैन्योपरि शैलो मायामयः । हे प्रभो राजन् ॥ ४५ ॥ विटंकान्युन्नतानि शिखराणि यासु ता इत्यर्थः । द्विषतां सुराणां सैन्यं बलं ॥४६॥ महोरगा अजगरा दंदशूका दंशनशीलाः सर्पाः ॥४७॥ यातुधान्यो राक्षसस्त्रियो विवाससो दिगंबरा इत्यर्थः ॥ ४८ ॥ श्वसनसाराथिर्वायुसखः सांवर्तक इव प्रलयाग्निरिव । अधाक् छांदसोऽयं प्रयोगः । अधाक्षीदित्यर्थः ॥५०॥ उद्वेलो वेलामतिक्रांत उद्धूतैस्तरंगैरावर्तैश्चांभसां भ्रमैश्च भीषणः ॥ ५१ ॥ अलक्ष्यगत्याऽदृश्यगत्या विभीषणैर्महामायैरिंद्रजालामायाविनः । एवमन्यैश्च दैत्यैः सज्जमानासु मायासु विषेदुर्विषण्णाः ॥ ५२ ॥ तत्प्रतिविधिं तस्यासुरकृतकर्मणः प्रतिक्रियां यत्र यदा न विदुस्तत्र तैर्ध्यातः सन् विश्वभावनो विश्वपालकः ॥ ५३ ॥ सुपर्णांसयोर्गरुडस्कंधयोः स्थापितपादपल्लवः । नवकंजवद्विकसितपद्मवल्लोचने यस्य सः । अष्टावायुधयुक्ता बाहवो यस्य सः श्रीश्च कौस्तुभश्चानर्घ्याणि किरीटकुंडले चोल्लसंति श्रीकौस्तुभादीनि यस्य सः ॥ ५४ ॥ असुराणां कुटकर्ममंत्रादि प्रयोगः । तस्माज्जाता महतां महीयस्यतिशयेन महति प्रतिबोधे आगते सति स्वप्नो यथा नश्यति तद्वत् । अत्र कैमुत्यन्यायमाह ॥ हरिस्मृतिरिति । हरेः स्मृतिरेव सर्वासां विपदां विनाशिनी । किमुत हरिरित्यर्थः ॥ ५५ ॥ इभारिर्गजरिपुः सिंहो वाहो यस्य स तथा कालनेमिः शूलमाविध्य भूमौ पोथयित्वाऽहिनोच्चिक्षेप । त्रयाणां लोकानामधीशो हरिर्गरुडमूर्ध्नि पतच्छूलं हस्तेन गृहीत्वा तेनैव सवाहमरिं कालनेमिमहनज्जघान ॥ ५६ ॥ यस्य हरेश्चक्रेण कृत्तशिरसौ पेततुः । तं भगवंतं माल्यवांस्तन्नाम्नाऽऽहत्य संहत्य । आसाद्येति यावत् । तिग्मगदयाऽऽडजेंद्रं पक्षींद्रं गरुडं यावदहनत्तं हंतुं गदामुन्नमय्येत्यर्थः । तावदाद्यो हरिर्नदतोऽरेर्माल्यवतः शिरोऽरिणा चक्रेणाच्छिनत् ॥ ५७ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ८—९ ॥ ॥

॥ हरिः ॐ ॥ भगवता कालनेम्यादि दहनानंतरं देवाः किमु कुर्वन्निति तत्राह ॥ अथो इति । प्रत्युपलब्धान्याप्या-

पितानि चेतांसि येषां ते । शक्रसमीरणाविंद्रावायू आदिर्येषां ते पुरा द्वंद्वयुद्धकाले यैर्दैत्यैरभिसंहतास्तान् भृशं जघ्नुः ॥ १ ॥
तत्र बलिवासवयोः प्रसक्तं युद्धं किमभूत्तत्राह ॥ वैरोचनायेति । वैरोचनाय बलये संरब्धः कुपितः पाकशासन इंद्र उदयच्छदुद्धृत-
वान् ॥ २ ॥ शत्रुं प्रहृत्यनायोधेन स्वपौरुषं प्रकाश्य प्रहर्तव्यमिति न्यायमनुसंदधानो वज्रमुद्धृत्य व्रजपाणिस्तं वक्ति ॥ वज्रपाणि-
रिति । तं बलिं तिरस्कृत्यागणयित्वा मनस्विनं युद्धोत्साहवंतं सुसंपन्नं युद्धसाधनसमृद्धं ॥ ३३ ॥ इंद्रजालाभिर्बद्धान्यक्षानि
चक्षूंषि येषां तान् बलान् जित्वा । नटः कपटवृत्तिर्यथा तेषां धनं हरति । तथाऽहं मूढवन्मायेशान्मायानियामकान्नो मायाभिर्जेतु-
मिच्छामि ॥ ४ ॥ मत्प्रभावं शृण्वित्याह ॥ आरुरुक्षंतीति । ये मायाभिः कपटवृत्तेर्दिवं परलोकमारुरुक्षंत्यारोढुमिच्छंति । ततोऽ-
प्युत्तिसृक्ष्यंति ऊर्ध्वं मोक्षं गंतुमिच्छंति । तान्दस्यून्पूर्वस्मात्पदादपि चक्रवर्तिपदादप्यधो विधुनोमि पातयामि । मायाभिस्तूत्सि-
सृप्संतमिंद्राग्नामारुरुक्षत इति श्रुतेः ॥ ५ ॥ मंदात्मन् । दुर्मायिनस्ते तव शिरो हरिष्ये । ज्ञातिभिः स्वबंधुभिर्घटस्व सन्नद्धो भव
॥ ६ ॥ कालेन कालनाम्ना हरिणा चोदितानि प्रेरितानि कर्माणि येषां तेषां हरिणा तत्तत्कालकल्पकर्मभोक्तृणामित्यर्थः ।
अनुक्रमात्कदाचिज्जयः कदाचिदपजय इत्येवं क्रमेण सर्वेषामपि स्युः ॥ ७ ॥ तमिमं कीर्तिजयादि कालरशनं कालयंत्रितं सूरयो
ज्ञानिनो जनाः पश्यंति । अतो न हृष्यंति न शोचंति च । तत्रैवं विवेकविषये यूयमपंडिता अनिपुणाः ॥ ८ ॥ एवं कार्यादि-
भगवदधीनत्वात्स्वाधीनत्वं मन्यमानानां वोऽहं शिरो हरिष्य इत्यादिवचनं मूर्खप्रलाप एवेत्याशयेनाह ॥ नेति । वयं तत्र कीर्तिजया-
दावात्मानं त्वं कारणं साधनं मन्यमानानां शोच्यानां शोकार्हाणां । अज्ञानिनामिति यावत् । वो युष्माकं गिरो वचनानि
साध्विति न गृण्हीमो नांगीकुर्मः । कथं भूता गिरः । मर्मताडनं याभिस्ताः । मर्मभेदकवचनेन किं प्रयोजनमिति भावः ॥ ९ ॥
वीरो बलिर्विभूमिमिंद्रमित्याक्षिप्य विनिंद्याकर्णपूर्णैः कर्णपर्यंतमाकृष्टैर्नाराचैः शरैराहनत् । कीदृशमाक्षेपैर्निंदारूपवचनैराहतं ॥१०॥
तथ्यवादिना भगवदधीनमित्येवंरूपयथार्थवादिना तदधिक्षेपं बलिकृताधिकारं । तोत्रेणांकुशेनाहतो द्विपराज इव ॥ ११ ॥ कुलिशं
वज्रं तस्मै बलये परमर्दनः शत्रुसंहारी सयानो विमानसहितः ॥ १२ ॥ पतितं मृतं । जंभस्तन्नामासुरः सुहृत्स्नेहवान् । सख्यु-
र्बलेः ॥ १३ ॥ सिंहवाहो जंभासुरः । जत्रौ कंठे ॥ १४ ॥ विव्हलितः कंपितः । कश्मलं मूर्च्छा ॥ १५ ॥ मातलिना

हरिभिरश्वैः । विबुधेंद्रः ॥ १६ ॥ दानवसत्तमो जंभासुरः । तस्य यंतुः सारथेः कर्मसमयोचितं रथं यानं ॥ १७ ॥ सुदुर्मर्षं सोढुमशक्यं जलं । शूलप्रहारं सेहेऽसहत् । सत्त्वं धैर्यमालंब्याश्रित्य ॥ १८ ॥ नमुचिर्बलः पाकश्चेति ये ज्ञातयः ॥ १९ ॥ परुषैर्निष्ठुरैरवाकिरन् जघ्नुः । मेघवारिभिर्मेघवद्वर्षैः ॥ २० ॥ बलादीनां त्रयाणां पृथग्विक्रममाह ॥ हरीनिति त्रिभिः । बलिस्तन्नामको हर्यश्वस्येंद्रस्य हरीन् परितो विद्यमानान्हयान् तावद्भिर्दशशते लघुहस्तवान् लाघवयुक्तहस्तवान् ॥२१॥ पाकस्तन्नामकदैत्यः शताभ्यां पृथगेकेन शरशतेन मातलिमन्येन शरशतेन सावयवं चक्रोद्यतं सहितरथं सकृत्संधानयुक्तमोक्षणमौर्व्यां शरसंधानं । तमोमोक्षणं च युगपदेवेति तत्कर्मैकरणं । पश्यतामिति शेषः। अद्भुतमभूत् । स्वर्णपुंखैः । पंखो नाम शरमूलप्रदेशः । आहत्येंद्रं विध्वा संख्ये युद्धे ॥ २२ ॥ २३ ॥ शरकूटेन शरसमूहेन प्रावृट् सूर्यं वर्षाकालीनसूर्यं ॥ २४ ॥ तमिंद्रमलक्षयंतोऽपश्यंतोऽनायका नाथरहिताः । अर्णवे भिन्ना नौर्येषां ते भिन्ननाव इत्यर्थः । वणिक्पथा वणिजां भिन्नपंथा वृत्तिर्येषां ते वणिजो यथाऽऽक्रोशं कुर्वंति तद्वत् ॥ २५ ॥ तुराषाडिंद्र इषुबद्धपंजराच्छरानिर्मितपंजरात्साश्वरथध्वजाग्रणीरश्वादिभिः सहितो विनिर्गतोऽग्रणीः सारथिः । क्षपाया निशाया अत्यये नाशे सति ॥ २६ ॥ पृतनां सेनामुदयच्छदुद्धृतवान् ॥ २७ ॥ अष्टधारा अस्त्रा यस्य तेन वज्रेण ज्ञातीनां बलपाकबांधवानां ॥ २८ ॥ आमर्षोऽसहनशोकाभ्यां युक्तया रुषा क्रोधेनान्वितः सन् इंद्रं जिघांसुः परमोद्यमं चकार ॥ २९ ॥ अश्मसारमयं शिलासारात्मकं घंटावद्घंटाभिर्युक्तं ॥ ३० ॥ विसर्जयन् भीषयन् देवराजायेंद्राय प्राहिणोच्चिक्षेप । मृगराडिव सिंह इव नदन् गर्जयन् ॥ ३१ ॥ हरिरिंद्रो गगनतले आकाशेऽपतत् । शूलं चिच्छेद । तं नमुचिं कंधरे ग्रीवायां शिरो हरन् अहरत् ॥ ३२ ॥ यः सुरपतिनौजसा बलेनेरितः क्षिप्तः स वज्रः । तस्य नमुचिकंठस्य त्वचमप्युपरितनचर्मापि न बिभेद । तत्परमद्भुतं । कुतः । यतोऽतिवीर्यं वृत्रासुरं भिनत्तीति तथा । तादृशोऽपि वज्रो नमुचेः शिरोधरस्य कंधरस्य त्वचा तिरस्कृतो धिकृतः ॥ ३३ ॥ तस्माच्छत्रोर्नमुचेः प्रतिहतो निर्वीर्योऽबिभेत् भयं प्राप । किमिति । इदं वज्राप्रतिहतं वस्तु लोकस्य विमोहकरं भयंकरमित्यर्थः । दैववशाल्लोकानामिदं मोघमिति भ्रांतिजनकं । यद्वा । दैवयोगेन दैवसामर्थ्येन निर्मितं भूतं । किं कश्चनग्रहविशेषात् । इदं वज्रं निरस्तकरणं किं भूतं किं जातमिति ॥ ३४ ॥ काऽत्र कथंतेस्यतो वज्रवीर्यमाह ॥ येनेति । पूर्वं पतत्रैः

पक्षैः पततां भारैर्भुवि निविशतां गुरुत्वेन निमित्तेन लोकोपरि पततानामद्रिणां पक्षच्छेदो येन वज्रेण कृतः । तत्र निमित्तं ॥ प्रजानामत्यये नाशे सति ॥ ३५ ॥ तथा सारमयं वीर्याधिकं त्वाष्ट्रदेवतासंबंधि तपः । एवं वृत्रस्त्वाष्ट्रतपसा जात इत्यर्थः । यद्वा । तपः सारमय इति पदच्छेदः । त्वाष्ट्रं तपः सारमयन्नद्यत् । इति पदच्छेदः । त्वाष्ट्रं तपः सारमयत्प्राप्त इत्यर्थः । सोऽसुरो येन वज्रेण विपाटितो हतः । तथा सर्वैर्हिरण्यक्षतत्वचोऽरिदन्वचर्माणः । बलोपेता अन्ये च बलश्च पाकादयो येन हता इत्यर्थः ॥ ३६ ॥ अल्पके दुर्बलेऽसुरे नमुचौ मया मुक्तः सोऽयं वज्रः प्रतिहतो निर्वीर्योऽभूत् । तस्मादिदं निर्वीर्यलकुटतुल्यं तद्वज्रमहं नाददे स्वीकार्यं यतोऽतो ब्रह्मतेजोऽपि ब्रह्मणो दधीचेर्यस्तेजोऽपि सामर्थ्यमप्यकारणं कार्यं कर्तुं क्षमं नाभूत् । वज्रस्य दधीचेर्योऽस्थिनिर्मितत्वाद्ब्रह्मतेज इत्युक्तं ॥ ३७ ॥ अशरीरिण्यशरीरस्य वायोः संबंधिनी गिरीदं खेद्युक्तामिंद्रमाह ॥ ३८ ॥ अयं कुतो वधं नार्हतीत्यत आह ॥ मयेति । ब्रह्मस्वरूपेण मया किमिति वरो दत्त इत्यत आह ॥ मृत्युरिति । आर्द्रशुष्कयोः पदार्थयोः सकाशान्मृत्युर्नैवेति । ते त्वया रिपोर्वधे उपायश्चिंतनीयः । मघवानिंद्रः ॥ ३९ ॥ सुसमाहित एकाग्रचित्तः सन् एतादृशं किमिति ध्यायन् फेनं जलविकारं वस्तु । अपश्यदापदया नीरे । उभयात्मकमनार्द्रमशुष्कं च ॥ ४० ॥ उभयात्मकं विद्यन्नाह ॥ न शुष्केन न चार्द्रेण फेनेनेति । तथा च श्रुतिः । अपां फेनेन नमुचेः शिर इंद्रो जहार यत इति । माल्यैः पुष्पैर्विभुमिंद्रमवाकिरन् अभ्यवर्षन् ॥ ४१ ॥ विश्वावसुपरावसुनामकौ गंधर्वमुख्यौ गंधर्वश्रेष्ठौ जगतुर्गायनं चक्रतुः । देवदुंदुभयो भरिणो नेदुः । नर्तक्योऽप्सरस्त्रियो नृत्यं चक्रुः ॥ ४२ ॥ प्रतिद्वंद्वान्प्रतिपक्षिणः केसरिणः सिंहा मृगान्यथा ॥ ४३ ॥ दानवानां संक्षयं नाशं दृष्ट्वा ब्रह्मणा चतुर्मुखेन प्रेषितो नारदो दैत्यनाशं दृष्ट्वा देवान्वारयामासेति भावः ॥ ४४ ॥ किमिति । श्रिय ऐश्वर्येण समेधिता अभिवृद्धाः । विग्रहाद्युद्धादुपारमत विरमत । कृतकार्यत्वाद्वृथा हिंसां न कुरुतेति भावः ॥ ४५ ॥ मन्युसंरंभं द्वेषोद्रेकं संयम्य निगृह्य त्रिविष्टपं स्वर्गं ययुः । नारदस्यानुमतेनानुज्ञया येऽवशिष्टा हतावशिष्टास्ते दैत्या विपन्नं मृतं बलिमुपादायास्तं गिरिं प्रापुः । तत्र युद्धभूमावविनष्टा अवयवा हस्तपादादयो येषां तान् विद्यमानाः शिरोधराः कंधरा येषां तान्मृतान्दैत्यान् संजीविनीनामिकयोशनाः शुक्राचार्यो जीवयामास ॥ ४६ ॥ ४७ ॥ ४८ ॥ प्रत्यापन्नानि पुनः

प्राप्तानींद्रियाणि स्मृतिश्च येन सः । लोकस्य ज्ञानिनस्तत्त्वे मते विचक्षणो जयपराजयादेर्भगवदधीनत्वज्ञानीत्यर्थः । यतोऽतो न खिद्यत इत्यर्थः ॥ ४९ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ८—१० ॥

॥ हरिः ॐ ॥ देवकार्यसाधनानंतरं भगवान् किमकरोदित्यत उपोद्घातमाह ॥ वृषध्वज इति । वृषध्वजो रुद्रो हरियोषिद्रूपेण दानवान्मोहयित्वा सुरगणान् अमृतमपाययदितीदं हरिमाहात्म्यं निशम्य ॥ १ ॥ स मधुसूदनो यत्रास्ते तत्र द्रष्टुं ययावित्युत्तरेणान्वयः । देव्या सहोमया सह ॥ २ ॥ भवो रुद्रः सोमया सह । यद्वा । सः उमयेति पदच्छेदः । सैष राजा युधिष्ठिरः । सोषामविंदत्स स्वामीत्यादिवत् । भगवता समाजितः पूजितः सूपविष्टः सम्यगुपविष्टः । हरिं प्रतिपूज्य नमस्कारेण पूजयित्वा स्मयन् आश्चर्यं प्राप्नुवन् उवाचास्तौत् ॥ ३ ॥ किमिति । हे देवदेव देवानां देव परदैवत स्तुत्य इति वा । जगद्व्यापि त्वं । आकाशवन्नेत्याह ॥ जगदीश इति । जगन्नियामक इत्यर्थः । नियमनं च ब्रह्मादिवत्पराधीनत्वेनेत्यत आह ॥ जगन्मायेति । जगति ब्रह्मादि जगति प्रधानः स्वतंत्र इत्यर्थः । सर्वेषामपि भावानां पदार्थानामात्माऽऽदानादि कर्ता । हेतुर्निमित्तकारणं । ईश्वर ईशनान्मत्तो वर उत्तमः । अचिंत्यैश्वर्यसंपन्न इति वा ॥ ४ ॥ मुमुक्षुभिरुपास्यमानत्वात्त्वमेव सर्वोत्तम इत्याशयेनाह ॥ तवैवेति । श्रेयःस्कामा मोक्षकामा निराशिष ऐहिकामुष्मिककामरहिताः उभय ऐहिकामुष्मिकविषये संगं विसृज्य । मुनयः सारज्ञाः ॥ ५ ॥ ननु मोक्षार्थिभिरुपास्यमानत्वादहं सर्वोत्तम इत्युक्तं । तदयुक्तं । मम परं ब्रह्मत्वाभावात् । परं ब्रह्मैवहि मोक्षार्थिभिरुपास्यमतस्तदेव सर्वोत्तममित्यतस्त्वमेव परं ब्रह्मेत्याह ॥ त्वं ब्रह्मेति । त्वमेव परं ब्रह्म । ब्रह्म शब्दप्रवृत्तिनिमित्तमाह ॥ पूर्णमिति । गुणपरिपूर्णमित्यर्थः । अविनाशिनः पूर्णत्वं युक्तमित्याह ॥ अमृतमिति । अमृतं नाशरहितं नित्यमुक्तं वा । अमृतत्वं कुत इत्यत आह ॥ विगुणमिति । सत्त्वादिगुणशून्यमत एवाविकारमुत्पत्त्यादि विकाररहितं । अत एवाशोकमत एवानंदमात्रं । अनन्यन्मूलरूपादवताररूपेभ्यश्चान्यद्भिन्नं न । यद्वा । न विद्यतेऽन्यत्सममधिकं वा । यस्मात्समाधिकशून्यमित्यर्थः । मूलरूपादवताररूपेभ्यश्चान्यज्जगतो भिन्नं । विश्वस्योदयस्थितिसंयमानां हेतुश्च त्वमेव । आत्मेश्वरश्चात्मनां जीवानामीश्वरः फलप्रदश्च । कुतः । तदपेक्षतया तैरात्मभिः फलार्थमपेक्ष्यंत इति तदपेक्षस्तस्य भावस्तदपेक्षता तया फलदानार्थं जीवैरुपास्य-

मानत्वादित्यर्थः। किं राजादिवत्तयाऽप्यपेक्षया सेवकेभ्योऽहं फलप्रदः किं नेत्याह ॥ किमनपेक्षत इति। फलेच्छारहितः। आप्तकामस्य का स्पृहेति श्रुतेरिति भावः ॥६॥ इदानीं तत्तत्पदार्थगतभगवद्रूपाणां वस्तुगत्या भगवद्रूपस्याभेदं दृष्टांतेनोपपादयति ॥ एक इति। यथा कुंडलाद्यात्मना कृतं प्रकृत्यात्मना त्वकृतं च स्वर्णमेकमेवेह कृताकृतयोः सुवर्णयोर्वस्तुतो भेदो नास्ति। तथा सदसद्वयं कार्यकारणरूपद्वयं सदादि वस्तुषु स्थित्वा तत्तत्स्वभावप्रवर्तकत्वेन सदादि शब्दवाच्यं। अद्वयं समाधिकशून्यरूपं त्वमप्येक एव। इह तव रूपद्वये वस्तुभेदो नास्ति। नन्वेकस्यैव हरेर्भेदप्रतीतिः कस्मान्निमित्तादित्यत आह ॥ अज्ञानत इति। जनैरज्ञानतस्त्वयि विकल्पो भेदो विहितः कल्पितः। अतो न वस्तुभूत इत्यर्थः। भेदकल्पकं किमित्यत आह ॥ यस्मादिति। गुणानां सत्त्वादि गुणानां व्यतिकरः कार्यार्थमिश्रीभावो यस्मात्स तथा। यस्मात्त्वं गुणादीनां मिश्रीकृतत्वेन तत्र कार्ये स्थितोऽसि। अतो भिन्नाभिन्नस्थानस्थितत्वमेव भेदकल्पकमिति भावः। ननु स्वतो भेदाभावेप्युपाधिभेदात्सः स्यादित्यत आह ॥ निरुपाधिकश्चेति। त्वं तादृशोपाधिशून्यश्चेत्यर्थः। अज्ञानाद्युपाधिसद्भावे तद्भेदात्सोऽस्तीति शंकितुं शक्यते। स एव नास्ति। आनंदमात्रमिति निर्धारितत्वादिति भावः ॥ ७ ॥ त्वमेक एव नानामतविषयोसीत्यत आह ॥ त्वामिति। केचिद्वेदांतिनो ब्रह्मेत्यवयंति मन्यंते। एके मीमांसकास्त्वां धर्मं मन्यंते। एके सांख्याः परेशं त्वां सदसतोः प्रकृतिपुरुषयोः सकाशात्परं विलक्षणं पुरुषमवयंति। अन्ये पांचरात्रिकास्त्वां नवशक्तियुक्तं विमलोत्कर्षणी ज्ञानेत्यादि नव शक्तिभिः स्वरूपभूताभिर्युतं परं पुरुषमवयंति। केचित्पातंजला एकांतिनो वा त्वमेवाव्यमात्मतंत्रं महापुरुषं मन्यंते ॥ ८ ॥ नानामतविषयत्वे निमित्तमाह ॥ नाहमिति। अहं रुद्रः परायुः परनामकमायुर्यस्य स ब्रह्मा। मरीचिमुख्या ऋषयः सत्त्वसर्गाः सत्त्वगुणेन सृष्टा अपि। सात्त्विकस्वभाववंतोऽपीति यावत्। यद्विरचितं येन त्वया विरचितं व्यापारं न जानंति। खलु सम्यक् न जानंति। कुतः। यन्मायया यस्य तव मायया मोहकशक्त्या मुषितानि पिहितानि चेतांसि येषां ते तन्मायया प्रतिबद्धमनस्का इति भावः। हे ईश्वर। शश्वत्सर्वदाऽभद्रं राजसतामसवृत्तं स्वभावो येषां ते तथा। दैत्यमर्त्यादयस्त्वां न जानंतीति किमु वक्तव्यं। तस्मात्तव नानामतिविषयत्वं युक्तमिति भावः ॥ ९ ॥ इदानीं सर्वजगज्जन्मादिकारणत्वाच्च त्वमेव सर्वोत्तम इत्याशयेनाह ॥ स इति। ब्रह्मादिभिरपि

साकल्येनाज्ञेयमहिमा । त्वमेव जगतः स्थितिजन्मनाशान् भूतानामीहितमभीष्टं च मोक्षबंधावपि समीहसि करोषि । यथा वायुः खमाकाशं च चराचराख्यं सर्वं विशति व्याप्नोति । तथा त्वं सर्वं सृष्ट्वं जगत्तदात्मकतया तस्य जगत आत्मकतया नियामकतया व्याप्नोषि । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । वायुवत्प्रवेशोक्त्या तद्वदेव जगद्गतदोषासंगो भवतो ज्ञापितो भवति । अज्ञानिनो जगत्सृष्ट्याद्ययोगादाहुः ॥ अवगम इति । अवगच्छति जानाति सर्वमित्यवगमः सर्वज्ञ इत्यर्थः ॥ १० ॥ एवं स्तुत्वा प्रस्तुतं विज्ञापयति ॥ सोऽहमिति । ते त्वया धृतं यद्योषिद्वपुः स्त्रीरूपं तत्सोऽहं बव्हवतारदृष्टोऽप्यहं द्रष्टुमिच्छामि । स्त्रीरूपस्य कदाऽप्य-दृष्टत्वात् ॥ ११ ॥ तत्र किं माहात्म्यमस्ति येन तद्दर्शनाशक्यं तवाभूदित्यत आह ॥ येनेति । येन स्त्रीरूपेण दैत्यमोहकातिसौंदर्यं तत्रास्तीति तद्रूपं दिदृक्षवो वयमायाता हि यस्मान्नः परं कौतूहलमत्यंतमुत्कटं ॥ १२ ॥ भावेनाभिप्रायेण गंभीरं गंभीरतरं वचनं ॥ १३ ॥ पीयूषभाजनेऽमृतकलशे गते दैत्यैरपहृते सति सुकार्याणि योषिद्वेषेण भविष्यंतीति पश्यता जानता मया दैत्यानां कौतूहलाय कौतुकजननद्वारा बुद्धिभ्रंशाय योषिद्वेषः कृतः स्वीकृतः ॥ अयं भावः ॥ अवश्यं तावदमृतायोग्यान्दैत्यान्वंचयित्वा देवेभ्योऽमृतं देयं । न चैवं वैषम्यं । योषिद्विना रूपांतरेण कर्तुमुचितं भवति । अतो वंचनमोहनादि सारं कामिनीरूपं मया धृतमिति ॥ १४ ॥ सकलप्रभवस्य कामस्योदय उद्रेको यस्माद्वपुषः । तत्संकल्पप्रभवान्कामानित्युक्तेः । कामिनां बहु मंतव्यं बहुमाननीयं ॥ १५ ॥ सर्वतो दिक्षु चक्षुश्चारयन् संचारयन् । पश्यन्निति यावत् ॥ १६ ॥ विचित्रपुष्पाण्यरुणपल्लवाश्च येषां द्रुमाणां ते तादृशा द्रुमा यस्मिंस्तस्मिन्नुपवने कंदुकस्य लीलया क्रीडया विक्रीडंती लसद्दुकूलेन पर्यस्ते परिवृते नितंबे मेखला कांची यस्यास्तां ॥ १७ ॥ उत्पततोऽधः पततः कंदुकस्य लीलावशेन यदावर्तनमर्वाग्गमनं । उद्वर्तनमुन्नमनं ताभ्यां कंपितयोः स्तनयोः । प्रकृष्टानामनर्घ्याणां हाराणां चोरुभरैः पदे पदे प्रतिपादविक्षेपं मध्यतो मध्ये भज्यमानामिव दृश्यमानं चलत्पदमेव प्रवालं पल्लववत्कोमलं चरणं ततस्ततस्तत्र तत्र नयंतीं प्रचालयंतीं ॥ १८ ॥ दिक्षु भ्रमतः कंदुकस्य चापलैश्चांचल्यैर्भृशं मोद्विग्नतारे चंचलकनीनिके आयते लोले चंचले लोचने यस्यास्तां । स्वकराभ्यां विभ्राजिते कुंडले ताभ्यामुल्लसद्गंडाभ्यां च नीलालकैश्च मंडित-माननं यस्यास्तां ॥ १९ ॥ श्लथद्दुकूलां नितंबाद्विभ्रंशत्सूक्ष्मवस्त्रां विच्युतां मुक्तग्रंथिं कबरीं केशभारं च वल्गुना सुंदरेण वामक-

रेण सन्नह्यंतीं बध्नंतीं सव्यकरेण दक्षिणहस्तेन कंदुकं विनिघ्नंतीं भूमौ पातयंतीमात्ममायया स्वरूपशोभावैचित्र्येण जगद्विमोहयंतीं ॥ २० ॥ तां स्त्रियं वीक्ष्य रुद्र आत्मानं स्वमंतिके स्थितामुमां स्वभार्यां च स्वगणान्स्वभृत्यगणांश्च वेद नापश्यत् । कथं भूत इति । एवं भूतया कंदुकलीलयेषद्व्रीडा किंचिल्लज्जा तया स्फुटं स्मितं तेन सह स्वास्मिन्विसृष्टो यः कटाक्षोऽपांगदर्शनं तेन मुष्टो वंचितः । मूढ इति पाठे मोहित इत्यर्थः । अत एव स्वयं स्त्रियः प्रेक्षणं तया च प्रतिसमीक्षणं स्वदर्शनं च रुद्रस्तां पश्यति । सा च रुद्रं पश्यतीत्यर्थः । एवं समदर्शनाभ्यां विव्हलश्चंचल आत्मा मनो यस्य सः । निर्वृतात्मेति पाठे निर्वृत आल्हादित आत्मा यस्य स इत्यर्थः ॥ २१ ॥ तं कंदुकमनुव्रजंत्याः स्त्रियः लघु सूक्ष्मवासः परिधानं वस्त्रं समूत्रं काञ्च्या सहितमहरदपाहरत् । भवस्यानुपश्यतः सतः ॥ २२ ॥ रुचिरोऽपांगः कटाक्षाक्षेपणं यस्यास्तां दर्शनीयां द्रष्टुं योग्यामत एव मनोरमां ॥ २३ ॥ तया स्त्रियाऽपहृतं विज्ञानमितरपदार्थज्ञानं यस्य सः । तत्कृतेन स्त्रीकृतेन स्मरेण कामेन विव्हलश्चंचलस्तत्पदं तस्याः समीपं ॥२४॥ वृक्षेषु निलीयमाना स्वात्मानं गूहयंती । नान्वातिष्ठतानुकूला नाभूत् ॥ २५ ॥ प्रव्यथितमिंद्रियं मनो यस्य सः । यूथपो गजेंद्रः करेणुं गजमिवान्वगच्छत् ॥ २६ ॥ अतिवेगेनानुव्रज्य पृष्ठतोऽनुद्रुत्यानिच्छंतीं तां स्त्रियं केशबंधेगृहीत्वोपानीय समीपं आनीय बाहुभ्यां परिषस्वजे आलिंगतवान् ॥ २७ ॥ भगवता रुद्रेणोपगूढाऽऽलिंगिता प्रसर्पंती मोचनार्थमितस्ततश्चलंत्यभूत् । विकीर्णाः प्रसारिताः शिरोरुहाः केशा यस्याः सा ॥ २८ ॥ हे अंग राजन् । सुरर्षभस्य रुद्रस्य मध्यात् पृथुश्रोणी स्थूलनितंबा देवेन स्वेनैव हरिणा निर्मिता प्रदर्शिता माया जनमोहनकरी सा स्त्री प्राद्रवत् ॥ २९ ॥ तस्य प्राद्रवतः स्त्रीरूपस्य विष्णोः पदवीं मार्गं प्रपद्यतान्वधावत् । वैरिणेव शत्रुणेव । कामेन विनिर्जितः पीडितः सन् ॥ ३० ॥ चस्कंद गलितं । शुष्मिणो वीर्यवतस्तरुणस्येत्यर्थः । वसितां मैथुनेच्छावतीं करिणीमनुधावतो यूथपस्येव गजश्रेष्ठस्येव ॥ ३१ ॥ मह्यां भूमौ रूपस्य रजतस्य हेम्नः सुवर्णस्य क्षेत्राण्याकरा आसन् ॥ ३२ ॥ एवं तामनुधावन्हरो रेतः क्षेत्रेपु सरिदादिषु यत्र क्व च ऋषय आसन् । तत्र रेतोनिवासस्थानेषु, ऋष्याश्रमेषु च संनिहिता बभूव । यद्वा । यत्र क्व च सरिदादिषु रेतः क्षेत्रेषु ऋषय आसंस्तत्राश्रमेषु हरः संनिहितोऽभवत् ॥ ३३ ॥ रेतसि स्कन्ने पतिते सति देवस्य मायया मोहकशक्त्या जडीकृतं निर्व्यापारमात्मानमपश्यत् ।

कश्मलाद्बुद्धिभ्रंशकरात्क्लेशान्न्यवर्तत निवृत्तोऽभूत् ॥ ३४ ॥ अपरिज्ञेयं सम्यग्ज्ञातुमशक्यं वीर्यं माहात्म्यं यस्य तस्य जगदात्मनो
जगदंतर्नियामकस्यात्मनः परमात्मनोऽवगतं माहात्म्यं येन सः । रुद्रस्तदिह मायया स्वस्य जडीकरणमद्भुतं न मेने ॥३५॥ आविह्वं
स्वच्छमनसमव्रीडं भगवंतं दृष्ट्वा लज्जारहितमालक्ष्य दृष्ट्वा स्वां पौरुषीं पुरुषाकारां तनुं बिभ्रत् ॥३६॥ स्वां निष्ठां मद्भक्तिलक्षणामा
त्मना मनसाऽऽस्थितः माप्त इत्येतद्दृष्ट्वा । आश्चर्यं वृतः । यतः । हे अंग रुद्र । दुस्तरया तर्तुमशक्यया मायया बंधकभूतया
प्रकृत्या स्त्रैरमत्यंतं मोहितोऽसि ॥ ३७ ॥ अनंते जीवराशौ यः कश्चिन्मायामतितरेत्तज्जीवानां वैचित्र्यादतः किमाश्चर्यमित्यत
आह ॥ को न्विति । विषक्तो विषयासक्तः को नु पुमान त्वदृते त्वां विना मे मायामतितरेत् । ये ये बंधकास्तांस्तान् भावा-
न्विषयान्सृजतीं । अकृतोऽनिगृहीत आत्मा मनो यैस्तैर्मनोजयरहितैर्दुस्तरां ॥ ३८ ॥ मदनुग्रहतः सुतरेन्याशयेनाह ॥ सेयमिति ।
गुणमयी सत्त्वादिगुणत्रयात्मिका सेयं माया प्रकृतिस्त्वां नाभिभविष्यति । मदनुग्रहपात्रस्य तव बंधिका न भविष्यति । कथं
भूता । कालेन सृष्ट्यादिनिमित्तेन सृष्ट्यादि काले । सृष्ट्याद्यर्थमिति यावत् । कालरूपेण कालनियामकेन मया भागश एक-
देशेनापि समेता । मदधीनेत्यर्थः । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति त इत्युक्तेः
॥ ३९ ॥ श्रीवत्सोऽङ्कं चिन्हं यस्य तेन हरिणा सत्कृतो रुद्र आमंत्र्यानुज्ञां गृहीत्वा परिक्रम्य प्रदक्षणी कृत्य सगणः प्रमथादि
भूतगणैः समेतः स्वालयं कैलासं ॥ ५० ॥ भवो रुद्रो ऋषिमुख्यानां शंसतामात्मानं स्तुवतामात्मनः परमात्मनोंऽशभूतां स्वरू-
पांशभूतां तां स्वेन दृष्टां मायां स्त्रीरूपं प्रीत्या भवानीमुमां प्रत्याचष्टाब्रवीत् । तुष्टावेति पाठे भवानीं संबोध्येति शेषः । तां मायां
तुष्टावेति योज्यं ॥ ४१ ॥ अयि उमे । त्वं परस्य पुंसः सर्वोत्तमपुरुषस्य परदेवताया अस्मदादीनामिष्टदेवताया अजस्य विष्णो-
र्मायां व्यपश्यो विशेषेण दृष्टवत्यपि । कथं भूतां । यया मायया कलानां हरेर्भिन्नांशानां विभूतिरूपाणां मध्ये ब्रह्माणं विना ऋषभः
श्रेष्ठोऽहमवशः सन् विमुह्य मोहं प्राप्तवान् । मदधीना अन्ये प्राणिनो विमुह्यंतीति किमु ॥ ४२ ॥ हरिमाहात्म्यं वर्णयति ॥ 
यमिति । हे गौरि । त्वं समाः सहस्रांते समानां वत्सराणां सहस्रस्यांतेऽवसाने योगाद्धरिविषयकध्यानलक्षणयोगादुपारतं विरतं
मामुपेत्य यमपृच्छस्त्वद्ध्यानविषयः कः कीदृश इत्येवं पृष्टवत्यसि सम्यग्ध्यानविषय एषो ममापि मायामोहकः साक्षात्पुराणपुरुषो

हरिः । स कीदृश इत्यस्योत्तरं ॥ न यत्रेत्यादि । यत्र भगवति कालो न विशते जन्मादि विकारं कर्तुं न शक्नोति । वेदश्च न विशते न प्रवर्तते । यं वेदोऽपि साकल्येन प्रतिपादयितुं न शक्नोति । यतो वाचो निवर्तंत इति श्रुतेः ॥ ४३ ॥ पंचमाध्याये उपक्रांतं चाक्षुषमन्वंतरेऽवतीर्णस्य हरेरजितनाम्नोऽमृतमथनार्थं मंदरोद्धरणादि विक्रममुपसंहरति ॥ इतीति । हे तात । शार्ङ्गधन्विनोऽजितनाम्नोहरेर्येनाजितेन । कूर्मरूपेणेति शेषः ॥ ४४ ॥ अजिताख्यानकीर्तनादिना फलमाह ॥ एतदिति । यद्यस्मादुद्गच्छति नश्यति । तमो मिथ्याज्ञानं यस्मात्स उत्तमो मिथ्याज्ञाननाशक इत्यर्थः । एतादृशः श्लोकः कीर्तिर्यस्माद्यस्येति वा । तस्य हरेर्गुणानामनुवर्णनं समस्तसंसारपरिश्रमं संसारदुःखमपघ्नंति नाशयतीति तथोक्तं । तस्मादेतदतीतचरितं । मुहुर्निरंतरं कीर्तयतोऽनुशृण्वतश्च पुरुषस्य कश्चित्स्वापेक्षयैहिकामुष्मिककार्यमात्रविषये समुद्यमः प्रयत्नो जातु कदाचिदपि नरिष्यते न नश्यति । सार्थक एव भवतीति भावः ॥ ४५ ॥ भगवता कृतं भक्तपक्षपातं स्मरन्नमस्करोति ॥ असदिति । असतामभक्तानामविषयमप्राप्यं किंतु भावेन भक्त्या गम्यमंघ्रिचरणं प्रपन्नान् अमरवर्यान् सिंधुमथ्यं सिंधोर्मथने जातममृतं यो हरिरश्यदपाययत् । उपसृतानां शरणागतानां पुंसां कामरूपमभीष्टप्रदं तं हरिमहं नतोऽस्मीत्यन्वयः । कथं भूतः सन् । कपटयुवतिवेषो । कापट्यर्थं दैत्यवंचनार्थं युवत्याः स्त्रियो वेषो यस्य सः सुरारीन्मोहयन् सन् । अनेनैवं विधे भगवति भक्तिः कर्तव्येति सूचितं भवति ॥ ४६ ॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ८—११ ॥ ॥

॥ हरिः ॐ ॥ एवं प्रासंगिकं समाप्येदानीं हरिमाहात्म्यसूचकानि श्राद्धदेवाद्यष्टमन्वंतराणि क्रमेण वर्णयाति ॥ मनुरित्यादिना यावदध्यायसमाप्तिः । विवस्वतस्तन्नामकसूर्यपुत्रः । इदानीं वर्तमानः सप्तमो मनुः श्राद्धदेव इति श्रुतः । यस्य मनोरपत्यानि शृणु ॥ १ ॥ तानाह ॥ इक्ष्वाकुरित्यादिना ॥ २ ॥ पुत्रसंख्यानाह ॥ मनोरिति । वैवस्वतः श्राद्धदेव इति अपरनाम ॥ ३ ॥ वैवस्वतमन्वंतरे देवानाह ॥ आदित्य इति । आदित्यादयो देवा इत्यन्वयः ॥ ४ ॥ ५ ॥ मन्वंतरगतेंद्रमाह ॥ आदित्यानामिति । आदित्यानां । विवस्वानर्यमा पूषा त्वष्टा च सविता भगः । धाता पर्जन्य वरुणो मित्रः शक्र उरुक्रम इत्युक्तद्वादशादित्यानां मध्येऽवरं पश्चाज्जन्म यस्य स तथा वामनो द्वादशादित्य इत्यर्थः ॥ ६ ॥ मंदानां ज्ञानपूर्वकथामनूद्योत्तरकथां प्रतिजानीते ॥

संक्षेपत इति । ते तुभ्यं सप्त मन्वंतराणि । स्वायंभुवस्वारोचिषोत्तमतापसरैवतचाक्षुषाख्यान्यतीतानि षट् । वैवस्वताख्यं वर्तमानं सप्तमं चेत्येवं सप्तमन्वंतराणि संक्षेपतो मयोक्तानि वर्णितानि । अथानंतरं विष्णोः शक्त्या सामर्थ्येनान्वितानि विष्ण्ववतारसहितानि भविष्याण्यग्रे । इतराणि । सावर्णिदक्षसावर्णिब्रह्मसावर्णिधर्मसावर्णिरुद्रसावर्णिदेवसावर्णिइंद्रसावर्णिसंज्ञानि सप्तमन्वंतराणि वक्ष्यामि ॥ ७ ॥ अष्टमं मनुं वक्तुं तदुपयुक्तकथामाह ॥ विवस्वत इति त्रिभिः । प्राक् षष्ठस्कंधे संज्ञा छायेत्युभयेऽपि विश्वकर्मसुतेऽभिहिते ते विवस्वतस्तन्नाम्नः सूर्यस्य तेजस एव बभूवतुः ॥ ८ ॥ तासां तिसृणां भार्याणां मध्ये संज्ञायाः सुता यमो यमी श्राद्धदेवश्चेति त्रयः ॥ ९ ॥ सावर्णिः पुत्रस्तपती नाम्नी कन्या । या तपती संवरणस्य ऋषेर्भार्या वडावाया अश्विनावात्मजौ पुत्रौ ॥ १० ॥ एवमुपयुक्तमुक्त्वेदानीमष्टममन्वंतरगतमन्वादीनाह ॥ अष्टम इति । सावर्णिः पूर्वोक्तः । विवस्वत्सुतस्तस्य सुतानाह ॥ निर्मोहेति ॥ ११ ॥ देवानाह ॥ तत्रेति । इंद्रमाह ॥ तेषामिति । विरोचनसुतो बलिरिंद्रः ॥१२॥ तन्माहात्म्यमाह ॥ दत्वेति । सप्तममन्वंतरे यो बलिः पदत्रयं पादत्रयपरिमितां भूमिं याचमानाय विष्णवे वामनायेमां सर्वां भूमिं दत्वाऽष्टममन्वंतरे विष्णोः प्रसादेन राद्धं लब्धमिंद्रपदं । भुक्त्वेति शेषः । ततोंऽते हित्वा त्यक्त्वा च सिद्धिं मुक्तिमवाप्स्यति । वैवस्वतांतरेऽमृतमथनकाले इंद्रेण हतो बलिः पुनः शुक्रेणोज्जीवितः सन् पुनरिंद्रं जित्वा त्रैलोक्याधिपतिर्भूत्वाऽस्य यज्ञ आगत्य याचमानाय वामनरूपाय हरये सर्वभूमिं ददौ । तत्पुण्येनैवाष्टमे मन्वंतरे इंद्रपदं प्राप्यानुभूयांते मुक्तिमेष्यतीति भावः ॥१३॥ दत्तसर्वभूमिर्बलिरिंद्रपदप्राप्तिपर्यंतमिदानीं कुत्रास्त इत्यत आह ॥ यो साविति । यो भगवता बद्धः स्वपार्षदैः पाशैर्बंधनं प्रापितोऽसौ बलिः पुनः प्रीतेन तेनैव हरिणा स्वर्गादधिके सुतलनामके भूमिबिले निवेशितः प्रतिष्ठितः सन् अधुना वैवस्वताख्येऽस्मिन्मन्वंतरे स्वराडिवेंद्र इवास्ते ॥ १४ ॥ अष्टममन्वंतरगतानृषीनाह ॥ गालव इति । दीप्तिमान् रामः परशुरामो द्रोणपुत्रोऽश्वत्थामा अस्माकं शुकनामकस्य मम पिता बादरायणो वेदव्यासः । गुर्वात्मनि चैकेषामित्युक्तेऽस्माकमिति बहुवचनं । एकस्मिन्नपि स्वस्मिन्नुच्यते ॥ १५ ॥ तत्राष्टमे मन्वंतरे भविष्यंति । इदानीं कुत्रासत एते इत्यत आह ॥ स्वयोगत इति । स्वयोगतः स्वकर्मानुष्ठानेन सह स्वस्वकर्म कुर्वंत इत्यर्थः । आसते ॥ १६ ॥ तत्रेश्वरावतारमाह ॥ देवगुह्यामिति । देवगुह्यां सरस्वत्यां भार्यायां प्रभुरीश्वरो हरिः सार्व-

भौमपतीति नाम्ना जातः सन् पुरंदरात्स्थानं स्वर्गलोकं हृत्वा बलये दास्यति ॥ १७ ॥ वरुणसंभवो वरुणपुत्रस्तत्सुता दक्षसावर्ण्याख्यमनुसुताः ॥ १८ ॥ पुरा पूर्वमन्वंतरापेक्षयाऽन्येऽत्राद्भुतं नाम इंद्रः स्मृतः ॥ १९ ॥ अत्र भगवदवतारमाह ॥ आयुष्मत इति । आयुष्मान्नामकादंबुधारानामिकायां भार्यायां ऋषभनामको भगवतः कलाऽवतारो भविष्यति । येन ऋषभनाम्ना संत्रातो रक्षितोऽद्भुतस्तन्नामेंद्रस्त्रिलोकीं भोक्ष्यतेऽनुभविष्यति ॥ २० ॥ उपश्लोकस्य तन्नामकस्य सुतः । तत्सुता ब्रह्मसावर्णिनाममनुसुता द्विजाः सप्तर्षयः ॥ २१ ॥ २२ ॥ देवानाह ॥ सुवासनेति । इंद्रमाह ॥ शंभुरिति । शंभुनामा सुरेश्वर इंद्रः ॥ २३ ॥ हरेरवतारमाह ॥ विष्वक्सेन इति । विष्वक्सेननामको हरिः । शंभोस्तन्नाम्नः । इंद्रस्य सख्यं करिष्यति ॥ २४ ॥ एकादशम इति प्रयोग आर्षः । आत्मवान्मनस्विनि । अनागतो भविष्यन्मनुः । तत्सुता धर्मसावर्णिसुताः ॥ २५ ॥ देवानाह ॥ विहंगमा इति । तेषां देवानां वैधृतिस्तन्नामेंद्रः । अरुणादयः सप्तर्षयः ॥ २६ ॥ तत्र धर्मसावर्णिमन्वंतरे वैधृतायां तन्नामिकायां स्त्रियां जात आर्यकनाम्नः सुतो धर्मसेतुरिति स्मृतः । हरेरंशोऽवतारस्त्रिलोकीं धारयिष्यति ॥ २७ ॥ भविता भविष्यति ॥ २८ ॥ ऋतधामा तन्नामकेंद्रः ॥ २९ ॥ सत्यसहसस्तन्नामकस्य सूनृतायास्तन्नाम्न्याः स्त्रियश्च सुतः सन् स्वधामाख्यो हरेरंशोऽवतारस्तस्य रुद्रसावर्णिनाम्नो मनोरंतरं साधयिष्यति पालयिष्यति ॥ ३० ॥ देवसावर्णेर्देहजा आत्मजाः ॥ ३१ ॥ दिवस्पतिस्तन्नामेंद्रः ॥ ३२ ॥ यो योगेश्वरनामको हरेरवतारो बृहत्यां तन्नाम्न्यां स्त्रियां देवहोत्रस्य तनयः संभविष्यति ॥ ३३ ॥ इंद्रसावर्णिवीर्यजाः पुत्राः ॥ ३४ ॥ विचित्रादि नामानः शुचिनामक इंद्रस्तपस्विनः सप्तर्षयः ॥ ३५ ॥ हरेरवतारमाह ॥ नारायणस्येति । तदेंद्रसावर्णिमन्वंतरे हरिर्विनताख्यास्त्रियां सत्रायणाख्यस्य बृहद्भानुमनोस्तनयः सन् क्रियातंतून्कर्मसमुदायान्वितायिता विस्तारयिष्यति ॥ ३६ ॥ चतुर्दशमन्वंतराण्युपसंहरति ॥ राजन्निति । त्रिकालानुगतान्यतीतवर्तमानभविष्यत्कालेष्वनुगतान्यनुवर्तमानान्यतीतानि षट् । सप्तमं वर्तमानं । भविष्याणि सप्तैवं चतुर्दशैतानि मन्वंतराणि ते तव प्रोक्तानि । प्रसंगात्प्रमेयविशेषमाह ॥ एभिरिति । महायुगचतुष्टयं महायुगमुच्यते । युगानां महायुगानां सहस्रेण पर्ययः परिवर्तो यस्य सः सहस्रयुगप्रमाणः कल्पो ब्रह्मयुगकल्पः । एभिश्चतुर्दशमन्वंतरैर्मितः परिमितः सहस्रमहायुगपरिमिते ब्रह्मण एकस्मिन्नहनि चतुर्दशमन्वंतराणि भवंतीति भावः

॥ ३७ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ८—१२ ॥ ॥

॥ हरिः ॐ ॥ चतुर्दशमन्वंतरस्थानां मन्वादीनां पृथक् पृथक् कर्माणि निरूप्यंतेऽस्मिन्नध्याये । हे भगवन् शुकाचार्य । यथा कथं य इमे मन्वादयो येन पुरुषेण यस्मिन्कर्मणि व्यापारे यथा येन प्रकारेण नियुक्ताः प्रेरिताः प्रवर्तंते । तत्सर्वं वदस्व ॥ १ ॥ तत्रादौ मन्वादिषट्कमध्ये भगवदवतारकर्माण्याह ॥ मनव इति । मुनयः सप्तर्षयः । येन नियुक्ता इत्यस्योत्तरं ॥ पुरुषेति । पुरुषेण हरिणाऽऽशास्यंते नियुज्यंत इति पुरुषशासनाः ॥ २ ॥ तदेव विशदयति ॥ यज्ञादय इति । यज्ञादयो याः पौरुष्यः परस्य हरेः संबंधिन्यस्तनवोऽवताराः कथिताः । मन्वंतरेष्वाभिस्तनुभिः प्रचोदिताः संतो मन्वादयः । आदि पदेन मनुपुत्रा ऋषींद्रदेवा ग्राह्याः । जगद्यात्रां जगस्थितिं जनयंति कुर्वंतीत्यर्थः ॥ ३ ॥ इदानीं ऋषिकर्माण्याह ॥ चतुर्युगांतेति । यतो येभ्यः श्रुतिगणेभ्यः सनातन आद्यनंतकालेऽपि सर्वैः क्रियमाणो धर्मः सिध्यति । तांश्चतुर्युगांते दिनकल्पांते कालेन निमित्तेन ग्रस्तांस्तिरोहितान् श्रुतिगणान् ऋषयो यथा यथावत्तपसा सम्यक् तपः कृत्वेत्यर्थः । अपश्यन् ॥ ४ ॥ मनुकर्माण्याह ॥ तत इति । हरिणोदिताः प्रेरिता मानवो युक्ताः सावधानमनाः संतः स्वेस्वेकाले स्वस्याधिकारकाले महीं भूमिं ततो वेदेषु विहितं चतुष्पादं तपः सत्यं दया शौचाख्यपादचतुष्टयवंतं धर्मं संचारयंति । मह्यां धर्मं प्रवर्तयंतीत्यर्थः ॥ ५ ॥ मनुपुत्र व्यापारमाह ॥ पालयंतीति । प्रजापाला मनुपुत्रास्तत्तन्मनुकाले यावदंतं यावन्मन्वंतरावसानं विभागशः पुत्रपौत्रादि क्रमेण महीं धर्मं पालयंति । देव व्यापारमाह ॥ यज्ञेति । तत्र मन्वंतरे ये देवा अनुकीर्तिता अनुवर्णिता यज्ञभागभुजो यज्ञभागभोक्तारः ॥ ६ ॥ इंद्रव्यापारमाह ॥ इंद्र इति ॥ ७ ॥ प्रसंगाद्रूपांतरैरपि जगद्धात्रा प्रवर्तनमाह ॥ ज्ञानमिति । अनुयुगं प्रतियुगं हरिः सिद्धानां सनकादीनां स्वरूपधृक् । सनकाद्यंतर्गतरूपेणेत्यर्थः ज्ञानं ब्रूत उपदिशति । ऋषीणां याज्ञवल्क्यादीनां रूपधरः । याज्ञवल्क्याद्यंतर्यामिणेत्यर्थः । कर्म यज्ञादिकर्ममार्गं ब्रूते । योगेशरूपधृक् योगप्रवर्तकदत्तात्रेयादिरूपधारी । तन्नामसाक्षाद्रूपेणेत्यर्थः । योगं प्राणायामादि प्रतिपादकं शास्त्रं ब्रुवते ॥ ८ ॥ प्रजेशा मरीच्यादयस्तदंतर्गतरूपेण । सर्गं करिष्यतीति शेषः । स्वराड्वपू रामकृष्णादि राजन्यो दस्यून्हंतीति कालरूपेण सर्वेषामसतामभावाय नाशाय पृथग्गुणोऽयथार्थज्ञानजनकभ्रमो गुणप्रवर्तको भवति ॥ ९ ॥ एवं विधो हरिरनामरूपयाऽ- ॥

प्रसिद्धस्वरूपयाऽव्यक्त शब्दवाच्येत्यर्थः । मायया प्रकृत्या मोहित आत्मा मनो येषां तैरभिज्ञैनैः कल्पितैर्नानादर्शनैरद्वैतादिशास्त्रैः स्तूयमानोऽपि निरूप्यमाणोऽपि न दृश्यते सम्यक् न ज्ञायते । च शब्दाद्वेदज्ञानिभिर्वेदादिसच्छास्त्रैः स्तूयमानो हरिर्ज्ञायत इति ज्ञेयं ॥ १० ॥ प्रासंगिकं निरूप्य प्रकृतमुपसंहराति ॥ एतदिति । पुराविदः पुरातनज्ञानिनो यत्र कल्पे चतुर्दश मन्वंतराण्याहुरतस्य कल्पे विकल्पस्य कल्पभेदस्यावांतरकल्पस्येत्यर्थः । एतत्तु चतुर्दशमनु भोग्यकालस्य प्रमाणमुक्तं ॥ ११ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ८—१३ ॥ ॥

॥ हरिः ॐ ॥ द्वादशाध्याये सावर्णिमन्वंतरानुवर्णनसमये दत्वेमां याचमानायेति बलिं प्रति वामनयाचनोक्ता । तथाऽसौ भगवता बद्ध इति वामनेन बलिबंधनं कृतमित्युक्तं । तत्र हरियाचनबलिबंधनयोर्निमित्तं पृच्छति राजा ॥ बलेः पदत्रयमिति । हरिः स्वयमीश्वरो भूत्वाऽपि कृपणवद्दरिद्रवद्बलेः सकाशाद्भूमेः पदत्रयं पादत्रयपरिमितां भूमिं कस्माद्धेतोरयाचत । लब्धः स्वीकृतोऽर्थस्त्रैलोक्यलक्षणो येन सस्तादृशो भूत्वाऽपि तं बलिं कस्माद्बबंध ॥१॥ पूर्णस्येश्वरस्य याञ्चाऽनागसो निरपराधिनो बलेर्बंधनं चेत्येतद्वेदितुमिच्छामोऽपेक्ष्यामः कौतूहलमौत्सुक्यं ॥ २ ॥ तत्र तावद्बलेस्त्रिलोकीमपहर्तुं याञ्चनादि छलं कृतवानित्युक्तं । ब्राह्मणाराधनबलेनाखंडलस्यैव स्वर्गविजयक्रममाह ॥ पराजित इत्यादिना यावदध्यायसमाप्तिः । युद्धे पराजिता श्रीर्येन स इंद्रेणासुभिः प्राणैश्च हापितस्त्याजितः सन् भृगुभिः शुक्राचार्यैर्जीवितस्तेषां शिष्यो माहात्मोदारचरितो स बलिस्तान् भृगून् भृगोर्वंशान् शुक्रादीन् अर्थानां द्रव्याणां निवेदनेन सर्वपदार्थसमर्पणेन सर्वात्मना मनोवाक्कायव्यापारैरभजदसेवत ॥ ३ ॥ महानुभावा अभीष्टसाधकमंत्रसामर्थ्योपेताः प्रीयमाणाः सर्वस्वसमर्पणेन प्रीताः संतस्त्रिनाकं स्वर्गं जिगीषमाणं जेतुमिच्छंतं बलिं महाभिषेकेण विधिना । अथ तमैंद्रे महाभिषेके ते देवा अब्रुवन् । इति ऋग्वेदोक्तब्राह्मणोक्तप्रकारेणाभिषिच्य विश्वजिता तन्नामयज्ञेनायजन् ॥ ४ ॥ कांचनपट्टबद्धः सुवर्णमयपट्टिकाभिर्बद्धो हर्यश्वस्येंद्रस्य ये तुरंगास्तेषामिव वर्णो हरितो येषां ते हविर्भिरिद्धादीप्ताद्धुताशनादग्नेरासाविर्बभूव ॥ ५ ॥ पुरटेन सुवर्णेनावबद्धमरिक्तावक्षयसायकौ तूणाविषुधीर्दिव्यं कवचं चेत्येतत्सर्वं । हुताशना आसेत्यन्वयः । पितामहः प्रल्हादः । अम्लानपुष्पां नूतनपुष्पनिर्मितां । शुक्रो जलजं शंखं ददौ ॥ ६ ॥ एवं पूर्वोक्तप्रकारेण विप्रैः शुक्रादिभिरार्जितः संपादितो योधनार्थं

युद्धपरिकरो यस्य सः । तैर्विप्रैरवकल्पितं स्वस्त्ययनं मंगलवाचनादिर्यस्य स बालिर्विप्रान्प्रदक्षिणीकृत्य कृतप्रणामः सन् प्रल्हादं पितामहमामंत्र्य दृष्ट्वा नमश्चकार ॥ ७ ॥ अथ रथमारुह्य रराजेत्युत्तरेणान्वयः । सुस्रग्धरः शोभनमालाधरः ॥ ८ ॥ हेमांगदाभ्यां सुवर्णांगदाभ्यां लसंतौ बाहू यस्य सः । धिष्ण्यस्थः कुंडलस्थो हव्यराट् आग्निरिव ॥ ९ ॥ स्वतुल्यमैश्वर्यं रथश्च स्त्रीश्च येषां तैः स्वयूथैः स्वकीयैर्दैत्ययूथपैर्वृतो ऋद्धां समृद्धामिंद्रपुरीं स्वर्गं प्रति ययावीति द्वयोः श्लोकयोरन्वयः । कथं भूतैर्दृग्भिः । खमंतरिक्षं पिबद्भिरिव परिधीन्दिशो दहद्भिरिव ॥ १० ॥ ध्वजिनीं सेनां विकर्षन् आकार्षन्प्रेरयन्नित्यर्थः । रोदसीं द्यावापृथिव्यौ कंपयन्निव ॥ ११ ॥ अतिसमृद्धामित्युक्तं । तां समृद्धिमेव वर्णयाति ॥ रम्यामित्यादिभिः सार्धैरेकादशभिः । उपवनानि फलप्रधानानि । निकटानि चोद्यानानि पुष्पप्रधानानि दूरस्थानि वा तै रम्यां । कथं भूतैः । कूजयंति विहंगमिथुनानि येषु तैर्गायंतो मत्ता मधुव्राता भ्रमरा येषु तैः प्रवालादीनां पल्लवादीनां पल्लवादीनामुरुभारो यासु तादृशाः शाखा येषां तादृशा अमरद्रुमा येषु तैः ॥१२॥१३॥ यत्र नलिनीषु सुरसेविता वनिताः क्रीडंति । ता एवं हंसादि पक्षिकुलेनाकुला व्याप्ता नलिन्यः सरांसि यत्र येषु वनेषु संति । तैरुपवनोद्यानै रम्यामिति पूर्वेणान्वयः ॥ १४ ॥ परिखभूतया जलदुर्गवद्दिघमानयेत्यर्थः । आकाशगंगया भागीरथ्याऽऽवृतामग्निवर्णेन सौवर्णेन प्रकारेण चावृतां । आट्टालाः प्राकारोपरि रचितान्युन्नतानि युद्धस्थानानि तत्सहितेन । रुक्मपट्टानि सुवर्णमयोपरिबंधवंति कपाटानि येषु तैर्द्वारैर्गृहद्वारैः स्फटिकमयगोपुरैः पुरद्वारैश्च जुष्टां युक्तां । विभक्ता विस्तृताः प्रपथा राजमार्गा यस्यास्तां ॥ १५ ॥ सभा उपवेशस्थानानि चत्वराण्यंगणानि रथ्या उपमार्गास्तैराढ्यां संपन्नां दशकोटिवाचकानि । अर्बुद शब्दो बहुत्ववाचकः । तथा च बहुभिर्विमानैर्युतां वज्रैर्विद्रुमैश्च खचिता वेदयो वेदिका येषु तैर्मणिमयैर्नवरत्नखचितैः श्रृंगाटकैश्चतुष्पथैर्युतां ॥ १६ ॥ यत्रेंद्रपुर्यां नित्यं वयस्तारुण्यं रूपं च सौंदर्यं च यासां ताः श्यामाः षोडशवत्सराः । श्यामाः षोडशवार्षिका इत्यभिधानात् । विरजवाससो निर्मलवस्त्राः रूपवत्यः स्वलंकृताः स्त्रियोऽर्चिभिर्ज्वालाभिर्वह्नय इव भ्राजंते ॥१७॥ यत्र मारुतः सुरस्त्रीणां केशेभ्यो विभ्रष्टानां पतितानां नवैर्नूतनैः सौगंधिकैः स्थलचंपकैः पुष्पैर्विनिर्मितानां स्रजां मालानामामोदं परिमलमुपादाय मार्गे आवाति ॥ १८ ॥ अगरुगंधिना कृष्णागरुगंधवता पांडुरेण शुभ्रेण हेमजालाक्षेभ्यः सुवर्णगवाक्षेभ्यो

निर्गच्छता धूमेन प्रतिच्छन्ने व्याप्ते सुरप्रिया अप्सरसः ॥ १९ ॥ मुक्तामयैर्वितानैर्मणिहेममयैः केतुभिर्ध्वजैश्च नानाविधपताकायुक्ताभिः । वलभीभिश्च विमानानां पुरोभागैरावृतां व्याप्तां । पताकावलिभिः समावृतामिति पाठे स्पष्टोऽर्थः । वैमानिकानां विमानोपर्युपविष्टानां स्त्रीणां कलगीतैर्मधुरगायनैर्मंगलां शोभितां शिखंडिभिर्मयूरैः पारावतैर्भृंगैर्भ्रमरैश्च नादितां ॥ २० ॥ तालैः सहिताभिर्वीणादिभिः सवाद्यैर्नृत्यैरुपदेवानां गंधर्वाणां गीतकैश्च मनोरमां स्वप्रभया जिता तिरस्कृता ग्रहाः सूर्यादयो यया सा तां ॥ २१ ॥ अधर्मिष्ठाः पापकर्तारः खला दुर्जना भूतद्रुहः प्राणिनामपकारकारिणः शठा गूढद्वेषिणो मानिनोऽहंकारिणः कामिनः कामुकाः । लुब्धाः सत्पात्रेऽदातारश्च । यां न व्रजंति । एभिः पूर्वोक्तैरधर्मादिभिर्दोषै रहिताः पुरुषाः यामिंद्रपुरीं व्रजंति । यत्र नित्यवयोरूपा इत्यादि यच्छब्दानां तामित्युत्तरेणान्वयः ॥ २२ ॥ तां देवधानीं देवपुरीं वरूथिनीपतिः सेनापतिः स बलिः पुर्या बहिः समंतात्परितः पृतन्यया सेनया रुरुधे । आचार्येण शुक्रेण दत्तं जलजं शंखं प्रयुंजन् जनयन् ॥ २३ ॥ मघवानिंद्रो बृहस्पतिं ॥ २४ ॥ भूयानुद्यमो महान्प्रयत्नो दृश्यते । इमं बलिमविषह्यं सोढुमशक्यं मन्ये । अयं केन हेतुनैवं तेजसोर्जित आसीत् ॥ २५ ॥ कुतो वाऽपि कुतश्चित्कारणादपि प्रतिबोढुं प्रतियोद्धुमपाकर्तुं वाऽधीश्वरः समर्थः । इदं जगद्दशादिशलिहन्नास्वादयन्निव । दृग्भिर्नभोंऽतरिक्षं दहन्निव सांवर्तकाग्निरिव प्रलयाग्निरिवोत्थितः ॥ २६ ॥ यतः कारणाद्बलेरोज आदिकमासीत् । यत ओज आदेर्निमित्तादेष उद्यम आसीत् । मद्रिपोर्मम शत्रोर्बलेरेतस्यैतादृशस्य दुर्धर्षत्वस्य धर्षयितुमशक्यत्वस्य कारणं ब्रूहि ॥ २७ अस्य बलेरुन्नतेरुत्कर्षस्य कारणं तत्किं ब्रह्मवादिभिः ॥ २८ ॥ भवद्विधो भवत्सदृशो वाऽस्य बलेः पुरः स्थातुं न शक्तः । यथा कृतांतस्य यमस्य पुरतो जनः स्थातुं न शक्तस्तद्वत् ॥ २९ ॥ अत्रोचितमुपायमाह ॥ तस्मादिति । यूयं त्रिविष्टपं स्वर्गमुत्सृज्य निलयनमदर्शनमित्यर्थः । यात प्राप्नुत । कथं भूताः । यतः कालाच्छत्रोर्विपर्ययो विपत्तिः स्यात् । तं कालं प्रतीच्छंतो प्रतीक्ष्यमाणाः ॥ ३० ॥ केनास्य विपर्ययः स्यादित्यत आह ॥ एष इति । एष बलिर्विप्राणां बलेनोदर्कोऽभिवृद्धोऽत एवं संप्रतीदानीमुत्कृष्टः पराक्रमः । एषामेव भृगूणामेवापमानेन सानुबंधः सकुटुंबो विनंक्ष्यति नाशं प्राप्स्यति ॥ ३१ ॥ अर्थानुदर्शिना देशकालोचितकार्यदर्शिना । गुरुणैवं सुमंत्रितो विचारितोऽर्थः कार्यं येषां ते गीर्वाणा देवास्त्रिविष्टपं स्वर्गं हित्वा कामरू-

पिणः प्रच्छन्नाकारः संतो निलयन जग्मुः ॥ ३२ ॥ अतिविलीनेष्वदर्शनं गतेषु सत्सु देवधानीं देवाश्रयां पुरीं स्वर्गमधिष्ठायाश्रित्य निन्ये चक्रे ॥३३॥ एवं प्राप्तमिंद्रपदं स्थिरं कर्तुं भृगवो बलिमयाजयन्नित्याह ॥ तमिति । अनुव्रतमनुवर्तिनं हयमेधानामश्वमेधानां शतेन । तदनुभावेनाश्वमेधमाहिम्ना । उडुराडिव चंद्र इव ॥ ३५ ॥ द्विजदेवैर्ब्राह्मणैरुपलंभितां प्रापितामृद्धामातिसमृद्धां ॥ ३६ ॥
इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ८—१४ ॥ ॥

॥ हरिः ॐ ॥ परित्राणाय साधूनां विनाशाय च दुष्कृतां । धर्मसंस्थापनार्थाय संभवामि युगे युग इति स्ववचनं सत्यं कर्तुं देवानां संकटे प्राप्ते हरिणा वामनावतारः कृत इति वक्तुं तदुपयुक्तां कथामाह ॥ एवमिति । आदितिर्नष्टेष्वदर्शनं गतेषु । पर्यतप्यत्संतापं प्राप ॥ १ ॥ तस्या आदित्याश्चिरकालीनात्समाधेर्ध्यानाद्विरत उपरतः ॥ २ ॥ स कश्यपः कृत आसनस्वीकारो येन सः । यथा न्यायं विध्युक्तप्रकारेण सभाजितः पूजितः सन् दीनवदनां म्लानमुखीं पत्नीमिदमाह ॥ ३ ॥ दीनवदनत्वादिकमालक्ष्य बहुधा विकल्पयन्पृच्छति ॥ अप्यभद्रमिति सप्तभिः । हे भद्रे शोभनेऽदिते । स्वर्गलोकेऽधुना विप्राणामभद्रममंगलं नागतमपि । अपि शब्दः किं शब्दार्थः । अभद्रं मृत्युरूपं नाप्राप्तं किं । धर्मस्याभद्रं नागतं किं । मृत्योश्छंदामिच्छामनुवर्तत इति मृत्युर्वशवर्तिनो जनस्येत्यर्थः । छंदानुवर्तिनो मृत्योः सकाशाल्लोकस्येति वा । अभद्रं मृत्युरूपं नागतं किं ॥ ४ ॥ अपि वाऽथवा । गृहमेधिनां गृहस्थाश्रमोपेतो यत्र गृहेष्वयोगिनामपि संसारिणामपि धर्मोद्योगः प्राप्तिर्भवति । स्वधर्मानुष्ठानेन धर्मार्थकामसिद्धिर्भवतीत्यर्थः । तेषु गृहेषु किंचिदप्यकुशलं । नहीति च तत्रानुकर्षः कर्तव्यः ॥ ५ ॥ कुटुंबे पुत्रादि पोषणे असक्तयाऽतिथयो गृहमभ्युपेत्य प्रत्युत्थानादिनाऽपूजिता इव गृहाद्याता न हि ॥ ६ ॥ नार्चिता अनार्चिताः संतो ये निर्गच्छंति ते गृहाः प्रेतराजगृहस्य श्मशानस्य समास्तुल्याः ॥ ७ ॥ हे सति । मयि प्रापिते सति । गृहादन्यत्र स्थिते सति उद्विग्ना संभ्रांता धीर्यस्यास्तथा त्वया वेलायां होमकालेऽग्नयो कर्हिचिन्न हुता किं ॥ ८ ॥ यस्याग्नेः पूजया गृहेणान्वितः पुरुषः । तत्र हेतुमाह ॥ ब्राह्मण इति । सर्वदेवानामंतर्यामिणो विष्णोर्ब्राह्मणोऽग्निश्चेति द्वयं मुखं यतोऽत इत्यर्थः ॥ ९ ॥ हे मनस्विनि । तव पुत्राः सर्वेऽपि कुशलिनः क्षेमवंतः किं । प्रश्नबीजमाह ॥ लक्षय इति । भवत्याऽऽत्मानं मनोऽस्वस्थं चिंतायुक्तलक्षणैर्मुखम्लानादिभिर्लक्षये

तर्कयामि ॥ १० ॥ अस्वास्थ्यकारणमन्यदस्तीति वक्तुं त्वत्पृष्टमभद्रादिकं नास्तीत्याहुः ॥ भद्रमिति द्वाभ्यां । द्विजानां भद्रमेवास्ति। त्रिवर्गस्य धर्मार्थकामरूपस्य परं क्षेत्रमुद्भवस्थानरूपा इमे गृहाश्च सर्वे कुशलिनः ॥ ११ ॥ भिक्षवो भिक्षुका लिप्सवो बांधवाश्चाश्रय इत्यादि सर्वं भगवतस्तवानुध्यानान्मया क्रियमाणान्नरिष्यति ॥ १२ ॥ प्रस्तुतं विज्ञापयितुमाह ॥ को न्विति । मानसो मनस्यपेक्षितः कामो विषयो न संपद्येत न सिध्येत् । प्रजाध्यक्षः प्रजानां कुशलाकुशलयोरध्यक्षः साक्षित्वेन द्रष्टा । भावान्यस्य ममैवं पूर्वोक्तप्रकारेण धर्मान् अग्न्यतिथ्यादि पूजारूपान्प्रभाषसे उपदिशसि । तस्या ममेत्यन्वयः ॥ १३ ॥ ननु सर्वस्यापि भद्रत्वेन तव म्लानमुखत्वं किं निमित्तमित्यतस्तत्र निमित्तं वदतीति स्वापेक्षितं प्रार्थयते ॥ तथैवेति चतुर्भिः । हे मारीच मरीचपुत्र। सत्त्वंरजस्तमोजुषः सात्त्विकराजसतामसस्वभावास्तवैव मानसशरीरजा मनसा शरीरेण वा जाता या इमाः प्रजाः सुरासुरादयस्तासु सुरासुरादिषु महेश्वरो हरिर्विभागं सत्त्वादिगुणानुकूल्येन मनोरथं भजते करोति । अद्य दैत्यानां मनोरथं साधयतीति हृदयं ॥१४॥ हे ईश पते । श्रेयः क्षेमं चिंतय साधय । सपत्नैर्दैत्यैर्हृता श्रीर्येषां ते तान् । हृतं स्थानं स्वर्गो येषां तान् । नोऽस्मान् । पुत्रापेक्षया पुल्लिंगबहुवचने ॥ १५ ॥ उक्तमेव विशदयति ॥ परैरिति । शत्रुभिरित्यर्थः । विवासिता बहिष्कृता स्वस्थानाच्च्याविता व्यसनसागरे दुःखसागरे मे मम । पुत्राणामिति शेषः । ऐश्वर्यादीनि हृतानि ॥ १६ ॥ कल्याणं मंगलं विधेहि । धिया बुद्ध्या । अंतःकरणपूर्वकमिति यावत् । कल्याणकर्तॄणामुत्तमः ॥ १७ ॥ कः प्रजापतिः कश्यपः स्मयन्निवाश्चर्यं कुर्वन्निव प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेन तत्त्वमुपदिशति ॥ अहो इति । मायाया मोहिन्या इच्छाया बलं सामर्थ्यं ॥ १८ ॥ आनादिष्वात्मसु जडरूपो भौतिको भूतविकारः प्रकृतेः परो विलक्षण आत्मा जीवः क । के कस्य पतिपुत्राद्याः । संबंधाभावादिति संबंधः । एषु स्वसंबंधिज्ञाने मोह एव मिथ्याज्ञानमेव ॥ १९ ॥ अत्रापरितुष्यंतीं प्रत्याह ॥ उपतिष्ठस्वेति । उपतिष्ठस्वोपास्व । सर्वभूतानां सर्वप्राणिनां हृदयगुहावासं ॥ २० ॥ विधास्यति करिष्यति । दीनेष्वनुकंपावान् । नन्वेवं भूतकामप्राप्तिहेतुर्देवांतरसेवाप्रसिद्धस्तत्राह ॥ अमोघेति । भक्तिर्भजनमितरदेवादिविषया ॥ २१ ॥ उपस्थास्ये भजिष्ये । सत्यसंकल्पो हरिर्यथा मम मनोरथं विदध्यात् ॥ २२ ॥ यथा च पुत्रकैः सह सीदंत्याः क्लेशितायाः मे देव आशु तुष्यति । तथा तस्य हरे-

रुपश्रावनं सेवाविषयं विधिं प्रकारमादिश ॥ २३ ॥ मे मया पृष्टः पद्मजो ब्रह्मा प्रजाकामस्य पुत्रकामस्य यद्व्रतमाहैतत्केशवतोषणं व्रतं ते वक्ष्यामीत्यन्वयः ॥ २४ ॥ व्रतानुष्ठानप्रकारमेवाह ॥ फल्गुणस्येत्यादिना । फाल्गुणस्य मासस्यामले शुक्लपक्षे द्वादशाहं द्वादशदिनेषु पयोव्रतः । परमया भक्त्याऽन्वितः पुरुषोऽरविंदाक्षं हरिमर्चयेत् । पयोव्रत इति पुल्लिंगप्रयोगस्तु व्रतस्य साधारणत्वज्ञापनार्थः ॥ २५ ॥ तत्रादौ व्रतारंभात्पूर्वेद्युःकृत्यमाह ॥ सिनीवाल्यामित्यादिना ब्रह्मचार्यथ तत्राप्यामित्यंतेन ग्रंथेन । सिनीवाल्यां चतुर्दशीयुक्तायाममावास्यायां । सा नष्टेंदुः सिनीवाली सानष्टेंदुः कलाकुहुरित्यभिधानात् । यदि वन्यवराहात्खातमृत्तिका लभ्येत तर्हि क्रोडेन वन्यवाराहेण विदीर्णयोत्खातया मृदाऽऽलिप्य स्रोतसि सप्रवाहवति जले स्नायात् । अन्यथा प्रशस्तमृत्तिकयैव स्नायादित्यर्थः । मृत्तिकालेपेनैवं वक्ष्यमाणं मंत्रमुदीरयेत्पठेत् । तमेव मंत्रमाह ॥ त्वं देवीति । हे देवि त्वं भूमौ भूतानां स्थानमाश्रयमिच्छताऽऽदिवराहेण हरिणा रसाया रसातलादुद्धृताऽसि । तुभ्यं नमो नमः । मे पाप्मानं पापं प्रकर्षेण नाशय निवर्तितात्मानियमो नित्यनैमित्तिकात्मकः संध्योपासनादिको येन सः समाहित एकाग्रचित्तः सन् देवमर्चयेत् ॥ २६ ॥ २७ ॥ पूजास्थानान्याह ॥ अर्चायामिति । अर्चायां साळग्रामप्रतिमायां सुवर्णादिरचितप्रतिमायां वा । अर्च्यास्वन्यतरस्मिन्नधिष्ठान इति ज्ञेयं ॥ २८ ॥ तत्रावाहने नव मंत्रान्याह ॥ नमस्तुभ्यमित्यादिना । एतन्मंत्रैर्हृषीकेशमित्यन्वितेन पद्यादौ द्वादशाक्षरं वक्ष्यति । महीयसे महत्परिणामोपेताय । अव्यक्ताया प्रत्यक्षाय सूक्ष्मायाणुपरिमाणाय प्रधानपुरुषाय सर्वोत्तमपुरुषाय चतुर्विंशद्गुणा अव्यक्तादि पृथिव्यंतानि चतुर्विंशति तत्वानि जानातीति तथा तस्मै । गुणानां तत्त्वानां संख्यानं प्रतिपादनं यस्मिंस्तस्मिन् तद्गुणसंस्थानं सांख्यशास्त्रं तस्य हेतवे कर्त्रे कपिलात्मन इत्यर्थः ॥ २९ ॥ चत्वारिशृंगा त्रयोऽस्य पादा इति मंत्रोक्तयज्ञरूपेण विष्णुं प्रणमति ॥ नम इति । द्विशीर्षे प्रायणीयोदनीयाख्ये यस्य तस्मै । त्रीणि पादानि पादाः प्रातर्माध्यंदिनसायंसवनाख्यानि यस्य तस्मै । चत्वारिशृंगाणि ऋगादि चत्वारो वेदा यस्य तस्मै । तंतवे फलविस्तारकाय संततिहेतवे वा । सप्तगायत्र्यादि छंदांसि हस्ता यस्य तस्मै । त्रैय्यां विद्यायां मंत्रब्राह्मणकल्पाख्यायामात्मा स्वरूपं यस्य तस्मै । मंत्रादिभिस्त्रिभिर्यज्ञस्वरूपस्य निष्पद्यमानत्वादिति भावः । यज्ञायैतादृशयज्ञसंनिहितत्वेन यज्ञरूपाय विष्णवे नमो नमः । चत्वारिशृंगा वेदास्तु पादास्त्रिसवनानि च । प्रायणीयं शिरस्त्वेकमन्यच्चोदनीयकं । हस्तास्तु

सप्तछंदांसि तैर्गृण्हाति फलान्यसौ । मंत्रब्राह्मणकल्पैस्तु त्रिधाबद्ध इतीर्यते । शास्त्रोद्गातृस्तुतिरवै रोरवीत्यृत्विजो मुखात् । वृषभो महान्स्वधर्मत्वाद्देवस्तु फलभावनादिति चत्वारि शृंगेति श्रुतिव्याख्यानरूपप्रमाणोक्त एवार्थ इति ज्ञेयं ॥ ३० ॥ शिवांतर्यामित्वेन हरिं नमति ॥ नम इति । शिवाय शिवांतर्यामिणे मंगलरूपायेति वा । रुद्राय रुजं संसाररोगं द्रावयति नाशयतीति तथा तस्मै । रुद्र शब्दवाच्याय । शक्तेर्लक्ष्म्याः शक्त्याख्यायुधस्य वा । धराय धर्त्रे ॥ ३१ ॥ हिरण्यगर्भाद्यंतर्यामित्वेन नमति ॥ नम इति । हिरण्यगर्भाय चतुर्मुखसंनिहिताय । प्राणाय सूत्रानामकवाय्वंतर्गताय । जगत आत्मने स्वामिने । योगैश्वर्यमणिमाद्यैश्वर्यं शरीरं यस्य तस्मै । योगस्य प्राणायामादि प्रतिपादकयोगशास्त्रस्य हेतवे कर्त्रे ॥ ३२ ॥ ऋषिरूपाय नारायणाय नराय नरनामकशेषाविष्टाय हरये हरिनामकाय । नरनारायणहरयस्त्रयोऽपि धर्मपुत्राः ॥ ३३ ॥ अधिगता प्राप्ता श्रीर्येन तस्मै । केशवाय कश्चेशश्च केशौ । तयोः प्रवर्तकाय ॥ ३४ ॥ हे वरदानां ऋषभ । वरेण्य भक्तैर्वरणीय । हरे । त्वं पुंसां यतः सर्ववरदोऽस्यतस्ते पादरेणुमुपासते ॥ ३५ ॥ देवाः श्रीश्च तत्पादपद्मयोस्तस्य हरेः पादपद्मयोरामोदं परिमलं स्पृहयंत इवेच्छंत इव यमन्ववर्तंत सो मे प्रसीदतां ॥ ३६ ॥ एभिर्नवमंत्रैरुपस्पर्शनमाचमनं ॥ ३७ ॥ पयसा क्षीरेण । उपवीतं यज्ञोपवीतं ॥ ३८ ॥ पद्यादौ मंत्रमाह ॥ द्वादशाक्षरविद्ययेति । ॐ नमो भगवते वासुदेवायेति मंत्रेण । पयसि शृतं पक्वं पायसं सर्पिः सगुडं दत्वा हरौ समर्प्य मूलविद्यया द्वादशाक्षरेणैव निवेदितं होमशेषं तदन्नं स्वयं वा भुंजीत ॥ ३९ ॥ ४० ॥ अर्चित्वा छत्रचामरादि राजोपचारैः पूजयित्वा । अष्टोत्तरशतं द्वादशाक्षरं जपेत् । स्तुतिभिः पूर्वोक्ताभिरन्वभिश्च ॥ ४१ ॥ तस्य हरेः शेषं निर्माल्यं पुष्पादिकमुद्वासयेद्विसृजेत ॥ ४२ ॥ द्वाववरौ येषां तान् । अवरपक्षेऽपि द्वाववश्यं भोजयेदित्यर्थः । मुख्यतस्तु द्वादशेति भावः । सभाजितैर्भोजनादिना पूजितैस्तैर्विप्रैरनुज्ञातः सन् सेष्टो बंधुभिःसहितो भुंजीत ॥ ४३ ॥ तस्यां रात्रौ ब्रह्मचारी च भवेत् । एवं व्रतारंभात्पूर्वदिनकृत्यमुक्त्वाऽथ व्रतदिनकृत्यमाह ॥ श्वो भूत इत्यादिना । श्वो भूते प्रभाते सति यथा यथावत् । न केवलं दंडपूजनं प्रथमदिनमात्रे किंतु यावद्व्रतसमानद्वादशदिनात्मकं व्रतसमाप्तिपर्यंतमर्चयेत् । पयोभक्षः क्षीरमात्राहारः । विष्ण्वर्चने आदृत आदरवान् ॥ ४५ ॥ अहरहः प्रतिदिनं होमरूपमर्हणमग्निपूजनं ॥ ४६ ॥ ४७ ॥ अधः स्वापमधःशयनं त्रिषवणं प्रातर्मध्यान्हसायंकालीनं स्नानं ।

असद्भिर्दुर्जनैः सहालापनं संभाषणमुच्चावचान् बहून् आलापान्वा भोगान् ॥ ४८ ॥ अहिंसोऽहिंसकः ॥ ४९ ॥ पंचकैः पंचामृतै-र्विधिकोविदैर्ब्राह्मणैर्ऋषिभिः । विभवे सति वित्तशाठ्येन द्रव्यलोभेन वर्जिताः ॥ ५० ॥ शिपौ गरुडे विप्राय रुद्राय विष्णवे विष्णुमुद्दिश्य निरूप्य श्रपयित्वा । शृतेन पक्वेन तेन चरुणा पुरुषं हरिमुद्दिश्य यजेताग्नौ जुहुयात् ॥ ५१ ॥ गुणवन्माधुर्यादि षड्रसोपेतं । पुरुषस्य हरेस्तुष्टिदं ॥५२॥ ऋत्विजश्च ऋत्विग्भूतान् ब्राह्मणांश्च । न तु आचार्यादि पूजनं हरेराराधनं विद्धि ॥५३॥ गुणवता मधुरादि गुणोपेतेन सदन्नेन । हे शुचिस्मितेऽदिते । ये च तत्र तस्मिन्महोत्सवे समागतास्तानन्यान् ब्राह्मणांश्च शक्त्या भोजयेत् ॥५४॥ यथार्हतो यथायोग्यमाश्वपाकांश्चांडालपर्यंतान् जनान् ॥५५॥ ननु दीनांधादिभोजनं विष्णोः प्रीणनं प्रीतिकरमिति विद्वान् जानन् ॥ ५६ ॥ स्वस्तिवाचकैः स्वस्तिवाचनैस्तस्य हरेः कथाभिरन्वहं निरंतरं ॥ ५७ ॥ उपसंहरति ॥ एतादिति । पितामहेन ब्रह्मणा मह्यमभिहितं मया च ते तव समुदाहृतं । एवं पयोव्रतविधिमुक्त्वेदं त्वमपि कुर्वित्युपदिशति ॥ त्वं चेति । हे महाभागेऽदिते । सम्यक् चीर्णेन कृतेनानेन पयोव्रतेन शुद्धभावेन शुद्धस्वभावेनात्मना मनसा त्वं भजनीयं केशवं भज ॥ ५८ ॥ ॥ ५९ ॥ आदरजननाय पयोव्रतं स्तौति ॥ अयं वेति । अयं पयोव्रताख्यो यज्ञः सर्वयज्ञफलप्रदत्वात्सर्वयज्ञाख्य इत्युच्यते । इदं सर्वव्रतफलप्रदत्वात्सर्वव्रतमिति च स्मृतं । इदं तपः सारभूतमिदमेव महादानफलहेतुरीश्वरस्य तर्पणं तृप्तिकरणं च ॥ ६० ॥ पयोव्रतस्य यमनियमत्वं चाह ॥ त एवेति । येन सर्वसाधनोत्तमेन पयोव्रतेनाधोक्षजस्तुष्यति । यमनियमाश्च । तपः संतोष आस्तिक्यं दानमीश्वरपूजनं । सिद्धांतश्रवणं चैव ह्रीर्मतिश्च पयोव्रतं । एते तु नियमा प्रोक्तास्तांश्च सर्वान्पृथक् शृणु । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवं क्षमाधृतिर्मिताहारः शौचं वैते यमाः स्मृता इति वचनोक्ता ज्ञेयाः ॥ ६१ ॥ प्रयतैकाग्रचित्ता । आचर कुरु व्रतान् ॥ ६२ ॥ इति श्रीभागवतटिप्पण्यां पंचदशोऽध्यायः ॥ ८—१५ ॥ ॥

॥हरिः ॐ॥ आदित्या पयोव्रताचरणं वक्ति ॥ इत्युक्तेति । चिंतयंती स्मरंतीदं पयोव्रतमन्वतिष्ठत् । अचरादिति संबंधः । अतं-द्रितांऽऽलस्यरहिता ॥१॥ तदेव विवृणोति ॥ प्रगृह्येति । प्रगृह्येंद्रियाख्यदुष्टाश्वान् बुद्धिः सारथिर्यस्याः सा ॥२॥ अखिलानामंतर्या-मिणि ॥ ३ ॥ व्रताचरणफलमाह ॥ तस्या इति । तस्या अदित्याः । हे तात राजन् ॥ ४ ॥ नेत्रयोर्गोचरं विषयं । प्रीत्या विव्हला

॥५॥ तस्या भक्तिलक्षणं दर्शयति । सोत्थाय बद्धांजलिः स्थिता बद्धांजलिर्भूत्वेत्यर्थः । ईडितुं स्तोतुं नोत्सहे न शशाक । अपि तु तूष्णीमास । कथं भूता । आनंदजलैराकुलिते पूरिते ईक्षणे यस्याः सा पुलकैः रोमांचैराकुला व्याप्ताकृतिर्देहो यस्याः सा। तस्य हरेर्दर्शनेन योऽत्युत्सवस्तेन गात्रे शरीरे वेपथुः कंपो यस्याः सा ॥६॥ ततः किमकरोदित्यत आह ॥ प्रीत्वेति । चक्षुषा पिबतीवोद्वीक्षतीक्षमाणा ॥७॥ स्वाभीष्टोदयकरगुणविशिष्टत्वेन स्तौति ॥ यज्ञेशेत्यादि त्रिभिः । यज्ञानामीश संपादक । यज्ञो विष्णुदेवतेति श्रुतेः । पुरुष पूर्णषड्गुणाच्युत । गुणैश्च्युतिरहित । तीर्थादीनि पादयोर्यस्य स तथा । तीर्थं पवित्रं श्रवः कीर्तिर्यस्य तस्य संबुद्धिः । श्रवणयोःकर्णयोर्मंगलं नामधेयं यस्य सः । आपन्नानां शरणागतानां लोकानां व्रजनस्य दुःखस्योपशमाय परिहारार्थमुदयोऽवतारो यस्य स तस्य संबुद्धिः । हे ईश अनघ शं सुखं कुरु ॥ ८ ॥ भूम्ने महते हरये नमः । विश्वाय विश्वशब्दवाच्याय । विश्वस्य जगत उत्पत्तिस्थितिसंहारार्थं स्वैरं स्वेच्छया गृहीताः पुरुषशक्तेः प्रकृतेर्गुणाः सत्त्वादयो येन तस्मै । तथाऽपि स्वस्थायाच्युतस्वरूपाय । कुतः । शश्वदुपबृंहितेनाभिव्यक्तेन पूर्णबोधेन संपूर्णज्ञानेन व्यापादितं नित्यनिरस्तमात्मनि तमोऽज्ञानलक्षणं येन तस्मै ॥ ९ ॥ अस्मन्मनोरथमीषत्करणमेव तवेति कैमुत्यन्यायेनाह ॥ आयुरिति । परमायुर्द्विपरार्धायुस्तल्लक्षणं ब्रह्मायुः । वस्तुनि सकला योगेन लभ्या गुणा अणिमादयस्त्रयाणां धर्मार्थकामानां वर्गः केवलं ज्ञानं तत्ज्ञानं । हे अनंत । तुष्टात्त्वत्तो नृणां भवंति यतोऽतोऽस्माकं सपत्नानां शत्रूणां दैत्यानां सकाशाज्जयस्तेभ्योऽस्मद्राज्यापहरणं आदि शब्देन गृह्यते । एतदादिराशीः कामः सिद्ध्यतीति किमु वाच्यं ॥ १० ॥ सर्वभूतानां क्षेत्रज्ञोंऽतर्यामी वक्ष्यमाणप्रकारेणोवाच ॥ ११ ॥ देवानां मातरदिते । सपत्नैर्हृता श्रीर्येषां स्वधामतः स्वपक्षपाताच्च बाधितानां भ्रंशितानां पुत्राणां देवानामर्थे भवत्या यच्चिरं बहुकालेन कांक्षितं तन्मया विज्ञातमित्यन्वयः ॥ १२ ॥ कांक्षितमेवाह ॥ तानिति त्रिभिः श्लोकैः । प्रतिलब्धा जयश्रीर्जयसंपद्यैस्ते । प्रतिलब्धा जयश्च श्रीश्च यैस्तैरिति वा । पुत्रैः सहोपासितं । मामिति शेषः । यद्वा । उप समीपे एकत्रेत्यर्थः । उवासितुं स्थातुमिच्छसि ॥ १३ ॥ इंद्रो ज्येष्ठो येषां तैः । विद्विषां दैत्यानां स्त्रियो गृहिणीरासाद्य समीपं प्राप्य ॥ १४ ॥ प्रत्याहृतं पुनः प्राप्तं यशश्च श्रीश्च यैस्तान्नाकपृष्ठं स्वर्गमधिष्ठायाश्रित्य क्रीडतः सुखेन स्वस्य व्यापारान्कुर्वतः ॥ १५ ॥ नैतत्कार्यं क्षिप्रं साध्यमित्यत आह ॥ प्राय इति ।

यच्चस्मात्ते दैत्या अनुकूल ईश्वरो हरिर्येषां तैर्विप्रैर्भृगुभिर्गुप्ता रक्षिता अनुकूलैरीश्वरैः समर्थैर्विप्रैर्गुप्ता इति वा। तस्मात्तत्र तेषु दैत्येषु विषये देवानां विक्रमः सुखं न ददाति ॥ १६ ॥ इदानीं विक्रमासंभवे तुष्णीमेवास्थेयमित्यत आह ॥ अथाऽपीति। यद्यपीदं पराक्रमं साध्यं न भवति। तथाऽपि। हे देवि। मम मयोपायश्चिन्त्य एव विचार्यैव कुरुते। व्रतस्य चर्यया अनुष्ठानेन संतोषितस्य। हेतुगर्भमिदं। त्वद्व्रतेन मम प्रीतत्वादित्यर्थः। तदेव विवृणोति ॥ ममेति। ममार्चनमन्यथा निष्फलत्वेन गंतुं भवितुं नार्हति। श्रद्धानुरूपामिति क्रियाविशेषणं। मदर्चनस्य श्रद्धानुसारेण फलहेतुत्वात्पुरुषार्थनिमित्तकत्वात्। क मन्ययः स्वार्थे ॥ १७ ॥ उक्तानुवादेन चिंतितोपायमेवाह ॥ त्वयेति। अपत्यानां पुत्राणां गुप्तये रक्षणायानुगुणं योग्यतानुसारेण समीडितः स्तुतश्च स्वांशेन स्वरूपभूतांशेन मारीचस्य मरीचिपुत्रस्य कश्यपस्य तपस्यवस्थितः सन् ते पुत्रत्वमुपेत्य ॥ १८ ॥ अतः पतिमुपधाव पतिमुपास्व। इदानीं ते पुरतोऽवस्थितमेव रूपमेवाकारं मां चापत्यत्वेन पुत्रत्वेन भावय चिंतय ॥ १९ ॥ परस्मा अयोग्याय शत्रवे वा। एतदेव रहस्यं नाख्येयं न वक्तव्यं देवगुह्यं सर्वं यस्मात्सुसंवृतमाच्छादितं सत्संपद्यते सिद्ध्यते इति ॥ २० ॥ प्रभोर्हरेरात्मनि स्वस्मिन् जन्मलब्धा मयि हरिर्जनिष्यतीति निश्चित्येत्यर्थः। कथं भूतं। दुर्लभमल्पपुण्यैरप्राप्यमत एव हरेः स्वपुत्रत्वसिद्ध्यर्थं पतिमुपधावदभजत् ॥ २१ ॥ अभजतेत्यनुवादाद्धरिः पितृमातृक्रमानुसारेण पूर्वं कश्यपं प्राविशदिति विशेषो ज्ञेयः। अवितथं यथार्थेक्षणं दर्शनं यस्य सः कश्यपो हरेस्ततं स्वरूपांशमात्मनि प्रविष्टमबुद्ध्यत। तत्र साधनं समाधियोगेन ध्यानलक्षणोपायेनेति ॥२२॥ स कश्यपस्तपसा चिरकालसंचितं बहुकालीनेनोर्ध्वरेतस्कत्वादिरूपेण तपसा संगृहीतं। इदं वीर्यं दैत्यनाशकरं भवेदिति समाहितं मनो यस्य स तथा। तथाऽनुसंधानः सन् अदित्यां वीर्यमाधत्त। तत्र दृष्टांतः ॥ दारुणीति। अनिलो वायुर्यथा सर्वत्र समोऽपि दारुणि वृक्षे परस्परं संघर्षणं वनदाहकमग्निमाधत्ते। एवं स्वयं पुत्रेषु समोऽपि दैत्यक्षपणं वीर्यमाधत्तेत्यर्थः ॥ २३ ॥ २४ ॥ हिरण्यगर्भश्चतुर्मुखो भगवंतं हरिमदित्यां विहितं गर्भं विज्ञाय समीडे तुष्टावेत्यर्थः। गुह्यतमान्याह ॥ जयेत्यादिना। उरुभिरुरुवृंदैर्वैर्ब्रह्मादिदेवैर्गीयत इति तथा तस्य संबुद्धिरुरुगायेति। उरवः क्रमाः पादविक्षेपा वा यस्योरुक्रमेति संबुद्धिः। ब्रह्माणि जातौ हितो

ब्रह्मण्यस्तस्मै देवाय । त्रिगुणाय सत्त्वादिगुणप्रवर्तकाय ॥ २५ ॥ अदितेरेव पूर्वस्मिन् जन्मनि प्रश्निरिति नाम । इदं च दशमस्कंधादौ प्रसिद्धं । तस्या गर्भाय पुत्राय । वेदा गर्भे यस्य तस्मै । वेदानां गर्भाय वेदेषु प्रकाशमानायेति वा । वेधसे सर्वज्ञाय । यत्र ये भूरादयो लोका नाभौ यस्य सन्निनाभस्तस्मै । त्रीणि पृष्ठानि त्रिलोकेभ्य उपरि स्थितानि वैकुंठादीनि गृहभूतानि संति यस्य तस्मै । शिपिविष्टाय । शिपि शब्देन पशु शब्दवाच्या ग्राह्याः । तेष्वंतर्यामित्वेन प्रविष्टाय । यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतिष्ठितीति श्रुतेः । यद्वा । शिपयो रश्मयस्तैर्विष्ठितायेत्यर्थः । विष्णवे व्यापिने ॥ २६ ॥ यथाऽतः पतितं तृणादिकं गभीरं स्रोतो नद्याक्षिपंत्याकर्षति तथा कालात्मा भगवान्विश्वमाक्षिपति स्वोदरे प्रवेशयति ॥ २७ ॥ इदानीं सर्वांतर्यामित्वेन सर्वाश्रयत्वं प्रतिपादयन् स्वाभीष्टं सूचयति ॥ त्वमिति । हे देव । स्थिरजंगमानां प्रजानां चराचरप्राणिनामित्यर्थः । दिवश्च्युतानां स्वर्गाकांक्षितानां परायणं परमाश्रयो यतः सर्वाश्रयोऽतः सांप्रतं देवकार्यसाधनायावतीर्णस्त्वं स्वर्गच्युतान्पुनः स्वर्गे स्थापयेति भावः ॥ २८ ॥ इति भागवतटिप्पण्यां षोडशोऽध्यायः ॥ ८—१६ ॥ ॥

॥ हरिः ॐ ॥ इत्थं विरिंचेन स्तुतं कर्मचरितं देवकार्यक्षमावीर्यं प्रभावश्च यस्य स हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः । कथं भूतः । अमृतानां मुक्तानां भूराश्रयः । यद्वा । अमृतभूर्मृतिजन्मशून्य इत्यर्थः । शंखगदाब्जचक्राण्यस्य संतीति तथा । अर्शादित्वेन मत्वर्थीयेऽच् प्रत्ययः । अब्जं पद्मं स चासौ पिशंगवासाश्चेति तथा । नलिनवत्कमलवदायते विस्तृते ईक्षणे चक्षुषी यस्य सो नलिनायतेक्षणः । प्रादुरयं वोपसर्गपूर्वक वणिक् बभूव । भू सत्तायामिति लिट् ॥ १ ॥ झषराजो मकरस्तदाकारयोः कुंडलयोस्त्विषा कांत्योल्लसतीः श्रीर्वदनांबुजे यस्य सः । श्रीवत्सो वक्षसि यस्य सः । वलयैः कंकणैरंगदैश्च सहोल्लसंति किरीटादीनि यस्य सः कांचीगुणाः कांचीसूत्रं ॥ २ ॥ मधुव्रतानां भ्रमराणां व्रातेन विघुष्टया स्वकीयया श्रीमत्या वनमाल्या विराजितः प्रजापतेः कश्यपस्य वेश्मतमो गृहस्थांधकारं स्वरोचिषा स्वदेहकांत्या विनाशयन्कंठे निविष्टो बद्धः कौस्तुभो यस्य सः ॥ ३ ॥ प्रसेदुर्निर्मला बभूवुः । सलिलाशयाः सचित्तः सरांसि ऋतवः सर्वेऽपि वामनोत्पत्तिकाल एव गुणैः स्वकालोचितपुष्पफलैरन्विताः । अग्निजिव्हा देवा अग्निमुखेन हविर्भुज इत्यर्थः । नगाः पर्वताश्च जन्हषुर्हर्षं प्रापुः ॥ ४ ॥ प्रादुर्भावमाह ॥

चेदं व्याख्यातं । तत्राऽपि श्रोणायां श्रावणनक्षत्रे चंद्रश्रवणनक्षत्रे स्थिते सतीत्यर्थः । तत्रापि श्रवणस्य प्रथमे मासे अभिजिति तन्नामके नक्षत्रे उत्तराषाढांत्यपादद्वयं श्रवणाद्यपादद्वयमाभिजिन्नामोच्यते । एतच्च श्रुत्या दर्शितं । अभिजिन्नामनक्षत्रे उपरिष्टाषाढोनामवत्तायां श्रोणायामिति । एवं विशिष्टे मूहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः । किंच नक्षत्राण्यश्विन्यादीनि । तारा शब्देन ग्रहा गुरुशुक्रादयः । ते आद्या येषां ते । सूर्यादयोऽपि तस्य हरेर्जन्म दक्षिणमुदारं चक्रुः । दक्षिणः सरलोदारेत्यभिधानात् । जन्ममुहूर्ते गुणा बहवो बभूवुरित्यर्थः । विशेषांतरमाह ॥ द्वादश्यामिति । यस्यां द्वादश्यां हरेर्जन्मेत्युक्तं । तज्जन्म तस्याहन्देवेति विदुर्ज्ञानिनस्तदा मध्यं-दिनगतः सविता तिष्ठन् सा च द्वादशी विजयानामा प्रोक्तेत्यन्वयः ॥ ६ ॥ शंखादयो ये नेदुस्तेषां अन्येषां च चित्रवादित्र-तूर्याणां वाद्यविशेषाणां निर्घोषस्तुमुलोऽतिशायितोऽभवत् ॥ ७ ॥ देवा मुनय इत्यादयः कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ॥ ८ ॥ किं पुरुषैः सहिताः किंनराश्च सुपर्णाः पक्षिणो भुजगोत्तमाः ॥ ९ ॥ अभिप्रशंसंतः स्तुवंतो विबुधानुगा गंधर्वाः ॥१०॥ निजगर्भे संभवो यस्य तं परं पुमांसं दृष्ट्वाऽदितिर्विस्मिताऽत्यंतं मुदं प्राप । प्रजापतिः कश्यपोऽपि निजमायया स्वेच्छया गृहीत-देहं हरिं प्रति जयजयेति विस्मितः सन् ॥ ११ ॥ हरिः प्रादुर्भावानंतरं किं कृतवानित्यत आह ॥ यत्तद्वपुरिति । हरिरव्यक्तव-त्सर्वात्मनाऽव्यक्तसदृशं । अव्यक्तमेवेति यावत् । स्वभावतोऽव्यक्तमेव यद्वपुर्भक्तानुकंपया व्यक्तमधारयदकरोत् । तद्वपुर्विभूषणा-युधैर्व्यक्तं भाति शोभते । तेनैव विभूषणादि विशिष्टेन रूपेण दिव्यगतिरद्भुतचेष्टितः । अनभिभूतज्ञानो हरिर्मातापित्रोः संपश्यतोः सतोर्वामनोऽणुपरिमाणो बटुर्ब्रह्मचारी बभूव । मूलरूपावतारैरभेदज्ञानाय तेनैवेत्याद्युक्तिः । एतदभिप्रायेणैव नट इति दृष्टांतः । यथा नट पुरुष एक एव स्त्रीपुरुषाद्यनेकाकारान्दर्शयति । तथा हरिरप्येक एवानेकाकारान्दर्शयति ॥ १२ ॥ महर्ष्यादयो वसिष्ठादयः कर्माणि जातकर्मादीनि प्रजापतिं कश्यपं पुरस्कृत्य ॥ १३ ॥ उपनीयमानस्य तस्य बटोः सविता सूर्यः सावित्रीं सवितृदेवतां गायत्रीमब्रवीदुपादिदेश । ब्रह्मसूत्रं यज्ञोपवीतं मेखलां मौंजीं ॥ १४ ॥ भूमिर्भूदेवता । वनस्पतिर्वनानां पतिः सोमश्चंद्रः । कौपी-नमाच्छादनं च माता अदितिः । द्यौर्द्युलोकाभिमानिनी देवी ॥ १५ ॥ वेदगर्भश्चतुर्मुखः । अक्षमालां जपमालां ॥ १६ ॥ यक्ष-

राट् कुबेरः पात्रिकां भिक्षापात्रं । अंबिका पार्वती ॥ १७ ॥ एवं पूर्वोक्तप्रकारेण संभावितो मानितो मारिषः श्रेष्ठः स बटुर्ब्रह्मवर्चसेन कांतिविशिष्टेन ब्रह्मर्षीणां गणेन संजुष्टां सभामतिक्रम्यारोचत ब्रह्मर्षिसभापेक्षयाऽतिशयेन शुशुभ इति भावः । सभामरोचयदिति वा ॥ १८ ॥ आहितमग्न्युत्पत्तिविधिना समिद्धं परिसमूहनं । अग्नेः समंतादुदकैः प्रोक्षणं कृत्वा दर्भैः परितः परिस्तीर्य परिस्तरणं कृत्वा । द्विजो बटुः ॥ १९ ॥ यदर्थं बटूर्बभूव तदाह ॥ श्रुत्वेत्यादिना यावत्समाप्तिः । भृगूणां भृगुभिरुपकल्पितैः प्रवर्तितैरश्वमेधैर्यजमानं यजंतमूर्जितं बलिं श्रुत्वा । तत्राखिलैः सारैर्गुणैः संभृतः पूर्णो वामनो जगाम । कथं भूतः । भारेण गरिम्णा पदे पदे प्रतिपादविक्षेपे गां भूमिं नमयन् प्रदक्षिणी कुर्वन् ॥ २० ॥ नर्मदाया नद्या उत्तरे तटे भृगुवत्ससंज्ञके क्षेत्रे क्रतूत्तमं प्रवर्तयंतो ये बलेर्ऋत्विजो भृगव आसंस्ते तं बटुं व्यचक्षतापश्यन् । कमिव । आरात्समीप एवोदितं रविं यथा सूर्यमिव । यज्ञार्त्विज इति पाठे यज्ञे ऋत्विग्भूता इत्यर्थः ॥ २१ ॥ ऋत्विज एव सदस्य नामकाः केचन यज्ञे आवश्यकाः संति ते ऋत्विजः । य एष सूर्यः किलोत वा विभावसुरग्निः । अथवा सनत्कुमारो हरिः क्रतोर्यज्ञस्य दिदृक्षया द्रष्टुमिच्छयाऽऽयातीति । व्यतर्कयन्निति शेषः ॥ २२ ॥ सशिष्येषु भृगुषु । भृगुभिरिति यावत् । इत्थं पूर्वोक्तप्रकारेणानेकधा वितर्क्यमाणो विचार्यमाणः स वामनः । दंडेन सहितं छत्रं कमंडलुं बिभ्रद्वामनो हयमेधवाटमश्वमेधमंटपं विवेश ॥ २३ ॥ मौंज्या मौंजनामकतृणनिर्मितयाऽऽवीतं कटिदेशे परिवीतमुपवीतवद्धृतमजिनं कृष्णसारचर्म वा । उत्तरं उत्तरीयवस्त्रं यस्य तं । उपवीताजिनोत्तरमुपवीतमजिनाख्योत्तरीयं च यस्य तमिति वा । जटिलं जटाधारिणं मायया स्वेच्छया माणवकं बटुभूतं हरिं ॥ २४ ॥ प्रविष्टं वीक्ष्य सशिष्या भृगवोऽग्निभिराहवनीयगार्हपत्यदक्षिणाग्निभिः सह समुत्थाय प्रत्यगृण्हन् अत्रागच्छत्विति स्वीकृतवंतः । आहृतवंत इति यावत् । कथं भूताः। तस्य बटोस्तेजसा संक्षिप्ता अभिभूताः संतः ॥ २५ ॥ यजमानो बलिर्दर्शनीयं सुंदरं मनोरमं । मनःसुखकररूपस्य देहाकारस्यानुरूपा अनुकूला अवयवा हस्तादयो यस्य तं । दृष्ट्वेति शेषः ॥ २६ ॥ अयमासने उपवेशानंतरं स्वागतेन सकुशलं किमेवं रूपेणाभिनंद्यापृच्छ्य संतोष्य भगवतः पादाववनिज्य प्रक्षाल्य मुक्तसंगो विषयासक्तिर्येन तं विरागिणमर्चयामास ॥ २७ ॥ धर्मविद्विप्रप्रक्षालनोदकधारणजन्यपुण्यवित्स बलिः कलेः कल्मषान् दोषान् अपहंति नाशयंतीति तथा सुमंगलं ।

तस्य बटोः पादशौचं पादोदकं मूर्ध्न्यदधात् । कीदृशं तत् । देवानां देवश्चंद्रो मौली यस्य स गिरीशश्च महादेवोऽपि परमया भक्त्या यत्पाददोकं गंगारूपं मूर्ध्ना दधार तादृशमित्यर्थः ॥ २८ ॥ हे ब्रह्मन् । ते स्वागतं कुशलं किं । हे आर्य । त्वां साक्षात्प्रत्यक्षब्रह्मर्षीणां तप एव मन्ये । कथं भूतं । तपोवर्धनं मूर्तिमत् ॥ २९ ॥ अयं क्रतुरद्य स्विष्टः सम्यगिष्टः । अत्र सर्वहेतुमाह ॥ यादिति । यद्भवान्नो गृहान् प्रत्यागतोऽत इत्यर्थः ॥ ३० ॥ हे द्विजात्मज । त्वच्चरणयोरवनेजनैः पादप्रक्षालनरूपैर्वा-भिर्जलैर्हतानि नष्टान्यंहांसि दुरितानि यस्य तस्य मेऽग्नयो यथाविध्यद्य सुहुताः । अहो बटु । इयं च भूस्तनुभिः कोमलैर्वा । तव पादैः पादस्पर्शेनेत्यर्थः । पुनीता पवित्रीकृताऽभूत् ॥ ३१ ॥ हे बटो । त्वं यद्यद्यं कामं वांच्छसि तत्तत्कामं मे मत्सकाशात्प्रतीच्छ गृहाण । हे विप्रसुत । त्वामर्थिनमर्थापेक्षयाऽऽगतमनुतर्कये ऊहयामि । अतो गां धेनुं भूमिं वा । गुणा धान्यादि वस्तून्यस्मिन्संतीति गुणवत्सर्वसंपत्समृद्धमित्यर्थः । धाम गृहं वा मृष्टं प्रशस्तमन्नं वा । हे विप्र । विवाहार्थं कन्यां वा समृद्धग्रामादीन्वा । हे अर्हतम पूज्यतम । तं प्रतीच्छ स्वीकुरु ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥ ८—१७ ॥ ॥

॥ हरिः ॐ ॥ वैरोचनेर्बलेः सूनृतेन कुशलप्रश्नेन सहितं प्रतिनंद्यानुमोद्य ॥ १ ॥ दातुः स्तुतिः कर्तव्या । प्रस्तावोचितं वक्तव्यमिति भिक्षुकान् शिक्षयंस्तत्प्रकारमाह वामनः ॥ वचस्तवैतदिति षोडशभिः श्लोकैः । हे जनदेव राजन् । यस्य तव सांपराये पारलौकिकधर्मविषये भृगवः शुक्रादयः कुरुवृद्धः प्रशांतः सात्विकस्वभावः पितामहः प्रल्हादश्चैते प्रमाणं बोधकाः । तस्य तवैतत्सूनृतादिरूपं वच उचितमेव ॥ २ ॥ एकस्मिन्कुले भवत्कुले कश्चित्पुमान्निःसत्त्वः कृपणश्च नास्ति हि । निःसत्त्वस्य लक्षणं किं । यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्तव्यः सन्निःसत्त्वः । कृपणस्य लक्षणं तु प्रथमं दास्यामीति प्रतिश्रुत्य प्रतिज्ञाय यो द्विजातयेऽदाता सः कृपणः ॥ ३ ॥ दानावसरेऽर्थिना द्रव्यार्थिनाऽर्थिता याचिता नृपा ये तु । यच्छब्दः किं शब्दार्थे केऽपीत्यर्थः । अमनस्विनो हीनमनस्का न संति । तथा युधि युद्धसमयेऽर्थिना युद्धार्थिना नृपाः केऽपि पराङ्मुखा न संति । यत्रास्मिन्युष्मत्कुलेऽमलेन शुद्धेन यशसा प्रल्हादस्ते पितामह उदुत्कर्षेण भाति भासते । खे आकाशे उडुपो चंद्रो यथा चंद्र इव ॥ ४ ॥ इदानीं बलिप्रपितामहौ हिरण्याक्षहिरण्यकशिपौ स्तौति ॥ यत

इत्यादिना । यतो यस्मिनकाले जात एकोऽसाहाय एव दिग्विजयविषये प्रतिवीरं प्रतिपाक्षिणं नाविंदत न लब्धवान् ॥ ५ ॥ विष्णुःक्ष्माया भूमेरुद्धारे उद्धरणकाले आगतं हिरण्याक्षं कृच्छ्रेण निर्जित्य हत्वाऽऽत्मानं स्वं जयिनं न मेने । भूरि तस्य हिरण्याक्षस्य वीर्यं पराक्रमं स्मरन् । कृच्छ्रेणेत्यादि जनमोहनायेति ज्ञेयं ॥ ६ ॥ तस्य हिरणाक्षस्य वधं भ्रातृहणं स्वभातृहंतारं विष्णुं हंतुं हरेर्निलयं वैकुंठं जगाम ॥ ७ ॥ कृतांतवद्यमवत् । कालज्ञो नायमेतद्धननकालः किंतूत्तरो नृसिंहावतारकाल इति जानन्मायाविनां समर्थानां वरो महाशक्त इत्यर्थः ॥८॥ चिंताप्रकारमेवाह ॥ यत इति । अहं यतो यतो यत्र यत्र गच्छेयं तत्रासौ हिरण्यकशिपुरागमिष्यत्येव । कथं । प्राणवतां देहिनां मृत्युरिव । अतः पराक् दृशः । बाह्यदृष्टेः शरीराद्बाहिरिव पश्यति न त्वंतरित्यर्थः । दूरस्थवस्तुदर्शन इति वा । अस्य हिरण्यकशिपोर्हृदयं प्रवेक्ष्यामि ॥ ९ ॥ हे सुरेंद्र बले । स विष्णुर्बहिर्दृष्टिरयमसुरो हृदये स्थितं मां न ज्ञास्यतीत्येवं निश्चित्याधावतोऽभिमुखमापततो रिपोः शरीरश्वासानिले श्वासवायावंतर्हितः सूक्ष्मदेहो यस्य सः श्वासानलांतर्हित सूक्ष्मदेहः सन् तस्य हिरण्यकशिपोर्घ्राणरंध्रेण नासिकाछिद्रेण निर्विवेश प्रविष्टवान् । कथं भूतः । विग्नमुद्विग्नं भीतं चेतो यस्य स उद्विग्नचेताः । इदं मोहकं विशेषणं ॥ १० ॥ स हिरण्यकशिपुः शून्यं हरिणा रहितं तं निकेतं तस्य हरेर्निकेतं निलयं वैकुंठं परिमृश्यान्विष्य हरिमपश्यमानः कुपितो ननाद गर्जितवान् । तथा क्ष्मां भूमिं द्यां स्वर्गं खमंतरिक्षं विवरान्पातालादि बिलानि च विचिन्वन्मृगयन्न ददर्श । अंतः प्रविष्टत्वात् ॥ ११ ॥ अन्विष्टं विचारितं मे भ्रातृहा हरिर्नूनं गतः । कुत्र । पुमान्यतः सकाशान्नावर्तते तत्रेत्यर्थः । मृत इति भावः ॥ १२ ॥ ततो विष्णौ वैरं त्यक्तवानित्याशयेनाह ॥ वैरानुबंध इति । देहिनां देहे निरूढाभिमानवतां शूराणामिह संसारेऽज्ञानेन प्रभव उत्पन्नोऽहंमानेनाहंकारेणोपबृंहितोऽभिवृद्धो मन्युः कोपो वैरानुबंधश्चैतावान् एतावत्पर्यंतं । तदेव विवृणोति ॥ आमृत्योरिति । मरणपर्यंतं भवंति वर्तंते ततो निवर्तंत इति भावः ॥ १३ ॥ पितामहप्रपितामहौ स्तुत्वा तत्पितरं विरोचिनं स्तौति ॥ पितेति । प्रल्हादस्य पुत्रस्ते पिता विरोचिनो द्विजवेषधारिणो मद्वैरिणो देवाः । एतेन तु द्विजा इति तद्विद्वानापि तज्जानमानोऽपि स याचितः सन् तेभ्यो देवेभ्यः स्वं स्वकीयमायुरदात् । शत्रुत्वेन ज्ञात्वाऽपि किमर्थं दत्तवानित्यत उक्तं ॥ द्विजवत्सल इति । ब्राह्मणभक्तत्वादित्यर्थः॥ १४ ॥ इदानीं बलिं च स्तौति ॥ भवानिति । गृहमेधिभिर्ब्रा-

ह्मणादिभिराचरितान्धर्मान् भवानास्थितोऽनुष्ठितवान् । उद्दामोत्कृष्टा कीर्तिर्येषां तैः ॥ १५ ॥ यस्मात्त्वं पुण्यवतां कुले जातो धार्मिकस्तस्माद्वरदानामृषभाच्छ्रेष्ठात्त्वत्तो मह्यमीषत्किंचिद्वृणे । किंचित्त्वमेवाह ॥ पदानीति । मम पदा पादेन संमितानि सदृशानि त्रीणि पादानि पादत्रयं भूमिं वृण इत्यर्थः । मम पदा संमितानीति त्रिविक्रमपादाभिप्रायेण न तु दृश्यमानपादाभिप्रायेण । न चानृतवादित्वं । तत्रापि स्वपादत्वानवगमात् ॥ १६ ॥ इतोऽपि महत्तरं कामयस्व दास्यामीति तत्राह ॥ नेति । वदान्याद्दानशूरात् । राजप्रतिग्रहात्तवदोषो न स्यात्किनेत्याह ॥ नेति । यावदर्थमेव यावत्प्रयोजनमेव प्रतिग्रहो यस्य सः । यावता प्रतिग्रहेण स्वप्रयोजनं सिद्ध्यति तावत्प्रतिग्रहवानित्यर्थः । विद्वान्प्रतिग्रहदोषदहनपटुज्ञानवान् एनं प्रतिग्रहदोषं न प्राप्नोति । अतो नाधिकं कामय इति भावः ॥ १७ ॥ एवमीश्वरस्यापि हरेर्याञ्चा किमर्थमिति प्रश्नस्य देवकार्यार्थमेवेत्युत्तरत्वेन याचनाप्रकारमुक्त्वा निरपराधिनो बलेर्बंधनं कुत इति प्रश्नस्योत्तरत्वेन तस्य गर्वातिरेकेणाधिक्षेपप्रकारमाह ॥ अहो इति त्रिभिः । अहो ब्राह्मणस्य दायाद पुत्र । ते वाचो वृद्धानां संमतास्त्वं तु बालो बालिशमतिश्च । बालिशानामज्ञानामिव मतिर्यस्य सः । त एव स्वार्थं प्रति स्वकार्यं प्रति यथा यथावदबुधो यावदपेक्षितं स्वकार्यं न जानंतीत्यर्थः । यद्वा । ते वाचोऽवृद्धसंमिता वृद्धानां संमता न भवंति । कुतः । यतो बालोऽसीत्युक्तिर्युक्तं वचो ग्राह्यं न तु पुरुषगौरवमिति न्यायात् । बुद्धिवैशेष्ये बालत्वमप्रयोजकमाह ॥ बालिशेति । मंदमतिः स्वप्रयोजनं ज्ञातुं शक्तोऽपीत्यर्थः ॥ १८ ॥ अबुद्धत्वमेवाह ॥ मामिति । यो भवान् लोकानामेकं मुख्यमीश्वरं द्वीपस्य जंब्वादेर्दाशुषं दातारं मां वचोभिः प्रीतिजनकाभिः समाराध्य स्तुत्वा पादत्रयं वृणीते सोऽबुद्धिमान् स्वप्रयोजनं ज्ञातुं न शक्तः । यतो बहु दातारं मां प्राप्य स्वल्पं वृणीषे । अतोऽज्ञानीति भावः ॥ १९ ॥ कुतो मामपहससीत्यत्राह ॥ नेति । पुमान्मामुपव्रज्य प्राप्य मया दत्तां गृहीत्वेदं नालमिति भूयो मां याचयितुं नार्हति । यावदपेक्षितस्वीकारात् । त्वं यावदपेक्षितं याचितुं न जानासि । अल्पस्यैव स्वीकृतत्वात् । अतोऽपहास इति भावः । वृत्तिकरीं जीवनहेतुं कामं यथेष्टं ॥ २० ॥ पुनरपि निस्पृहामाविष्कुर्वन्नेवाह ॥ यावंत इति सप्तभिः । प्रेष्ठा अत्यंतप्रीतिविषयाः पदार्थाः संति ते सर्वेऽजितेंद्रियजनं बुद्धिरहितं । पुरुषमिति शेषः । परिपूरयितुं तृप्तं कर्तुं न शक्नुवंति ॥ २१ ॥ तदेवोपपादयति ॥ त्रिभिरिति । न नदी द्वीपोऽत्र कथ्यत इत्यत आह ॥ नवेति । नवभिर्नवसंख्याकैर्वर्षैर्भारतादि खंडैः सप्तेन

द्वीपेनापि न पूर्यते पूर्णो न भवति । कुतः । सप्तानां द्वीपावरणानामिच्छया ॥ २२ ॥ नैतावताऽपि पूर्तिरित्याह ॥ सप्तेति । वैन्यो वेनपुत्रः पृथुश्चक्रवर्ती । गयस्तन्नामको राजा । अर्थैः कामैस्तृणाया विषयाभिलाषस्यांतमवसानं न गत इत्यस्माभिः श्रुतं ॥ २३ ॥ अलं बुद्धिरेव सुखसाधनमित्याह ॥ यदृच्छयेति । हरीच्छयोपपन्नेन लब्धेन वित्तेन संतुष्टोऽलं बुद्धिमान्सुखं यथा भवति तथा वर्तते । असंतुष्टस्त्वजितमात्मा मनो येन सः । मनोजयरहित इत्यर्थः । उपसादितैः प्राप्तैस्त्रिभिर्लोकैरपि न सुखं वर्तते ॥ २७ ॥ इतोऽपि संतोष एव संपाद्यो मुक्तिहेतुत्वान्नासंतोषः संसारहेतुत्वादित्याह ॥ पुंस इति । अर्थकामयोर्विषये ॥ २५ ॥ तेजो ब्रह्मवर्चसं वर्धतेऽभिवृद्धो भवति । असंतोषात्तत्तेजः प्रशाम्यति नश्यतीति । आशुशुक्षणिरग्निः ॥ २६ ॥ त्वत्तस्त एतावतैव पदत्रयेणैवाहं सिद्धः कृतार्थः । एतावतैव सर्वस्वापहारासिद्धेरिति गूढाभिप्रायः । कुत इत्यत आह ॥ वित्तं हि यावत्प्रयोजनमेव सुखसाधनमधिकस्य क्लेशावहत्वादित्यर्थः ॥ २७ ॥ वांछितमपेक्षितं प्रतिगृह्यतामित्याह । एवमुक्त्वा जलभाजनं कमंडलुं जग्राह ॥२८॥ शुक्राचार्यो विदुषा गुरुणा शिष्याय हितोपदेशः कर्तव्य इति शिक्षयन्नाह ॥ विष्णव इति । उसनाः शुक्राचार्यो विष्णोर्वामनरूपस्य चिकीर्षितं विष्णुना क्रियमाणं कार्यं जानन्विदां वरो ज्ञानिनां श्रेष्ठः ॥ २९ ॥ एषो वामनः । वैरोचने । कश्यपाददितेरादित्यात् जातः । अनर्थमुत्तरत्र प्राप्यमाणमात्मबंधनादिरूपमजानता त्वयैतस्मै वामनाय यत्प्रतिश्रुतं दास्यामीति यत्प्रतिज्ञातं तत्साधु क्षेमकारीति न मन्ये । कुतः । दैत्यानां महान् असह्योऽनयोऽन्यायः । अनर्थ इति यावत् । उपगतः प्राप्तः ॥ ३१ ॥ अन्यायमेवाह ॥ एष इति । स्थानं स्वरूपमैश्वर्यं प्रभुत्वं श्रियं संपदं बलादिकं यशः कीर्तिं श्रुतं ज्ञानं । सर्वस्वापहरणे बुद्धेर्भ्रंशादिति भावः । आच्छिद्यापहृत्य मायया स्वेच्छया माणवकबटुः ॥ ३२ ॥ ननु पदत्रयमेव प्रतिश्रुतं नाधिकमतः स्थानाधिकं सर्वमपहरेदित्युक्तिः कथमित्यत आह ॥ त्रिभिरिति । क्रमैः पादन्यासैर्विश्वकायो व्याप्तदेहः क्रमिष्यत्याक्रमिष्यति । आक्रमतामिति चेत्तत्राह ॥ सर्वस्वमिति । कथं तिष्ठसि जीवनोपायाभावादिति भावः ॥ ३३ ॥ त्रिपदैः सर्वलोकाक्रमणप्रकारं स्पष्टयन्प्रतिज्ञातं संपादनीयमेवेति वदंतं प्रत्याह ॥ क्रमत इति । एकेन पदा पदन्यासेन गां भूमिं द्वितीयेन पदा दिवं द्युलोकं महता स्थूलेन कायेन खं चांतरिक्षं चंक्रमत आक्रममाणस्य विभोस्तार्तीयस्य तृतीयपादन्यासस्य का गतिः स्थलं कुतः क्व वर्तते न क्वापीत्यर्थः ॥ ३४ ॥

तृतीयगादन्यासस्य स्थलाभावादेव स्थलं न दास्यामि किं बाधकमिति चेत्तत्राह ॥ निष्ठामिति ॥ प्रतिश्रुतं वस्त्वप्रदातुः । ते नरके निष्ठां स्थितिं मन्ये । निष्ठांतं नरकमिति क्वचित्पाठः । तत्र निष्ठांतं प्रतिश्रुतं दानपर्यंतं नरकं दुःखमित्यर्थः । प्रतिश्रुतस्याप्रदाने निमित्तमाह ॥ य इति । यो भवान्प्रतिश्रुतस्य प्रतिश्रुतं वस्तु प्रतिपादयितुमनीशोऽसमर्थस्तस्मादित्यर्थः ॥ ३५ ॥ ननु शरीरत्यागानंतरं यत्किंचिद्भवत्वीदानीं सर्वस्वदानात्कीर्तिस्तावद्भविष्यतीति चेत्तत्राह ॥ नेति । न प्रशंसंति न श्लाघयंति । कुतो न प्रशंसंतीत्यत आह ॥ येनेति । वृत्तिर्जीवनं जीवनसाधनं विपद्यते नश्यति । तन्नाशे किंनः छन्नमतआह ॥ दानमिति । लोके वृत्तिमत एव दानादिकं सिद्ध्यति । वृत्त्यभावे तु तदभावं स्यादिति भावः । तपश्चित्तैकाग्र्यं कर्म पूर्तं तस्मात्सर्वस्वदानं न कर्तव्यमिति भावः ॥ ३६ ॥ ननु सर्वस्वं न दातव्यं चेत्तर्हि किं दातव्यमित्यत आह ॥ धर्मायेति । धर्माय सत्पात्रदानादि पुण्यसंपादनाय । यशसे वटादिभ्यो दानेन कीर्त्यर्थे । अर्थाय कोशाभिवृद्धये । कामाय विषयभोगार्थं । स्वजनाय बंधुभ्यो दानार्थं । एवं वित्तं पंचधा विभजन्पुरुष इह लोकेऽमुत्र च परलोके मोदते । तथा चैवमार्जितं द्रव्यं पंचधा विभज्य पंचमांशं सत्पात्रे दद्यादिति भावः ॥ ३७ ॥ ननु सत्यमुक्तं त्वया । तथाऽपि प्रतिश्रुत्य न दास्यामीति कथमनृतं वक्तव्यं । नानृतात्पातकं परमित्यनृतस्य महादोषोक्तेरिति चेन्न । वृत्तिसंकटादिष्वनृतस्यादोषत्वात् । किमत्रप्रमाणमित्यतो बह्वृचश्रुतिः प्रमाणमित्याह ॥ अत्रापीति । अत्रापि सत्यस्य प्रायशो गुणत्वं कुत्राचिद्दोषत्वमनृतस्य प्रायशो दोषत्वं कुत्राचिददोषत्वमित्येवं सत्यानृतव्यवस्थायामित्यर्थः । बह्वृचैर्ऋग्वेदादिभिर्गीतमुक्तं शृणु । बह्वृचश्रुत्यादि प्रथमं तावत् । ॐ मिति सत्यं वद नेत्यनृतं हि । तदेतत्पुष्पं फलं वाचं यत्सत्यं स ईश्वरो यशस्वी कल्याणकीर्तिर्भवतोः पुष्पं हि फलं वचः सत्यं वदत्यथैन्मूलं वाचो यदनृतं । तद्यथा । वृक्ष आविर्मूलः शुष्यति स उद्वर्त्ततैवमेवानृतं वदन्नाविर्मूल आत्मानं करोति स शुष्यति स उद्वर्त्तते । तस्मादनृतं न वदेत्यनेन श्रुत्या सत्यानृतयोर्लक्षणकथनपूर्वकं स्तुति निंदाभ्यां सत्यं विहितमनृतं निषिद्धं । तामिमं श्रुत्यर्थं दर्शयन्नाह ॥ सत्यमित्यादिना । ओमिति यत्प्रोक्तमर्थिनं प्रति तत्सत्यमिति ज्ञेयं । नेति यदाहार्थिनं प्रति तदनृतमिति ज्ञेयं ॥ ३८ ॥ तत्सत्यं किंचिदनृतं विना न सिद्ध्यतीत्याशयेनाह ॥ सत्यमिति । जीवत आत्मवृक्षस्य देहाख्यवृक्षस्य सत्यं सत्यवचनं पुष्पफलं फलस्थानीयं विद्याज्जानीयात् ।

यद्यपि श्रुत्या वाचो वाक्यस्य सत्यं पुष्पं फलं चेत्युक्तं । तथाऽपि वचो देहे निर्वाहाधीनत्मादात्मवृक्षस्येत्युक्तं । भवतु पुष्पफलस्थानीयं सत्यं ततः किमित्यत आह ॥ वृक्ष इति । आत्मवृक्षेऽजिवति सति शुष्कत्वरूपं मरणं प्राप्नुवति सति तत्पुष्पफलस्थानीयं सत्यं न स्यात् । देहश्चानृतेन रक्षणीय इत्याशयेनाह ॥ अनृतामिति । अनृतं त्वात्मनो देहाख्यवृक्षस्य मूलं स्थितिहेतुः । अनेनानृतमपि न परित्याज्यमित्युक्तं भवति ॥ ३९ ॥ विपक्षे बाधकं दृष्टांतेन स्पष्टयति । तादित्यस्य लिंगविपरिणामेन स इत्यर्थः । यथा सः प्रसिद्धवृक्ष उन्मूल उत्पाटितमूलः सन् शुष्यति । अचिरादेवोद्वर्त्तते पतति च । एवं नष्टं त्यक्तमनृतरूपं यस्यात्मदेहः शुष्येत् । न संशयः । भागवतेऽनृतं न त्याज्यमित्युच्यते श्रुतौ त्वनृतं न वदेत्यनृतं निषिद्ध्यते । तथा च कथमिमं श्रुतिरुक्तार्थे प्रमाणं भवेत् । उभयोर्विरुद्धार्थकत्वादिति चेन्न । श्रुतौ नापद्यनृतविषये विषयत्वेन भागवतस्यापद्यनृतस्वीकारविषयत्वेनोभयोरविरोधात् । तथा चानापद्यनृतनिषेधकर्त्र्यां श्रुत्याऽऽपद्यनृतमभ्यनुज्ञातं । कुत एवं कल्प्यत इति चेन्न । सत्यानृते मिथुनीकरोतीत्युपसंहारवाक्येऽनृतस्वीकारस्याप्यनुज्ञानात् । तामिमं श्रुत्यर्थं मनासि निधायैवं नष्टानृत इति वाक्यं प्रवृत्तं । तस्य चायमर्थः । अनृतेनैव परिहरणीयामापद्यात्मनष्टानृतश्चेच्छुष्येत् । अतःसंकटेऽनृतं न दोष इत्युक्तं भवति ॥ ४० ॥ सर्वथा सत्यवचने देहो न निर्वहेदिति स्फुटीकर्तुं प्रथमं तावत्सत्यस्य दोषान्वक्तुं पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किं चोमित्याहात्रैवास्मै तद्रिच्यत स यत्सर्वमोंकुर्याद्रिंच्यादात्मानं स कामेभ्यो नालं स्यादिति श्रुतिः प्रवृत्ता । तमिमं श्रुत्यर्थं दर्शयति ॥ परागिति । यदोमित्येकाक्षरं दास्यामीत्यंगीकारं प्रतिपादकमक्षरं तत्पराक् स्वस्य प्रतिकूलं । कुत इति शंकापरिहारार्थं प्राप्तं रिक्तमिति श्रुतिपदं व्याचष्टे ॥ अपूर्णं वेति । स्वस्यापूर्णत्वापादकत्वादित्यर्थः । इति यतो यस्मात्पुमान्यात्किंचिद्वस्त्वर्थिने ॐ दास्यामीति ब्रूयात्तेन वस्तुना रिच्यते न्युनो भवेत् । यदि भिक्षवे याचमानाय सर्वं सर्वस्वं ॐकुर्वन् दास्यामीत्यंगीकुर्यात्तर्ह्यात्मने कामेभ्यो नालं पर्याप्तो न भवति । सर्वेषां विषयाणां दत्तत्वात् । तस्य भोगो न सिद्ध्यतीत्यर्थः । जीवनोपायरहितो भवतीति भावः ॥ ४१ ॥ इदानीमनृतस्य गुणं वक्तुमथैतत्पूर्णमभ्यात्मं यन्नेति श्रुतिः प्राप्ता । तच्छ्रुत्यर्थं दर्शयति ॥ अथेति । नेति यदनृतं वचोऽर्थिने न दास्यामीति निषेधवचनमेतदभ्यात्ममात्मानं प्रति पूर्णं पूर्णत्वसंपादकं । अर्थव्ययाभावादिति भावः ।

ननु तर्हीदमनृतमेव सर्वदा सेव्यं स्यादित्यतो नेति वक्तुं स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्तिर्जायेत सैनं तत्रैव हन्यादिति श्रुतिः प्राप्ता । तच्छ्रुत्यर्थमाह ॥ सर्वमिति । यदि सर्वं न दास्यामीत्यर्थिने किमपि न दास्यामीत्यनृतं ब्रूयात्तर्हि स दुष्कीर्तिः श्वसन्मृतो जीवन्मृतश्च स्यात् ॥ अयं भावः । याचकाय सर्वस्वदाने स्वजीवननाशः किंचिदप्यदानेऽदृष्टविरोधेनापकीर्त्या जीवन्मृतत्वं स्यात् ॥ तस्य यावद्विहितं कार्यमिति । तथा च श्रुतिः । तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोतीति ॥ ४२ ॥ अतो वृत्तिसंकटादिष्वनृतं न दोषायेत्युक्तमुपसंहरति ॥ स्त्रीष्विति । स्त्रीषु प्रोत्साहनेन वशीकरणे नर्मे नर्मणि परिहासे विवाहे च वरादिस्तुतौ वृत्यर्थे जीवनोपायार्थे । सर्वधनापाहार इति यावत् । प्राणस्य संकटे चौर्यादिभिः स्वस्य वधलक्षणे । न स्त्रीषु राजन्नविवाहकाले प्राणात्यये सर्वधनापाह इत्युक्तेः । गवानां ब्राह्मणानां चार्थे हितार्थे हिंसायांच । कस्यचित्त्रैवर्णिकस्य प्राप्तायां वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेदिति याज्ञवल्क्योक्तेः । येषु स्थलेष्वनृतं जुगुप्सितं निंद्यं न स्यात् । तस्मात्त्वापि सर्वस्वदाने प्रतिज्ञया वृत्तिनाशस्य प्राप्तत्वात्सर्वं न दास्यामीत्यनृतं ब्रूहीति । अनृतदोषाभावादिति भावः ॥ ४३ ॥ इति श्रीभागवत टिप्पण्यामष्टादशोऽध्यायः ॥ ८–१८ ॥ ॥

॥ हरिः ॐ ॥ बलिर्हरेः कपटं ज्ञात्वाऽपि अनृतभीतः सन् । प्रतिज्ञातं पादत्रयं ददावित्याह ॥ बलिरिति । कुलस्याचार्येण शुक्रेणैवं भाषिते गृहपतिर्यज्ञाधिकारी गृहस्थः क्षणं तूष्णीं भूत्वा स्थित्वाऽवहितः स्थिरमनाः सन् ॥ १ ॥ भगवता त्वया प्रोक्तं सत्यमबाधितं तत् । यो दानादिधर्मः कर्हिचित्कदाप्यर्थादिकं न बाधेत न नाशयेत् । सोऽयं गृहस्थानां धर्म इति ॥ २ ॥ तर्हि स एव धर्मोऽनुष्ठेयः किं नेत्याह॥ स चेति । यो ददामीति प्रतिश्रुत्य स्थितः सोऽहं वित्तलोभेन जीवनाकांक्षया कथं द्विजं प्रति प्रत्याचक्षे न दास्यामीति निषेधं करोमि । कुतः । प्राल्हादिरनृतबिभ्यत्प्राल्हादि वंशोद्भवः । हेतुगर्भविशेषणं । कितवो धूर्तः ॥ ३ ॥ अल्पदोषत्वादनृतं वक्तव्यमित्यतोऽनृतस्य महादोषत्वे आर्यसंमतिमाह ॥ न हीति। इयं भूमिः । असत्यात्परो धर्मो नास्ति । यतोऽतः । मां सर्वपापकरं नरं वोढुमलं समर्थेति मन्ये । तस्यापवादमाह ॥ ऋतेति । अलीकपरमनृतवक्तारं ऋते विना । इत्युवाच हसित्थमेतत् ॥ ४ ॥ नन्वप्रत्याख्याने दोषा उक्ताः खलु तत्राह ॥ नाहमिति । अहं विप्रप्रलोभनाद्वंचनाद्भ्रंशनाद्यथा बिभेमि । तथा

निरयान्नरकादधन्यादारिद्र्यात् । अधर्मादिति पाठे पापादित्यर्थः । असुखस्य दुःखस्यार्णवाद्यशःस्थानस्य च्यवनाद्भ्रंशात् । किं बहुना मृत्योरपि न बिभेमि ॥ ५ ॥ मरणानंतरं सर्वं परित्यज्य गच्छतः पुंसस्तस्यादाने निमित्तं नास्तीत्याह ॥ यद्यदिति । हास्यति त्यक्षति । संपरेतो मृतो धनादिकं तस्य धनादेरत्यागेऽदाने किं निमित्तं । न किमपि । प्रयोजनाभावेपि किमिति देयमित्यत आह ॥ विप्र इति । तेन वस्तुना विप्रस्तुष्येत चेत्तस्यात्यागे किं कारणमित्यर्थः ॥ ६ ॥ स्वजीवनमेव कारणं चेन्नेत्याह ॥ श्रेय इति । दध्यङ नामा ऋषिः शिबी राजा एतादयः साधवो दुस्त्यजैरसुभिः प्राणैरपि स्वप्राणं दत्वापीत्यर्थः । भूतानां देवादिप्राणिनां श्रेयोऽभीष्टं कुर्वंत्यकुर्वन् । तत्र दध्यङ्देवेभ्यः स्वदेहं दत्वा शिबिः कपोताय स्वमांसं दत्वेति ज्ञेयं । ततः किं प्रकृतेऽपि तत्राह ॥ क इति । धरादिषु धरादिदानविषये कः विकल्पो विचारः ॥ ७ ॥ सति विभवे सत्पात्रेऽदातॄणामैहिकामुष्मिकसुखं न मेऽस्तीत्याशयेनाह ॥ यैरिति । यैर्दैत्यैर्द्रियैर्युद्धेऽनिवर्तिभिरियं भूर्बुभुजे उपभुक्त्वा तेषां लोकान्स्वर्गादिलोकान् । ऐहिकामुष्मिकभोगान्वा । कालो यमोऽग्रसीत्संहृतवान् । यच्छोकादनशीलानां सतां नाप्नोति पुष्कलानित्युक्तं । अदातॄणां स्वर्गादि लोका न संतीत्यर्थः । भुव्यधिगतं प्राप्तं यशस्तु नाग्रसीत् । अतः कीर्तिरेव साध्या नान्यदिति भावः ॥ ८ ॥ देहत्यागादपि धनत्यागे कीर्तिर्भवतीत्याह ॥ सुलभा इति । यथा युध्यनिवृत्ता अपरावृत्ताः संतः । तनुत्यजः शरीरत्यागिनः सुलभाः । तथा तीर्थे पात्रे आयाते सति श्रद्धया भक्त्या ये धनत्याजो धनत्यागिनः सुलभा नेत्यन्वयः । अतोऽतिदुष्करो धन्यत्याग एव मया कार्य इति भावः ॥ ९ ॥ ननु सर्वस्वदाने स्वस्यक्लेशःस्यादित्यत आह ॥ मनस्विन इति । यादृशाः तादृशानामप्यर्थिनां याचमानानां कामोपनयनेन कामपूरणेन दुर्गतिदारिद्र्यलक्षणक्लेशो न भवतीति यत्तन्मस्विन उदारस्य कारुणिकस्य दयालोः शोभनमेवेहामुत्र सुखसाधनमेवस्यात् । भवादृशां तु युष्मत्सदृशानां ब्रम्हज्ञानिनां कामोपनयेन सर्वस्वसमर्पणेन दुर्गतिः क्लेशः सुखहेतुरिति किं वक्तव्यमित्यर्थः। इह क्लेशाय महते प्रेत्यानंतसुखायचेत्युक्तः । फलितमाह ॥ तत इति । ननु नायं बटुः किंतु विष्णुस्तव शत्रुरित्युक्तं । तर्हि सुतरामेव दास्यामीत्याह । यजंतीति । आम्नायानां वेदोक्तानां कर्मणां विधानेऽनुष्ठाने कोविदो भवंत आदृता आदरवंतः संतो विष्णुं यज्ञैरश्वमेधादिभिः क्रतुभिः सप्तसप्तसंज्ञकैः कर्मभिर्यजंति । स एषो विष्णुर्वरदो वाऽस्तु स शत्रुर्वाऽस्तु । अमुष्मा ईप्सितां क्षितिं

दास्यामि । हे मुने शुक्राचार्य ॥ ११ ॥ ननु तवानिष्टकर्तृत्वादयं वध्य एव किंन स्यादिति चेत् । किमयं छद्मना राज्यमपहरेद्वा युद्धादि धर्मेणवा । तत्राद्यपक्षमाशंक्योत्तरमाह ॥ यद्यपीति । अधर्मेण छद्मनाऽनागसं निरपराधिनं मां भीतमत एव ब्रह्मतनुं ब्राह्मणवेषधारिणं रिपुमनिष्टकारिणमप्येनं बटुं न हिंसिष्ये न हन्यां ॥ १२ ॥ द्वितीयपक्षमाशंक्य परिहरति ॥ एप वा इति । एप उत्तमश्लोको महाकीर्तिर्हरिर्यदि यशो न जहासतीत्युक्तं नेच्छति । युद्धं कृत्वैव राज्यमपहरिष्यामीत्येवं कीर्तिकामुकश्चेदिति यावत् । तर्हि युद्धे मां हत्वेनां भूमिं हरेत् । मया निहतो वा भूमौ शयीत निद्रां प्राप्नुयात् । न चायं युद्धं कृत्वा राज्यमपहर्तुं समागतः किंतु भीतः सन् छद्मनैव ब्राह्मणवेषं धृत्वा समागतोऽतः कथमयं वध्यः स्यादिति भावः ॥ १३ ॥ अश्रद्धितं स्वस्मिन्नश्रद्धेयोपेतमनाशकरं स्वाज्ञाऽकारिणं सत्यसंधं सत्यप्रतिज्ञं मनःस्विनं शुद्धांतःकरणं शिष्यं बलिं । दैवेनादृष्टप्रेरकेण प्रहितः प्रेषितो गुरुःशुक्राचार्यः शशाप ॥ १४ ॥ पंडितमान्यहं पंडित इत्येवमहंकारवान् वस्तुतस्तु किमपि न जानातीत्यर्थः । अत एव स्तब्धोऽसि कस्याप्यनम्रोऽसि । अस्मदुपेक्षया । अस्मानलक्षीकृत्वेति यावत् । मम शासनमाज्ञामतिगोऽतिक्रांतवानसि । अतस्त्वमचिराच्छ्रियो राज्याद्भ्रश्यसे च्युतो भविष्यसि ॥ १५ ॥ एवं गुरुणा शप्तोऽपि सत्यान्न चालितः सत्यं न त्यक्तवानित्यर्थः । अत एव महान्सज्जनः ॥ १६ ॥ उदकपूर्वकं ददावित्येतद्विशदयति ॥ विंध्यावलिरिति । जालकं मुक्ताभरणविशेषः । तत्कृतमालावती । यद्वा । जालकानि कुड्मलानि तैः कृतमालाऽस्या अस्तीति जालकमालिनी । जालकं कोरककालिका कुड्मलानीति हलायुधः । विंध्यावलिस्तन्नाम्नी पत्नी बलिभार्याऽवनेजनी पादप्रक्षालनमिच्छती । अपां भृतमुदकैः पूर्णं कलशमानिन्ये ॥ १७ ॥ यजमानःस्वयं बलिस्तस्य वामनस्य श्रीमत्कांतिमत्पादयुग्ममवनिज्य प्रक्षाल्य विश्वं समस्तं पावयंति पवित्रयंतीति विश्वपावनीं तदापःप्रक्षालनोदकानि मूर्ध्नि स्वाशिरस्यवहद्धृतवान् ॥ १८ ॥ यदा दिवि देवतागणादयः सर्वेऽपि तस्य बलेः कर्म गृणंतस्तुवंत आचार्यं ज्ञानिनमसुरेंद्रं बलिं प्रसूनैर्ववृषुः ॥ १९ ॥ यद्यस्माद्विद्वान् शत्रुरिति ज्ञानी रिपवे वामनाय जगत्त्रयमदात् । अतो मनःस्विना धीरेणानेन सुदुष्करं कर्म कृतमिति गंधर्वादयो जगुः॥ २० ॥ अनंतस्यापरिच्छिन्नस्य हरेस्तद्वामनरूपमणुतमं रूपमद्भुतं यथा स्यात्तथाऽवर्धत । कथं भूतमभिवृद्धं रूपं । गुणत्रयं सत्त्वादि गुणत्रयमात्मनि यस्य तत् । अत एव भूमिः खमित्यादयो यस्मिन्नासन् स्थितवंतः । द्यौः

स्वर्गो विवरा भूबिलानि पयोधयः समुद्रास्तिर्यंचः पश्वादयः ॥ २१ ॥ सहर्त्विगाचार्यसदस्यो ऋत्विगादिसहितो बलिर्महती विभूतिर्वृद्धिर्यस्य तस्याभिवृद्धस्य तस्य । गुणात्मके ज्ञानानंदादि स्वरूपे देहे काये त्रयो गुणाःसत्त्वादयो यस्मिंस्तत् । त्रिगुणं भूतानि पृथिव्यादीनि इंद्रियाणि चक्षुरादीन्यर्थाः शब्दादय आशयो मनो जीवश्चैतैर्युक्तमेतद्विश्वं ददर्श ॥ २२ ॥ तदेव प्रपंचयति ॥ रसामित्यादिभिः । विश्वमूर्तेर्व्याप्तदेहस्यांघ्रितले पादोधोभागे रसां रसातलादिसप्तबिलान्यचष्टापश्यत् । पादयोः पादोर्ध्वभागे महीं भूमिं । जंघयोरधोभागे महीध्रान्पर्वतान् जानुनि पतत्त्रिणः पक्षिण ऊर्वौ मारुतगणं वायुं संघमिंद्रस्य सेनेव सेना यस्य सः । बलिरिंद्रपदे स्थितत्वात् ॥ २३ ॥ वासासि पीतांबरे संध्यां गुह्ये शिश्ने प्रजापतीन् दक्षादीन् जघने कट्यां स्वात्मा स्वयं बालिमुख्यो येषां तान् जनान् नाभ्यां नभोऽंतरिक्षं कुक्षिषूदरप्रदेशेषु सप्तसिंधून् उरुक्रमस्य हरेरुरसि वक्षसि ऋक्षमालां नक्षत्रपंक्तिमैक्षत् ॥ २४ ॥ हे अंग राजन् हृदि धर्मं स्तनयोर्ऋतं यथार्थज्ञानं सत्यं यथार्थभाषणं च । मनसींद्रं चंद्रं च । वक्षस्यरविंदहस्तां श्रियं । कंठे सामानि रथांतरादि सामानि । समस्तान् रेफादीन् शब्दान् ॥ २५ ॥ ककुभो दिशो द्यौः श्वसनं प्राणवायुं ॥ २६ ॥ वाण्यां वागिंद्रिये छंदासि वेदान् । रसे रसनेंद्रिये जलेशं वरुणं भ्रुवौ निषेधमधर्मानिषेधं । विधि धर्मविधिं च । पक्ष्मसु निमिषेष्वहश्च रात्रिं च ललाटे मन्युं क्रोधाभिमानिनं देवं । ओष्ठे लोभं ॥ २७ ॥ स्पर्शे श्वसनेंद्रिये कामं । रेतस्यंभो जलं । पृष्ठेऽधर्मं क्रमणेषु पादन्यासेषु यज्ञं हसिते हास्ये मायां जनमोहकशक्तिविशेषं । तनुरुहेष्वौषधिजातयो वृक्षजातीः ॥ २८ ॥ बुद्धावजं चतुर्मुखं प्राणेष्विंद्रियेषु देवादीन् । क्षणार्धमात्रेण विवृद्धमूर्तेरभिवृद्धदेहस्य हरेर्गात्रे सर्वदेहे स्थिरजंगमानि चराचरात्मकानि जगंति । आचष्टेति पूर्वेणान्वयः । सर्वाणि भूतानि ददर्श वीरानिति क्वचित्पाठः । तत्र स्थिरजंगमात्मकसर्वाणि भूतानि ददर्शेत्यर्थः ॥ २९ ॥ हे अंग राजन् । सर्वेऽसुराः सर्वात्मनि सर्वत्र व्याप्ते हराविदं भुवनं वीक्ष्य कश्मलं क्लेशमापुः प्रापुः । असह्यतेजो वीर्यं यस्य तत्सुदर्शनं तन्नामकं चक्रं स्तनयित्नुवद्घोषो ज्याध्वनिर्यस्मिंस्तत् । शार्ंगनामकं धनुश्च ॥ ३० ॥ पर्जन्यवन्मेघवद्घोषो यस्य सः । पांचजन्यनामा जलजः शंखश्च तरस्विनी कौमोदकीसंज्ञा विष्णुगदाच शतचंद्रैः शतचंद्राकारै रेखाविशेषैर्युक्तो विद्याधरसंज्ञोऽसिः खड्गश्चाक्षयाः सायका बाणा ययोस्तौ तूणोत्तमौ

श्रेष्ठौ च पार्षदेषु मुख्याः सुनंदमुख्याः । मुख्य शब्देन जयविजयादयो ग्राह्याः । लोकपालैश्चंद्रादि लोकपालैः सहेशमभिवृद्धं हरिमुपतस्थुरसेवंत ॥ ३१ ॥ स्फुरंति प्रकाशमानानि किरीटादीनि यस्य सः । मीनकुंडले मकरकुंडले श्रीवत्सरत्नेनोत्तममेखलया चोत्तमकांच्या चांबरेण पीतांबरेण चेत्येते मधुव्रतानां भ्रमराणां स्रजो माला यस्यां तया वनमालया च वृत्तो गुरुरुत्कृष्टःक्रमः पादविक्षेपो यस्य सः भगवान् रराज ॥ ३२ ॥ उरुक्रमत्वमेवाह ॥ क्षितिमिति । एकेन पदा बलेःक्षितिं विचक्रमे आक्रांतवान् । नभोंऽतरिक्षं शरीरेण मध्यदेहेन बाहुभिर्दिशश्च । द्वितीय पादं क्रमतो विक्षिपतो हरेस्त्रिविष्टपं स्वर्गं तदीयं बलिसंबंधि किंचिन्मात्रं जातं । तृतीयाय तृतीयपादविक्षेपाय तु तदीयमण्वपि किंचिदपि स्थलं नाभूत् । कुत इति चेन्न । द्वितीयपादस्य स्वर्गापेक्षयोपरिगतत्वात् । कियत्पर्यंतमुपरि गतमित्यत आह ॥ उरुक्रमस्येति । उरुक्रमस्य हरेरंघ्रिर्द्वितीयपादः स्वर्गादुपरि गच्छन् महर्जनाभ्यां महर्लोकजनोलोकाभ्यां तपोलोकाच्च परं सत्यलोकं गतः ॥३३॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥८–१९॥ ॥

॥ हरिः ॐ ॥ उरुक्रमस्यांघ्रिः सत्यलोकं गत इत्युक्तं । ततः किं वृत्तमित्यतो ब्राम्हणोऽतिथेरागमने पादार्चनादिगार्हस्थ्यधर्मप्रदर्शनप्रकारं वक्ति ॥स इति । अब्जभवः स ब्रम्हा सत्यलोकं पादं प्राप्तं समीक्ष्याभ्यगात् । पादप्रदेशामिति शेषः । कथं भूतोऽब्जभवः । हरेरंघ्रेर्नखा इवेंदवश्चंद्रास्तैर्हता तिरस्कृता स्वधाम्नः सत्यलोकस्य द्युतिर्यस्य सः । स्वयं च तैर्नखेंदुभिरावृतः छन्नः। परिवारैरावृत इति वा ॥ १ ॥ हे नरदेव राजन् । मरीचिमुख्या ऋषयो बृहद्व्रतं येषां ते सनंदनाद्या योगिनः सनकाद्याश्च तथा वेदा मूलवेदाभिमानिन उपवेदा अवांतरवेदाभिमानिनो यमैरन्विता नियमास्तर्का ब्रम्हशास्त्रमितिहासा भारतादयोंऽगानि शिक्षादीनि पुराणानि संहिताः पंचरात्रागमश्चैतदभिमानिनश्च । ये चापरेऽन्ये योग एव योगाभ्यास एव समीरो वायुस्तेन दीपितं ज्ञानमेवाग्निस्तेन रंधितं दग्धं कर्मकल्मषं कर्मफलं येषां ते तथोक्ताः । यस्यांघ्रेः स्मरणस्यानुभावतः सामर्थ्यात्स्वयंभुवो ब्रम्हण इदं स्वायंभुवं धाम सत्यलोकं गताः प्रापुः । तेच सर्वेऽकर्मकं कर्मणाऽप्राप्यं किंतु ज्ञानेनैव प्राप्यं तं हरेरंघ्रिं प्राप ववंदिर इति श्लोकद्वयस्यान्वयः प्रोन्नमितायोर्ध्वमुखाय विष्णोरंघ्रयेऽर्हणोदकं पादप्रक्षालनोदकं जलं पद्मभव उपाहरदानिनाय ॥ २ ॥ ३ ॥ शुचिः शुद्धं श्रवः कीर्तिर्यस्य सः स्वयं ब्रह्मा यस्य हरेर्नाभिपंकेरुहान्नाभिकमलात्संभवः संभूतस्तस्यांघ्रिं तेनोदकेन भक्त्या समभ्यर्च्य प्रक्षालनादिभिः

पूजयित्वाऽभ्यगृणदस्तौत् ॥ ४ ॥ उरुक्रमस्य पादयोरवनेजनेन पादप्रक्षालनेन पवित्रतया तद्धातुः कमंडलुजलं स्वर्धुनी स्वर्गनद्य-भूत्। नभस्यंतरिक्षे पतती सा स्वर्गनदी लोकत्रयं निर्मार्ष्टि पवित्रयति । केव । भगवतो विशदा निर्मला कीर्तिरिव ॥ ५ ॥ लोक-नाथा ब्रह्मादयः समादत्ताः सम्यगादरवंतः सानुगाः स परिवारा असंक्षिप्ता असंकुचिता अपारिमिताऽऽत्मभूतिःस्वरूपश्रियस्य तस्मै । भूतिः श्रीर्जन्मभस्मास्विति । संक्षिप्तात्मविभूतये इति पाठे संक्षिप्तोपसंहृताऽऽत्मविभूतिरात्मविस्तरो येन तस्मै । यथा पूर्वं वामनरूपेण स्थितायेत्यर्थो ज्ञेयः । स्वनाथस्य स्वस्वामिने बलिं पूजामाजन्हुश्चक्रुः ॥ ६ ॥ पूजासाधनान्याह ॥ तोयैरित्यादिद्वाभ्यां । समर्हणैर्योग्यैः स्रग्भिः पुष्पमालाभिः सुरभिभिः परिमलैः ॥ ७ ॥ स्तवनैः स्तोत्रैस्तस्य वामनस्य वीर्यैर्महिम्ना चांकितैर्युक्तैः ॥ ॥ ८ ॥ ऋक्षराजो मृगविशेषाकारो जांबवान् ब्रह्मपुत्रो यमावतारो मनोवेगवज्जयो यस्य सः वामनविजयरूपं महोत्सवं सर्वासु क्षितिष्वघोषयद्भेरीशब्देन वामनविजयं लोकत्रये विज्ञापितवानिति भावः ॥ ९ ॥ त्रिपदविषयव्याजयाञ्चया स्वभर्तुः स्वस्वामिनो दीक्षितस्य बलेः सर्वां महीं हृतां दृष्ट्वाऽसुरा अत्यमर्षिताः संतोऽत्यंतासहमानाः संत ऊचुः ॥ १० ॥ कीमूचुस्तदाह ॥ न वा इति सार्धत्रिभिः । अयं बालको ब्रह्मबंधुर्ब्राह्मणवंशोद्भवो न वै । किंतु मायाविनां कपटिनां वरो विष्णुरेव द्विजरूपेण द्विजवेषेण प्रतिच्छन्नः सन् देवानां कार्यं चिकीर्षति कर्तुमिच्छति ॥ ११ ॥ बर्हिषि विषयज्ञानार्थं न्यस्तो युक्तो दंडः शासनं येन तस्य नो भर्तुर्बलेः सर्वस्वं तेन बटुरूपिणा हृतं ॥ १२ ॥ सततं सत्यं यथार्थभाषणव्रतं यस्य तस्य विशेषतो यज्ञे दीक्षितस्य ब्रह्मण्यस्य ब्राह्मणभक्तस्य दयावतोऽस्य बलेरनृतं भाषितं वक्तुं न शक्यं ॥ १३ ॥ यस्माब्दलिर्दीक्षितस्तस्मादस्य बटोर्वधोऽस्माकं धर्मः । नोऽस्माकं भर्तुः शुश्रूषणं च भवेत् । इत्युक्त्वा बलेरनुचराश्चायुधानि जगृहुः ॥ १४ ॥ शूलपट्टिशा येषां ते तथा ते सर्वे वामनं हंतुं । जातो मन्युः कोपो येषां ते तथा । बलेरनिच्छतः सतः प्राद्रवन् ॥ १५ ॥ तान्दितिजानां दैत्यानामनीकपान्सेनानायकान् अभिद्रवतो दृष्ट्वा प्रहस्यापहासं कृत्वा विष्णोरनुचरा उदायुधाः संतः प्रत्यषेधयन् ॥ १६ ॥ विष्णोरनुचरानाह ॥ नंद इत्यादि सात्वत इत्यंतेन । पतत्रिराट् गरुडो नागानां गजानामयुतवत्त्राणो बलं येषां ते आसुरीं चमूं सेनां जघ्नुः ॥ १७ ॥ १८ ॥ पुरु-षस्य वामनस्यानुचरैर्भृत्यैः । संरब्धान् आग्रहयुक्तान् । काव्ये स्वशुक्राचार्यस्य शापमचिराद्भ्रश्यते श्रिय इत्येवं रूपं स्मरन् ॥१९॥

मा युध्यत युद्धं न कुरुध्वं युद्धान्निवर्तध्वं । कालः कालनियामको हरिर्नोऽर्थकृदनुकूलो न भवति ॥ २० ॥ यः सर्वभूतानां सुखदुःखयोरुपपत्तये प्राप्तये यः प्रभुः समर्थः । तं पुमान् पौरुषैः स्वपराक्रमैरतिवर्तितुमत्येतुमीश्वरः समर्थो न भवेत् ॥ २१ ॥ यो भगवान्प्राक् पूर्वं भवायैश्वर्यायासीत् । दिवौकसां देवानामभवाय चासीत् । स एव तद्विपर्ययं पूर्वोक्तस्य विपर्ययं देवानां भवाय नोऽभवायेत्येवं रूपं विपरीतं यथास्यात्तथा वर्तते ॥ २२ ॥ नन्वस्माकं नानासाधनानां सात्वतैर्भगवानातिवर्तितुं शक्यः स्यादित्यत आह ॥ बलेनेति । चतुरंगबलसैन्येन साचिवैर्मंत्रिभिः कालं कालप्रेरकं हरिं नात्येत्यतिवर्तितुं क्षमो न भवति । कालोबलीयानिति साधुवाद इत्युक्तेः । कालस्य बलवत्वादिति भावः ॥ २३ ॥ हरेरनुचरा देवा दैवेनादृष्टप्रेरकेणेश्वरेण ऋद्धैरनुकूलितैर्भवद्भिर्बहुशो निर्जिताः । दैवरुद्धा इति पाठे दैवेन प्रतिहता इति देवविशेषणं । एते देवा एवाद्यायुधिनो जित्वा नदंति गर्जंति । दैवस्यानुकूलत्वात् ॥ २४ ॥ यः कालो नोऽर्थत्वायानुकूलाय कल्प्यते भवेत् । तं कालं प्रतीक्षध्वं ॥ २५ ॥ पत्युः स्वामिनो बलेर्निगदितं वचनं श्रुत्वा रसां रसातलं विष्णोः पार्षदैर्नंदादिभिस्ताडिताः ॥ २६ ॥ तार्क्ष्यस्य सुतः कश्यपस्य सुतो विषु पक्षिषु राजंत इति विराट् गरुडो विभोर्वामनस्य चिकीर्षितं कर्तुमिष्टं ज्ञात्वा क्रतोर्यज्ञस्य सप्तमेऽहनि सोमपानदिवसे वारुणैर्वरुणसंबंधिपाशैर्बलिं बबंध ॥ अथमर्थः ॥ अस्य सर्वस्वापहरणे ममेत्यभिधानं सत्यंजय इदानीं देहस्वीकारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति । तथा च न चानेन तुल्योऽन्यः कोऽपि धीरो नास्तीति तद्यशःप्रख्यापनार्थं किंचिद्याचितमपीच्छाति । प्रभोरभिप्रायं ज्ञात्वा तं बबंधेति ॥ २७ ॥ रोदस्योर्द्यावापृथिव्योः सर्वतो दिशं सर्वदिक्षु । प्रभविष्णुना समर्थेन विष्णुनाऽसुरपतौ बलौ गृह्यमाणे बद्ध्यमाने सति ॥ २८ ॥ स्थिरप्रज्ञं दृढबुद्धिं ॥ २९ ॥ सर्वां महीं सर्वस्थानं । तृतीयं तृतीयपादस्थलं ॥ ३० ॥ ननु पादत्रयपरिमिता भूमिर्दत्तेत्युक्तं । अतः कथं तृतीयमुपकल्पयेत्युच्यत इति तत्राह ॥ यावदिति । असौ सूर्यो गोभिः किरणैर्यावत्स्थलं तपाति प्रकाशयति । तथेंदुश्च पर्जन्यो मेघाभिमानी तवेयं भूमिस्तावती सूर्यादिप्रकाशवत्त्वेन परिमितेत्यर्थः ॥३१॥ अयं च भूर्लोक आत्मना व्यापिना मयेत्यन्वयः आक्रांतः । खं दिशश्च तनोस्तन्वा द्वितीयेन पदाऽऽक्रांतः । एवं ते पश्यतः सतस्ते स्वं त्वदीयं सर्वस्वं मया द्वाभ्यां पदाभ्यामाक्रांतं । अतस्तृतीयपदस्थलाभावात्तृतीयमुपकल्पयेत्युक्तमिति भावः ॥ ३२ ॥ तृतीयपदस्थलादाने दोषमाह ॥

प्रतिश्रुतामिति । प्रतिश्रुतं दास्यामीति प्रतिज्ञातं । अदातुः पुरुषस्य नरके वास इष्यते प्रामाणिकैरंगीक्रियते । तस्मान्निरययोग्यत्वात् । नष्टप्रतिज्ञाद्वा । गुरुणा शुक्राचार्येणानुमोदितः सन् निरयं विश प्रविश ॥ ३३ ॥ किंच यः प्रतिश्रुतस्यादानेनार्थितं याचकं विप्रलंभते वंचयति । तस्य मनोरथा ऐहिकभोगविषया वृथैव न सिध्यंतीत्यर्थः । स्वर्गश्च दूर एव भवतीत्यर्थः । न केवलमिष्टाभावः किंत्वनिष्टप्राप्तिरित्याह ॥ पततीति । स चाधः पतत्येव नीचां योनिं प्राप्नोत्येव ॥ ३४ ॥ प्रकृते किमायातमित्यत आह ॥ विप्रलब्ध इति । आढ्यमानिनाऽभिमानिना त्वया चाहं ददामीति विप्रलब्धो वंचितः । तत्तस्माद्व्यलीकफलमनंतफलं निरयं कतिचित्कंचित्समा वर्षाणि भुंक्ष्वेत्यर्थः ॥ ३५ ॥ इति श्रीभागवतटिप्पण्यां विंशोऽध्यायः ॥ ८—२० ॥

॥ हरिः ॐ ॥ भगवतैवमुक्तो बलिः किं कृतवानित्यतोऽनृतं परिहर्तुमाह ॥ एवमिति । भगवता विप्रकृतोऽप्रकृतोऽसुरो बलिः खिद्यमानोऽपि सत्याच्चाल्यमानोऽपि सोऽविक्लवमदीनं वचः प्रत्याह ॥ १ ॥ हे उत्तमश्लोक । ममेरितं प्रतिश्रुतं वचो व्यलीकमनृतं न भवत्येव । त्वया कपटेन वामनतया भिक्षित्वा रूपांतरस्याविष्कृतत्वात् । एवमपि यदि भवान् व्यलीकं मन्यते । तथाऽपि तन्मदुक्तमृतमेव सत्यमेव करोमि । मदुक्तं विप्रलंभमनृतं न भवेत् । कथं । मे शीर्ष्णि शिरसि निजं तृतीयं पदं कुरु निधेहि ॥ ॥ २ ॥ ननु चापदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि । आत्मानं संततं रक्षेद्दारैरपि धनैरपीत्यादि वचनात् । आत्मभयपरिहाराय सर्वस्वं त्यज्यते । त्वं तु कुतो भीतः सन् आत्मानमर्पयसीत्यत आह ॥ बिभेमीति । असाधुश्चासौ वादश्च तस्मादपकीर्तेः । अनृतवचनाद्वा। यथाऽहं भृशमुद्विजे बिभेमि। तथा निरयादिभ्यो न बिभेमि। पदच्युतः स्थानभ्रष्टव्यसनाद्दुःखादर्थकृच्छ्राद्द्रव्यप्रयुक्तक्लेशाद्भवतो विनिग्रहाद्भवत्कृतानिबंधात्॥३॥ननु विनिग्रहात्तवापकीर्तिर्जातैव नेत्याह ॥ पुंसामिति । अर्हत्तमैः पूज्यतमैरर्पितं कृतं यं दंडं शिक्षां । मातापित्रोरपि नह्यादिशंति। न कुर्वंति तं दंडं पुंसां श्लाघ्यतमं कीर्तनीयं मन्ये । मम हितैषिणा त्वया निगृहीतोऽहं श्लाघ्य एवास्मकमिति भावः ॥ ४ ॥ नन्वहं देवानां हितैषी नासुराणामतः कथं मत्कृतो दंडस्तव श्लाघ्यतम इति तत्राह ॥ त्वं नूनमिति । असुराणां नस्त्वापरोक्ष्यं शत्रुछन्नेन वर्तमानस्त्वं च परमो गुरुः । योऽनेकमदैरैश्वर्यादिमदैरंधानां विवेकशून्यानां नस्तस्य पदस्य भ्रंशो नाशो यस्मात्तच्चक्षुर्ज्ञानमादिश ॥ ५ ॥ परमगुरुत्वं दर्शयति ॥ यस्मिन्निति । बहवो विबुधेतरा देवेतरा दैत्या हिरण्यकशिप्वादयो रूढेन

दृष्टनिरूढेन यस्मिंस्त्वयि वैरानुबंधेन वैरयुतस्नेहेन । द्वेषोपसर्जनभयेनेत्यर्थः । सिद्धिं मुक्तिं लेभिरे । इहाधिकारिवर्गे एकांतयोगिन एकांतभक्ता यां सिद्धिमापुः ॥६॥ अतो नात्र मम लज्जा । नापि दुःखमित्याह ॥ तेनेति । भूरिकर्मणा बहुचरित्रेण तेन गुरुणा भवताऽहं निगृहीतोऽस्मि । वरुणैः पाशैर्बद्धश्चास्मि । तथा नात्रीडे लज्जां प्राप्नोमि । न च विव्यथे न दुःखं च प्राप्नोमि ॥ ७ ॥ किंच योऽयं दंडरूपो ममानुग्रहस्त्वया कृतः स त्वद्भक्तपात्रत्वेन न त्वहमनुग्रहस्य पात्रमित्याशयेनाह ॥ पितामह इति । भवदीयानां भगवद्भक्तानां संमतो मे पितामहः प्रल्हादो यत आविष्कृतः प्रकटीकृतः साधुवादो हरिः सर्वोत्तमत्वादिवादो येन सः । तथा त्वमेव परमाश्रयो यस्य सः । अतो भवतो विपक्षेण द्वेपिणा स्वपित्रा स्वस्य प्रल्हादस्य पित्रा हिरण्यकशिपुना विचित्रं नानाविधं वैशसं हिंसां प्रापितः ॥ ८ ॥ पित्रा नानाविधव्यसनं प्रापितः । प्रल्हादस्ततः किमकरोदित्यत आह ॥ किमात्मनेत्यादिना । यो देहोऽतत आयुषांते जहाति जीवं त्यजाति । अनेनात्मना देहेन किं रिक्थं पितृधनं हरंति स्वीकुर्वंति । तथा तैः पुत्रैः किं स्वजनाख्यदस्युभिः स्वजनलक्षणचोरैश्च किं । मर्त्यस्य मरणशीलस्य गेहैः किं । तस्मादिह गेहेषु केवलमायुषो व्यय एव नाश एव न तु सुखं किंचित् ॥ ९ ॥ इति देहादीनामसारतां निश्चित्यागाधबोधो महाज्ञानी सः जनाद्दुर्जनसंगाद्भीतः सन् स्वपक्षं दैत्यकुलं क्षपयति नाशयतीति तथा तस्यापि भवतः पदांबुजं प्रपेदे । कथं भूतं । न विद्यते कुतोऽपि भयं यत्र तदकुतो भयं ध्रुवं च नित्यं च ॥ १० ॥ यस्मान्मम पितामहस्त्वत्पादमेव प्राप्तोऽथ तस्मादहमपि दैवेन प्रल्हादस्य भाग्येनासुरजातित्वादात्मरिपोर्मम शत्रुभूतस्य तवांतिकं समीपं नीतः प्राप्तः । प्रसभं बलात्काराच्याजिता श्री राज्यसंपद्यस्य स तथा । बुभूषुणा बोद्धुमिच्छुनेयं श्रीर्बलादपि त्याज्यैव । अन्यथाऽनर्थयोग एवेत्याशयेनाह ॥ इदमिति । यथा श्रिया स्तब्धाऽविवेकमतिर्यस्य सः । पुमान् इदं जीवमध्रुवमनित्यं न बुद्ध्यते न जानाति । कथं भूतं । कृतांतस्य यमस्यांतिके वर्ति मृत्योः संनिहितं बुद्धिभ्रंशकरं राज्यत्याजितेन मयि भवता भूयान् अनुग्रह एव कृत इति भावः ॥ ११ ॥ तस्य बलेरित्थं भाषमाणस्य सत उत्थित उदितो राकापतिरिव पूर्णचंद्र इव ॥ १२ ॥ इंद्रसेनो बलिः प्रांशुमुन्नतकरं पिशंगांबरं अंजनवत्कज्जलवन्निवट् कांतिर्यस्य । प्रलंबौ दीर्घौ बाहू यस्य तं सुभगं सुंदरं सौम्यं वा ॥ १३ ॥ वारुणैः पाशैर्यंत्रितो बद्धः समर्हणं पूजासाधनं स्वकृताहंकारादिरूपापराधस्मरणेन सव्रीडं लज्जासहितं निचीनम-

र्वाचीनं मुखं यस्य सः । विलोले चंचले लोचने यस्य सः ॥ १४ ॥ महामना महाज्ञानी सः प्रल्हादस्तत्र यज्ञशालायामासीनं सुनंदाद्यैरुपासितं सतां पतिं वामनमुदीक्ष्य तरसा शीघ्रमुपेत्य समीपं प्राप्य बलेस्तत्कृतमनुग्रहं दृष्ट्वा पुलकै रोमांचैरश्रुभिरानंदबाष्पैश्च विव्हलः परवशः सन् भूमौ मूर्ध्ना ननाम ॥ १५ ॥ नमनानंतरं किं कृतवानित्यत आह ॥ प्रल्हाद उवाचेति । ऊर्जितमैंद्रपदं त्रिलोकाधिपत्यं त्वयैव दत्तमद्य तदेव हृतं च मन्ये । ऐंद्रपदं नैतदीयं त्वयाऽपहृतं किंतु स्वीयमेव पुनः स्वीकृतमिति भावः । तच्च शोभनमेव कृतं । कुत इत्यत आह ॥ मन्य इति । यद्यस्मादात्मनो मोहनान्मोहहेतोः श्रियो राज्यलक्ष्म्या विभ्रंशितः । अयमस्य बलेर्महाननुग्रहः कृतो हीत्यहं मन्ये ॥ १६ ॥ मोहनत्वमेवाह ॥ ययेति । विद्वानपि यतो यया श्रिया मुह्यते मोहं प्राप्नोति । तत्तस्यां श्रियां कोऽन्यः पुमान् आत्मनो गतिं स्वस्वरूपं परमात्मस्वातंत्र्यलक्षणस्थितिं वा यथा तथावद्विचष्टे पश्यति । श्रीमदांधत्वादिति भावः । तस्मै महाकारुणिकाय नमः ॥ १७ ॥ तदैव विंध्यावलिरपि वामनं प्रति वक्तुं प्रक्रतेत्याह ॥ बद्धमिति । तस्य बलेः पत्न्युपेंद्रं वामनं व्रीत्वादवाङ्मुखी ॥ १८ ॥ हे ईश स्वामिन् । आत्मनः स्वस्य क्रीडार्थं ते त्वयेदं त्रिजगत्कृतमुत्पादितं । तत्र त्रिजगत्यपरेऽन्ये कुधियोऽसुरप्रकृतयः स्वाम्यं स्वामित्वं कुर्युः । वयमस्य जगतः स्वामिन इति जल्पंति । ते तादृशाः कुबुद्धयोऽस्य जगत्कर्तुः प्रभोः पालकस्य स्वामिन इत्यर्थः । तव किं वस्त्वावहंति समर्पयंति । कं पदार्थं दद्युरित्यर्थः । कथं भूताः । त्वयाऽवरोपिताश्चालिताः कर्तृवादा वयं कर्तार इति वादा येषां ते तथा । अत एव त्यक्ता ह्रीर्लज्जा यैस्ते तथा ॥ अयं भावः । लोकत्रयं मया समर्पितं तृतीय पादाय देहं समर्प्य प्रतिश्रुतं सत्यं करोमि त्वत्स्वकीयेषु देहादिषु स्वाम्याविष्कारेण ब्रुवन् बलिः कुबुद्धिर्निलज्जश्च । यतस्त्वमेव सर्वस्यापि स्वाम्यतो मंदबुद्धिमेनं केवलं कृपया विमुच्य पालय ॥ १९ ॥ तदेव प्रल्हादस्य विंध्यावलेश्च परमार्थोक्त्या प्रसन्नं हरिं प्राप्यागत्य लोकदृष्ट्यैव विज्ञापयति ॥ तस्येति । तस्य प्रल्हादस्य शृण्वतः सतो हिरण्यगर्भो ब्रह्मोवाच विज्ञापयामास ॥ २० ॥ विज्ञापनप्रकारमेवाह ॥ भूतभावनेति त्रिभिः । भूतानि भावयत्युत्पादयतीति तथा । भूतानामीश नियामक । देवानां देवस्तुत्य । जगन्मय जगत्प्रधान । त्वं हृतं स्वीकृतं सर्वस्वं यस्य तमेनं बलिं मुंच मोचय । अयं बलिर्निग्रहं बंधनं नार्हति ॥ २१ ॥ निग्रहानर्थत्वे हेतुमाह ॥

कृत्स्नेति । अनेन बलिना कृत्स्ना समस्ता भूर्भूमिस्ते तुभ्यं दत्ता । कर्मणाऽर्जिताश्च संपादिताश्च ये लोकाः स्वर्गादयस्ते च दत्ताः सर्वस्वं निवेदितं । सर्वस्वमेवाह ॥ आत्मेति । देहाख्यं सर्वस्वमित्यर्थः । अक्लीबया सर्वस्वदानाच्चांचल्यरहितया धिया ॥ २२ ॥ तदेव कैमुत्येनाह ॥ यत्पादयोरिति । अशठा निष्कपटा धीर्यस्य सः । सर्वोऽपि जनो यस्य तव पादयोः सलिलमात्रमपि प्रदाय दुर्वांकुरैरपि सतीं समीचीनां सपर्यां पूजां विधायोत्तमां गतिं भजते प्राप्नोति । तस्मै तुभ्यं त्रिलोकीं दत्वाऽपि न विक्लवमनाः स्थिरमना असौ बलिरार्त्तिं दुःखं कथं ऋच्छेत्प्राप्नुयात् ॥ २३ ॥ यद्यपि ब्रह्मा भगवदभिप्रायं वेत्ति तथाऽपीतरेषां तज्ज्ञापनाय स्वाभिप्रायं भगवान्वक्ति । ब्रह्मन् चतुर्मुख । तद्वित्तं विधुनोम्यपहरामि । नन्वर्थापहारः कोऽयमनुग्रहस्तत्राह ॥ यन्मद इति । यद्वित्तनिमित्तमदोऽत एव स्तब्धोऽनम्रः सन् लोकं परलोकं मां चावमन्यते तिरस्करोति । मंदस्तब्धहेतूनामर्थापहार एवानुग्रह इत्यर्थः ॥ २४ ॥ दुर्लभं पुरुषजन्म कथंचिल्लब्धवतो जीवस्य जन्मनिमित्तो गर्भो महाहानिकरः । तस्य च नाशो मदनुग्रहादेवेत्याह ॥ यदेति द्वाभ्यां । जीवात्माऽनीशः परतंत्रः सन् कर्मभिर्नानायोनिषु कृमिकीटादिषु संसरन् । यदाकदाचिद्दैववशात्पौरुषीं गतिं योनिमाव्रजेत् ॥ २५ ॥ तत्र पौरुष्यां गतौ यद्यस्य जीवात्मनो जन्मादिभिर्निमित्तैर्जातेन मदेन स्तंभो मदर्चनादौ तंद्रीलक्षणो न भवेत् । तर्ह्ययमनुग्रह एव । अहं सुकुलीन इति जन्ममदोऽहं कर्मकरणे निपुण इति कर्मनिमित्तमदः । वयं तारुण्यस्थाः रूपसौंदर्यं । आदि शब्देन पुत्रादिसंपत्तिः ॥ २६ ॥ कथं तर्हि ध्रुवादिभ्यो संपदो दास्यतीति चेत्तत्राह ॥ मानेति । हंत । हे ब्रह्मन् । मानेन गर्वेण स्तंभोऽनम्रता तस्य निमित्तभूतानां समंततः सर्वत्र सर्वश्रेयसां प्रतीपानां प्रतिकूलानां जन्मादीनां सत्त्वेऽपि जन्मादिभिरिति वा । मत्परो मद्भक्तो न मुह्येत् । अतो भक्तस्येच्छया संपदादिकं ददामि । अभक्तस्तु मुह्येदिति तद्वित्तापहाररूपमेव तस्यानुग्रहं करोमीति भावः ॥ २७ ॥ एतादृशः क इत्यपेक्षायामयं बलिरेवेदानीं मद्भक्तोऽतोऽस्यान्यैर्दुष्प्राप्यमप्यैश्वर्यं दास्यामीति वक्तुं तस्य मोहाभावमाह ॥ एष इति त्रिभिः । एष बलिः । न विद्यते जनो यस्याः साऽजया मायां मोहिनीं प्रकृतिमजैषीज्जितवान् अत एव सीदन्नपि क्लिश्यन्नपि न मुह्यति ॥ २८ ॥ क्षीणं रिक्थं वित्तं यस्य स तथा । शत्रुभिः सुनंदाद्यैः क्षिप्तो निराकृतो बद्धश्च । यातनां तीव्रवेदनामनुयापितश्च प्रापितश्च ॥ २९ ॥ गुरुणा शुक्राचार्येण भर्त्सितो निष्ठुरवचनेनोदितः

सत्यं न जहौ । सत्यात्यागनिमित्तक्षीणत्वादिकं प्राप्तोऽपि सत्यं न त्यक्तवानिति भावः । न ह्येतास्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान् इत्यादि छलैरेव कपटवचनैरेव मया धर्म उक्तस्तथाऽपि तं धर्ममयं न त्यजाति । अतः सत्यवाक् ॥ ३० ॥ त्वद्भक्तायै तस्मै भवता किमनुग्रहो यत इत्यत आह ॥ एवमिति । मे मयाऽमरैरपि दुष्प्राप्यं प्राप्तुमशक्यं स्थानं प्रापितः । किं तत्स्थानमत्राह ॥ सावर्णेरितीति । अहमेवाश्रयः पालको यस्य स मदाश्रयोऽयं बलिः । सावर्णेरंतरस्य सावर्णिमन्वंतरस्य काले इंद्रो भविता भविष्यति । स्वर्गस्थानं दत्तमिति भावः ॥३१॥ तर्हि तावत्पर्यंतं कुत्र स्थातव्यमित्यत आह ॥ तावदिति । तावत्सावर्णिमन्वंतरपर्यंतं सुतललोकमध्यास्तामध्यवसत्वित्यर्थः ॥ ३२ ॥ तत्रान्यक्लेशानुभवो नास्ति किं पुनरस्येति भावेनाह ॥ यत्रेति । यत्र भवः शत्रुभिः पराजयः । उपसर्गा दुर्भिक्षाद्युपद्रवाः। ममेक्षया कृपादृष्ट्या न संभवंति । ॥ ३३ ॥ एवं ब्रह्माणं प्रत्युक्त्वा करुणात्परवशः साक्षाद्बलिं प्रत्याह ॥ इंद्रसेनेति चतुर्भिः । भो इंद्रसेन बले । ज्ञातिभिः परिवारितः सन् सुतलं याहि । ते भद्रं मंगलमस्तु । स्वर्गिभिः स्वर्गस्थैः प्रार्थ्यं । स्वर्गिभिरपेक्षणीयं चेत् । स्पर्धयेंद्रादयो लोकेशा ममाभिभविष्यंत इति तत्राह ॥ न त्वामिति । राज्यं त्यक्त्वाऽऽगतस्य तव शासने वयं न तिष्ठाम इति वदतां दंडार्हत्वादिति त्वच्छासनं त्वदाज्ञामधिगच्छंत्यातिवर्तंत इति । तथा तान्सूदयिष्यति हरिष्यति ॥ ३४ ॥ ३५ ॥ किं बहुनोक्तेन सर्वतो मद्रक्षावज्रं तवास्तीत्याह ॥ सर्वत इति । सर्वप्रकारेण राज्यादिपरिच्छदसहितं । तथाऽपि स्ववियोगात्तदनिच्छंतं प्रत्याह ॥ सदेति । तत्र सुतले संनिहितं त्वत्समीपे विद्यमानं मां भवान्सदा द्रक्ष्यते पश्यति ॥ ३६ ॥ तत्राप्ययमनर्थस्तदवस्थ एव दानवादीनां संसर्गादिति शंका मा भूदित्याह ॥ तत्रेति । संगाद्य आसुरो भावः स मदनुभावं मम महिमानं दृष्ट्वा । सद्यःकुंठ इत्येकं पदं । सद्यः कुंठश्छेदो यस्य स यः कुंठः सन् विनंक्ष्यति निर्मूलो भविष्यतीत्यर्थः ॥ ३७ ॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ॥ ८—२१ ॥

॥ हरिः ॐ ॥ ततो बलिः किं कृतवानित्यत आह ॥ इत्युक्तवंतमिति । महान् अनुभावो महिमा यस्य सः । बाष्पस्यानंदबाष्पस्य कलाभिर्बिंदुभिराकुले ईक्षणे यस्य सः । भक्तेरुत्कल उद्रेको यस्य स तथा ॥१॥ किमब्रवीदित्यत आह ॥ अहो इति।

प्रपन्नानां शरणागतानां भक्तानामर्थस्य पुरुषार्थस्य विधौ संपादने एवं समाहितः सावधानतया स्थितोऽस्य तव प्रसादो मयि समुद्यतः कृतः । कालोन्मुखत्वेन कृत इति यावत् । तदहो आश्चर्यं । भक्ताभीष्टप्रदान एव दीक्षितः प्रसादो मयिकृतः । अत आश्चर्यमिति भावः । भक्तेषु मध्ये त्वमप्येकोऽतः किमाश्चर्यमित्यत आत्मानं धिक्करोति ॥ यल्लोकेति । यद्यो लोकपालैरमरैरपि सत्त्वप्रधानैरलब्धपूर्वः पूर्वमलब्धोऽपूर्व इत्यर्थः । तादृशस्त्वदनुग्रहोऽसुरजातावपि अपसदे राजसे मय्यर्पितः । मम नीचत्वान्मयि प्रसादकरणमाश्चर्यमिति भावः ॥ २ ॥ सभवं रुद्रेण सहितं । मुक्तो वरुणपाशैः ॥ ३ ॥ त्रिविष्टपं स्वर्गं प्रत्यानीय दत्वाऽदितेः स्वमातुः कामं मनोरथं पूरयित्वोपेंद्रः सन् सकलं जगदशासयत्पालयामास ॥ ४ ॥ वंशधरं वंशाभिवृद्धिहेतुलब्धभगवत्प्रसादो येन तं पाशनिर्मुक्तं बलिं निशम्य दृष्ट्वा प्रवणो नम्रीभूतः सन् प्रल्हादो भगवंतं वामनं प्रतीदमब्रवीत् ॥ ५ ॥ हे भगवन् । विश्वैः समस्तैरभिवंद्यैरभिवंदितांघ्रिस्त्वमसुराणां नो दुर्गपालो द्वारपालोऽसि । रक्षिष्ये सर्वतोऽहं त्वामित्युक्तत्वादिति यदिमं प्रसादं विरिंचादयो नालभंते । अपरे ब्रह्मादि भिन्ना ये ते नालभंत इति किमु । श्रीब्रह्माद्यलभ्यप्रसादमस्मासु त्वं कृतवानिति भावः ॥ ६ ॥ हे शरणद आश्रयप्रद । ब्रह्मादयो विरिंचादयो यस्य तव पादपद्मयोर्मकरंदनिषेवणेन विभूतीरैश्वर्याण्यश्नुतेऽनुभवंति । ये कुसृतयः कुत्सितमार्गा दुर्वृत्तय इत्यर्थः । तत्र हेतुमाह ॥ खल्योनय इति । उग्रजातयश्च ते तादृशा वयं तस्य भवतो दाक्षिण्यदृष्टेर्बहुमानेन चित्तानुवर्तनं दाक्षिण्यं तेन या दृष्टिर्दर्शनं । तस्याः पदवीं विषयतां कस्माद्धेतोः प्रणीताः प्रापिताः । दुर्जना वयं केन कारणेन त्वद्बहुमानविषया अभूमेत्यर्थः । भक्तानुकंपितत्वमंतरेणान्यत्कारणं न पश्याम इति भावः ॥ ७ ॥ तव चरितं लोकाविलक्षणमिति भावेनाह ॥ चित्रमिति । सर्वात्मनः सर्वस्वामिनः समदृशः सर्वं समं पश्यंश्च तवेहितं चेष्टितमहो विचित्रमाश्चर्यं । तत्कथमित्यत आह ॥ अविषम इति । यतो दुर्योनिष्वप्यस्मासु तव स्वभावोऽविषमो विषमो नाभवत् । त्वयाऽस्मासु बहुमानस्य कृतत्वात् । अतश्चित्रमित्यन्वयः। इदं चावैषम्यं तव युक्तमेवेत्याह ॥ यदिति । यतः कल्पतरुस्वभावो भक्तप्रियोऽसि । न हि कल्पतरुराश्रितानामेव कामन्पूरयन्नपि विषमो भवतीत्यर्थः । सर्वात्मत्वे हेतुः ॥ अमितेति । अमिताऽचिंत्या योगमाया योगसामर्थ्यंता । या लीला तथा विसृष्टानि विरचितानि भुवनानि येन तस्य । अहो इत्यत्र संधिश्छांदसः ॥ ८ ॥ सुतलातलं सुतललोकं । ज्ञातीनां

बंधूनां ॥ ९ ॥ तत्र सुतललोके मम दर्शनेन जातो यो महाल्हादः ॥ १० ॥ बलिना सह भगवत आज्ञां बाढमिति तथाऽस्त्विति मूर्ध्ना शिरसाऽऽधायोद्वा कृतांजलिः सन् ॥ ११ ॥ आदिपुरुषं परिक्रम्य प्रदक्षणीकृत्य प्रणतस्तेनानुज्ञातः सन् महाबिलं सुतललोकं प्रविवेशेत्यन्वयः ॥ १२ ॥ अथ बिलगमनानंतरं हरतीति हरिर्बलिराज्यहर्ता नारायणो वामनोऽतिके स्वसमीपे आसीनमुशनसं शुक्राचार्यमाह ॥ १३ ॥ हे ब्रह्मन् शुक्राचार्य । कर्म यज्ञं वितन्वतः कुर्वतः शिष्यस्य बलेर्यच्छिद्रमंतरं न्यूनं जातं तत्संतनु संपूर्णं कुरु । अवशिष्टं कर्म कृत्वा यज्ञं समापयेत्यर्थः । यजमानं विना कथं समापनीयामिति न वाच्यमित्याह ॥ यत्तदिति । कर्मसु यद्वैषम्यमंतरेणोपसरणं तद्ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं विहितं फलप्रदं भवेत् । किं पुनरनुष्ठितमित्यर्थः ॥ १४ ॥ सति छिद्रे तत्परिहारः कर्तव्यस्तदेव नास्तीति सनिमित्तमुपपादयति शुक्राचार्य इत्यत आह ॥ शुक इति । भगवान्यस्य पुरुषस्य सर्वेणापि भावेन वस्तुमात्रेण पूजितस्तस्य कर्मसु कुतो वैषम्यं वैगुण्यं । कथं भूतः । कर्मणामीश्वरः प्रवर्तको यस्य यज्ञफलस्येशो दाता । यज्ञपुरुषः ॥ १५ ॥ अत्र कैमुत्यन्यायमाह ॥ मंत्रत इति । पदा मंत्रतः स्वरादि भ्रंशेन मंत्रतो व्युत्क्रमादिना । देशतः कालतश्चार्हतः पात्रतः । वस्तुतो दाक्षिणादिना यन्न्यूनं भवेत् । तत्सर्वं तवानुकीर्तनं नामकीर्तनमेव निच्छिद्रं संपूर्णं करोति । यतस्तव पूजा निच्छिद्रं करिष्यतीति किं वक्तव्यमित्यर्थः । तथा च बलिना सर्वदानेन भवतः पूजितत्वादेव तत्कर्मणो वैषम्यं नास्त्येवेति भावः ॥ १६ ॥ यद्यप्येवं तथाऽपि । हे भूमन् । वदतस्तवाशासनमाज्ञां करिष्यामि । कुतः । यत्तवाज्ञानुपालनमेतत्पुंसां परं श्रेयः ॥ १७ ॥ भगवान् उशनाः शुक्र इति हरेराज्ञामभिनंद्यानुमोद्य बलेर्यज्ञछिद्रं समाधत्त संदधे ॥ १८ ॥ भिक्षित्वा याचित्वा । भ्रात्रे ज्येष्ठभ्रात्रे । परैः शत्रुभिः ॥१९॥ प्रजापतीनां मरीच्यादिप्रजेश्वराणां पतिः । देवाश्च ऋषयश्च पितरश्च भूमिपा राजानो मनवश्च सर्वभूतानां भावनाय क्षेमाय च वामनं पतिं पालकमकरोत् ॥२१॥ ननु लोकानां पतिरिंद्रोऽस्त्येव । सत्यं । तथाऽपि देवादीनां पालने कल्पं दक्षं वामनमुपेंद्रं कल्पयांचक्रे । सर्वेषां विभूतये ऐश्वर्याय । सर्वाणि भूतानि सर्वेजनाः ॥२२॥२३॥ देवयानेन मार्गेण विमानेनेति वा । लोकपालैः सह । ततो बलेर्यज्ञशालायाः सकाशात् । वामनं दिवं निन्ये ॥२४॥ उपेंद्रो भुजाभ्यां पालितो गतसाध्वसो गतभयः ॥ ॥ २५ ॥ वैमानिकाश्च विमानारूढा ये सिद्धास्ते विष्णोः परममद्भुतं सुमहत्तद्बलिबंधनादिकर्म गायंतः संतः स्वानि धिष्ण्यानि

गृहाणि जग्मुः । आदितिं शशंशिरे श्लाघयामासुः । इति द्वयोरन्वयः ॥ २६ ॥ २७ ॥ बलेः पदत्रयभूमेः कस्माद्धरिरयाचतेत्यादिनोक्तमुपसंहरति ॥ सर्वमिति । श्रोतॄणामघस्य संसाराख्य पापस्य मोचनमुरुक्रमस्य त्रिविक्रमस्य यस्यैतच्चरितं सर्वं भवत आख्यातं ॥ २८ ॥ अत्रैतच्चरितं सर्वमाख्यातामिति विशेषोक्त्याऽन्यान्यपि चरितानि संतीत्युक्तं । तर्हितानि निःशेषाणि वर्ण्यानीत्यपेक्षायामनंतत्वान्निःशेषं वर्णयितुं न शक्यानीत्यत्र प्रमाणमाह ॥ पारमिति । यस्य पुरुषस्य पूर्णस्य हरेर्निःशेषं चरितं वर्णनविषये । मंत्रदृक् । विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमापेति । मंत्रद्रष्टा ऋषिस्त्रिकालदर्शी च वसिष्ठ इत्याह । तस्योरुक्रमस्यैतच्चरितमिति पूर्वेणान्वयः। मंत्रद्रष्टा किमाहेत्यत आह ॥ यः पार्थिवानीति । यो मर्त्यः पार्थिवानि पृथ्वीसंबंधीनि रजांसि परमाणूनपि यो विममे गणितवान् । स तादृशोऽपि कं को मर्त्यो जायमानो वा जातो वा जनिष्यमाणो वा गृणानो विष्णुचरितानि स्तुवन् । उरु बहुधा विक्रमतः पादन्यासं कुर्वतस्त्रिविक्रमनाम्नो विष्णोर्महिम्नः पारं समाप्तिमुपैति । न कोऽपीत्याहेत्युक्त्या चरितानामनंतत्वमुक्तं भवति ॥ २९ ॥ श्रोतॄणां श्रद्धातिशयजननार्थं वामनावतारचरितं शृण्वतः फलमाह ॥ य इति । येऽद्भुतकर्मणो देवदेवस्य हरेरवतारस्य वामनस्यानुचरितं शृण्वन्वर्तते सः परमां गतिं वैकुंठाख्यां याति ॥ ३० ॥ कर्ममात्रेऽपि कीर्त्यमानमिदं कर्माणि साकल्यं करोतीत्याशयेनाह ॥ क्रियमाण इति । दैवादि कर्माणि क्रियमाणे सतीदं वामनावतारचरितं यत्र यत्र कर्माणि कीर्त्येत तत्कर्म सुकृतं यथावत्कृतं संपूर्णफलदानं समर्थं विदुः । ज्ञानिन इति शेषः ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥ २२ ॥

॥ हरि ॐ ॥ वामनावतारचरितश्रवणेन मत्स्यावतारचरितं श्रोतुं राजा पृच्छति ॥ राजेति । आद्यां मत्स्यादिदशावतारेष्वाद्यभूतां ययेच्छया मत्स्यस्य विडंबनं मत्स्यरूपानुकरणं यस्यां निरूप्यते ॥ १ ॥ ननु कस्मादकस्मादेव मत्स्यावतारश्रवणेच्छा वामनावतारासादृश्यादित्यत आह ॥ यदर्थमिति द्वाभ्यां । बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं धृतवानिति युक्तमुक्तं । ईश्वरो यदर्थं यत्प्रयोजनार्थं जुगुप्सितं निंदितं मत्स्यरूपमधाद्धृतवान् । एतन्नो यथावद्वक्तुमर्हसीति द्वयोरन्वयः । जुगुप्सितत्वे निमित्तं ॥ तमः प्रकृतीति । तामसस्वभावमित्यर्थः । दुर्मर्षं सोढुमशक्यं कर्मणा ग्रस्तो बद्धः । जीव इवैकं जुगुप्सितं चेत्किमर्थं वक्तव्यमित्यत

आह ॥ उत्तमेति ॥ २ ॥ ३ ॥ विष्णुरातेन परीक्षिता बादरायणिर्वेदव्यासस्य पुत्रः शुकः ॥ ४ ॥ सामान्येनावताराणां प्रयोजनमाह ॥ गोविप्रेति । छंदसां वेदानां रक्षां संरक्षणं । तनूरवतारान्धत्ते । अर्थस्य चेति । च शब्देन कामस्य चेति ग्राह्यं ॥ ५ ॥ हरेर्जुगुप्सितत्वं परिहरति ॥ उच्चावचेष्विति । धी शब्देनेंद्रियाण्युपलक्ष्यंते । नीचोच्चानि भूतानि प्राणिनः संति तेषु नियंतृत्वेन चरन्नपीश्वरो धियो गुणैरुच्चावचत्वं न भजते न प्राप्नोति । निर्गुणत्वाद्गुणकार्यशून्यत्वात् । कुतः । पुनर्ज्ञानादि गुणात्मकैर्मत्स्यादिभिराकारैरुच्चावचत्वं शंक्यमिति भावः ॥ ६ ॥ सामान्यतोऽवतारप्रयोजनमुक्त्वा विशेषतो मत्स्यावतारप्रयोजनमाह ॥ आसीदिति । अतीतस्य कल्पस्य दिनकल्पस्यावसाने ब्राह्मो ब्रम्हणश्चतुर्मुखस्य निद्रायां भावस्तेनैव निमित्तेन जातो नैमित्तिको लयः प्रलय आसीत् । तत्र लये भूरादयः सत्यलोकपर्यंता लोकाः समुद्रप्रलयजले उपप्लुता निमग्नाः ॥ ७ ॥ कालेन निद्राकालेन निमित्तेनागता प्राप्ता निद्रा यस्य तस्य शिशयिषोः शयनं कर्तुमिच्छतो धातुर्ब्रह्मणो मुखतो निःसृतान् बहिरागतान्वेदान्देहधारिणो वेदांताभिमानिदेवान् बली हयग्रीवात्मको दैत्योऽहरदपहरत् ॥८॥ शफरीरूपं मत्स्यरूपं । अतीतो यो दिनप्रलयस्तस्यापायेऽवसाने उत्थिताय वेधसे ब्रह्मणे हयग्रीवमसुरं हत्वा स हरिर्मत्स्यरूपी वेदान्प्रत्याहरद्दत्तवान् ॥ ९ ॥ दिनकल्पे मत्स्यावतारस्य वेदापहारिहयग्रीवासुरहननपूर्वकं ब्रह्मणो वेदादानमेकं प्रयोजनमुक्त्वा मनुकल्पे क्रियामाणं प्रयोजनांतरमाह ॥ तत्र राजर्षिरित्यादि यावत्समाप्तिः । तत्रातीते मनुकल्पे सलिलाशनोऽम्भक्षः सन् उदकं भक्षयन् ॥ १० ॥ सत्यव्रतः क इत्यत आह ॥ य इति । अस्मिन्महाकल्पे वैवस्वतमनुकल्पे विवस्वतः सूर्यस्य तनयः श्राद्धदेव इति ख्यातो हरिणा मनुव्रतेन मनुपदेऽर्पितः स्थापितः ॥ ११ ॥ कृतमालायां द्राविडदेशे विद्यमानायां नद्यां स्नात्वा जलतर्पणं कृतव्रतस्तस्य सत्यव्रतस्यांजल्युदके काचिदेकशफरी मत्स्यो अभ्यपद्यत प्राप्तः ॥ १२ ॥ द्राविडदेशस्येश्वरो राजा सत्यव्रतोऽजलिगतां शफरीं तोयेन सह कृतमालानदीतोये उत्ससर्जोत्सृष्टवान् ॥ १३ ॥ सा शफरी महाकारुणिकं तं नृपं सत्यव्रतमतिकरुणं यथा भवति तथाऽऽह । हे दीनवत्सल । ज्ञातीनां घातिभ्यो हिंसकेभ्यो यादोभ्यो जलजंतुभ्यो भीतां दीनां मामस्मिन् जले कथं विसृजसे त्यजासि ॥ १४ ॥ सत्यव्रतः परमात्मानमात्मनः स्वस्यानुग्रहार्थं प्रीत्या मत्स्यवपुर्धरं मत्स्यस्वरूपधारिणमजानन् शफर्या रक्षणार्थं मनो दधे॥१५॥ तस्याः शफर्याः कलशाप्सु

स्वकमंडलोदकेषु निधाय ॥१६॥एकरात्रेण लब्ध आत्मनोऽवकाशो यथा स्यात्तथा वर्धमाना सा॥१७॥ कृच्छ्रं कष्टं यथा स्यात्तथा क्लेशेनेत्यर्थः । वस्तुं वासं कर्तुं नोत्सहे न शक्नोमि । यत्राहं सुखं निवसे निवसामि तादृशं सुविपुलं अतिविशालमोकं स्थानं कल्पय कुरु । ततः कमंडलूदकादादायौदंचनोदके मणकस्थे जले । मणक इति रंजणगीत्यपभ्रष्टभाषा । आक्षिप्ता स्थापिता मुहूर्तेन घटिकाद्वयेन हस्तत्रयपरिमितं ॥ १८ ॥ १९ ॥ एतदुदंचनं मे सुखं वस्तुं नालं न पर्याप्तं । पृथु विशालं पदं स्थानं । यद्यस्मात्त्वा त्वां । शरणागता तत्सरोवरमात्मना स्वशरीरेणावृत्त्या व्याप्य सायंकालमध्ये एव ॥ २० ॥ २१ ॥ सलिलौकसो जलाश्रयस्य मे एतदुदकं स्वस्तये सुखेन वासार्थं नालं । रक्षायोगेनोपायेन यथा महाहृदे पूर्वं जलं विना नानुशुष्येयं तेनोपायेन निधेहि । अविदासिन्यगाधे जलक्षयरहिते च ॥ २२ ॥ तत्र तत्र जलाशयेऽनयत् । संमितं तत्तज्जलाशयपरिमितं सतमसंमितं । असमानामिति वा ॥ २३ ॥ क्षिप्यमाणो मत्स्य इह समुद्रे मकरादयो जलजंतवोऽतिबला मामदंति भक्षयंति । अत इहोपस्रष्टुं नार्हसि ॥ २४ ॥ वल्गुभारतीं कृपाजनकवचनं वदता तेनैवं विमोहितो वंचितो राजा तं मत्स्यमाह।मत्स्य रूपेणास्मान्मोहयन् भवान् क इति ॥२५॥ एवं विधं वीर्यं सामर्थ्यं यस्य स जलचरो मीनो दृष्टो वा श्रुतो वा न । तद्वीर्यमाह ॥ य इति । यो भवान् अन्हैकदिनेन योजनशतं सरोऽभिव्यानसेऽभितो व्याप्तवान् । अन्हायेति पाठे झडितीत्यर्थः ॥ २६ ॥ हे मत्स्य । त्वं न रीयते क्षीयत इति नरो विष्णुस्तदुत्पन्नत्वान्नारा आपस्ता अयनं स्थितिराश्रयो यस्य सः । जलचर इत्यर्थः । त्वं नूनं साक्षाद्धारिरासि । भूतानां मादृशां प्राणिनामनुग्रहाय जलौकसां मत्स्यानां रूपं धत्से ॥ २७ ॥ उत्पत्तिश्चाप्ययश्च तेपामिश्वरः कर्ता मुख्य आत्मोत्तमचेतनः परमात्मा त्वत्प्रपन्नानां भक्तानां गतिराश्रयः ॥ २८ ॥ ते सर्वे तव लीलया कृतावतारा भूतानां भूतेरैश्वर्यस्य हेतव इति सामान्यतो ज्ञानमस्ति । तत्रादो रूपं मत्स्यरूपं यदर्थं यत्प्रयोजनाय धृतं तज्ज्ञातुमिच्छामि ॥ २९ ॥ मम त्वत्स्वरूपज्ञानयोग्यत्वात्त्वदवतारप्रयोजनमुपदिशेत्याशयेनाह ॥ न त इति । अरविंदाक्ष । पृथगात्मनां विषयबुद्धीनामितरेषां जनानां तव पदोपसर्पणं मुधा न भवेत् । यद्वा पृथगात्मनां सतामितरेषां त्वादितरेषां पदोपसर्पणं यथा मुधा भवेत् । तथा सर्वसुहृत्प्रियात्मनः सर्वेषां सुहृदोऽनिमित्तोपकारिणः प्रियात्मनः प्रीतिविषयस्य तव पदोपसर्पणं तव पादाश्रयेण यथा मुधा वृथा भवेत्तथा सतां ज्ञानिनां तव पादोपसर्पणं मुधा न

भवेत् । कुतः । यद्यस्मान्नो भक्तानामितरमत्स्यविलक्षणत्वादद्भुतमाश्चर्यं वपुर्मत्स्यरूपमदीदृशो दर्शितवान् ॥ ३० ॥ मत्स्यवपुर्जगत्पतिः सत्यव्रतमब्रवीत् । कथं भूतः सन् । युगक्षये चाक्षुषमनुप्रलये प्रलयार्णवे विहर्तुकाम एकांतजना भक्ताः प्रिया यस्य सः प्रियं हितं चिकीर्षुः ॥ ३१ ॥ अद्यतनादिदानींतनादन्ह ऊर्ध्वं सप्तमेऽहन्येतद्भूर्भुवादिकं त्रैलोक्यं लोकत्रयमप्ययांबोधौ प्रलयार्णवे निमंक्ष्यति निमग्नं भविष्यति ॥ ३२ ॥ संवर्तांभसि प्रलयजले । संवर्तः प्रलयः कल्प इत्यभिधानात् । मयेरिता प्रेरिता विशालाक्षा मही नौस्त्वामुपस्थास्यति । त्वत्समीपे आगमिष्यति ॥ ३३ ॥ ओषधीरुच्चावचानि बीजानि च । आदायेति शेषः । सर्वसत्त्वैः सर्वप्राणिभिरुपबृंहितः परिवृतः ॥ ३४ ॥ अविक्लव उद्वेगरहितो निरालोके प्रकाशरहिते ऋषीणां वर्चसैव प्रकाशेनैव विचरिष्यसि ॥ ३५ ॥ बलीयसा प्रबलेन समीरणेन दोधूयमानामितस्ततोऽतिशयेन कंपमानानां नावमुपस्थितस्य मे मत्स्यरूपिणः शृंगे महाऽहिना वासुकिना निबध्नीहि बंधय ॥ ३६ ॥ सहनावं नौःसहितं त्वामुदन्वति प्रलयार्णवे विकर्षन् यावद्ब्राह्मीनिशा चाक्षुषमनुप्रलयपर्यंतमित्यर्थः । विचरिष्यामि । अत्र ब्राह्मीनिशा शब्देन चाक्षुषमनुप्रलयो लक्ष्यते । तस्यापि ब्रह्मदिन एव जायमानत्वेन ब्रह्मसंबंधित्वात् । ननु तथाऽपि कुतो लक्ष्यत इति चेन्न । महाप्रलयदिनप्रलययोस्त्वं तावदौषधीः सर्वा इत्युक्तौषध्यादीनामशेषासंभवेन तद्ग्रहणस्य बाधितत्वात् । रूपं स जगृहे मात्स्यं चाक्षुषांतरसंप्लवे । नाव्यारोप्य महीमय्यामयाद्वैवस्वतमनुमिति प्रथमस्कंधोक्तपृथिव्याद्यशेषासंभवाच्च । न हि सर्वाभाववति प्रलयद्वये सत्यव्रतादीनां पृथिव्यात्मकरोहः संभवति । तथाऽपि चाक्षुषमनुप्रलयग्रहणे किं प्रमाणमिति चेन्न । रूपं स जगृहे मात्स्यं चाक्षुषांतरसंप्लव इति चाक्षुषमनुप्रलये मात्स्यं रूपं जगृहे इति प्रथमस्कंधोक्तेरेव प्रमाणत्वात् ॥ ३७ ॥ मे मयाऽनुगृहीतं । विभक्तिविपरिणामेनानुगृहीतत्वं । परंब्रह्मेति शब्दितं परब्रह्म शब्दवाच्यं । परं ब्रह्म तन्महिम्नोरभेदादिति भावः । मदीयं महिमानं सर्वगुणपूर्णत्वरूपं हृदि वेत्स्यसि ज्ञास्यसि । यद्वा । परं ब्रह्मेति शब्दितं । मामिति शेषः । मदीयं महिमानं वेत्स्यसि । कथं भूतं । त्वया कृतैः समीचीनप्रश्नैर्निमित्तैर्मया विवृतं स्पष्टं प्रतिपादितं ॥३८॥ सः सत्यव्रतस्तं कालमन्ववैक्षत प्रतीक्ष्य स्थितः ॥ ३९ ॥ राजर्षी राजश्रेष्ठः सत्यव्रतः प्राक्कूलान् प्रागग्रान् प्रागुदङ्मुख ईशानदिगभिमुखो मत्स्यरूपस्य हरेः पादावंघ्री चिंतयन् ध्यानं कुर्वन् सन्निषसाद ॥ ४० ॥ उद्वेलः सेतुमतिक्रांतः समुद्रो महीं प्लाव-

यामास । वर्षद्भिर्महामेघैर्वर्धमानः समदृश्यत ॥ ४१ ॥ भगवदादेशं मत्स्यरूपिणो हरेराज्ञां ध्यायन् सन् आगतां प्राप्तां नावं ददर्श दृष्टवान् । ओषधीर्बीजानि वीरुधो लताविशेषांश्चादाय विप्रेन्द्रैः सप्तर्षिभिः संमतो नावमारुरोह ॥ ४२ ॥ मुनयः सप्तर्षयस्तं सत्यव्रतमूचुः ॥ केशवं ध्यायस्वेति । स हरिरस्मात्संकटान्नोऽस्मान् अविता रक्षिष्यति शं सुखं विधास्यति ॥ ४३ ॥ राज्ञा सत्यव्रतेनानुध्यातः स हरिर्महार्णवे प्रादुरासीत् । कथं भूतः । एकं शृंगं धत्त इत्येकशृंगधरो हेमः सुवर्णकांतिर्यस्य सः । नियुतयोजनो लक्षयोजनपरिमाणः ॥ ४४ ॥ तस्य मत्स्यस्य शृंगे हरिणा पूर्वं यथोक्तस्तथा वरत्रेण दोरकरूपेण पाशरूपेणेत्यर्थः । अहिना वासुकिना सर्पेण नावं निबध्य बद्ध्वा तुष्टः संतोषयुक्तस्तुष्टावास्तौत् ॥ ४५ ॥ सागरं तारयिष्यंतं तरिष्यन् भवसागरं सत्यव्रतो गुरुत्वेन तुष्टाव हरिमष्टाभिः । तत्र नानायोनिषु संसरतः स्वस्य भगवत्कृपयैव तत्प्राप्तिं दृष्ट्वा मुक्तये तमेव प्रार्थयते ॥ अनादीति । अनादिर्याऽविद्या भावरूपमज्ञानं तयोपहता आवृता आत्मनः परमात्मनः संविज्ज्ञानं येषां ते तथा । अत एवाविद्यैव मूलं कारणं यस्य सस्तन्मूलः । तादृशे संसारे नानायोनिरूपे परिभ्रमः सर्वत्र संचरणं तेनातुराः क्लिष्टाः पुरुषा यदृच्छया हरेरनुग्रहेणैवेह संसारे विशिष्टं जन्मोपसृताः प्राप्ताः संतो यं त्वामाप्नुयुः स परमो मुख्यो गुरुर्ज्ञानोपदेष्टा भवान्नो विमुक्तिदोऽस्त्वित्यन्वयः ॥ ॥ ४६ ॥ ननु वैराग्यं विना कुतो मुक्तिरिति चेत्तर्हि तस्यापि त्वत्सेवयैव लभ्यत्वात्त्वत्सेवामेवादिशत्याशयवान् संसारकारणाविद्यानाशं च प्रार्थयते ॥ जन इति । निजकर्मणाऽऽत्मकर्मणा बंधनं यस्य सः । अयमबुधोऽज्ञानी जनः सुखं प्राप्नुयामीतीच्छयाऽसुखं दुःखं यथा भवति तथा कर्मेहते । सुखापेक्षया दुःखसाधनं कर्म करोतीत्यर्थः । ज्ञानी तु यस्य हरेः सेवया तामसन्मतिं विषयसुखेच्छां । दुष्कर्मविषयां मतिं वा । विधुनोति । स गुरुर्नो हृदयं हृदयाख्यं ग्रंथिमविद्याकर्मपाशलक्षणं वा विभिंद्यात् ॥ ॥ ४७ ॥ ननु यज्ञदानादिभिरंतःकरणशुद्धिं विना कथं हृदयग्रंथिर्भेद्यः स्यात्तत्राह ॥ यत्सेवयेति । यस्य हरेः सेवयैव पुमान् अधिकारी । आत्मनः स्वमनसस्तमस्तमोगुणकार्यं मलं रागद्वेषादिरूपं दोषं विजह्यात्त्यजेत् । एषः क्षीणमलः पुमान् निजं स्वरूपभूतं स्ववर्णमानंदं च भजेत्प्राप्नुयात् । ईशो मुक्तिदानसमर्थो गुरुः परः सर्वोत्तमो हरिर्नोऽव्यय आवरणरहितः प्रत्यक्षीभूयात् । व्यञ् संवरण इति धातोः । मलहानौ दृष्टांतः । रुद्ररोदनं । हिरण्यं जातरूपं मुकुटं हिरण्यं रुद्ररोदनमिति वचनात् । यथाऽग्नेः

संबंधान्मलं जहाति । स्वं वर्णं विभजते । न तु क्षालनादिभिः । तथा न यज्ञादिभिर्मलत्यागः । किंतु त्वत्सेवयैव । इतरेषां तु सेवांगं त्वमेवेति भावः ॥ ४८ ॥ सर्वोत्तमत्वं प्रपंचयन्नाह ॥ नेति । अन्ये च देवा गुरवो जनाश्च सर्वे समेता मिलिता अपि पुंसः पुरुषस्य स्वयं हरेर्निरपेक्षाः संतो यस्य हरेः प्रसादादस्य प्रसादजन्यफलस्यायुतभागस्तस्य लेशमात्रमपि कर्तुं न प्रभवंति न समर्थाः । तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥ त्वामंतरेणेतरेषां गुरुत्वं पुरुषार्थोपयोगिसम्यग्ज्ञानहीनत्वादित्येतद्दृष्टांतेन स्पष्टयन्नाह ॥ सचक्षुरिति । यथांऽधस्य चक्षुराहितस्य पुरुषस्याचक्षू चक्षुरहितः पुरुषोऽग्रणीरग्रतो गंता कृतो भवति । तथाऽविदुषोऽज्ञानिनोऽज्ञानस्याबुध एवाविद्वानेव गुरूपदेष्टा भवति । अंधेनैव नीयमाना यथांऽधा इति श्रुतेः । उभावप्यश्रुतग्रंथावुभावपि जडात्मकाविति स्मृतेः । त्वं तु तादृशो न भवतीत्याह ॥ स्वमिति । त्वं त्वर्थदृक् शिष्यस्यापेक्षितपुरुषार्थदर्शी । सर्वदृशां । अत्र दृक् शब्देन ज्ञानसाधनानींद्रियाणि गृह्यंते । सर्वेंद्रियाणां समीक्षणः प्रकाशः साक्षी वा । अतः स्वगतिं स्वप्राप्यं बुभुत्सतां बोद्धुमिच्छतां नोऽस्माकं त्वं गुरुर्वृतोऽसि । स चक्षुरिति पाठे यथांऽधस्य सचक्षुरग्रणीः कृतः । यथाऽविदुषो जनस्य बुधो गुरुः कृतः शास्त्रविशारदैः । तथा त्वमस्माभिर्गुरुर्वृतोऽसीत्यर्थो बोध्यः ॥ ॥ ५० ॥ किंच प्राकृतो गुरुश्चानर्थहेतुरित्याह ॥ जन इति । जनोऽज्ञो गुरुरसतीं मतिमर्थकामादिविषयिणीं मतिमादिशते उपदिशति । यथा मत्या दुरत्ययं तमः संसारं प्रपद्येत तादृशीमित्यर्थः । यद्वा । असतीं विपरीतां मतिं यथा विपरीतबुध्द्या दुरत्ययं पुनरावृत्तिवर्जितं तमो नित्यदुःखात्मकमंधंतमः प्रपद्येतेति । अंधंतमः प्रविशंति येऽविद्यामुपासत इति श्रुतेः । त्वं तु येन ज्ञानेन जनो निजं पदं चिदानंदरूपं प्रपद्यते तादृशमव्ययं नाशरहितममोघं फलाव्यभिचारि । अंजसा समीचीनज्ञानमुपादिशसीत्यर्थः ॥ ५१ ॥ त्वमुपदिष्टज्ञानमेवापेक्षितपुरुषार्थसाधनं न चान्यत् । अनिमित्तबंधुत्वादिगुणपूर्णत्वादित्याशयेनाह ॥ त्वमिति । सुहृदनिमित्तोपकारी प्रियश्चासावीश्वरश्चात्मा पूर्णानंदो गुरुर्ज्ञानोपदेष्टा जानातीति ज्ञानं सर्वज्ञोऽभीष्टस्य सिद्धिः साधकः । ननु लोकसुहृत्त्वादिगुणवंतं मां कुतो न जानाति सर्वोऽपि जन इत्यत आह ॥ तथाऽपीति । यद्यप्यनिमित्तबंधुस्तथाऽपि लोके हृदि संतं विद्यमानं भवंतं न जानाति । कुतः अंधा नष्टा धीर्ज्ञानं यस्य सः । नष्टज्ञानत्वात् । ज्ञाननाशः कस्मात् । हृदिबद्धाः कामा येन सः । विषयासक्तत्वा-

दित्यर्थः ॥ ५२ ॥ इदानीं स्वाभिप्रायं प्रकाशयति ॥ तं त्वामिति । अहं ते त्वां प्रतिबोधनाय त्वद्विषयकज्ञानाय शरणं प्रपद्ये । देवोत्तमत्वात्त्वमेव शरण्य इति भावेनोक्तं ॥ देववरमिति । सौंदर्यादिगुणाभावे त्वद्भक्तिर्नोदेतेति भावेन ॥ वरण्यमिति । ईशं पुरूपार्थदाने समर्थ । हे भगवन् । अर्थदीपैः परमार्थप्रकाशकैर्वचोभिर्मन्मना भगवद्भक्त इत्यादि रूपैर्हृदिस्थान् हृदि विद्यमानान् ग्रंथीन् अहंकारादीन् छिंधि । तथा स्वमोकः स्वस्वरूपमाश्रयं वैकुंठं वा विवृणु प्रकाशय ॥ ५३ ॥ नृपतिं प्रति महांबुधौ प्रलयसमुद्रे तत्त्वं स्वरूपमब्रवीत् ॥ ५४ ॥ तदेव विवृणोति ॥ पुराणेति । सांख्ययोगो ज्ञानयोगः क्रिया भक्तियोगस्तत्प्रतिपादिकां दिव्यां पुराणसंहितां मत्स्यपुराणमब्रवीदित्यन्वयः । यथाऽशेषत आत्मगुह्यमात्मरहस्यं च ॥५५॥ ऋषिभिः साकं । नावि पृथिवीस्थायां । अश्रौषीत् श्रुतवान् ॥ ५६ ॥ स तु सत्यव्रतो ज्ञानं साधारणं विज्ञानं स्वयोग्यं ज्ञानं ताभ्यां संयुतो विष्णोर्मत्स्यरूपिणः । अस्मिन्वर्तमाने कल्पे मनुकल्पे । वैवस्वतो मनुः ॥ ५८ ॥ मायामत्स्यस्य माययेच्छया मत्स्यरूपस्य संवादं प्रश्नोत्तररूपं महदाख्यानमितिहासं । किल्बिषात्पापसमुदायात् ॥ ५९ ॥ मत्स्यावतारकीर्तनफलमाह ॥ अवतारमिति । हरेर्मत्स्यरूपिणोऽन्वहं नित्यं तस्य कीर्तयतः संकल्पा मनोरथाः । न केवलमैहिकमेव फलं किंतु पारत्रिकमपि सिध्यतीत्याशयेनाह ॥ प्रयातीति । परमां गतिं वैकुंठं ॥ ६० ॥ बुध्यारोहार्थं प्रलयभेदेन कृतप्रयोजनद्वयस्य मत्स्यावतारस्य कथां संकलय्याह ॥ प्रलय इति । प्रलय पयसि दिनप्रलये सुप्तशक्तेर्विषयोपरतेंद्रियशक्तेर्धातुर्ब्रह्मणश्चतुर्मुखस्य मुखेभ्यो निःसृतमपनीतं हयग्रीवासुरेणापहृतं श्रुतिगणं तं दितिजं हयग्रीवासुरं हत्वा ब्रह्मणे उपादत्त । पुनः प्रत्याहृत्य दत्तवान् । यो यश्च प्रलयपयसि चाक्षुषमनुप्रलये सत्यव्रताय राज्ञे ब्रह्म परं ब्रह्माकथयच्चोपदिष्टवान् तमखिलहेतुमखिलस्य जगतो जन्मादिकारणं । अखिलस्य पुरुपार्थस्य हेतुं वा । जिह्मभीनं मायामत्स्यं । नतोऽस्मीत्यशेषमतिमंगलं ॥ ६१ ॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ८ ॥ २३ ॥

॥ छलारीनरसिंहाचार्यशिष्यशेषाविनिर्मिता ॥ अष्टमस्कंधटीका स्यात्प्रीत्यै माधवमध्वयोः ॥ १ ॥ इति श्रीमच्छलारीनरसिंहाचार्याणां शिष्येण शेषेण विरचितायामष्टमस्कंधटिप्पण्यां मंदबोधिन्यामष्टमः स्कंधः समाप्तः ॥ ८ ॥ ७ ॥ श्रीकृष्णार्पणमस्तु ॥७॥





श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

( श्रीमन्मध्वाचार्याः )

॥ इति श्रीमद्भागवतटिप्पणी छलारी समाप्ता ॥

॥ अष्टमः स्कंधः ॥

|| हरिः ॐ || श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः || प्रणम्य मध्वहृत्कंजसंस्थं व्यासं तथा गुरून् । पूर्वटीकाकृतश्चाथ विजयध्वजपूर्वकान् || १ || अष्टमस्कंधसद्व्याख्या क्रियते हरितुष्टये । लिंगेरीश्रीनिवासेन रुग्मिणीशार्यसूनुना || २ || अस्मिन्स्कंधेऽपि भगवति श्रीनारायणेऽतिशयितभक्त्युदयाय स्वायंभुवमनुस्तुत्या प्रसन्नाद्धरेस्तत्संरक्षणादि रूपं माहात्म्यं भगवतो निरूप्यते । अत्राप्यादौ प्रवृत्तकथनानुवादपूर्वकं परीक्षिद्राजा स्वाभिलपितकथाकथनं शुकं प्रति प्रार्थयत इत्याह || सूतः शौनकादीन् राजेत्यादिना । अवश्यं मया श्रोतव्येषु चतुर्दशसु मनुषु स्वायंभुवस्य मनोरयं प्रमाणप्रसिद्धो वंशो विस्तराच्छ्रुतः । अवश्यं श्रोतव्यत्वे निमित्तमाह || स्वायंभुववंशस्य यत्रेत्यादिना । यत्र स्वायंभुवस्य वंशे विश्वसृजां स्वयोग्यजगदुत्पादकानां सर्गः सृष्टिः । अभूदिति शेषः । अन्यान्स्वायंभुवाद्भिन्नान्मनून् । नोऽस्माकं वदस्व || १ || अन्यमनुकथाश्रवणादेरवश्यतानिमित्तमाह || यत्र धर्म इत्यादिना । यत्र मन्वंतरे स्वायंभुवातिरिक्तमन्वंतरे विविधाः शुभाश्चतुर्वर्णाश्रिता धर्माः । उक्ता इति शेषः । हरेर्भक्तसर्वानिष्टनिवर्तकस्य महीयसः सर्वोत्तमस्य नारायणस्य जन्म प्रादुर्भावः कर्माणि चरितानि || २ || कवयोगृणंत्युपदिशंति तानि वदस्वेति । सत्संप्रदायसद्भावात् । तवापि मत्पृष्टार्थज्ञानपूर्णत्वाच्च तवैतत्कथनमावश्यकमित्याह || ब्रह्मन्निति । शृण्वतामिति स्वस्य श्रवणादरं सूचयति । अस्मिन्नंतरे वैवस्वतमन्वंतरे विश्वभावनो जगदुत्पादको भगवान्नारायणो यत्कर्मादिकं कुरुते । अतीतेंऽतरे कृतवान् । अनागते कर्ता करिष्यति || ३ || स्वायंभुवातिरिक्तमनुस्थितिं वदस्वेति परीक्षिता प्रार्थितो भगवान् शुकः । तामुक्तवान्नवेति शौनकादीनां मानसीं शंकां परिहरति || शुक उवाचेत्यादिना । अस्मिन्कल्पे वैवस्वतमन्वंतरे वर्तमाने स्वायंभुवादयः षण्मनवो व्यतीताः । षट्स्वाद्यः स्वायंभुवो यः स ते कथितः || ४ || तस्य स्वायंभुवस्य मनोः । आकूती देवहूतीति संज्ञयोर्दुहित्रोः । भगवान्नारायणो धर्मज्ञानोपदेशार्थे । आकूत्यां यज्ञनामा सन्देवहूत्यां कपिलनामा सन्पुत्रतांगत इत्यन्वयः । भगवानित्यनेन भग शब्दार्थांतर्गतसमग्रज्ञानवचोक्त्या धर्मज्ञानोपदेशे सामर्थ्यं सूचितं || तदुक्तं || ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरिणेति । ज्ञानवैराग्ययोश्चैवेत्यपि केचित्पठंति || ५ || हे कुरूद्वह । कुरुकुलोद्धारकेति स्तुत्या संबोधनं परीक्षितः । प्रोच्यमाने मनःप्रणिधानार्थं शुकेन कृतं ।

भगवतः कपिलस्य कृतं चरितं कर्मणोः । भावेक्तः । पुरा तृतीयस्कंधेऽनुवर्णितं । भगवान्यज्ञो यच्चरितं चकार । तदहं ते आख्यास्ये प्रवक्ष्यामि ॥ ६ ॥ यज्ञमूर्तिचरितं तदुपयुक्ततामाह ॥ विरक्त इत्यादिना । प्रभुर्विषयानुभवादि परित्यागे समर्थः । शतरूपापतिः स्वायंभुवः । काम्यंत इति कामा विषयाः । तेषां भोगेष्वनुभवेषु विरक्तो हेयबुद्धिः सन् राज्यं विसृज्य तपसे तपः करणार्थं वनमाविशत् । सभार्य इत्यनेन शतरूपायाः पातिव्रत्यसूचनेन यच्छतरूपापतीरिति शतरूपायाः प्रसिद्धत्वं ध्वनितं तदुपपादितं भवति । तपःकरणप्रकारमाह ॥ सुनंदायामिति । हे भारत । स्वायंभुवो मनुः सुनंदायां । त्रिस्रोतासि भागीरथ्यां वर्षशतं शतवर्षपरिमितिकाले । कालावध्नोरत्यंतसंयोगे द्वितीयेति सूत्रितसप्तम्यर्थे द्वितीयया शतवर्षे । वक्ष्यमाणतपसो विच्छेदाभावं सूचयति । एकेन पदा पादेन भुवं स्पृशन् घोरमविरक्तजनभयंकरं तपस्तप्यमानः सन् । इदं य आदित्यमंतरो यमयतीत्यादि श्रुतिस्मृतिजातं अनु अनुसृत्येदं वक्ष्यमाणं स्तोत्रमाह ॥ ८ ॥ येन श्रीनारायणेन प्रेरितोऽयं सूर्यो विश्वं जगत्तपते प्रकाशयति । धातूनामनेकार्थत्वात् । य आदित्यमंतरो यमयतीति । यस्य भासा सर्वमिदं विभाति । यदादित्यगतं तेज इत्यादि श्रुतिस्मृतिभ्यः । विश्ववीर्यं चेतनजगतो मोक्षादिप्राप्तौ सामर्थ्यप्रदं तपो ज्ञानं यतो यस्माद्धरेर्भवति । अज्ञानां ज्ञानदो विष्णुरित्यादेः । अस्मिन्सूर्यशयाने यो नारायणो जागर्ति निद्राभावं प्राप्नोति । सूर्यस्य जीवेष्वेकत्वात् । तुरीयस्य भगवद्रूपत्वा-देतेषां च स्वपितीत्याचक्षते । न निद्रां नैव च स्वप्नं तुर्ये पश्यंति निश्चिता इत्यादि श्रुतिभ्यः । निद्रातदभावावगतेः । अयं सूर्यस्तं स्वनियामकं नारायणं न वेद न जानाति । यमादित्यो न वेदेति श्रुतेः । स सूर्यं नियामको नारायण आदिर्यं वेद । यः सर्वज्ञः सर्ववित् । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता इत्यादि श्रुतेः । येन नारायणेन प्रेरितोऽयं जीवराशिर्विश्वं समस्तं सुखदुःखादिकं तपतेऽनुभवति । य आत्मानमंतरो यमयतीति । एष ह्येवानंदयाति । सुखं दुःखं भव इत्यादि श्रुतिस्मृतिभ्यः । विश्वस्य समस्तजीवानां वीर्यं सामर्थ्यप्रदं तपो ज्ञानं यतो हरेर्भवति । यो हरिरस्मिन् जीवे शयाते निद्रां प्राप्ते जागर्ति । अयं जीवराशिस्तं नारायणं न वेद । यमात्मानं न वेदेति श्रुतेः । स हरिर्जीवं वेद ॥ ९ ॥ न बही राजादिवत्सूर्यादिप्रेरकत्वं नारा-यणस्यापि तु तं नियामकतयांऽतःस्थत्वेनापीत्याह ॥ आत्मावास्यमिति । आत्मनः सर्वेशस्य हरेरावासयोग्यं । हे मनः । जगत्यां

प्रकृतौ यज्जगदवस्थितमिदं विश्वं जगदात्मावास्यं विद्धि । तेन कारणेन तेन परमात्मना त्यक्तेन त्वन्निमित्तं विसृष्टेन दत्तेन द्रव्येण भुंजीथाः शरीरपालनं कुरु । कस्यचिदन्यस्य धनं द्रव्यं कस्यचित्सुखपूर्णस्य हरेर्धनं स्वातंत्र्यादिरूपं । हरिणैक्यमिति यावत् । मा गृध्रो मा कांक्षीरिति स्वायंभुवो मनुः स्वांतःकरणं स्वाभिमुखजीवराशिं च शिक्षयति । मननान्मन उद्दिष्ट इति जीवेऽपि मनः शब्दप्रवृत्तेः ॥ १० ॥ लक्षणं विना वस्त्वसिद्धेर्भगवतो लक्षणमाह ॥ यं नेति । हे मनांसि । युयं कवयः स्वान्पश्यंतं यद्यं तत्प्रसादेन विना तत्प्रसादेऽपि साकल्येन च न पश्यंति न जानंति । साक्षी चेता । न विद्म न विजानीमः । यमेवैष वृणुते तेन लभ्य इत्यादेः । यस्य चक्षुर्नरिष्यति कदाचित्क्षीणं न भवति । न हि द्रष्टुर्दृष्टेर्विपरिलोपः । तुरीयं तत्सर्वदृक् सदेत्यादेः । भूतनिलयं सर्वप्राण्यावासं सुपर्णं सुखपूर्णं शरीरलक्षणवृक्षे गरुत्मत्पक्षिरूपं देवं क्रीडादिगुणविशिष्टं नारायणमुपधावत स्मरत । भजत चेति । मनुना स्वांतःकरणं मोक्षयोग्यजीवांश्च प्रत्युच्यते । सर्वप्राणिषु च स्थितौ भूतावासो वासुदेवो यो वेद निहितं गुहायां कं ब्रह्म द्वासुपर्णा इत्यादि श्रुतिस्मृतिभ्यः । एतेन स्वप्रसादेन विना साकल्येन च ब्रह्माद्यज्ञेयत्व, सर्वदासर्वसाक्षिकत्व, सर्वभूताश्रयत्व, पूर्णसुखत्वादि लक्षणैः परमात्मलक्षणवस्तुसिद्धेः स्थावरजंगमात्मकसमस्तजगतस्तदावास्यत्वं निष्कंटकं स्थितमित्यसूचीति ज्ञातव्यं । ईशावास्यमित्युपनिषन्मंत्रभागस्यात्मावास्यमिति किंचिद्विवरणेन । आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययं । न संभवतीत्यादि प्रमाणैर्विष्णावेव मुख्यात्मशब्देनेशशब्दव्याख्यानादीशावास्यमित्यादेः रुद्रपरत्वं प्रत्याख्यातं ॥ ११ ॥ तस्य परमात्मनो वैभवाल्लक्षणांतराण्याह ॥ यस्येत्यादिना । यस्य परवस्तुन आद्यंतावुत्पत्तिविनाशाऽवस्थे न स्तः । मध्यं चोत्पत्त्यनंतरं विनाशात्पूर्वं स्थित्यवस्थापि नास्ति । यस्य सकाशात्पर उत्तमो नास्ति । आंतरं बहिश्च नास्ति । सर्वव्याप्तत्वात् । यद्वस्तु विश्वस्य समस्तस्य जगतो मूलमुत्पादकं । यस्माद्वस्तुनो विश्वमवतिष्ठते संह्रीयते च । तन्महत्परममहत्पारिमाणं ऋतं पूर्वावगतवत्सदास्थितेर्ऋत शब्दवाच्यं परं ब्रह्म । अनादिनिधनं विष्णुं । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभिसंविशंति । तद्विजिज्ञासस्व तद्ब्रह्मेति । तदेवर्तमित्यादेः ॥ १२ ॥ यद्विश्वस्य मूलमित्युक्तं जगज्जन्मादिकर्तृत्वं विवृण्वन्नाह ॥ स विश्वकाय इति । विश्वकायो नियम्यतासाम्येन । जगल्लक्षणशरीर-

वान् पुरुहूता बहुनामा बव्हाव्हानवांश्चेशोऽघटितघटनैश्वर्यवान् । सत्यं परंज्योतिरित्यादि शब्दवाच्योऽज उत्पत्तिरहितः पुराणः पुरातनः स आत्मा आत्मशक्त्या स्वशक्तिविषयया लक्ष्म्या प्रेरितयाऽजया जडप्रकृत्याऽस्य चतुर्मुखादि जीवराशेः सत्त्वगुणादि जडस्य च जन्मादिकमुत्पत्त्याद्यष्टकं धत्ते करोति । तां जडप्रकृतिं विद्यया सार्वज्ञादि स्वशक्त्योदस्य निराकृत्य तदबद्धो भूत्वा निरीहः सृष्ट्यादि व्यापाररहितः सन्नास्ते । यः पृथिव्यां तिष्ठन्सर्वनामा सर्वकर्मा । उत्पत्तिस्थितिसंहारानियतिर्ज्ञानमावृतिः । बंधमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडिति स्कांदादेः ॥ १३ ॥ इत्थं लक्षणैः परब्रह्मवस्तुनि सिद्धे तत्प्रसादेन तत्प्राप्त्यादि रूपमोक्षसिद्ध्यै दुष्कर्मनिर्हरणद्वारांतःकरणशुद्धिवैराग्यभक्त्युपासनाऽपरोक्षभगवत्प्रसादहेतुभूतस्ववर्णाश्रमोचितकर्मकरणे पूर्वाचारमाह ॥ अथाग्र इत्यादिना । अग्रे पूर्वकाले ऋषयस्त्रिकालज्ञानिनो मुनयोऽथ स्वविहितकर्मकरणेनोक्तरीत्या मोक्षलक्षणफलसद्भावात्कर्मेहंतवे दुष्कर्मविनाशादि फलाय कर्माणि स्वविहितानीहंते कुर्वंति । अहरहः संध्यामुपासीतेति विहितसंध्यादिना सूर्यश्च मामन्युश्च मन्युपतयश्च पापेभ्यो रक्षंतामिति श्रुत्यादिना दुष्कर्मनाशावगतेः । एवं कर्माणीहमानः कुर्वाणः पुरुषोऽधिकारी प्रायः सर्वात्मनाऽनीहां विधिनिषेधबद्धतया कर्तव्यकर्मशून्यां मुक्तिं । न तु सर्वात्मना चलनादि कर्मशून्यत्वादनीहात्वं मुक्तेः । मुक्तावपि जक्षन्क्रीडन्नित्यादि श्रुत्योक्तकर्मप्रतीतेः । प्रपद्यते प्राप्नोति । अनेन कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा इति द्वितीयमंत्रोपनिषद्भागो विवृतः । आचार्यकुलाद्वेदमधीत्य यथा विधानं गुरोः कर्माणि अतिविशेषेण समावृत्य । कुटुंबी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेंद्रियाणि संप्रतिष्ठाप्याहिंसन् । सर्वभूतान्यत्र तीर्थेभ्यः स खल्वेवं विदेवं वर्तयन् यावदायुषमित्यादि श्रुतिर्हि शब्दसूचिता ॥ १४ ॥ ननु परमात्मनोऽपि स्वफलाय कर्मप्रवृत्तिदर्शनात्कथं तत्प्रसादेन मोक्षाद्युक्तिः । तस्यान्यापेक्षायां स्वातंत्र्येण मुक्तिप्रदानाद्ययोगादित्याशंकां परिहरति ॥ ईहत इत्यादिना । भगवान्समग्रैश्वर्यादिमानीशः परमात्माऽपि कर्माणीहते । तथाऽपि तत्र कर्मफले न विषज्जते आसक्तो न भवति । यत आत्मलाभेन स्वरूपानंदाद्यनुभवलाभेन पूर्णार्थ आवाप्तसर्वप्रयोजनः । ननु चरमात्मनो दुष्कर्मबद्धत्वात् । अत एव तादृशपुत्रत्वापादककर्मणो निवृत्त्या पुत्रलक्षणफलप्राप्त्यै यादवकृष्णस्य कैलासगमन, रुद्रस्तुत्यादि कर्मणि प्रवृत्तिदर्शनात्कथं तस्यान्येभ्यो मुक्तिदातृत्वं युज्यत इत्यस्यापि कुचोद्यस्येदे-

मेवोत्तरं। भगवानीशः कर्माणीहते। कैलासगमनादि कर्म कुरुते यद्यपि। तथाऽपि तव तत्कर्मविषये न विषज्जते। स्वपुत्रापादकदुष्कर्मनिवर्तकं भवत्वेतदिति संकटं नानुभवति। स्वबंधकदुष्कर्माभावात्। न मां कर्माणि लिंपंतीत्यादि स्मृतेः। कुमारश्चित्पितरं वंदमानं प्रति नानाम रुद्रोपयंतं भूरेर्दातारं सत्पतिं गृणिषे स्तुतस्त्वं भेषजा रास्यस्मे इत्यादि प्रत्यक्षश्रुतेश्च भगवतः कृष्णस्य दुष्कर्माबद्धत्वफलापेक्षाशून्यत्वेऽपि मोक्षयोग्यजनशिक्षणाय कर्मणि प्रवृत्तेः प्रमितत्वादिति। एतच्छ्रुतिस्मृत्यर्थो विस्तरादस्मत्कृततत्त्ववादिकंठाभरणादौ द्रष्टव्यः। अत्र कैमुत्यमाह। येऽधिकारिणस्तमनुवर्तंते तेऽपि नावसीदंति। तेषामवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादि प्रमाणेनात्यंतमवर्जनीयतया भोक्तव्यप्रारब्धकर्मणोऽपि उपमर्दं चेत्यादि ब्रह्मसूत्रादिभिः कालाद्युपमर्दप्रमापनात्। किमीश्वरः स्वफलाय नावसीदतीति वक्तव्यमिति। हे रुद्र। अनेन कृष्णेन भेषजामृषैव स्तुतः सन् अस्मै कृष्णाय पुत्रादिरूपफलं भेषजा रासि ददासीति संकोचेनैतच्छ्रुत्यर्थोऽत्र ज्ञातव्यः ॥१५॥

एवं परमात्मकर्मवैफल्ये परमात्मनो मौढ्यमाशंक्य परमात्मनः स्वप्रयोजनाभावेऽपि परप्रयोजनसिद्ध्यर्थं सम्यग्ज्ञानयोग्यानां शिक्षणाय कर्मकरणप्रवृत्तेर्न वैफल्यमिति सूचयंस्तस्यान्यानियम्यत्वाभावमाह ॥ तमहिमानामिति। अहं बुधैर्ज्ञानयोग्यानिमित्तैर्निरहंकृतं। अस्वतंत्रकर्तर्यहं कर्तेति गर्वाभावेन कर्माणीहमानं। स्वस्य स्वतंत्रकर्तृत्वात्। निराशिषं फलाकांक्षारहितं पूर्णमावाप्तसर्वकामं। अनन्यचोदितमन्याप्रेरितं प्रभुं सर्वस्वामिनं। अखिलधर्मभावनं निःशेषधर्मप्रवर्तकं। निजवर्त्ममूढान्स्वकीयमोक्षमार्गाज्ञानिनो नॄन्मनुष्यान् शिक्षयंतमहंकारफलापेक्षाऽभावेन कर्मकर्तव्यमिति दर्शयंतं परमात्मानं प्रपद्ये शरणं गतोऽस्मि। यदि ह्ययं न वर्तेयमित्यादेः ॥ १६ ॥ मंत्रोपनिषदं संहिता संहितोपनिषदं व्याहरंतमुच्चरंतं समाहितं स्वस्थांतःकरणं स्वायंभुवं दृष्ट्वा। असुराः सुरविरोधिनो यातुधाना राक्षसाः क्रुधा कोपेन जग्धुं भक्षितुमभ्याभिमुखेनाद्रवन् शीघ्रमागतवंतः ॥ १७ ॥ सर्वगतो हरिः सर्वानिष्टानिवर्तको नाम्ना यज्ञः परमात्मा तथाऽवसितान्पूर्वोक्तनिश्चयवतस्तान् राक्षसान्वीक्ष्य हत्वा नाम्नायामैर्देवैर्वृतः सन्। त्रिविष्टपं स्वर्गमशासच्छिक्षयामास। इंद्रपदवीं चकारेत्यर्थः ॥ १८ ॥ तदेवं परीक्षिता स्वायंभुवमनुवंशो विस्तराच्छ्रुतः। अन्यान्वदस्वेत्युक्तेऽपि स्वायंभुवमन्वंतरे वक्तव्यमवशिष्टं यज्ञमूर्तिचरितं परीक्षिते निरूप्यैतत्स्कंधादौ परीक्षित्पृष्टः स्वायंभुवमनुव्यतिरिक्त-

कथां कथयति ॥ स्वारोचिषो द्वितीय इत्यादिना । अग्नेः सुतो नाम्ना स्वारोचिषो द्वितीयो मनुरभवत् । तु शब्दः प्रकृतत्वानुसंधानार्थः । द्वितीय इत्यनेन संबध्यते । तस्य स्वारोचिषस्य च द्युमत् सुशेषण रोचिष्मन्नामकप्रधानाः । आत्मजाः पुत्राः ॥१९॥ तत्र स्वारोचिषेऽन्तरे । ईशः स्वयोग्यसामर्थ्यवान्नाम्ना रोचन इंद्रोऽभूत् । देवाश्च तुषितप्रभृतयोऽभवन् । परब्रह्मवादिन ऊर्जस्तंभनाम प्रभृतयः सप्तर्षयो बभूवुः ॥ २० ॥ वेदशिरोनामकस्य ऋषेस्तु तुषिताख्या भार्याऽऽसीत् । तस्यां तुषितायां देवो क्रीडादिगुणविशिष्टो विष्णुर्विभुरितिनाम्नाऽभिविश्रुतोऽतिप्रसिद्धः सन् जज्ञे प्रादुरभूत ॥ २१ ॥ अष्टाशीतिसहस्रसंख्याका धृतव्रता ये मुनयस्ते कौमारब्रह्मचारिणः कुमारावस्थामारभ्य ब्रह्मचर्यव्रतवतस्तस्य विभुनामकहरेरिदं व्रतं कौमारब्रह्मचर्यं स्वेष्वन्वशिक्षन्स्वीकृतवंतः । स्वयमन्वनुसृत्य स्वाशिष्यानप्यशिक्षन्निति वा ॥ २२ ॥ प्रियव्रतसुतः स्वायंभुवपुत्रप्रियव्रततनयो नाम्नोत्तमस्तृतीयो मनुरभवत् । पवनः सृंजयो यज्ञहोत्र प्रभृतयस्तत्सुता उत्तममनुसुता आसन् । शुकः स्वोच्चमानप्रमेये मनः स्थापनाय नृपेति परीक्षितं संबोधयति । एवमुत्तरत्रापि संबोधनकृत्यं ज्ञातव्यं ॥ २३ ॥ उत्तमाख्यतृतीयमन्वंतरे वसिष्ठतनयाः प्रमदादयः सप्तर्षयोऽभवन् । सत्या, वेदश्रुता, भद्रा इत्येवं नामका देवा आसन् । इंद्रस्तु सत्यजिन्नामकोऽभवत् ॥ २४ ॥ धर्मस्य सूनृताख्यायां भार्यायां भगवान्पुरुषोत्तमः सत्यसेन नामाऽऽसन् । सत्यव्रताख्यैर्देवैः सहजातः ॥ २५ ॥ स सत्यसेनाख्यो हरिः सत्यजिन्नामकेंद्रेण स्तुतः सन् । अनृतदुःशीलान्नियमेनायथार्थवादिनो दुष्टस्वभावान् । असतो नीचान् यक्षराक्षसान् भूतद्रुहः सर्वप्राणिद्रोहकारिणो भूतगणांश्चावधीद्धतवान् ॥ २६ ॥ उत्तमभ्राता तृतीयमनूत्तमसहोदरो नाम्ना तापसश्चतुर्थश्च मनुश्च प्रकृतचतुर्थमनुरभवत् । पृथुख्यातिर्नरः केतुरित्याद्या दशतत्सुतास्तापसमनुसुताः ॥ २७ ॥ तापसेंऽतरे सत्यका हरयो वीरा इत्येतन्नामका देवाः । त्रिशिकाख्यो देवानामीश्वरः । ज्योतिर्धर्मादयः सप्तऋषयोऽभवन् ॥ २८ ॥ हे नृप । तापसांतरे एव कालेन कालशक्त्या नष्टा अपपाठादिना यथा स्वरूपमदृश्या वेदाः । स्वेन तेजसा स्वसामर्थ्येन यैर्विधृता यथा स्वरूपमुत्धृताः । विधृतस्तेन या अत एव वैधृति नामानो देवा अभवन् ॥ २९ ॥ तत्राऽपि तापसांतरे हरिमेधो नामऋषेः सकाशात् । हरिणीनामिकायां तद्भार्यायां भगवान्विष्णुर्हरिर्नामकः सन् जज्ञे प्रादुरभूत् । प्रादुर्भावो हरेर्जनिरिति वचनात् । येन हरिणा गजेंद्रो ग्रहात् । । नेगलीति कन्नडभाषाभाषितात् । जल-

चरविशेषान्नक्राख्यान्मोचितः। मुक्त इति सांप्रदायकाः। ग्राहो वराहो नक्रास्त्वित्यमराभिमानिनस्तु ग्राहान्नक्रो भिन्न इत्याहुः ॥ ३० ॥ हे बादरायण व्याससूनो शुक। वयं हरिर्ग्राहग्रस्तं नक्रग्रहीतं गजपतिं गजेंद्रं यथा येन प्रकारेणामुमुचन्मोचयामास तथा तेन प्रकारेणैतद्गजेंद्रमोक्षणं ते तव सकाशाच्छ्रोतुमिच्छामहे ॥ ३१ ॥ तस्यावश्यं श्रोतव्यत्वे हरिकथात्वं निमित्तमाह परीक्षिच्छुकं प्रति ॥ तत्कथास्विति। उत्तमैर्ब्रह्मादिभिः श्लोकः स्तुत्या कीर्तिर्यस्य स उत्तमश्लोको ब्रह्मादिस्तुत्यो भगवान्हरिर्नारायणो यत्र यत्र प्रकरणे गीयते पठ्यते स्तूयते च तत्तत्प्रकरणं कथासु सर्वकथामध्ये महत्पूज्यं पुण्यं वक्तृश्रोतृणां पुण्यप्रापकं स्वस्त्ययनं क्षेमकरं शुभं मंगलप्रदमिति ॥ ३२ ॥ एवं परीक्षिता पृष्टः शुकः प्रत्युत्तरं परीक्षितेऽदान्न वेति शौनकादि मानसशंकां परिहरति ॥ परीक्षितैवमिति। हे विप्राः शौनकादयः। प्रायोपविष्टेन परीक्षिता। एवमुक्तप्रकारेण। तु विशेषाकारेण कथासु हरिकथाविषये चोदितः प्रेरितः सन्। सदसि सभायां मुनीनां शृण्वतां सतां पार्थिवं परीक्षिद्राजं प्रतिनंद्य तद्गुणोत्कीर्तनादिना तोषयित्वा गजेंद्रमोक्षणप्रकारं मुदा संतोषेणोवाचेत्यर्थः। एवमुत्तरत्र ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ८—१॥

॥ हरिः ॐ ॥ अत्र द्वितीयेऽध्याये गजेंद्रस्तुतभगवत्प्रसादेन गजेंद्रस्य ग्रहान्मोक्षणवत्संसारलक्षणग्रहग्रस्तानामपि हरिचरणशरणानां भगवत्स्तुत्यादि रूपाराधनेन भगवत्प्रसादेन संसारग्रहान्मुक्तिर्भविष्यतीति प्रदर्शनाय गजेंद्रमोक्षप्रकार उपोद्घातेन शुकः परीक्षितं प्रति वक्तीत्याह सूतः शौनकादीन् वा ॥ श्रीशुक उवाचेत्यादिना। हे राजन्। क्षीरोदेन क्षीररूपोदकवता क्षीरसमुद्रेणावृतो वेष्टितः। श्रीमान्संपदुपेतो योजनायुतं दशसहस्रयोजनमुच्छ्रित उन्नतस्त्रिकूट इति विश्रुतः प्रसिद्धो गिरिवरः पर्वतः श्रेष्ठ आसीत्। उदकः स्योदः संज्ञायामिति उदक शब्दस्योदादेशः ॥१॥ तावता दशसहस्रयोजनैः पर्यक् परितो विस्तृतस्त्रिकूटपर्वतो रौप्यायसहिरण्मयै रजतायः सुवर्णविकृतैस्त्रिभिः शृंगैः पयोनिधिं क्षीरसमुद्रं दिशश्च रोचयन्प्रकाशयन्। आस्ते विद्यते ॥ २ ॥ रत्नैर्मणिभिर्धातुभिर्गैरिकाद्यैश्च विचित्रितैराश्चर्यकरैरन्यैः शृंगैः सर्वाः ककुभो दिशः। दिशस्तु ककुभः काष्ठा इत्यमरः। रोचयन्नास्त इति पूर्वेणान्वयः। नाना प्रकारा द्रुमा वृक्षा लता वल्यो गुल्मास्तृणादिपुंजास्तैः। वल्लीतु व्रततिर्लताऽप्रकांडस्तंबगुल्माविति चामरः। निर्झरांभसां शैलात्प्रस्रवद्वारिप्रवाहोदकानां निर्घोषैर्ध्वनिभिश्च त्रिकूटः। शोभत इति शेषः। वारिप्रवाहो निर्झरो झरोऽंभोर्णस्तोयपानीयनीरक्षीरांबुशंबरं।

स्वानानिर्घोषनिर्ह्रादेत्यमरः ॥३॥ समंतात्परितः पय ऊर्मिभिः क्षीरोदतरंगैः सदा सर्वकालं निर्णिज्यमानांघ्रिः पुनः पुनः प्रक्षाल्यमानोपपर्वतस्त्रिकूटः । भंगस्तरंग ऊर्मिर्वा पादाः प्रत्यंतपर्वता इत्यमरः । शुभैः स्फोटाल्पप्रभादिदोषशून्यैर्मरकताश्माभिः पचेन्यपभ्रष्टसंज्ञपाषाणैः स्वास्थितां भूमिं शामलां दूर्वावर्णोपेतां करोति । पाषाणप्रस्तरग्रावोपलाश्मान इत्यमरः ॥ ४ ॥ क्रीडद्भिः क्रीडां कुर्वद्भिः । सिद्धैश्चारणैर्जयवादिभिर्गंधर्वैर्गायकैर्विद्याधरैर्नर्तकैः । महोरगैः पूज्यश्रेष्ठसर्पैः । किन्नरैर्गायकैर्ज्युष्टकंदरः सेवितदरिः । अप्सरोभिश्च नर्तकीस्त्रीभिर्जुष्टकंदरः । उरगः पन्नगो भोगी । स्त्रियां बहुष्वप्सरसः स्ववेंश्याः । दरी तु कंदर इति चामरः ॥५॥ यत्र त्रिकूटे श्लाधिनः स्वेषामेवातिप्रबलतया प्राशस्त्यमानिनो हरयः सिंहाः । संगीतससन्नादैर्गायमानां निर्दुष्टध्वनिभिर्नदद्दुहं ध्वनिकारिगुहावस्थलमाभि प्रति परिशंकया स्वान्यासिंहादयो गर्जंतीति भिययाऽऽमर्षयाऽसहिष्णुतया कोपेन च गर्जंति गर्जनं कुर्वंति । सिंहो मृगेंद्रः पंचास्यो हर्यक्षः केसरी हरिरित्यमरः ॥ ६ ॥ त्रिकूट इति वर्तते । नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतो नानाविधवनगतपशुसमुदायसंदाटितनिम्नभूमिभूषितः । चित्रा आश्चर्यकरा द्रुमा वृक्षा येषु सुरोद्यानेषु तानि चित्रद्रुमसुरोद्यानानि तेषु स्थिताः कलकंठा अव्यक्तमधुरध्वनियुक्तगला ये विहंगमाः पक्षिणस्तैर्ष्टत इत्युत्तरेण द्रोण्यलंकृत इत्यत्रत्यालंकृत इत्यनेन बुद्ध्या विवेकेन वाऽन्वयः । व्रातवारसंघातसंचय इत्यमरः । संकुलह्यवकाशेनाहिनेसत्कुल इति नानार्थरत्नमाला । द्रोणिकाष्ठांबुवाहिन्यां निम्नभूमौ च सा त्रियामिति च । आलेख्याश्चर्ययोश्चित्रमित्यमरः । पलासिद्रुद्रुमागमा इत्यमरः । पुमानाक्रीड उद्यानमिति च । ध्वनौ तु मधुरास्फुटे कल इति च । करो गल इति च । खगो विहंगविहगविहंगमविहायस इत्यमरः ॥ ७ ॥ सरिद्भिर्नदीभिः सहितैः सरोभिः सरोवरैरच्छोदैर्निर्मलजलैः । एतत्सरोवरविशेषणं । मणयो रत्नानि वालुकाः क्रमुकपरिमाणाः पाषाणा इव येषु तैः पुलिनैः शर्करासंगितसूक्ष्मपाषाणसमुदायैः । देवस्त्रीणां मज्जनेन स्नानेन प्राप्तो य आमोदः कुंकुमकेसरादि परिमलाशयद्रव्यसूक्ष्मभागः सरिदादिस्थितस्तस्य सौरभ्येन परिमलेनाक्ता लिप्ता अनिला वायवस्तैर्युतस्त्रिकूट आसीदित्यन्वयः । तोयोत्थितं तत्पुलिनमित्यमरः ॥ ८ ॥ तस्य त्रिकूटपर्वतस्य द्रोण्यां निम्नभूमौ भगवतः स्वयोग्यैश्वर्यादि गुणवतो माहात्मनः प्रशस्तमनसो वरुणस्य देवस्य सुरयोषितां देवस्त्रीणामाक्रीडं क्रीडोचितस्थलं सर्वर्तूचितपुष्पफलादिमत्वेन ऋतुमन्नामकमुद्यानमासीत् । स्त्रीयोपि-

दषलायोपेत्यमरः ॥ ९ ॥ तत्सरो वर्णयति ॥ सर्वत इति । दिव्यैरलौकिकैर्निरंतरं पुष्पफलोपेतवृक्षैः सर्वतः समंतात् । सार्वविभक्तिकस्तासिः । अलंकृतं भूषितमिति । तद्वृक्षनामान्याह । मंदारैः हालिवालेति कन्नडभाषितैः पारिजातैः प्रसिद्धैः । पाटलाशोकचंपकैः हादरिमुल्लमुत्तसंपिगीति कन्नडभाषितैः ॥ १० ॥ चूतैः प्रसिद्धैः । प्रियालैः चारिवालेति कन्नडभाषितैः । पनसैः हलसु इति कन्नडभाषितैः । आम्रैः प्रशस्तरसोपेतेनातिस्थूलफलचूतविशेषैः । आम्रातकैः अमटीति कन्नडभाषितैः । क्रमुकैः पूगैर्नालिकेलैः । बीजपूरकैः दालिंबेति कन्नडभाषितैः । माधवलेति केचित् । राजादनं प्रियालुः स्यादित्यमरः । पनसं कंटकिफलमित्यमरः । आम्रचूतो रसालश्चेत्यमरः । द्वौपीतनकपीतनौ । आम्रातक इति च । तूदस्तुपूगक्रमुक इति च । फलपूरो बीजपूरो रुचको मातुलंगक इति च ॥ ११ ॥ मधुकैः इप्पीति कन्नडभाषितैः । मधूके तु गुडपुष्पमधुद्रुमो वानप्रस्थो मधुष्ठीलाविति च । सालैः कन्संतीति कन्नडभाषितैः । साले तु सर्जकार्शश्च कर्णिकासस्य संवर इति च । तालैः । प्रसिद्धैः । तालस्तु तृजाणरे स्यात् कांस्यवाद्यविशेषक इति नानार्थरत्नमाला । तमालैः । तमाल इति कन्नडभाषितैः । कालस्कंधस्तमालः स्यात् तापिच्छ इत्यमरः । रसनार्जुनैः तदुक्तमत्तीति कन्नडभाषितैः । अरिष्टौदुंबरप्लक्षैः क्रमेण अरटाल, अत्ति, बसरीति कन्नडभाषितैः । वटैः आल इति प्रसिद्धैः । किंशुकचंदनैः मुत्तल श्रीगंधेति प्रसिद्धैः । अरिष्टः फेनिलः । उदुंबरो जंतुफलो यज्ञांगो हेमदुग्धकः । प्लक्षोजटीकर्पटी स्यान्न्यग्रोधो बहुपाद्वटः । पलाशो किंशुकः पर्ण इत्यमरः ॥ १२ ॥ पिचुमंदैः बेवु इति कन्नडभाषितैः । कोविदारैः कंचालेति कन्नडभाषितैः । सरलैः एवमेव कन्नडभाषितैः । सुरदारुभिर्देवदारुभिः । द्राक्षेक्षुरंभाजंबूभिः । द्राक्षि, कब्बु, बाळि, नीरलु, इति प्रसिद्धैः । बदर्यक्षाभयामलैः बोरि, तारि, अरळि, नेल्लीति प्रसिद्धैः । अरिष्टः सर्वतो भद्रा हिंगुनिर्यासमालकाः । पिचुमंदश्च निंब इत्यमरः । कोविदारे चमरिकः कुद्दालो युगपत्रकः इति च । पीतद्रुः सरलः पूति काष्टमिति च । जंबू स्त्रीति च । कर्कंधूर्बदरी कोली घोटेति च । अक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः । अभयात्वव्यथापथ्याक्यस्थापूतनामृतेति च ॥१३॥ बिल्वैः ब्यलवंत्र्येति प्रसिद्धैः । बिल्वे शांडिल्यशैलूषौ मालूर स्त्रीफलावपीत्यमरः । कपित्थैः ब्यळ्ळु इति प्रसिद्धैः । कपित्थे स्युर्दधित्थग्राहिमन्मथा । तस्मिन्दधिफले पुष्पफलदंत शठावपीति च । जंबीरैः निंबीति प्रसिद्धैः । स्युर्जंबीरेदंतशठजंबजं-

बीरजंबला इति च । भल्लातकादिभिः केरु इति प्रसिद्धवृक्षप्रभृतिवृक्षैः । वृतस्त्रिकूट आसीदित्यन्वयः । तस्मिंस्त्रिकूटस्थऋतुमन्नामक-वरुणोद्याने सुविपुलमतिविस्तृतं । विस्तीर्णं विपुलं पृथ्वीत्युत्पलमाला । लसत्कांचनपंकजं प्रकाशमानसुवर्णसदृशकमलोपेतं सर आसीत् ॥ १४ ॥ एतत्सरो वर्णयति ॥ कुमुदेत्यादिना । कुमुदोत्पलकल्हारशतपत्रश्रिया बिळेनेदलु, नेदलु, कल्हार, शतदळ-कमलेति प्रसिद्धपुष्पाणां कांत्योत्कृष्टं । मत्तषट्पदनिर्घुष्टं । पुष्परसपानादिना मदवद्भ्रमरझंकारोपेतं । षट्पदभ्रमरालय इत्यमरः । कलनिःस्वनैरव्यक्तध्वनिमधुरयुक्तैः । शकुंतैः पक्षिभिः । शकुंतपक्षिशकुनेति च । ऊर्जितमिति स्वतो विविक्तेन निर्घुष्टमिति बुद्ध्या विविक्तेन वा शकुंतैरित्यस्यान्वयः ॥ १५ ॥ हंसकारंडवाकीर्णं । हंसैः प्रसिद्धैः । कारंडवेति कन्नडभाषितैः पक्षिभिराकीर्णं पूर्णं । चक्राह्वैः चक्रवाकेति प्रसिद्धैः । सारसेति प्रसिद्धैः । पक्षिभिराकीर्णं । जलकुक्कुटको यष्टी जात्यूहकलकूजितं नीरकोळि, कण्णकाणदबक, करिगोरल, विषपक्षीति प्रसिद्धपक्षीणामव्यक्तमधुरध्वनिमत् । हंसास्तु श्वेतगरुत । कोकश्चक्रवाक् इति च । कुक्कुटश्चरणायुधः । दात्यूहकालकंटक इत्यमरः ॥ १६ ॥ मत्स्यकच्छपसंचारचलत्पद्मरजः पयः । मत्स्यानां मीनानां कच्छपानां कूर्माणां संचारेण चलतां पद्मानां कमलानां रजसा परागेण युक्तं पयो जलं यस्मिंस्तत्तथा । कदंबवेतसनलनीपवंजुलकैः कडवु, ह्यब्बि, देवनाल, कडविनविशेषः ह्यब्बिविशेषेति प्रसिद्धैर्वृक्षैर्वृतं । तूलं च नीपपियककदंबाश्च हरिप्रिय इत्यमरः । वेतवुंदैः मोल्ये इति प्रसिद्धैः । पुष्पैः कुरबकाशोकैः कैंपुगोर्टि, अशोकेति प्रसिद्धैः पुष्पैः । शिरीषैः शिरस इति प्रसिद्धपुष्पैः । कुटजेंगुदैः गिरिमल्लिका, यिंगलेति प्रसिद्धपुष्पैः । कुब्जकैः भद्रकरणीति प्रसिद्धैः । स्वर्णयूथिभिः सुवर्णवर्णशावंतीति प्रसिद्धपुष्पैः । नागपुन्नागजातिभिः नागकेसर, सुरगि, जातिमालतीति च प्रसिद्धपुष्पैः । माध्यं कुंदमित्यमरः । तत्र शोणे कुरबक इति च । शिरीषसिरसावित्युत्पलमाला । कुटजोगिरिमल्लिकेति च । इंगुदी तापसतरुरिति च । कुब्जकं भद्रकरणी चेत्युत्पलमाला । यूथिकांबष्ठि इति च । नागस्तु केशरे नागे सर्पे वारणलोहयोरिति नानार्थरत्नमाला । पुन्नागः पुरुपस्तुंगः केसरो देववल्लभ इत्यमरः । सुमना मालतिजातिरिति च ॥ १८ ॥ मल्लिकाशतपत्रैः मल्लिगि शतदलकमलेति प्रसिद्धैः । माधवीजालकादिभिः वासंतिकलता, जालकेति प्रसिद्धपुष्पप्रभृतिभिः । तीरोत्पन्नैः । नित्यर्तुभिः सर्वे ऋतुयोग्यपुष्पफलवद्भिरन्यैश्च द्रुमैर्वृक्षैरलं

शोभितं सर आसीदित्यन्वयः । तृणशाल्यं तु मल्लिकाभूपदीशीतभीरुश्चेत्यमरः । शतपत्रं कुशेशयमिति च । वासंती माधवी लतेति च ॥ १९ ॥ तत्रोक्तगुणवति सरोवरे तत्समीपे । वटे गाव इतिवत्सामीप्याधिकरणे सप्तमी । तत्रोक्तोद्यान इति वा । एकदैकस्मिन्काले । सर्वैकान्यकिं यत्तत्कालेदेति एक शब्दात्सप्तमी समर्थात्काले दा प्रत्ययः । तस्य त्रिकूटस्य गिरेः काननानि वनान्येवाश्रयो यस्य स तद्गिरीकाननाश्रयः । वारयूथपो गजसमुदायरक्षको गजेंद्रः करेणुभिर्गजस्त्रीभिः संचरन् । कंटकवृक्षसहितं पोळ्ळबिदरु, घट्टिबिदरु, व्यक्तेति प्रसिद्धैर्युक्तं विस्तृतस्तृणलतादिपुंजं पुष्पफलशून्यवृक्षांश्च प्ररुजन् प्रभंजन् आसीत् । करेणु करिभ्यां स्त्रीत्यमरः । तैर पुष्पाद्वनस्पतिरित्यमरः । वेणवः कीचकास्तेस्युः ये स्वनंत्यनिलोद्धता इति च ॥ २० ॥ यस्य गजेंद्रस्य गंधमात्रात्केवलं वासनाद्धरयः सिंहा गजेंद्रा वारणश्रेष्ठा व्याघ्रादयः शार्दूलप्रभृतयो व्यालाः क्षुद्रसर्पा मृगाः कृष्णसाराः खड्गमृगसहिता महोरगाश्च महासर्पा अपि गौरकृष्णमृगसहिता अष्टपादमृगाश्चमर्यः स्त्रीचामरमृगा अपि भयाद्द्रवंति । तद्वासनाघ्राणजनितभीतेः स्वस्वस्थलं विहायाशु गच्छंति । गंधो गंधक आमोदमोदलेशसम्बयेषु चेति नानार्थरत्नमाला । सिंहो मृगेंद्रः पंचास्यो हर्यक्षः केसरी हरिरित्यमरः । शार्दूलद्वीपिनौ व्याघ्र इति च । व्यालो दुष्टगजे सर्प इति नानार्थरत्नमाला । मृगे कुरंग इति च । शरभो राम इति च ॥ २१ ॥ वृकाः तोळा इति प्रसिद्धाः । वराहसूकराः । महिषाः प्रसिद्धाः । ऋक्षाः करडीति प्रसिद्धाः । शल्याः येदु इति प्रसिद्धाः । गवां पुच्छं वालमिव पुच्छं येषां ते गोपुच्छाः । गवया वानरविशेषाश्च । सालावृकाः नरीति प्रसिद्धाः । अरण्यशुनश्च । मर्कटा वानराः । हरिणाः यरळी प्रसिद्धाः । शशादयः मोल इति प्रसिद्धमृगमुख्याः । अन्ये क्षुद्रा मृगाश्च । यदनुग्रहेण यस्य गजेंद्रस्य प्रसादेनाभीता भयरहिताश्चरंति । कोका ईहामृगो वृकः । वराहः सूकरो घृष्टिः । अथ भल्लूको ऋक्षाश्चभल्लभल्लुकाः सालावृकाः कपिक्रोष्टुश्वानः । मर्कटोवानरः । चमूरुश्चेति हरिणा अमी अजिनयोनयः ॥ २२ ॥ स गजेंद्रः करिभिर्गजैः करेणुभिर्गजस्त्रीभिर्मदच्युत्कलभैर्मदस्राविबालगजैर्वृतोऽनुद्रुतश्च पृष्ठतोऽनुधावितश्च । करिभिः करेणुभिर्वृतः कलभैरनुद्रुत इति वा । गरिम्णा संपरिवारस्य स्वस्य गुरुत्वेन दुर्भरभारेण गिरिं त्रिकूटं परितः समंतात्कंपयन् अत्यंतं चलयन् । मदाशनैर्मदभोजनैरलिकुलैर्भ्रमरसमूहैर्निषेव्यमाणः सेव्यमानः सन् । घर्मेण निदाघेन तप्तः सन .

तत्सरोवराभ्याशं द्रुतमगमदित्युत्तरेणान्वयः। घर्मो निदाघः। कुंजरो वारणः करी। कलभः करिपोतः स्यादिति चामरः ॥२३॥ अथ घर्मजसंतापप्राप्त्यनंतरं स गजेंद्रो मदविव्हलेक्षणः सन्। पंकजरेणुरूषितं कमलपरागलिप्तं सरोनिलं पूर्वोक्तसरोवरसंबंधिवायुं विदूरादतिदूरादागतं जिघ्रन् घ्राणेनानुभवन्सन्। तृषार्दितेन जलपानेच्छापीडितेन स्वयूथेन स्वकीयगजसमुदायेन वृतः सन्। तत्सरोवराभ्याशं पूर्वोक्तसरोवरसमीपं द्रुतं शीघ्रमाद्रवदगमत्। विव्हलं चंचलं चलमिति मालतीमाला। ईक्षणं चक्षुराक्षिणीत्यमरः ॥ २४ ॥ स गजेंद्रस्तस्मिन्सरोवरे विगाह्य प्रविश्य निमज्ज्य च। हेमारविंदोत्पलरेणुवासितं सुवर्णवर्णकमलनेदलीति प्रसिद्ध-पुष्पपरागपरिमिलितं। निर्मलं मृत्कालुष्यादिदोषरहितं निजपुष्करोद्धृतं स्वकीय सोंडिलु इति प्रसिद्धहस्तेनोर्ध्वं गृहीतं। अमृतांबवमृत-सदृशजलं निकामं यथेच्छं पपौ पीतवान्। अद्भिर्जलैरात्मानं स्वदेहं स्नपयन् प्रक्षालयन्। पपावित्यनेन स्वस्याप्यतितृषितत्वं सूचितं। ताभ्यां स्नानपानाभ्यां गतक्लमो गतबळलिकीति प्रसिद्धश्रमवानभूदिति शेषः ॥ २५ ॥ अजमायया हरेर्बंधकशक्त्या। कृपणः संसारे लुब्धो गृही गृहस्थो यथा तथा। स्वस्त्रियादिषु। घृणी कृपावान्। करेणूः कलभांश्च स्वपुष्करेण स्वहस्तेनोद्धृताभिः सीकराभिः शीतलाभिरंबुभिरद्भिर्निपाययन् पानं कारयन् संस्नपयन् सम्यक् स्नानं कारयन् दुर्मदो दुष्टमदोपेतः स जेंगद्रोऽजमायया हरेर्मोहकेच्छया मोहितः कृच्छ्रं भविष्यत्कष्टं नाचष्ट न ज्ञातवान्। पुष्करं गजशुंडे स्यात्कमले क्षेत्रभेदके इति नानार्थरत्नमाला। तुषारः सीकरः शीतो हिम इत्यमरः। करुणा घृणेति च। स्यात्कष्टं कृच्छ्रमिति च। अजा विष्णुहरच्छागा इत्यमरः। माया भगवदिच्छायां शक्तौ बंधनमोहयोः। प्रकृतौ कपटे लक्ष्म्यामिति नानार्थमुक्तमाला ॥ २६ ॥ हे नृप परीक्षिद्राजा। तत्र सरोवरे बलीयानतिबलः कश्चिद्ग्रहो नक्रो दैवचोदितः स्वादृष्टप्रेरकेश्वरप्रेरितः सन्। रुषा कोपेन तं गजेंद्रं चरणे पादेऽग्रहीज्जग्राह। आतिबलोऽत्यंतशक्तिमान् स गजो गजेंद्रो यदृच्छया हरीच्छयैवमुक्तरीत्या व्यसनं क्लेशं गतः सन्। यथा बलं स्वशक्त्यनुसारेण विचक्रमे सरोवराद्बहिः पादविक्षेपमुपक्रमे पराक्रमं चकारेति च। दैवं दिष्टं भागदेयमित्यमरः। कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधो स्त्रियामिति च। यदृच्छा तदिच्छा स्यादिति वचनं। व्यसनं क्लेशमित्युत्पलमाला ॥ २७ ॥ करेणवोऽपरे गजाश्च तथा पूर्वोक्तप्रकारेणातुरं भ्रांतं बलीयसाऽतिबलेन ग्राहेण तरसाऽतिवेगेन विकृष्यमाणं यूथपतिं स्वसमुदायपालकं गजेंद्रं दृष्ट्वा। तस्य

पार्ष्णिग्रहाः पृष्ठभागग्राहिणोऽपि गजेंद्रं तारयितुं तीरं गमयितुं नाशकन् शक्ता न बभूवुः । अत एव दीनधियो दैन्योपेतबुद्धयः संतो विचुक्रुशुश्चार्तध्वनिं चक्रुरपि । आतुरश्चकितो भ्रांत इत्युत्पलमाला ॥ २८ ॥ हे महीपते । मिथः परस्परमंतः सरसोंऽतः सरोवराद्बहिश्च विकर्षतो कर्षणं कुर्वतो सप्राणयोः शरीरबलवतोरिभेंद्रनक्रयोः । गजेंद्रन्यगळ इति प्रसिद्धजलचरयोरेवमुक्तप्रकारेण नियुध्यतोर्द्वंद्वयोधिनोः सतोः । सहस्रसंख्याकाः समाः संवत्सरा व्यगमन् गतवंतः । अमराश्चित्रमाश्चर्यकरमिदं युद्धममंसत ज्ञातवंतः । इभस्तंबे रमः पद्मीकुंजर इत्यमरः । ग्राहो वराहो नक्र इति च । संवत्सरोवत्सरोऽब्दोहायनो स्त्री शरत्समा इति चामरः ॥२९॥ ततः सहस्रवर्षानंतरं जले ग्राहेण विकृष्यमाणस्यात एवावसीदतः क्लिश्यतो गजेंद्रस्य मनोबलोजसां अंतःकरणशरीरशक्तिविपन्निरोधशक्तीनां महान्व्ययो ह्रासो दीर्घेण कालेनाभूत् । जलमुदकमोकमाश्रयो यस्य ग्रहस्य तस्य यत्सकलं समस्तं मन आदि तस्य मनोबलोजसां विपर्ययो वैपरीत्यमभिवृद्धिरभूत् ॥ ३० ॥ देही स्थूलशरीरो यदृच्छाया विवशः परवशो गजेंद्रो प्राणस्य संकटमित्थमाप । आत्मविमोक्षणे स्वस्य ग्रहान्मोक्षणविषयेऽपारयन् अंतगमनासमर्थश्चाभूत् । तदा स गजेंद्रश्चिरं दध्यावालोचनं कृतवान् । अथालोचनानंतरमिमां वक्ष्यमाणप्रकारं बुद्धिमभ्यपद्यत प्राप्तवान् । स यदेत्यत्र तदुशब्दस्या एतत्तदो सुलोपोकारनञ्समासे हली सुलोपः ॥ ३१ ॥ मे मम ज्ञातय एककुलोत्पन्ना गजाः करिण्यश्च ग्रहगृहीतमत एवातुरं मां ग्रहान्मोचितुं कुतः प्रभवंति समर्था न भवंति । अहं तु यस्य विधातुः सर्वकर्तुर्हरेर्ग्राहेण ग्राहरूपेण पाशेनावृतः । तं परायणं मुक्तानामप्याश्रयं परं सर्वोत्तमं शरणं यामि । मुक्तानां परमा गतिरिति वचनं । सगोत्रबांधवज्ञातीत्यमरः ॥ ३२ ॥ कश्चनालौकिको यो हरिः । बलिनोऽति बलात् । अभ्याभिमुखेन प्रचंडवेगादतितीक्ष्णजवाद्भृशं धावत आश्वागच्छतोंऽतकोरगान्मृत्युलक्षणसर्पाद्भीतं स्वं प्रपन्नं शरणं गतं परिपाति । यस्य हरेर्भयान्मृत्युः प्रधावति हरिशरणागतं त्यक्त्वा गच्छति । प्रागपि हरिभयादेव यमदुर्गादिरूपो मृत्युर्हर्येनुग्रहरहितं प्राति प्रधावति । भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचम इति श्रुतेः । न चैवमेव हरिमपि गृहीतुं प्रवर्तते । यतः स हरिः स्वस्येशः स्वामी । अघटितघटनासामर्थ्यवांश्च । वयं तं हरिमरणं शरणमीमहे यामः ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥ ८—२ ॥

॥ हरिः ॐ ॥ अत्रापि गजेंद्रस्तोत्रादिना प्रसन्नाद्धरेः । यथा गजेंद्रस्य ग्राहान्मोक्षोऽभूत्तथा । संसाराख्यग्रहग्रस्तस्यापि भगवत्स्तोत्रादिना तत्प्रसादात्तस्मादपि मुक्तिर्भविष्यतीति ज्ञापनाय गजेंद्रकृत्यमाह ॥ एवमित्यादिना । स गजेंद्र एवमुक्तप्रकारेण बुद्ध्या व्यवसितो निश्चयवान्सन् । हृद्ग्यनादवस्थिते हृच्छब्दवाच्ये हरौ मनोऽतःकरणं समाधाय संस्थाप्य यत्स्वगुर्वादिभिः प्राग्जन्मानि पूर्वजन्मन्यनुशिक्षितमुपदिष्टं परममुत्तमं जाप्यं मंत्रावृत्त्या तोषणीयं तं नारायणाख्यं परं ब्रह्म जजाप तन्मंत्रावृत्त्या सिषेवे ॥ १ ॥ तं प्रकारमेव दर्शयति ॥ ॐ नमो भगवत इत्यादिना । ॐ देशकालगुणैः पूर्णाय । तस्मै भगवते वासुदेवाय नमोऽस्तु । वयमादिबीजाय मूलकारणाय परेशाय ब्रह्माद्युत्तमस्वामिने पुरुषाय पूर्णषड्गुणाय नारायणाय । तत्प्रीतय इति यावत् । अभिधीमहि स्तुमः । आदिबीजत्वादि गुणविशिष्टं पुरुषं नारायणमिति विभक्तिविपरिणामेन धीमहि ध्यायेमेति च । तं भगवंतं स्तौति । यतो वासुदेवादेतत्प्रमाणप्रमितं चिदात्मकं चेतनसमुदायो मोक्षसुखसर्वपुरुषार्थान् लभत इति । मुक्तिप्रदो वासुदेवोऽखिलस्येत्यादेः । अत्रोन्नमो भगवत इत्यनेन वासुदेवद्वादशाक्षरजपः सूचितः । धीमहीत्यनेन तत्सवितुरित्यादि गायत्री-जपः ॥ २ ॥ अभिधीमहीत्युक्तं स्तोत्रं व्यनक्ति ॥ यस्मिन्निति । यस्मिन्नारायणे इदं चेतनरूपं जगत्प्रलये आसीत् । इदं यतश्च यस्मादेव नारायणाज्जातं । येनैवेदं जीवति चेतनजातमचेतनं चावतिष्ठते । यो नारायणः स्वयमेवं जगतः सृष्ट्यादि कर्तृतयो-पजीव्यत्वेनास्मिन् जगति व्याप्ततया च पुरुष एवेदं तद्विश्वमुपजीवति । सर्वं समाप्नोषि ततोऽसि सर्व इति । प्रत्यक्षैतरेयभग-वद्गीतोक्तप्रकारेण ब्रह्मैवेदं सर्वमित्यादावुच्यते । नारायणाभिदं ब्रह्मणो जगदैक्यं किं न स्यादित्याशंक्य परिहरति । यो नारायणोऽ-स्मात्प्रत्यक्षप्रमिताज्जगतः परस्माच्चैतद्भिन्नादनपरोक्षादपि परोऽन्य इति । तं । नारायणस्याप्यन्याधीनस्थित्यादिमत्त्वे तत्स्तुत्या-विद्येव किं न क्रियत इत्यतः स नास्तीति दर्शयति । स्वयमेव भवत्यवतिष्ठत इति स्वयंभूस्तमहं प्रपद्य इति परेऽव्यये सर्वे एकी भवंति । यतो वा इमानि भूतानि जायंत इत्यादि प्रमाणं यस्मिन्नित्यादिना सूचितमिति ज्ञातव्यं ॥ ३ ॥ उक्तं चैवं प्रमाणेनानंदतीर्थभगवत्पादैः'। उत्पन्नास्यापि यत्सत्ता हरेस्तत्स ईर्यते । हरेर्विश्वं भिन्नमपि परमोऽसौ यतो विभुरिति च । उक्तमेव भगवतो जगदाश्रयत्वादि विवृणोति ॥ यः स्वात्मनीत्यादिना । यो हरिः स्वात्मनि स्वस्मिन्निजमायया स्वकीयेच्छयाऽर्पितं समर्पितं ।

क्वचिदालोचनदशायां ब्रह्मादीनां विभातं ज्ञातं क्वचिदनालोचनदशायां तिरोहितमज्ञातं क्वचिज्जागरावस्थायां विभातं । स्वस्वयोग्य-ज्ञानवत् क्वच सुप्त्याद्यवस्थायां तिरोहितं जागरवत्स्पष्टज्ञानशून्यं । इदमुक्तं चेतनजातं । स्वयमविद्धाप्रतिहतदृग्दृष्टिः सन् तदुभय-मुभयविधं जीवजातसाक्षी सन्नीक्षते साक्षादीक्षते । आत्मनां ब्रह्मादिजीवानां मूल उत्पत्त्यादिकारणः । परब्रह्मादेरपि पर उत्तमः स नारायणो मामवतु रक्षतु । आत्ममूलः स्वाश्रयो मामवत्विति । तुरीयं तत्सर्वदृक् सदा । पतिं विश्वस्यात्मेश्वरं स्वेमहीन्नीत्यादि श्रुतेः । आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषण इत्यादि स्मृतेः । यः स्वात्मनीत्यादिना ईक्षत ईत्यंतेन यस्मिन्निदमिति भागो विवृतः । आत्ममूलः परात्पर इत्यनेन स्वयंभुवमिति भागः ॥ ४ ॥ परात्परात्वं प्रकृतिशक्त्यविषयत्वप्रतिपादनेनाविष्करोति ॥ कालेनेत्यादि पद्यद्वयेन । कालेन कालनियामकत्वादि निमित्तेन कालशब्द वाच्येन कालरूपेण च हरिणा प्रेरितेन प्रसिद्धेन कालेन प्रलयेन कृत्स्नशः समस्तेषु लोकेषु भूरादिषु पंचमहाभूतेषु । पंचत्वं स्वोपादानभूतपृथिव्यादिसूक्ष्मपंचात्मतां मितेषु प्राप्तेषु सर्वहेतुषु-च पृथिव्यादि सर्वकारणेषु गंधादि तन्मात्रामहदादिषु च। लीनेषु स्वोपादाने स्वाच्छादितेषु यत्तद्गहनमज्ञेयं गभीरमगाधं तम आसी-दंधकारापरपर्यायजडप्रकृतिस्तन्नियामिका चित्प्रकृतिश्चासीत् । यो विभुरघटितघटनासामर्थ्यवान्हारिस्तस्य तमसः पारे परागदेशे तत्स्थितोऽपि तदशक्तिविषयतया तत्कृतविकारशून्यतया अभिविराजते सुखेन सम्यक् सर्वतः प्रकाशमानो वर्तते । कालाख्य-रूपिणस्तव । नासदासीन्नोसदासीत्तदानीं तमसा गूळ्हं । आनीदवातं स्वधयेत्यादि प्रत्यक्षदशमस्कंधऋगादिप्रमाणैरस्मदुक्तार्थ-प्रमापनान्नात्र कस्यचित्क्षुद्रचोद्यानवकाशः ॥ ५ ॥ ऋषयस्त्रिकालज्ञानिनो ब्रह्मादय आकृतिभिर्ब्राह्मणाद्याकारैर्विचेष्टितः क्रीडां कुर्वतो नटस्य नर्तस्य जातिकारस्य पदं स्वरूपं यथा जना न जानंति । तथा हरेरपि । पद्यते गम्यत इति पदं स्वरूपं साकल्येन न विदुर्न ज्ञातवंतो नोक्तवंतश्च । पुनस्तदवतारः को वा जातु कः प्रणीतस्य हरेः पदं गंतुं ज्ञातुमीरितुं वक्तुं चार्हति योग्यो भवति । न कोऽपि । एवं ब्रह्मादिभिरपि दुरन्वयो ज्ञातुमशक्योऽनुक्रमणः पराक्रमो यस्य स विष्णुर्मामवतु रक्षतु । इत्येवं गजेंद्रो ब्रह्माद्यज्ञे-यत्वं वक्तुमशक्यगुणोत्कर्षस्य हरेस्तद्गुणोत्कर्षख्यापनरूपस्तुतौ नाहं शक्तस्तथाऽपि भक्तवत्सलतया स हरिर्मां प्रकृतापदो रक्षतु । रक्ष-त्विति स्वाभिप्रायं व्यनक्ति । व्यक्तं चैतत् । द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मीत्यादेः ॥६॥ नन्वेवं हरेरज्ञेयत्वे

तत्प्रसादेन मोक्षादि पुरुषार्थापेक्षा तत्साधन तत्साक्षात्काराशा चानुचितेत्याशंक्य हरेः स्वानुग्रहमंतरेणाज्ञेयत्वादिमत्वेऽपि स्वानुग्रहे ज्ञेयत्वादेरपि सत्वादेव तत्साधनवैराग्यादौ ऋषयः प्रवर्तंत इति मोक्षाद्याकांक्षाऽप्युचितैवेति परिहराति ॥ दिदृक्षव इति । मुनयो ऋषयः सुमंगलमतिमंगलं यस्य हरेः पदं दिदृक्षवो द्रष्टुमिच्छवः संतस्तदर्थं विमुक्तसंगास्त्यक्ताविपयस्नेहा मुनयो मननशीलाः सुसाधवो भक्त्याद्यतिसाधुभावोपेता वने एकांतेऽव्रणं विच्छेदादि दोषराहितमलोकव्रतमसंप्रज्ञातसमाधिलक्षणं ध्यानमाचरंति । अलोकव्रतं स्वेतरब्रह्मादिजनाशक्यजगत्सर्जनादिलक्षणं व्रतं व्यापारो यस्य तदव्रणमदोषं यस्य पदमिति वाऽन्वयः । सर्वात्मभूतः सर्वचेतनस्थः स हरिः सुहृदसमीचीनांतःकरणस्य मे गतिरस्तु । सर्वात्मभूत इत्यनेन नक्रस्याप्येवं विधशक्तिप्रदो भगवानेवेति स्वज्ञानं प्रकटितं । जगद्व्यापारवर्जमित्यादिनाऽन्येषां स्रष्टृत्वाद्यभावः स्पष्टः ॥ ७ ॥ ननु नारायणस्य सृष्ट्यादिना साध्यप्रयोजनसत्वे सृष्टेः पूर्वं तदभावादपूर्णता । तस्याभावेऽपि तत्र प्रवृत्तौ प्रयोजनमनुद्दिश्य न मंदोऽपि प्रवर्तत इति न्यायादतिमंदता स्यात् । किंच जन्मकर्मादिमत्त्वे देवदत्तादिवज्जगत्स्रष्टृत्वाद्यनुपपत्तिः । अपि चास्यान्यप्रेर्यतया जन्मादिमत्त्वे तस्यैवोत्तमत्वात्तत्प्रार्थनैवोचिता । नास्येतीमां शंकां भगवतो नारायणस्यावाप्तसर्वाभिष्टतया जगत्सृष्ट्यादि साध्यप्रयोजनाभावेऽपि त्रैलोक्यस्थस्वभक्तानां मोक्षादि शुभफलप्राप्त्यै अन्याप्रेरितदुष्कर्माद्यप्राप्तप्रादुर्भावलक्षणजन्मादिमत्त्वेन न काऽप्यनुपपत्तिरिति परिहराति ॥ न विद्यते यस्येति । यस्य हरेः । यद्यपि जन्मादिदुष्कर्मान्यप्रेरणाप्राप्तं न विद्यते । कर्म च स्वापेक्षितफलाय कर्तव्यं । नामरूपे निरर्थकसांकेतिकप्राकृतादि लक्षणे न विद्येते । गुणः सत्त्वादिः सादिविनाशित्वादिदुष्ट आनंदादिरपि न विद्यते । तथाऽपि अनुकालं तत्तत्काले लोकत्रयसंभवाय त्रैलोक्यजनशुभप्राप्त्यै स्वमायया स्वेच्छयैव तानि जन्मादीनि ऋच्छति प्राप्नोति । देवस्येपः स्वभावोऽयमाप्तकामस्य का स्पृहा । ज्ञानिनां मोक्षदश्च । अनन्यचोदितं निष्कलंकः शुद्धो देवो । एको नारायणः । न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि । न मां कर्माणि लिंपंतीत्यादि प्रमाणप्रसिद्धिर्वा शब्दसूचिता । नन्वेवमप्युत्पत्त्यादि दोषराहित्यं कुतः । यत्र गुणास्तत्र दोषा इति दोपस्यापि संभवादित्यतो दोष एव दोपत्वावच्छिन्नसर्वोऽपि नास्तीत्याह ॥ दोष एव न विद्यत इति । वा शब्देन जन्म असतः सत्तासंबंधलक्षणं न विद्यते प्रादुर्भावरूपं विद्यते । कर्म च

स्वप्रयोजनाय कर्तव्यं न विद्यते भक्तानुग्रहाय कार्यं विद्यते । नाम च निरर्थकं सांकेतिकं न विद्यते सार्थकं विद्यते । रूपं च भौतिकं प्राकृतं न विद्यतेऽप्राकृतं विद्यते । गुणः सत्त्वादिर्न विद्यते आनंदादिर्विद्यते इति व्यवस्था चोच्यते । अजोऽपि सन्नव्ययात्मा । संभवाम्यात्ममायया । अरूपो भूतवर्जनात् । त्रिगुणवर्जितमित्याद्युक्तवक्ष्यमाणप्रमाणात् । तस्मै ब्रह्मणे नम इत्युत्तरेणान्वयः । न च मंतव्यं हरेः स्वरूपतो जन्माद्यभाव एव किं न स्यात्कुत इयं व्यवस्थेति । जन्मादिसद्भावज्ञापकोक्तप्रमाणविरोधात् । उरुरूपाश्चर्यकर्मण इत्याद्युत्तरग्रंथविरोधाच्च ॥ ८ ॥ हरेः स्तुतावशक्तानां भूयिष्ठांते नम उक्तिं विधेमेत्युक्तनातिरेव गतिरिति भावेनादराद्भूयो नमति ॥ तस्मै नम इत्यादिना । परेशाय ब्रह्मादिमुक्तस्वामिने । अनंतशक्तये देशकालापरिच्छिन्नसामर्थ्यवते । तस्मै ब्रह्मणे नारायणाख्यपरब्रह्मणे । नमोऽस्तु । प्राकृतभौतिकरूपरहितायारूपाय । रुग्मवर्णं सुवर्णं ज्योतिः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गत इत्यादि श्रुतिस्मृतिप्रमिताप्राकृतभौतिकानश्वरोत्कृष्टरूपवते । अत एवाश्चर्यकर्मणे । तस्मै नारायणाय नमः ॥ ९ ॥ आत्मप्रदीपाय स्वप्रकाशाय । आत्मनां मोक्षयोग्यचेतनानामेव स्वाराधनेन प्रकाशमानाय । प्रकाशश्च कर्मण्यभ्यासादिति सूत्रात् । साक्षिणे साक्षात्सर्वजगद्द्रष्ट्रे । परमात्मने चेतनोत्तमाय । आत्मेश्वरमिति श्रुतेः । तस्मै नमः । गिरां वेदवचसां मनसोंऽतःकरणस्य चेतसां तद्वृत्तिज्ञानानामपि विदूराय । साकल्येनागोचराय । तस्मै नमः । यतो वाचो निवर्तंतेऽप्राप्य मनसा सहेत्यादेः ॥ १० ॥ वेदाद्यगोचरत्वेऽस्य आत्मा वा अरे द्रष्टव्य इत्यादि श्रवणविध्यादिवैयर्थ्यमित्याशंक्य मोक्षयोग्यानां ज्ञानभक्त्यादिना तस्य प्राप्यत्वान्न वैयर्थ्यमित्यभिप्रायेणाप्युक्तमात्मप्रकाशायेत्येतत्स्पष्टयति । विपश्चितां सम्यग्ज्ञानयोग्यानां तद्वतांश्च नैष्कर्म्येण निवृत्तिमार्गेण प्राप्तेन सत्त्वेन वैराग्यभक्त्यादिना शुद्धेनांतःकरणेन तज्जन्यसम्यग्ज्ञानेन च प्रतिलभ्याय प्राप्याय । निर्वाणसुखसंविदे प्राकृतशरीरशून्याय सुखज्ञानरूपिणे । कैवल्यनाथाय मोक्षस्वामिने । तस्मै नम इति । भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परं तप । ज्ञानवान्मां प्रपद्यंत इत्यादेः ॥ ११ ॥ शांताय वासुदेवादिरूपाय । घोराय संकर्षणजामदग्न्यादिरूपाय । गूढाय वराहमत्स्यादिरूपाय । गुणकर्मिणे ज्ञानानंदादिगुणवते सृष्ट्यादि प्रशस्तकर्मवते । तस्मै नमः । निर्विशेषाय स्वोत्तमरहिताय । स्वमूलरूपावताररूपेषु गुणकर्मादिभिर्विशेषशून्याय । स्वानियम्यनीचो-

च्चतया प्राप्तविशेपशून्याय । तत्तद्योग्यतातिरेकेणशत्रुमित्ररहिताय ज्ञानघनाय च पूर्णज्ञानाय । तस्मै नमः । मत्तः परतरं नान्यत् । न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हीत्यादेः ॥१२॥ क्षेत्रज्ञाय सर्व प्राणिशरीरांतर्नियामकतयांऽतःस्थितसर्वव्यापाराद्यभिज्ञाय । सर्वाध्यक्षाय सर्वजगत्स्वामिने साक्षिणे तुभ्यं नमः । आत्ममूलाय ब्रह्मादिचेतनसृष्ट्यादिकर्तृमूलप्रकृतये । चिज्जडप्रकृत्योरप्याश्रयत्वादिना मूलप्रकृतिनाम्ने । पुरुषाय तुभ्यं नमः । क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारतेत्यादेः । क्षेत्रज्ञायेत्यनेन हरेर्जीवाभेद उच्यत इति प्रतीतिस्तत्त्ववादिकंठाभरणेऽस्मत्कृते परिहृता द्रष्टव्या ॥ १३ ॥ क्षेत्रज्ञायेत्याद्युक्तं विवृणोति ॥ सर्वेति । सर्वेंद्रियगुणद्रष्ट्रे श्रोत्राद्यंतःकरणांतैकादशेंद्रियाणां गुणानां शब्दादि तद्विषयाणां साक्षात्कारवते । सर्वेषां जीवानां प्रत्ययानां ज्ञानानां हेतवे कारणाय । असत्यादयथार्थवचनात् विमुक्ताय । अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमित्यादि सत्यप्रतिज्ञाय च । सदा सर्वविषयकाप्रतिहतज्ञानतया सदाभासाय । तुभ्यं नम इत्यनेन गजेंद्रेण स्वस्यापि तद्भक्ततया स्वानुद्धरणमनुचितं हरेरिति ज्ञाप्यते । सन्निर्दुष्ट आभासो देहो यस्य स तथा तस्मै । नम इत्यनेन स्वकृतस्तोत्राश्रोतृत्वादिकं तस्य निवारयति तस्य देहस्य मायाकल्पितत्वं परिहरति ॥ असत्याद्विमुक्तायेति । सदेहःसुखगंधश्च ज्ञानभाःसत्पपराक्रमः । ज्ञानज्ञानः सुख सुखः स विष्णुः परमोऽक्षरः । उपलब्धिमात्रधाम्ने ज्ञानविज्ञानमूर्तय इत्यादेः ॥ १४ ॥ इदानीं गजेंद्रः स्वस्तुत्यं प्रसिद्धतन्नाम्ना नारायणेत्यनेन ख्यापयन्स्वोक्तवक्ष्यमाणगुणैस्तस्य विशिष्टत्वे वेदशास्त्रमेव प्रमाणमिति सूचयन्सर्वापत्परिहारकतया तं स्तुवन् भूयो भूयो नमति भक्त्युद्रेकेण ॥ नमो नमस्त इति । अखिलकारणाय निःशेपचिदचिज्जगत्कर्त्रे स्वशरणागतार्तेः विपदो विनाशाय निःशेषपरिहारकाय । स्वोक्तवक्ष्यमाणगुणाविशिष्टत्वे प्रमाणतया पंचरात्रभारताद्यागमऋगादि वेदलक्षणसमुद्रवते । परायणाय मुक्ताश्रयाय । अपवर्गाय नित्यमुक्ताय । नारायणाय ते नम इति । स इदं सर्वमसृजत । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । नारायणपरा वेदाः । वेदैश्च सर्वैरहमेव वेद्यः । वेदे रामायणे चैव पुराणे भारते तथा । आदावंते च मध्ये च विष्णुः सर्वत्र गीयते । मुक्तोपसृप्य व्यपदेशात् । मुक्तानां परमागतिः । द्वावेतौ नित्यमुक्तौ प्रकृतिश्च परमश्चेत्यादेः ॥ १५ ॥ सर्वप्रत्ययहेतव इत्युक्तं स्पष्टयति ॥ गुणेति । गुणारणिच्छन्नं सत्त्वादिगुणरूपाग्निमथनकाष्ठ आच्छादितं ।

यच्चिदूष्म ज्ञानाख्यं तेजस्तत्पातीति गुणारणिच्छन्नचिदूष्मपस्तस्मै । बलमानंद ओजश्चेत्यादेः । शब्दादि गुणारणिच्छन्नज्ञानदानादिना तद्रक्षकाय तेषां सत्त्वादिगुणानां क्षोभे उद्रेकावस्थायामपि विस्फूर्जितं निर्विकारतयाऽतिप्रकाशमानं मानसं मनो यस्य तस्मै । युक्तात्मभिर्वैराग्यभक्त्याद्युपेतांतःकरणैरधिकारिभिः स्वहृदये परिभाविताय ध्याताय । ज्ञानात्मने केवलज्ञानात्मकशरीरवते । ईश्वराय सर्वस्वामिने भगवते नारायणाय नमः । ज्ञानात्मन इत्यस्य ज्ञानस्वरूपायेत्यर्थो जीवसाधारण्येन परमात्मस्तुतावनुचितः ॥ १६ ॥ धर्मकामार्थविमुक्तिकामा धर्मार्थकामविमोक्षाख्यप्रधानचतुर्विधपुरुषार्थाकांक्षिणोऽप्याधिकारिणो यं नारायणं भजंते । तेन नारायणेन स्वेष्टां स्वापेक्षितां गतिमाप्नुवंति । यच्च स्वभक्ताभिलषितं पुत्रैश्वर्याद्याशिषांऽपि राति ददाति । अव्ययं ध्वंसाप्रतियोगिनं ह्रासादि दोषवर्जितं च । देहं ज्ञानानंदात्मकं तदावरणनिवर्तनादिना राति ददाति । स उक्तगुणविशिष्टो भगवान्नारायणो मे हृदयग्रंथेर्लिंगशरीरादिरूपान्मोक्षणं करोतु । अनेन मम स्तुतिना ग्राहान्मोक्षमात्रेच्छा न किंतु परममोक्षेच्छाऽपीति सूचितं ॥१७॥ ये एकांतिनो भगवत्प्रपन्ना नारायणशरणागतास्ते यस्य भगवतो नारायणात् कंचन कमप्यर्थं न वांछंति । एकांतिनां न कस्यचिदर्थे नारायणो देव इत्यादेः । तदाकांक्षाभावे निमित्तमाह । अत्यद्भुतं सुमंगलं यच्चरितं गायंतः संत आनंदमग्ना यत इति । नाहं तथैकांतिकेष्वेको येन कस्यापि पुरुषार्थस्यानाकांक्षी स्यां । किं चैवमापद्गतोऽप्यहं हृदयग्रंथिमोक्षणमेवाशासे नास्य विपदो मोक्षणं प्राधान्यादिति स्वस्य मध्यमभक्तत्वं प्रकटितमित्यवगंतव्यं । एवं विधोऽहं तमनंतमीड इत्युत्तरेणान्वयः ॥ १८ ॥ अहं तं पूर्वोक्तगुणविशिष्टमक्षरं चतुर्विधनाशशून्यं । परेशं चतुर्मुखादि मुक्तस्वामिनं । अव्यक्तं पुरुषप्रयत्नेन स्वप्रसादमंतरेण व्यक्तीकर्तुमशक्यं । आध्यात्मिकयोगगम्यं मनःप्रणिधानभक्त्याद्युपायप्राप्यं । चक्षुरादींद्रियाविषयं सूक्ष्ममिव स्थितं । स्थूलत्वात् । अनियतपरिमाणं दूरमिवांतिकेऽपि सत्वात् । व्याप्तत्वात् । आद्यं आदिकाले स्थितं । परिपूर्णं देशकालगुणैः । पूर्णमनंतं नारायणाख्यं परं ब्रह्म ईडे स्तौमि । अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा । तदव्यक्तमाह हि । न चक्षुषा पश्यति कश्चनैनं । विमे कर्णा पतयतः । अणोरणीयान्महतो महीयान् । तद्दूरे तद्वंतिके । यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । नारायण एवेदमग्र आसीत् । मय्यनंतगुणे । अनंत इत्यहं पार्थ । सत्यं ज्ञानमनंतं ब्रह्मेत्यादेः । अत्र स्तोत्रेऽ-

धिकगुणविधानायोक्तगुणस्यापि पुनरुक्तौ न वैय्यर्थ्यं । अक्षरात्संभवतीह विश्वं । ब्रह्मविदाप्नोति· परं । परात्परं पुरिशयं । अव्यक्तमचलं शांतं । अध्यात्मयोगाधिगमेन धीरः । मत्वा देवं हर्षशोकं जहाति । सूक्ष्मात्सूक्ष्मतरं । इत्याद्युपनिषत्प्रतिपाद्यत्वं विष्णोरेवेति प्रकटितं ॥ १९ ॥ यस्य नारायणस्य ब्रह्मादयो देवाश्चराचराः स्थावरजंगमरूपा लोकाश्च तथा वेदा अपि कलयांऽशेन जल्प्या वाचा च नामरूपविभेदेन शब्दा अर्था इत्येवं भेदेन कृतास्तमीड इति पूर्वेणान्वयः ॥ अत्रायं विवेकः ॥ भगवदवतारपुरुषादिरूपैः । ब्रह्मादय उत्पादिता वेदास्तु नारायणस्य वचनरूपा इति । यस्य वाक्तंतिः । नारायणाद्ब्रह्मा जायत इत्यादेः ॥२०॥ यथाऽग्नेः सकाशादर्चिषो ज्वालादि रूपसूक्ष्मभागाः । सवितुः सूर्याद्गभस्तयः किरणा निर्याति निर्गच्छंति संयांत्यागच्छंति । तथा स्वस्माद्रोचिषः स्वप्रकाशाद्धरेर्बुद्धिर्मनः खानींद्रियाणि शरीरसर्गः शरीरोत्पादनं इत्येवं रूपोऽयं गुणसंप्रवाहः सत्त्वादिगुणजसृष्ट्यादिप्रवाहोऽसकृन्मुहुर्मुहुर्निर्याति संयाति । स देवादिषु नियमेनैको भवतीत्युत्तरेण तमीड इति पूर्वेण वाऽन्वयः ॥ २१ ॥ यस्मान्नारायणाद्गुणसंप्रवाहः । स देवासुरमर्त्यतिर्यग्जातिर्न । स्त्रीपुरुषषंढजातिर्न । जंतुकृमिविशेषजातिर्न । गुणः सत्त्वादिगुणलक्षणो न । कर्म च पुण्यपापादिलक्षणं न । सत् यदन्यद्वायोश्चांतरिक्षाच्चैतत्सदिति माध्यंदिनश्रुत्युक्तवाय्वाकाशातिरिक्तपृथिव्यप्तेजोरूपं च न । असद्वाय्वंतरिक्षरूपं च न । च शब्दादत्रानुक्तवस्त्वंतररूपं च नेत्यर्थः । एवं निषेधे सति शेषे । अविशिष्टो यः पूर्वोक्तदेवादिविलक्षणः स जयतात् । ममानिष्टं परिहृत्योत्कृष्टो वर्ततां । वा इत्यनेन स एष आत्मा नेति नेतीत्यादि श्रुतिं सूचयति । अत्रायं विवेकः । असुरमर्त्यषंढजं तु गुणकर्मसदसदात्मता सर्वथा नैव । नियतस्त्रीत्वं तीर्यक्त्वं च नास्ति । नारायणीमत्स्यरूपादेः कादाचित्कत्वात् । देवतात्वं नास्तीत्येतन्मनुष्याणामेव सतां कर्मादिना प्राप्यदेवत्ववत् । असुरजातेरेव राहोः शिरसोऽमृतसंबंधेन नवग्रहेषु देवत्ववच्च नास्तीत्याभिप्रायेण । न तु सर्वथा स्वरूपेण देवत्वं नास्तीति । विष्णुमुखा वै देवाः । सुरऋषभायेत्यादि श्रुतिस्मृतिविरोधात् । नैवं हरेरसुरत्वादिकं क्वचिच्छ्रुत्यादावावेद्यते । पुंस्त्वं नेत्येतदपि स्वरूपेण पुरुषस्यैव स्वदुष्कर्मणा प्राप्यस्त्रीत्वं षंढत्वं समानाधिकरणपुंस्त्वं नेतीति । अन्यथा सहस्रशीर्षः पुरुषः । उत्तमः पुरुषस्त्वन्य इत्यादि श्रुतिस्मृतिविरोधात् ॥ २२ ॥ अहं त्वां स्तोत्रेणैतद्ग्रहाद्विमोक्षणेन नैतन्मम शरीररक्षणं नाशासे । किंतु मोक्षमिति गजेंद्रः स्वाभिप्रायं प्रकटयति । अहं न जिजी-

विषे जीवितुमिच्छामि । इहास्मिन्देशे काले संसारेऽन्तर्बहिश्चावृतयाऽमुया तयैभयोन्या गजशरीरेण किं प्रयोजनं साध्यमस्ति । किंतु कालेन कालवेगेन यस्य लोकावरणस्य मत्स्वरूपप्रकाशावरकस्य लिंगशरीरस्य विप्लवो मत्परित्यागेनान्यत्र गमनं नास्ति । तस्य तस्मान्मोक्षणमिच्छामि। अनेन करोतु मे हृदयग्रंथिमोक्षणमिति प्रार्थनमनुचितं। हृदयग्रंथेः कालांतरेण स्वत एव नाशे परित्यागे वा तन्मोक्षसिद्धेरिति कुचोद्यं निराकृतं ॥ २३ ॥ सोऽहमुक्ताभिप्रायवानहं विश्वसृजं समस्तजगदुत्पादकं । अविश्वं जगद्भिन्नं । विश्ववेदसं सर्वजगज्ज्ञानिनं । विश्वात्मानं सर्वजगत्स्वामिनं । अजमुत्पत्तिरहितं । विश्वस्रष्टृत्वादिना विश्वमेवेदं पुरुष इत्युच्यमानं । विश्वं पूर्णं च । परं पदं मुख्यप्राप्यं । ब्रह्म नारायणं प्रणतोऽस्मि ॥ २४ ॥ योगिनो हरौ मनःस्थापनाद्युपायवंतो योगेन हरिध्यानादिरूपेण रंधितानि दग्धानि कर्माणि संचितरूपाणि येषां ते तथा संतो योगविभाविते ध्यानादिना प्रकाशिते हृदि स्वहृदये यं नारायणं प्रपश्यंति साक्षात्कुर्वंति । मनसेति शेषः । अहं योगिनामीशं स्वामिनं तं नतोऽस्मि । हृदा मनीषा मनसाभिक्लृप्तो य एवं विदुरमृतास्ते भवंतीत्यादि श्रुतेः ॥२५॥ असह्या वेगा यासां ताः शक्तयः शक्तिविषयत्वाच्छक्तिशब्दवाच्याः सत्त्वादयस्तासां त्रितयवते उत्पत्त्यादि तृतीयशक्तिमते । उत्साहमंत्रप्रभुशक्तित्रयवतेऽखिलगुणाय सर्वविषयकज्ञानलक्षणगुणवते । दुरंतशक्तयेऽपारिच्छिन्नशक्तिमते । सर्वेंद्रियाणां सर्वजीवचक्षुराद्येकादशेंद्रियाणामनवाप्यवर्त्मनेऽप्राप्यस्वविषयकज्ञानमार्गाय नारायणाय तुभ्यं नमो नमः॥२६॥अयं जीवो यच्छक्त्या यस्य हरेर्मोहकशक्त्याऽहं धियाऽहमेव स्वतंत्र ईश्वर इत्यादि बुद्ध्या हतस्तिरस्कृतज्ञानः सन् स्वस्वरूपमात्मानं परमात्मानं च तत्त्वतो न वेद । एवं स्वस्वरूपविधिकत्वादिना दुरत्ययमनतिलंघ्यमाहात्म्यं यस्य तं भगवंतं नारायणमहं नतोऽस्मि ॥ २७ ॥ एवं गजेंद्रेण स्तुतौ समापितायां देवेषु को देवस्तदा तद्विमोचनाय प्रवृत्तः । हरिश्चेत्प्रवृत्त इत्युच्यते तर्हि तन्नोपपद्यते । गजेंद्रकृतस्तुतेर्ब्रह्मादिसाधारण्यादिति परीक्षिच्छंकां शुकः परिहरतीत्याह ॥ सूतः शुक इत्यादिना। एवमुक्तरीत्योपवर्णितानिर्विशेषं स्वज्ञातगुणेषु कमपि गूढमविहाय स्तुवंतं गजेंद्रं ब्रह्मादयो ब्रह्मरुद्रप्रभृतयो देवा विविधैः । आदिबीजत्व, परेशत्व, चिदचित्सर्वजगत्स्रष्टृत्व, पालकत्व, संहर्तृत्व, स्वतंत्रत्व, अतिलुप्तसार्वकालिकद्रष्टृत्व, सर्वसाक्षित्व, सर्वचेतनपतित्व, महाप्रलयावस्थितत्व, तमःशब्दितप्रकृतिशक्त्यविषयत्व, ब्रह्मादिदेवागम्यत्व, दुष्कर्मादिप्राप्तजन्मादिशून्यत्व, समस्तदोषविधुरत्व, आश्चर्यकरकर्मित्व, स्वप्रकाशत्व,

साकल्येन श्रुत्याद्यगोचरत्व, ज्ञानिप्राप्यत्व, मोक्षस्वामित्व, अप्राकृतज्ञानानंदाद्यात्मकदेहवत्व, स्वोत्तमरहितत्व, नारायणानंतादि वाच्यत्वादि रूपैर्लिंगैरप्रकटितस्तुत्यवस्तुज्ञापकैर्न वयं गजेंद्रस्तुत्यं वस्त्विति भिदाभिमाना भेदप्रमावंतः संतो नैवोपससृपुः समीपं नैवं प्राप्नुवंतो यदा तदा हरिर्नाम्ना हरिरित्यभिहितो नारायणः। निखिलात्मकत्वाद्गजेंद्रस्तुत आदिबीजत्वादि निःशेषगुणात्मकत्वात्तत्र गजेंद्रसमीपे आविरासीदाविष्कर्तुं मनश्चक्रे। एको नारायण आसीन्न ब्रह्मा न च शंकरः। तत एते व्यजायंत। तमहमजमनंतमात्मतंत्रं जगदुदयस्थितिसंयमात्मशक्तिं। द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इत्यादि प्रसिद्धप्रत्यक्षश्रुतिस्मृतिभिर्गजेंद्रप्रकटितस्तुत्यलिंगानां विष्ण्वैकनिष्ठत्वावगमात्। उक्तगुणो विष्णुरेवेत्यत्र न कश्चित्संदेहः। विष्णोरेव सर्वोत्तमत्वादेः समर्थनमन्यत्रास्मत्कृतविराटोद्योगपर्वटिप्पण्यादौ द्रष्टव्यः। विस्तरभिया नेहोच्यते। ननु ब्रह्मादिष्वविद्यमानं गजेंद्रोक्तगुणवत्वं विष्णोरेव कुत इत्यत उक्तं॥ अखिलामरवर इति। अनेन हरेः सर्वदेवोत्तमत्वकथनेन हरेरप्युत्तमदेवतत्वे तेनैव देवेन गजेंद्रसमीपागमनादि किं नाकारीति शंका निरस्ता॥ २८॥ जगन्निवासः सर्वजगदाश्रयो हरिस्तं गजेंद्रं तद्वत्तथाऽऽर्त्तं दुःखितमुपलभ्य दृष्ट्वा गजेंद्रकृतस्तोत्रं निशम्य श्रुत्वा चक्रायुधः सन् छंदोमयेन वेदप्रतिपाद्यदेवेंद्रेभ्यः श्रेष्ठेन गरुडेन समूह्यमानो गरुडारूढः सन्निातियावत्। संस्तुवद्भिर्दिविजैर्देवैः सह यतो यत्र गजेंद्रस्तत्राश्वगमदागतः। स गजेंद्र उरुबलेन ग्राहेण सरोवरांतर्गृहीतो यतोऽत एवार्त्तः सन् स्थितोऽपि स एवाकाशे उपात्तचक्रं स्वीकृतसुदर्शनं गरुत्मति गरुडे स्थितं हरिं दृष्ट्वा। सांबुजकरं कमलसहितं स्वशुंडमुत्क्षिप्याखिलगुरो भगवन्नारायण ते नम इति गिरं वाचयं कृच्छ्राद्ब्रह्मायासादाह
॥ ३०॥ अज उत्पत्तिरहितो हरिर्ग्राहेण पीडितं तं गजेंद्रं वीक्ष्य सहसा गरुडादवतीर्य सग्राहं नक्रसहितं गजेंद्रं सरसः सरोवरात्कृपयोज्जहारोद्धृतवान्। उद्धृतानंतरं हरिरुश्रियाणां देवानां संपश्यतां सतां। अरिणा चक्रेण विपाटितमुखाद्विदारितवदनाद्ग्राहाद्गजेंद्रममूमुचन्मोचयामास। उश्रिया अमरा देवा इति नाममहोदधिः॥३१॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः॥८-३॥

॥ हरिः ॐ॥ अत्रापि भगवति श्रीनारायणे दृढतरभक्तिजननाय हरेर्माहात्म्यं निरूप्यते॥ तदेत्यादिना। हरिर्यदा गजेंद्रममूमुचत्तदा ब्रह्मेशानपुरोगमाश्चतुर्मुखपुरःसरा देवर्षिगंधर्वा हरेर्गजेंद्रमोचकस्य तत्कर्म तन्मोक्षणरूपचरितं शंसंतः स्तुवंतः

कुसुमासारमविच्छिन्नधारपुष्पसमूहं हरौ मुमुचुः क्षिप्तवंतः ॥ १ ॥ तदा दिव्यदुंदुभयो भेर्यो नेदुर्ध्वनियुक्ता बभूवुः । विद्याधरा अप्सरसो ननृतुर्नर्तनं चक्रुर्गंधर्वा जगुर्गानं चक्रुः । ऋषयश्चारणाः सिद्धाश्च पुरुषाभ्यां क्षराक्षराभ्यामुत्तमं हरिं तुष्टुवुः स्तुवंतः ॥ २ ॥ ग्राहदेहवान् । यश्चेतनोऽसौ पूर्वं हूहूनामकगंधर्वोत्तमो देवलस्य ऋषेः शापेन ग्राहोऽभूदिदानीं तस्माच्छापाद्भगवत्स्पर्श-महिम्ना मुक्तः सन् । परमाश्चर्यरूपं धृग्धारी सन् ॥ ३ ॥ उत्तमश्लोकं ब्रह्मादिस्तुत्यमव्ययं यशोधाम सत्कीर्तिसागरं कीर्तन्यगुण-सत्कथं कीर्तनीयभक्तानुकंपित्वादि गुणनिर्दुष्टकथावंतमधीशमधिकस्वामिनं हरिं शिरसा प्रणम्यागायतास्तौत् ॥ ४ ॥ स हूहू-नामगंधर्व ईशेन हरिणाऽनुकंपितोऽनुग्रहीतो मुक्तदोषः सन् । तं हरिं परिक्रम्य प्रदक्षणीकृत्य प्रणम्य लोकस्य तत्र स्थितजनस्य पश्यतः सतः । स्वं स्वकीयलोकमगादगच्छत् । इणोगा लुङिति गत्यर्थादिष्टा लुङिगादेशः । गजेंद्रो भगवत्स्पर्शादज्ञानबंधनात्परमा-त्माविद्याप्राप्तसंसारबंधनाद्विमुक्तः सन् । पीतवासाश्चतुर्भुजश्च सन् भगवतो रूपसदृशं रूपं प्राप्तः ॥ ६ ॥ गजेंद्रस्य पूर्वं स्वरूपं शापेन गजत्वप्राप्त्यादि वर्णयति ॥ सवा इत्यादिना । स गजेंद्रः पूर्वं द्रविडसत्तमो द्राविडेष्वत्युत्तमः पांड्यदेशाधिपतिर्विष्णुव्रत-परायण इंद्रद्युम्न इति ख्यातो राजाऽभूत् ॥ ७ ॥ स इंद्रद्युम्न एकदा हरेराराधनकाले कुलाचले माहेंद्रनाम्न्याश्रयो यस्य स तथा सन् । तापसस्तपःकरणे प्रवृत्तः सन् जटाधरोऽप्याप्लुतस्तत्रस्थनद्यां स्नातः सन् गृहीतमौनव्रत आत्मवान्मनोनिग्रहवांश्च सन् अच्युतं देशकालगुणैश्च च्युतिरहितमीश्वरं सर्वस्वामिनं हरिं समर्चयामास सम्यगाराधितवान् ॥ ८ ॥ यदृच्छयाऽदृष्टप्रेरकहरीच्छया तत्रेंद्रद्युम्नतपःस्थले महायशाः प्रशस्तकीर्तिर्मुनिरगस्त्याख्यः शिष्यगणैः परिश्रितः सन् समागमत् । तमगस्त्यं वीक्ष्याकृतार्हणादिकं प्रत्युत्थानाभिवादनरूपपूजारहितं रहस्येकांते उपासीनं तूष्णीं स्थितं चलनमात्रेणापि विधुरमिंद्रद्युम्नं दृष्ट्वा ऋषिरगस्त्यश्चुकोप । कोपं चकाराहेत्यनेन राजोनिष्टं सूचयति ॥ ९ ॥ दुरात्मा दुष्टांतःकरणोऽकृतबुद्धिराशिक्षितबुद्धिमान् अत एवासाधुरयमिंद्रद्युम्नः । यद्वे-लनान्ममावज्ञानाद्द्रोहाद्गजो यथा स्तब्धमतिस्तथाऽयं यतः सदोपतस्तामिस्रमज्ञानप्रचुरं गजदेहं प्राविशतां प्रविष्टो भवतु । स एवेति पाठे गज एवास्त्वित्यर्थः । इतीमं शापमगस्त्यस्तस्मा इंद्रद्युम्नायादादत्तवान् ॥ १० ॥ हे नृप । भगवान् अगस्त्य एवमिंद्रद्युम्नं शप्त्वा सानुगः सन् गतः । राजर्षिरिंद्रद्युम्नोऽपि एतद्दिष्टं मदृष्टोद्बोधकेश्वरप्रापितमिति मत्वा तच्छापवचनमुपधारयद्दधार ॥ ११ ॥

इंद्रद्युम्न आत्मनः स्वस्य परमात्मनोऽपि स्मृतिविनाशिनीं कौंजरीं गजसंबंधिनीं योनिं देहमापन्नः प्राप्तः । तथाऽपि हरेरर्चनानुभावेन पूजामहिम्ना भक्त्या चाहं धिया न हतः । गजत्वेप्यनुस्मृतिरिति यत्तद्धर्यर्चनानुभावेनेति पाठांतरेऽर्थः ॥ १२ ॥ अब्जं नाभौ यस्य स हरिर्गजयूथपं गजेंद्रमेवमुक्तरीत्या विमोक्ष्य स्वस्य पार्षदतां समीपवर्तिसेवकतां गामितेन प्रापितेन तेनापि युक्तः सन् । गंधर्वैः सिद्धैर्विबुधैर्देवैश्चोपगीयमानकर्मा स्तुत्यचरितः सन् । गरुडासनो गरुडारूढः सन् अद्भुतं स्वभवनं स्वमंदिरमगात् ॥ १३ ॥ हे महाराज कुरुवर्य कुरुश्रेष्ठ । शृण्वतां वक्तृणां च स्वर्ग्यं स्वर्गप्रदं यशस्यं कीर्तिकरं कलिकल्मषाणि कलियुगकलिनाऽसुरेण च प्राप्तपापान्यपहंति संहरतीति तथोऽक्तं । दुःस्वप्नसूचितारिष्टनाशकं कृष्णस्य पूर्णसुखस्य हरेरनुभावो गजेंद्रमोक्षणं चेत्येतदेवं मया तवेरितं कथितं । कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचक इत्यादि कृष्ण शब्द उक्तार्थ एव ॥ १४ ॥ अथ गजेंद्रमोक्षणादि रूपहरिचरितस्य स्वर्गादिफलहेतुत्वादेव श्रेयस्कामाः पुरुषार्थापेक्षा द्विजातयस्त्रैवर्णिकाः प्रातरुत्थाय शुचयः शौचाचमनादिना निर्मलाः संतो दुःस्वप्नाद्युपशांतये एतद्गजेंद्रमोक्षणरूपं हरिचरितमनुकीर्तयंति पठंति ॥ १५ ॥ हे कुरुसत्तम । सर्वभूतानां मयः प्रधानो विभुः सर्वसामर्थ्यवान् हरिः प्रीतः सन् सर्वभूतानां शृण्वतां सतां गजेंद्रं प्रति वक्ष्यमाणमाह ॥ १६ ॥ इदमित्युक्तं विवृणोति ॥ ये मामित्यादिना । सुरपादपान्मंदारपारिजातादि देववृक्षान् ॥ १७ ॥ धिष्ण्यानि स्थानानि । धिष्ण्यमोको निवसनमित्यमरः ॥ १८ ॥ पतगानां पक्षिणामीश्वरं गरुडं । पतत्रि पक्षि पतगेति । सुपर्णः पन्नगाशन इति च ॥ १९ ॥ भवं रुद्रं । व्योमकेशो भव इति च ॥ २० ॥ हुताशनोऽग्निः ॥ २१ ॥ प्रणवमोंकारं । सत्यमनारोपितमव्यक्तं प्रधानं । विश्वं सत्यं मघवान इत्यादि श्रुतेः । दाक्षायणीं दक्षपुत्रीं सतीं । दक्षप्रजापतिभार्यां च । धर्मस्य यमस्य पत्नीं । सोमस्य चंद्रस्य कश्यपस्य च पत्नीं ॥ २२ ॥ गंगां भागीरथीं नंदामलकनंदां कालिंदीं यमुनां । कालिंदी सूर्यतनया यमुनेत्यमरः ॥ ध्रुवं राजानं ॥ २३ ॥ येऽधिकारिणोऽपररात्रांते ब्राह्मे मुहूर्ते उत्थाय प्रयताः शुचिर्भूताः सुसमाहिता अत्यंतसमाधानवन्मनस्काश्च संतो मां त्वां चेत्यादिनोक्तमानवांतान्मम रूपाणि च स्मरंति । तेऽखिलात्समस्तादंहसः पापान्मुच्यंते । अंहो दुरितदुष्कृतमित्यमरः ॥ २४ ॥ अंग प्रिय । हे गजेंद्र । ये निशात्यये रात्र्यवसाने ब्राह्ममुहूर्तेऽनेन त्वत्कृतस्तोत्रेण मां स्तुवांति । तेषां

प्राणात्यये प्राणत्यागकाले विपुलां पूर्णां स्वयोग्यां मतिं बुद्धिं मद्विषयां गतिं च ददामि । इतीदं हरिर्गजेंद्रमाह ॥ २५ ॥ हृषीकेशो नियामकतया सर्वेंद्रियस्वामी हरिर्गजेंद्रमित्यादिश्य जलजोत्तमं शंखश्रेष्ठं पांजजन्यं प्राध्माय ध्वनयित्वा विबुधानां देवानामनीकं समूहं हर्षयन्संतोषयन् खगाधिपं पक्ष्युत्तमगरुडमारुरोह ॥ २६ ॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ ८—४ ॥

॥ हरिः ॐ ॥ अत्रापि भगवान् अभिवृद्धभक्त्युदयाय ब्रह्मादिस्तुतात्प्रसन्नादजितनाम्नो नारायणाद्ब्रह्मादीनामिष्टप्राप्तिमाह । तत्रादौ क्रमप्राप्तपंचममनुस्थितिं शुकः परीक्षितेऽविस्मरणाय पूर्वकथानुवादपूर्वमाह ॥ राजन्नित्यादिना । हे राजन् । अघानां पापानां नाशकं पुण्यं पुण्यकरं । एतद्गजेंद्रमोक्षणं ते तवोदितं । इतः परं त्वं मयोच्यमानं रैवतमन्वंतरं शृणु ॥१॥ तापसश्चतुर्थो मनुस्तस्य सोदरो नाम्ना रैवतः पंचमो मनुरभवत् । तस्य रैवतस्य बलिविंध्यादयोऽर्जुनप्रभृतयश्च सुता आसन् ॥ २ ॥ रैवतेंऽतरे नाम्ना विभुर्विष्णुरिंद्रो भूतरयादयः सुरगणाः । हिरण्यरोमा वेदशिराः । उर्ध्वबाहुनामप्रभृतयो द्विजाः । सप्तर्षयः शुभ्रस्य ऋपेर्विकुंठाख्यपत्न्यभूत् । तयोर्विकुंठशुभ्रयोः स्वयं साक्षाद्भगवान्विष्णुर्नाम्ना वैकुंठैः सुरसत्तमैर्देवोत्तमैः सह स्वकलया स्वांशेन नाम्ना वैकुंठः सन् जज्ञे प्रादुरभूत् ॥ ४ ॥ रमया लक्ष्म्या प्रार्थ्यमानेन येन वैकुंठनाम्ना हरिणा तत्प्रियकाम्यया श्रीदेवीष्टकरणेच्छया लोकैर्जनैर्नमस्कृतो वैकुंठलोकः कल्पितो निर्मितः ॥ ५ ॥ तस्य वैकुंठाख्यस्य हरेरनुभावः सामर्थ्यलक्षणो महिमा गुणाश्च ज्ञानानंदस्वातंत्र्यादिरूपाः शुभधर्मा अपि वक्तृश्रोतॄणां परमोदयाः । उत्तमैश्वर्याद्यभिवृद्धिप्रदाः । न कर्मणा लिप्यते पापकेन । विज्ञानमानंदं ब्रह्म । आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति । एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । यो वेद निहितं गुहायां । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता । मन्मना भव । मामेवैष्यसि । इत्यादि श्रुतिस्मृतीषु कथिताः । तर्हि तान् गुणान्मे वदस्वेत्यत आह । यो विष्णोर्गुणान्वर्णयेत्स भौमान् भूमिसंबंधिनो रेणून्विममे संख्यातुं समर्थः स्यात् । यथा भूरजसां संख्यायां समर्थो नास्ति । तथा विष्णोर्गुणानामपीति । अनेन मय्यनंतगुण इत्यादिना प्रमापितं विष्णोरनंतगुणत्वं प्रकटितं । श्रूयते चैवं । विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसीत्यादि ॥ ६ ॥ चक्षुषः पुत्रोऽत एव चाक्षुषो नाम प्रसिद्धो यः सः षष्ठो मनुः । चाक्षुषात्मजा उच्यंते । पुरुषसुद्युम्नप्रमुखाश्चाक्षुषस्य पुत्रा वै प्रसिद्धाः ॥ ७ ॥ हे

राजन् तत्र चाक्षुषेंऽतरे मंत्रद्युम्ननामेंद्रः । आप्यादयो गणा देवा हरिमद्वीरकादयो मुनयः सप्तर्षयो वै प्रसिद्धाः ॥ ८ ॥ तत्रापि चाक्षुषमन्वंतरेऽपि जगतः पतिर्भगवान्विष्णुर्नाम्ना वैराजस्य ऋषेः संभूतिनाम्न्यां भार्यायां । अंशेनाजितो नाम सुतोऽभवत् ॥ ९ ॥ येनाजितेन पयोऽब्धिं क्षीरसमुद्रं निर्मथ्य सुराणां सुधाऽमृतं साधिता प्रापितं । कूर्मरूपेण येनाजितेनांभासि क्षीरसमुद्रोदके भ्रममाणः स्वस्थानात्परितोऽतिलंघ्य गच्छन् । तत्रापि विशेषतोऽधो गच्छन् । मंदरो धृतः । सोऽजितसुतोऽभवदिति पूर्वेणान्वयः ॥ १० ॥ हे ब्रह्मन् शुक । भगवताऽजितेन क्षीरसागरो यथा येन प्रकारेण मथितो यदर्थं वा यत्प्रयोजनाय च यतश्च कस्माच्च कारणात् । अंबुचरात्मना कूर्मरूपेणाद्रिं मंदरं दधार ॥ ११ ॥ सुरैरमृतं यथा प्राप्तं । ततोऽमृतपानानंतरं । अन्यत्किमभवत् । तथा तेन प्रकारेण परमाद्भुतमेतत्क्षीरसागरमथनप्रयोजनादि तद्धेतुभूतं भगवत्कर्म च मे वदस्व ॥ १२ ॥ हे शुक । त्वयेत्थं कथ्यमानेन सात्वतां पांचरात्राणां पतेः पालकस्य हरेर्महिम्ना सुचिरं बहुकालं तापैराध्यात्मिकाधिभौतिकाधिदैवैस्तापितं संतप्तं मे चित्तं मनो नाति तृप्यति । भगवन्महिमाश्रवणादिविषयेऽलं बुद्धिमन्न भवति ॥ १३ ॥ हे द्विजाः शौनकादयः । भगवान्स्वोचितैश्वर्यादिगुणवान् द्वैपायनसुतो व्याससूनुः शुकः परीक्षितैवं संपृष्टः सन् । अभिनंद्य संतुष्टो भूत्वा परीक्षितं च संतोषयित्वा हरेर्वीर्यमभ्याचष्टुं स्पष्टं वक्तुं प्रचक्रमे उपक्रांतवान् । व्याख्यातुमिति पाठेऽप्ययमेवार्थः ॥ १४ ॥ यदा यस्मिन्काले युद्धे देवाः शितानि शाणोल्लीढान्यायुधानि येषां तैरसुरैर्बाध्यमानाः पीड्यमानाः संतो गतासवो विगतप्राणादिशक्तयः संतः । भूरिशो बहवो निपतिता नोत्तिष्ठेरं स्म । उत्थितुमपि शक्ता नाभवन्स्मेति ज्ञापकात् एष्यदर्थस्यापि लिङः भूतार्थत्वं ॥ १५ ॥ हे नृप । यदा सेंद्रास्त्रयोलोका दुर्वासशापेन निःश्रीका अभवन् । तत्र तस्मिन्काले इज्यादयो देवपूजारूपयागादयः क्रियाश्च नेशुरदृश्या अभवन् ॥ १६ ॥ तदा महेंद्रवरुणादयः सुरगणा एतत्स्वैश्वर्यादिनाशं निशाम्य दृष्ट्वा परस्परं स्वयं मंत्रैर्विचारहेतुभिर्वाक्यैर्मंत्रयंतो विचारयंतोऽपि विनिश्चयं स्वकर्तव्यनिर्णयं नाध्यगच्छन्न प्राप्ताः ॥ १७ ॥ ततस्तदनंतरं सर्वशः सर्वे इंद्रादयो देवा मेरोः पर्वतस्य मूर्ध्नि शिखरे स्थितां ब्रह्मसभां जग्मुर्गताः । तत्र परमेष्ठिने चतुर्मुखाय प्रणताः संतः सर्वं स्वाभिभवादि विज्ञापयांचक्रुः सम्यग्ज्ञापितवंतः ॥ १८ ॥ विभुः स्वप्रपन्नसमाधानसमर्थः स चतुर्मुख इंद्रवाय्वादीन्सुरान्निःसत्त्वान्विगतप्रभान् लोकांश्चामंगलप्रायान्विलोक्य ॥ १९ ॥ भग-

वान् ऐश्वर्यादि गुणपूर्णः परो रुद्राद्युत्तमः स चतुर्मुखो यथा श्रुतिस्मृत्यादि तथा समाहितेन सम्यग्भगवति स्थापितेन मनसा परं पुरुषं नारायणं संस्मार । तदनंतरमुत्फुल्लं विकसितं वदनं यस्य स तथा सन् देवान्प्रत्युवाच ॥ २० ॥ इदानीं चतुर्मुखः स्वप्रभृति देवानां पारतंत्र्यमाविष्कुर्वन् हरिरेव नः शरणमित्याह ॥ अहमित्यादिना । अहं चतुर्मुखो भवो रुद्रो यूयमथोऽसुरादयो मनुष्यास्तिर्यक्पश्वादि द्रुमा वृक्षा घर्मजाः स्वेदजनितकृमिमुखा यस्य हरेरवताररूपस्यांशस्य पुरुषादेः कलया विसर्जिताः संसृष्टाः । अव्ययं चतुर्विधनाशशून्यं तं नारायणं शरणं रक्षकं सर्वे वयं व्रजाम ॥ २१ ॥ यस्य नारायणस्य स्वप्रयोजनाय योग्यताविना च वध्यादिर्नास्ति । यद्यप्यथाऽपि काले जगतः सर्गस्थितिसंयमार्थं सृष्टिपालनसंहाराय रजःसत्त्वतमोगुणान्धत्ते धारयाति । तस्यायं स्थितिः पालनलक्षण इत्युत्तरेणान्वयः । वध्यादिर्नास्तीत्यस्यायमेवार्थः । न तु स्वरूपत एव कदाऽपीति । प्रतिहन्मि भूरि किमन्यं निंदति शत्रवोऽनिंद्राः । अनन्यांश्चिंतयंतो मां । योगक्षेमं वहाम्यहं । तानहं द्विषतः क्रूरान् । सुरप्रियः । असुराणां सुधादानं सर्पाणामिव दुर्नयं । इत्यादि श्रुतिस्मृतिविरोधपरिहारात् । देहिनां भवाय सत्त्वं जुषाणस्येत्यादिना स्वप्रयोजनाभावे स्थित्यादि प्रवृत्त्यवगतेः ॥ २२ ॥ अयं तु कालस्तस्य हरेर्जगत्स्थितिपालनलक्षणः । तत्र हेतुमाह । देहिनामधिकारिजीवानां भवाय क्षेमादि मंगलाय सत्त्वं गुणं जुषाणस्येति । यस्मादेवमयं कालोऽस्मदनुकूलस्तस्माद्वयं जगद्गुरुं हरिं शरणं रक्षणं व्रजामः । यस्मात्स हरिः सुरप्रियस्तस्मात्स्वानां स्वकीयानां नोऽस्माकं शं सुखं धास्यति करिष्याति ॥ २३ ॥ हे अरिंदम बाह्यांतःशत्रुशिक्षक । वेधाश्चतुर्मुखः । स्रष्टा प्रजापतिर्वेधा इत्यमरः । सुरान्प्रतीत्युक्तरीत्याऽऽभाष्य देवैः सह तमसः परं साक्षादनुपचारेणाजितस्य विष्णोः पदं स्थानं जगाम ॥ २४ ॥ तत्र स्थानेऽदृष्टं स्वरूपमाकारो यस्य तस्मै श्रुतपूर्वाय पूर्वं श्रुताय हरयेऽद्भुतदैवीभिरत्याश्चर्यरूपहरिविषयाभिर्गीर्भिर्वेदानुकारिभिरवहितेंद्रियः सन् स्तुतिमभ्यधात् ॥ २५ ॥ वयमविक्रियं सर्वविकाररहितं सत्यमनारोपितमनंतं देशकालगुणैः परिच्छेदरहितं । आद्यं पुरातनं गुहाशयं हृद्गुहस्थं निष्कलं भिन्नदोषयुक्तकलारहितमप्रतर्क्यं प्रत्यक्षागमानानुगृहीतयुक्त्यगोचरं सदागृणानं वाग्व्यापारोपेतं । वचसा वेदादिरूपेणाधिकारिणां साकल्येनानिरुक्तं वरेण्यं भजनीयं देववरं सर्वदेवोत्तमं त्वां नमामहे । इति स्तुत्या चतुर्मुखो हरेः शबलब्रह्मत्वमतिरिक्तस्य निर्गुणस्याविक्रियादि रूपस्य सत्वं निवारयाति । अन्यथा

तद्गुणैरविक्रियादिभिरयथाभूतहरिस्तवनानुपपत्तेः । मायाशबलेऽपि हरौ चिद्भागदृष्ट्येयं स्तुतिरित्यस्य देववरत्वस्तुतिप्रहृतत्वात् । चिन्मात्रे देववरत्वादि विकारस्य परमतेंऽगीकारानर्हत्वात् । विष्णुव्यतिरिक्ताविक्रियादिरूपस्य पराभिमतचितः प्रमाणतोऽसिद्धेः । एतद्विषये विस्तरोऽस्मत्कृतमध्वतंत्रमुखमर्दनत्वेन परसंकेतितग्रंथमर्दने द्रष्टव्यः । निर्विकारोऽक्षरः शुद्धः । सत्यं ज्ञानमनंतं । आद्यं पुरुषं । यो वेद निहितं गुहायां । निष्कलं निष्क्रियं शांतं । नैषा तर्केणमतिरापनेया । येन वागभ्युद्यते । यद्वाचानभ्युदितं । वरेण्यं तत्सवितुरित्यादि श्रुतिप्रतिपाद्यो हरिरेवेत्येतच्छ्लोकार्थः ॥ २६ ॥ वयं यत्र भगवति नारायणे गृध्रस्य विषयकांक्षिणो जीवस्य पक्षौ गरुत्मद्वर्तमानोऽधोर्ध्वगतिहेतुच्छायातपाविद्या शास्त्रज्ञानरूपो न स्तो नाभूतो न भविष्यच्च ॥ तदुक्तं ॥ छाया त्वविद्या संप्रोक्ता जन्यविद्या तपः स्मृतः । जीवगृध्रस्य तौ पक्षावध और्ध्वपथो पृथक् । तौ विष्णोस्तु न विद्येते नित्यज्ञानस्वरूपिण इति ॥ तं प्राणमनोधियात्मनां विपश्चितं ज्ञातारं । अर्थान् शब्दादीन् इंद्रियैः श्रोत्रादिभिराभासयति जीवेभ्य इत्यर्थः । इंद्रियाभासमर्थानींद्रियाणि च भासयतीति च तथोक्तस्तं । यस्य भासा सर्वमिदं विभातीत्यादेः । अनिद्रं अज्ञानकार्यनिद्राविधुरं । अव्रणं क्षतादिदोषरहितं । लिंगशरीरशून्यं च । तुरीयरूपं । न निद्रां नैव च स्वप्नं तुरीये पश्यंति निश्चिताः । अजमनिद्रमस्वप्नं । अकायमव्रणमित्यादेः । अक्षरं चतुर्विधनाशरहितं । खं सर्वेंद्रियनियामकं । यः प्राणे तिष्ठन्नित्यादेः । ज्ञानपूर्णं । कं ब्रह्म खं ब्रह्मेत्यादेः । त्रिष्वेव युगेषु मनुष्यादि दृष्ट्यादि गोचरत्वात् । त्रियुगनामानं नारायणं व्रजामहे शरणं यामः ॥ २७ ॥ यस्याजस्य विष्णोर्वशमजया जडप्रकृतिनियामकचित्प्रकृत्या जडप्रकृतिसत्त्वादि गुणैश्चेर्यमाणं प्रेर्यमाणं । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैरित्यादेः । मनोमयमंतःकरणप्रधानकं । मन एव मनुष्याणां कारणं बंधमोक्षयोरित्यादेः । पंचदशारं श्रोत्रादि दशेंद्रियशब्दादिपंचकपंचरूपपंचदशदलोपेतं । पंचमहाभूतपंचप्राणश्रोत्रादिपंचेंद्रियरूपपंचदशदलोपेतं । आशु शीघ्रभ्रमणं व्याप्तं च गुणत्रयलक्षणनाभित्रयोपेतत्वात्त्रिनाभिः । विशेषतो द्योतमानत्वाद्विद्युद्धरिः स एव बलमाधारो यस्य तद्विद्युद्बलं । विद्युद्ब्रह्मेत्युपासीत । अष्टौ देवदानवासुरमनुष्यगंधर्वतिर्यक्पिशाचराक्षसस्थावराख्याः ।। देवदानवगंधर्वतिर्यङ्नरपिशाचकाः । राक्षसाः स्थावरा अप्यष्टौ विटपा इति वायुपुराणोक्ताः । नेमयो वर्तुलाकारधारा यस्य तत्तथा । प्रवाहरूपेणावृत्त्या भ्रमणात् । चक्रसंज्ञं जगत् । ज्ञानिनो यदक्षं यो

हरिरक्षश्चक्रद्वयमध्यस्य छिद्रगस्थूलदारुस्थानीयो यस्य तत्तथा आहुः । अहं तं ऋतं पूर्वारगतवत्सदावस्थितं निर्विकारं हरिं प्रपद्ये शरणं गतोऽस्मि ॥ २८ ॥ जगच्चक्रस्याक्षभूतो बलरूपस्य केशव इति वचन बलादत्र चक्र शब्देन जगद्ग्राह्यं । यं नारायणाख्यं ब्रह्म । एकवर्णं ॐकाररूपैकाक्षरप्रतिपाद्यं । ओमित्येकाक्षरं ब्रह्मेत्यादेः । तमसः प्रकृतेः परमुत्तमं सन्निदर्पं । अलोकं लोकविलक्षणमव्यक्तं स्वप्रसादमंतराऽधिकारिप्रयत्नेन व्यक्तिशून्यं । अनंतपारं विनाशदेशकालादिपरिच्छेदाभ्यां विधुरं । यच्चोपसर्पणपत्रं गरुडपक्षसमीपे । तत्स्कंध इति यावत् । आसांचकारोपाविवेश । धीरा ज्ञानिनो योगरथेन रथवद्वेगवता ध्यानादिरूपयोगेनोपासते ॥ २९ ॥ कश्च कोऽप्यधिकारी यस्य हरेर्मायां बंधनादिशक्तिं जडप्रकृतिं च यस्य प्रसादेन विना नातिपिपर्ति नातितराति । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति त इत्यादेः । यया मायया जनोऽसुरस्वभावो मुह्यति विपरीतज्ञानवान्भवति । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसीत्यादेः । जनो यथाऽऽवृतोऽर्थं स्वस्वरूपादिलक्षणं न वेद । निर्जिता आत्मानो रमादिचेतनास्तद्गुणाश्च येन स तथा । सर्वचेतनोत्तमत्वतन्नियामकत्वादेरात्मेश्वरं शाश्वतं शिवमच्युतं नारायणं महाज्ञेयं । य आत्मानमंतरो यमयतीत्यादेः । परेशं मुक्तस्वामिनं भूतेषु सर्वप्राणिषु समं ज्ञानानंदादिभिश्चरंतं नियामकतया संचरंतं । तं हरिं नमामि । सर्वेषां भूतानामंतरपुरुषः सम आत्मेति विद्यात् । ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पंडिताः समदर्शिन इत्यादेः ॥ ३० ॥ इमे सप्तलोकाधिपत्यादिनाऽतिप्रसिद्धा वयं यस्य हरेः कृपयैव केवलं दयया न तु स्वप्रयोजनाद्यर्थं दृष्टा दृष्टिविपयीकृताः संतः सत्त्वेन गुणेन ब्रह्मांडाद्बहिः सृष्टा ब्रह्मांडादंतरं च सृष्टाः । तदैक्षत । स इदं सर्वमसृजतेत्यादेः । ऋषयश्च ज्ञानिनोऽपि वयं यस्य विभोः सूक्ष्मां तदनुग्रहमंतरा स्वप्रयत्नेन ज्ञातुमशक्यां गतिं स्थितिं न विद्महे । इतरप्रधाना तमोगुणप्रधाना अतितामसा असुराद्यास्तां गतिं कुतः कस्माद्धेतोर्विद्युः न कुतोऽपि । स नः प्रसीदतामित्युत्तरेणान्वयः ॥ ३१ ॥ यस्येयं मही भूमिः पादौ स्वकृतैव पादजत्वेन पादाश्रिततया परमात्मकृतैव । यत्र भूमौ चतुर्विधोऽडजादिभेदेन चतुःप्रकारो भूतसर्गः प्राणिसृष्टिरभूत् । वेत्यनेन पद्भ्यां भूमिरित्यादि श्रुतिप्रसिद्धिं च सूचयति । स महापुरुषो ब्रह्मा परं ब्रह्म गुणपूर्णत्वाद्ब्रह्म नाम । अथ कस्मादुच्यते ब्रह्मेति । ब्रह्मंतो ह्यस्मिन् गुणा इत्यादेः । महाविभूतिः साक्षाच्छ्रीपतित्वेनापरिच्छिन्नैश्वर्य आत्मतंत्रः स्वसत्ताप्रतीतिप्रवृत्त्यादिषु

परानपेक्षो हरिर्नः प्रसीदतां प्रसन्नो भवतु ॥ ३२ ॥ उदारवीर्यं वक्ष्यमाणोत्कृष्टसामर्थ्यमंभो जलं यस्य हरे रेतो वीर्यस्थानीयं । यद्रेतः कर्मत्रयो लोकास्त्रिलोकस्था जना जीवंत्युपजीवंति । रेतोपजीवनेन सिध्यंति न निवृत्तिलक्षणं फलं प्राप्नुवंति । वर्धमानाः शरीरोपचयेनैधमानाश्च भवंति । न केवलमेवं साधारणा जनाः किं त्वखिललोकपालाः सूर्यसोमयमेंद्रादिव्यतिरिक्ताः सर्वलोकपालाः । अथाऽपि उपजीवनादिकं कुर्वंति । यद्यत्प्रथमममृतं तद्वसव उपजीवंतीत्यादि श्रुतेः । न त्विंद्रसूर्यादयोऽपि येषामबादिसर्वैरुपजीव्यत्वात् । अपां सोमस्य चेंद्राद्याः सर्वे वै जीवनप्रदा इत्यादेः । एवं ब्रह्मणि श्रुतिस्मृत्यादि रूपशब्दराशयो महतां मुख्यप्रतिपाद्यविभूतिरैश्वर्यं यस्य स हरिर्नः प्रसीदतां ॥ ३३ ॥ ज्ञानिनो यश्चंद्रो दिवौकसां देवानां बलं शक्तिप्रदोऽधोऽन्नप्रद आयुरायुष्यहेतुः शैत्यकरः स्वरश्मिरोषधाद्यभिवृद्धिहेतुत्वाच्चंद्रस्य देवानामप्यन्नादिदातृत्वं ज्ञेयं । यश्चंद्रो नगानां वृक्षानामुक्तरीत्यैवांकुरोत्पत्त्यादि हेतुत्वेनेशः । यश्च प्रजानां जनानां प्रजननः स्वदर्शनेन स्त्रीपुंसां सुरतोद्योगहेतुत्वात्संतानहेतुः । प्रजा स्यात्संततौ जन इत्यभिधानं । तं सोमं । यस्य विष्णोर्मनः समामनंति मनसो जातं मनःश्रितं चाहुः । वेति स्वोक्तार्थे चंद्रमा मनसो जात इत्यादिकं प्रमाणयति । ज्ञानिनः सोमं हरेर्मन इत्युक्तत्वादस्मिन्नर्थे प्रमाणांतरं संवादयति वेत्यनेनैवमग्रे ज्ञातव्यं ॥ ३४ ॥ जातं सर्वं वेत्तीति जातवेदाः क्रियाकांडनिमित्तं यागादि सर्वकर्मसमुदायनिर्वाहाय जन्मोत्पत्तिर्यस्य स तथा । जातः । अग्निर्यस्य हरेर्मुखं मुखाज्जातो मुखाश्रितश्च । मुखादिंद्रश्चाग्निश्च । यस्माद्यज्जायते चांगाल्लोकवेदादिकं हरेः । तन्नामवाच्यमंगं तदित्यादेरग्निर्मुखमित्यादि सामानाधिकरण्योपपत्तिः । एवं विधोऽग्निरंतः शरीरोंऽतः समुद्रे च स्वधातून्पच्यतया स्वकीयान् जलान्नादीन् पचतो यस्य विष्णोर्मुखं द्वारं । सोऽग्निप्रेरकत्वादि महाविभूतिर्नः प्रसीदतां । अग्निर्वाऽहमस्मीत्यत्र जातवेदा वाऽहमस्मीत्युपनिषद्यग्निनैव चास्य जातवेदत्वोक्तेर्नैतस्येतरसाधारण्यं । अहं वैश्वानरो भूत्वा पचाम्यन्नं चतुर्विधं । तु शब्देन वाचोऽपि हरेर्मुखत्वं सूचयति । वाचो वन्हेर्मुखं क्षेत्रमिति स्वोक्तेः ॥ ३५ ॥ देवस्य कांत्यादि गुणवत उत्तरायणमुच्यमानचेतनवर्गस्य । य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति । यानं मुक्तेर्मार्गभूतः स यावत्क्षिपेन्मनः । मनस्तावदादित्यं गच्छत्येतयैव खलु लोकद्वारं । विदुषां प्रपदनिरोध इत्यादेः । त्रय्यां ऋग्यजुःसामरूपायां श्रुतौ प्रतिपाद्येषु वर्णादिषु मयःप्रधानः । आक्रुष्णने

रजसेत्यादि वेदप्रतिपाद्यः । ब्रह्मणो नारायणाख्यस्य धिष्ण्यमधिष्ठानभूतः । य आदित्ये तिष्ठन् । यश्चासावादित्ये । ध्येयः सदा सवितृमंडलमध्यवर्ती नारायण इत्यादेः । अमृतस्य मुच्यमानजीवजातस्य मृत्योः संसाराख्यान्मुक्तेर्मोचनस्य द्वारं । स्वाधिष्ठित-हरिध्यानादिना सन्मोक्षहेतुः । एष प्रत्यक्षप्रतीयमानमंडलस्थस्तरत्यनेनाधिकारी संसारमिति तरणिः सूर्यः । यस्य हरेश्चक्षुरासीत् । चक्षुषो जातोऽभूत् । सप्तसु प्रथमेति स्मरणात् । चक्षोः सूर्योऽजायतेति श्रुतेः । स सूर्यजनकश्चक्षुष्ट्वादिमहाविभूतिर्नः प्रसीदतां ॥ ३६ ॥ चराचराणां जंगमस्थावरचेतनानां प्राणो जीवधारणहेतुः । प्रकृष्टव्यापारहेतुश्च । सत्त्वं सहनशक्तिप्रदः । बलं शक्तिदः । ओजः परप्रहारनिरोधशक्तिप्रदः । आयुरायुष्यप्रदतया देहधारकः । तान्वरिष्ठप्राण उवाच । मा मोहमापद्यथा । अहमेवैतत्पंचधाऽऽत्मानं विभज्यैतत्प्राणमवष्टभ्य विधारयामीति । ते प्रीताः प्राणं स्तुवंत्येषोऽग्निस्तपत्येष सूर्यः प्राणैकऋषिरत्ता विश्वस्य सत्पतिः । वयमासाद्य दातारः पिता त्वं मातरिश्व न इत्यादेः । एवं भूतो मुख्यप्राणो यस्य प्राणादभूत् । यं च वयं सम्राजमिवान्वनुसृत्यानुगाः स्मः । स प्राणादिनियामकमुख्यप्राणजनकत्वादिमहाविभूतिर्नः प्रसीदतां । मुख्यप्राणस्य प्राणादि-नियामकत्वं च । यथा संम्राडेवाधिकृतान्नियुक्त एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान् पृथक् पृथगेव संन्निधत्ते । पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकांभ्यां प्राणः स्वयं प्रतितिष्ठत इत्यादि प्रसिद्धं ॥३७॥ यस्य श्रोत्राद्दिशो दिगभिमानिचंद्रादयो यस्य हृदयाच्च खानींद्रियाणि प्रजज्ञिरे । यस्य पुरुषस्य नाभेः खमंतरिक्षं जज्ञे । दिशः श्रोत्रान्नाभ्य आसीदंतरि-क्षादेः । यश्च प्राणानां मुख्यप्राणानामिंद्रियाणां श्रोत्रादीनां च नियामकतया तत्स्थितः स्वामी च । यः प्राणे तिष्ठन् यः प्राणमंतरो यमयति । प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमित्यादेः तत्तच्छक्तिप्रदतया तत्र तत्र स्थित्युक्तेः । स्वशरीरस्यात्मशरीररूपस्य जीवस्य बन्धुः सखा । यस्यात्मा शरीरं । द्वासुपर्णासयुजासखायेत्यादि श्रुतेः । स दिग्देवतादि जननादिमहाविभूतिर्हरिर्नः प्रसीदतां ॥ ३९ ॥ यस्य बलान्महेंद्रः शचीपतिः प्रसादात्त्रिदशा देवा मन्युः कोपसदृशाच्छत्रुनिग्रहेच्छाया गिरिशो रुद्रो धिषणा बुद्धेर्विरिंचश्चतु-र्मुखः खेभ्य इंद्रियेभ्यश्च सप्तच्छंदांसि ऋषयः कर्दमादयो मेढ्रतो जाताः । स महेंद्रादिजनकत्वविभूतिर्नः प्रसीदतां ॥ ३९ ॥ यस्य वक्षसः श्रीरासीत् । छायायाः पितर आसन् । स्तनाद्धर्मस्तदभिमानी यमः । स्तनादितरोऽधर्मस्तदभिमानी निर्ऋतिः पृष्ठतोऽभूत ।

शीर्ष्णः शिरसो द्यौरभूत् । विहारात्क्रीडाविशेषादप्सरसोऽभूवन् । सः लक्ष्म्या जननविभूतिर्नः प्रसीदतां ॥ ४० ॥ यस्य मुखाद्विप्रा ब्राह्मणाः । गुह्यं रहस्यं ब्रह्म च वेदराशिरासीत् । ब्राह्मणोऽस्य मुखमासीत् । अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवेत्यादेः । भुजयो राजन्यः क्षत्रियो बलं चासीत् । बाहूराजन्यः कृत इत्यादेः । ऊर्वोर्विशो वैश्याः । अंघ्रेः पादाच्छूद्रा आसन् । ऊरुतदस्ययद्वैश्यः पद्भ्यां शूद्रोऽजायतेत्यादेः । स ब्राह्मणादिजननमहाविभूतिर्नः प्रसीदतां ॥ ४१ ॥ यस्याधरोष्ठाल्लोभाभिमानी जातः । उपर्युत्तरोष्ठात्प्रीत्यभिमानी अभूज्जातो द्युतिः कांतिश्च जाता । नस्तो नासिकायाः पशव्यं पशुहितं तृणादि । स्पर्शेन गुणेन कामः स्त्रियादि विषयेच्छा कालो मृत्युः पक्ष्मभवः । स लोभादिजननमहाविभूतिर्नः प्रसीदतां ॥ ४२ ॥ द्रव्यमाकाशादिरूपं वयो बाल्यतारुण्यादि कर्म प्रवृत्तिनिवृत्तिरूपं धर्माधर्मसाधनं च गुणाः सत्त्वादयः शुक्लादयश्च शेषं प्रकृत्यादि यस्य हरेः योगमायया तत्कार्योपायभूतस्वेच्छया । अपहिता उपहिताश्च नश्यंतु न नश्यत्विति विषयीकृताः पतंति नश्यंति । न पतंतिचेति ग्राह्यं । द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः संति न संति यदुपेक्षयेत्यादेः । द्रव्यं पृथिव्यादि नवकं वयस्तरणिपरस्पंदज्ञाप्यं परत्वापरत्वादिरूपं कर्मोत्क्षेपणादि पंचकं गुणा रूपरसादि चतुर्विंशतिः शेषमवशिष्टं समवायादिरूपं । गौतमकणादादीनां बुद्धो यद्योगमाययाऽपहिता नरकादि हेतुतयाऽनिष्टा निरर्थकाश्च पतंति वक्तव्यतया पतंति । आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थक इति सृगालोक्तेर्विषकंठकणभक्षसंकरोक्तिदशबलपंचशिखाऽक्ष पादवादान् । महदपि सुविचार्य लोकतंत्रं भगवदुपास्तिमृतेन सिद्धिरस्तीत्यादेः । नन्वेवं गौतमादयो भगवत्स्वरूपमविज्ञाय किं विपरीतमाचख्युरित्यत आह ॥ यद्दुर्विभाव्यमिति । गौतमाद्ययोग्यजनोक्तप्रकारेणाष्टगुणत्वादिना ज्ञातुमशक्यं । नन्वेवं हरेः स्वरूपत एव दुर्विभाव्यत्वे कथंकारं मुक्तियोग्यानां तज्ज्ञानं स्यादित्यत उक्तं ॥ प्रबुधावबोधमिति । प्रबुधानां प्रकृष्टज्ञानयोग्यानामवबोधं सम्यग्ज्ञानं यस्मात्तथोक्तं । अज्ञानां ज्ञानदो विष्णुरित्यादेः । महाविभूतिरेवमाकाशादिसत्त्वप्रदत्वायोग्यमोहत्वाज्ञेयत्वज्ञानयोग्यदेयत्वादि लक्षणापरिच्छिन्नैश्वर्यः स हरिर्नः प्रसीदतां ॥ ४३ ॥ उपशांता अधिकानंदपूर्णाः शक्तयः शक्तिप्रतिष्ठादि रूपा यस्य तस्मै स्वाराज्यलाभेन स्वरूपभूतानंदलाभेन परिपूरित आपूर्ण आत्मा स्वरूपं यस्य तस्मै । मायया स्वेच्छया जडप्रकृत्या च रचितेषु निर्मितेषु सत्त्वादिषु नियामकतया स्थितोऽपि यस्त-

दृष्टत्तिभिर्दुःखादिकार्यैर्न सज्जमानो निर्लिप्तस्तस्मै । स्वभूतये स्वरूपभूताऽनन्याधीनसर्वेश्वरत्वादिरूपसंपदे तुभ्यं नमो नमोऽस्त्वित्यादराद्विरुक्तिः । उपोधिक इति सूत्रं । शर्म शांत सुखानि चेत्यमरः । भूतिर्भस्मनिसंपदीति च । असंगो ह्ययं पुरुष इत्यादि श्रुतिः ॥ ४४ ॥ हे हरे सः पूर्वोक्तमहिमोपेतस्त्वमस्माकं करणानां चक्षुषां गोचरोऽयं भवत्विति । त्वां प्रपन्नानां शरणागतानां दिदृक्षूणां साक्षात्कर्तुमिच्छावतां नोऽस्माकं तवात्मानं देहं स्मितेन हासेन सहितं ते मुखांबुजं च नोऽस्माकं दर्शय ॥ ४५ ॥ हे विभो अघटितघटनासमर्थ हरे । भगवांस्त्वं नोऽस्माकं दुर्विषहं मनसाऽपि धर्तुमशक्यं कर्मासुरहननसुरसंरक्षणादि रूपं । काले काले असुरैर्धर्माद्युच्छेदकाले स्वेच्छाकृतैस्तैस्तैर्मत्स्यादिरूपैः करोति हि । वा इत्यनेन । यदा यदाहि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहं । परित्राणाय साधूनां विनाशाय च दुष्कृतां । धर्मसंस्थापनार्थाय संभवामि युगे युगे । इत्यादि प्रमाणं सूचयति ॥ ४६ ॥ हे विभो । विषयार्त्तानां शब्दादि विषयाकांक्षया दुःखितानां तत्तद्विषयप्राप्त्यर्थं क्रियमाणकर्माणि क्लेशभुर्यल्पसाराणि बहुक्लेशहेतुदेहायासद्रव्यनाशादियुक्तानि स्वल्पसुखप्रदानि च । कदाचिद्भवंति कदाचिद्विफलानि च व्यर्थानि विरुद्धफलानि च भवंति यथा तथा त्वय्यर्पितं कर्म न भवति ॥ ४७ ॥ अधिकारिकृतोऽगवैकल्येन कर्मकल्पः कर्माभासोऽत एवाधर्मोऽपि यदीश्वरार्पितः कृष्णेऽर्पितस्तर्हि विफलाय फलाभावाय न कल्पते समर्थो न भवति । किंतु फलायैव कल्पते । हि यस्मादस्य पुरुषस्याधिकारिणः स आत्मा परमात्मा दयितः प्रिय एव । अस्य हरेरपि पुरुषोऽधिकारी हि यस्माद्धितस्तस्मात्पुरुषार्थायैव कर्मकल्पो भवतीति । अहं ज्ञानिप्रियो नित्यं ज्ञानिनोऽपि मम प्रियाः । तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः । क्षेमं न विंदति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नम इत्यादेः । नाधर्मकर्मकल्पोऽपीति पाठांतरं । तत्राविवेकिनां कर्मकल्पः कर्माभासतया प्रतीतोऽपि यदीश्वरार्पितस्तर्हि सोऽधर्मो न भवति । धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युतेत्यादेः ॥ ४८ ॥ ननु ज्ञात्वा शिवं शांतिमत्यंतमेति । कस्मै देवाय हविषा विधेमेत्यादि श्रुतिविहितब्रह्मरुद्रादि सेवापरित्यागेन विष्ण्वैकविषयतया कृतः कर्मकल्पोऽपि यदि धर्मस्तर्हि रुद्रादिसेवा तत्प्रसादादि चास्याधिकारिणो न स्यादित्याशंक्याह ॥ यथा हीति । लोके तरोर्मूलावसेचनं यथा तत्स्कंधशाखानामपि हितं भवति । एवं विष्णोराराधनं च सर्वेषां

ब्रह्मादीनामात्मनश्च स्वस्यापि हितं भवति ॥ ४९ ॥ इदानीं चतुर्मुखः स्वकर्तृकहरिकर्मकस्तुतिसमापने निमित्तं सूचयन्नेव हरिं स्तुवन् तत्स्तुतिं समापयति ॥ नमस्तुभ्यमित्यादिना । दुर्वितर्क्यान्यूहितुमशक्यान्यात्मदेहकर्माणि च यस्य तस्मै तत्त्वादिगुणविधुरतया निर्गुणाय सृष्ट्याद्यर्थगुणानामीशाय प्रेरकतया स्थितस्वामिने । सांप्रतमिदानीं सत्त्वगुणस्थाय स्थितिपालकाय तुभ्यं नमोऽस्त्विति ॥ ५० ॥ इति श्रीभागवतटिप्पण्यां पंचमोऽध्यायः ॥ ८—५ ॥ ॥

॥ हरिः ॐ ॥ परमात्मज्ञानामिव परमात्वविषयस्तुतिरपि तत्प्रसादाद्यशेष पुरुषार्थहेतुरिति सूच्यतेऽस्मिन्नध्याये । अत्रापि प्रथमं हरेः प्रकटनप्रकारमाह ॥ एवमित्यादिना । हे राजन् । सहस्रसंख्याकानामर्कानां सूर्यानामुदये सति यादृशी द्युतिः कांतिः स्यात्तादृक्कांत्युपेतः सन्हरिराविरभूत् प्रकटो बभूव । प्राकट्ये निमित्तमाह ॥ एवं स्तुत इति । चतुर्मुखादि सुरगणैरेवं प्रकटितस्य हरेः सुरकार्यकरणसामर्थ्यसूचनाय भगवानीश्वर इति विशेषणद्वयं ॥ १ ॥ सर्वे देवा ब्रह्मादयस्तेनाविर्भूतहरिसंबंधिना महसा कांत्या प्रतिहतानि तिरस्कृतानीक्षणानि नेत्राणि येषां ते तथा संतः खमाकाशं दिशः क्षोणीं भूमिमात्मानं स्वं स्वदेहमग्रतः पुरतः स्थितं विभुं स्वस्वामिनं हरिं च नापश्यन् । कांत्युत्सवे तु महसीति नानार्थरत्नमाला ॥ २ ॥ भगवान् । विरचयति सृजति सनकादीनिति विरिंचश्चतुर्मुखः सर्वेण देवगणेन सह स्वच्छं निर्मलं मरकतवच्छामवर्णं कंजस्य कमलस्य गर्भवदुदयभागवदरुणे रक्ते ईक्षणे यस्य तं ॥ ३ ॥ तप्तहेमसुवर्णवदवदातेन शुद्धेन लसता प्रकाशमानेन किरीटेन शिरोभूषणेन केयूराभ्यां बाहुभूषणाभ्यां च भूषितं करणाभरणाभ्यां कुंडलाभ्यां निर्भासितावतिप्रकाशितौ कपोलौ गंडस्थले श्रिया युक्तं मुखांबुजं च यस्य तं ॥ ५ ॥ कांचीकलापेन कटिभूषणेन वलयाभ्यां करभूषणाभ्यां महाहारेण मुक्तामालया नूपुराभ्यां पादभूषणाभ्यां शोभितं कौस्तुभाख्याभरणं ।। लक्ष्म श्रीवत्साख्यलक्षणं च बिभ्रतं वैजयंत्याख्यवनमालिनं ॥ ६ ॥ सुदर्शनादिभिश्चक्रप्रभृतिभिर्मूर्तिमद्भिः शरीरधारिभिः स्वास्त्रैः कामादिभिः सुदर्शनाद्यभिमानिभिः सेवितमुपासितं सर्वेषां रमाब्रह्मादीनामीशं स्वामिनं परं सर्वोत्तमं पुरुषं नारायणं दृष्ट्वा सर्वांगैरवनिं भूमिं गतैर्दंडप्रणामं कुर्वद्भिः सर्वामरगणैः सार्धं तुष्टाव स्तुतवान् । यतः स्वयं देवानां प्रवरः श्रेष्ठः ॥७॥ अजायोत्पत्तिशून्याय जन्मस्थितिसंयमा उत्पत्तिस्थितिसंहारनियमनादयो जगतो यस्माद्भवंति तस्मै । गुणायानंदादि गुणस्वरूपाय ।

आनंदो ब्रह्मेति श्रुतेः । निर्वाणसुखार्णवाय प्राकृतशरीरजन्यसुखसमुद्राय । अणोः सकाशादप्यणिम्नेति सूक्ष्मपरिमाणाय । अणोरणीयानिति श्रुतेः । अपरिगण्यं परिगणयितुमशक्यं धाम पराक्रमादिरूपं तेजो यस्य तस्मै । विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसीत्यादेः । महाननंतोऽनुभावः सामर्थ्यं यस्य तस्मै ते नमो नमोऽस्तु ॥ ८ ॥ हे पुरुषर्षभ क्षराक्षर-पुरुषोत्तम । तवैतद्रूपं श्रेयोऽर्थिभिः सर्वपुरुषार्थकांक्षिभिर्वैदिकतांत्रिकैः श्रुतिपंचरात्र्यादिवाक्यैरीड्यं स्तुत्यं । हे धातर्विश्वमूर्ते । जगल्लक्षणशरीरवान् अमुष्मिंस्तस्मिंस्ते शरीरे त्रिलोकांस्त्रिलोकस्थितजनैः सह नोऽस्मान् अहं योगेन त्वद्ध्यानादिजपुण्येन पश्यामि । त्वमस्माकं सर्वाभिष्टप्रदो भव ॥ ९ ॥ हे पुरुषर्षभ हरे । अग्रे महाप्रलये इदं जगदात्मतंत्रे स्वतंत्रे त्वयि त्वदुदरे स्थितमासीत् । त्वमस्य जगतो घटस्य मृत्स्नेव मृत्तिकेवादिरुत्पादको मध्यं स्थितिहेतुरंतः संहारकः । तत्त्वं परस्माद्ब्रह्मादिचेतनराशेः पर उत्तमः । अग्निर्वै देवानामवमो विष्णुः परमः । विष्णुमुखा वै देवा इत्यादि श्रुतेः । अत एवाशेषाणां निःशेषाणां विशेषाणां ब्रह्मादीनां नामानि मुख्यतो यस्य सोऽशेषविशेषनामा । अनेन हिरण्यगर्भः समवर्तताग्रे एकोरुद्रो न द्वितीयोवतस्थ इत्यादिश्रुतिस्थहिरण्य-गर्भरुद्रादिशब्दवाच्योऽपि त्वमेवेति विष्णुरेव सर्वजगत्सृष्ट्यादिकर्तेत्यस्य न ब्राह्मपाशुपतादि विरोध इत्युक्तं भवति । नामानि सर्वाणि यमाविशंति । यो देवानां नामधा एक एव । यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु । एवं च वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकजनैरित्यादि श्रुतिस्मृतिभ्यः । मृत्स्नामृत्स्नेत्यमरः ॥ १० ॥ हे हरे । त्वमात्मा-श्रयया स्वाधारस्वकीयया स्वाधीनया जडप्रकृत्यात्मकया मायया स्वया स्वरूपभूतमायया जडप्रकृतिनियामकशक्त्या चेदं विश्वं जगन्निर्माय सृष्ट्वा तदनुप्रविष्टो भवसि । अनेन तत्सृष्ट्वा तदेवानुप्राविशत् । यतो वा इमानि भूतानि जायंते येन जातानि जीवंती-त्यादि श्रुतिप्रतिपाद्यं जगज्जन्मादिकर्तृ परं ब्रह्म विष्णुरेवेति चतुर्मुखेनाविष्कृतं । नन्वेवं हरिर्जडप्रकृत्या जगत्सृष्ट्यादिकर्ता चेत्त-द्गुणसत्त्वादि सृष्ट्वा तत्र प्रविष्टः सन् तथा भूत इति वक्तव्यं । न चैतद्युक्तं । गुणप्रविष्टस्य गुणशक्तिविषयतया देवदत्तादिवदस्वातं-त्र्यादि दोषप्रसक्तेरित्याशंक्य चतुर्मुखो ज्ञानिनो युक्ताः परमात्मन्येव मनोयोगयुक्ताः संतो गुणव्यवाये सत्त्वादि गुणसमूहे स्थितमप्यगुणं सत्त्वादि गुणशक्त्यविदया तद्रहितं विपश्चितः श्रुत्यादिना परोक्षतो ज्ञानवंतः संतो मनसाऽपि तादृग्रूपं हरिं पश्यं-

तीत्यतो न विरोध इति समाधत्ते ॥ पश्यंतीत्यादिना । अवश्यं चैतदेवं विज्ञेयं । एवं द्रष्टॄणां मोक्षयोग्यत्वोक्तेस्तत्साक्षात्कारस्य भ्रमत्वशंकाऽनवकाशात् । हृदा मनीषा मनसाऽभिक्लृप्तो य एवं विदुरमृतास्ते भवंतीत्यादि श्रुतेः ॥ ११ ॥ हे हरे यथा मनुष्या एधसि काष्ठेऽग्निं गोषु धेनुष्वमृतं क्षीरादि भुव्यन्नमुर्व्याः पृथिव्या उत्खनने कृते सत्यंबूदकमधियंति जानंति तथा कवयो ब्रह्मादि ज्ञानिनो योगैः सच्छास्त्रादिरूपैरुपायैर्गुणेषु सत्त्वादिषु त्वामवयंति जानंति हि । अग्निदृष्टांतेन हरेर्गुणलेपराहित्यं काष्ठाग्न्यथाग्नेर्भेदः काष्ठस्यानारोपितत्वं तथा गुणानामपि सूचितं । अमृतदृष्टांतेन परमात्मनो नित्यमुक्तत्वं सारत्वरूपमुत्तमत्वं मुक्तिदत्वं च ध्वनितं । अन्नदृष्टांतेन सर्वोपजीव्यत्वमंबुदृष्टांतेन संतापपरिहारकत्वं च हरेर्ज्ञापितमिति ज्ञातव्यं ॥ १२ ॥ हे सरोजनाभ नाथ स्वामिन् । सर्वे वयं समुज्जिहानं भक्ताभीष्टप्रदानाय सन्नद्धमानं भक्तानामभिवृद्धिकरं चात एव चिरेप्सितं चिरं बहुकालमपेक्षितं । अथ बहुकालापेक्षितपुरुषार्थरूपं यं त्वां दृष्ट्वाऽद्य दवेनारण्याग्निनाऽऽर्ता दुःखिता गजा गांगं भागीरथिस्थमंभोजलं प्राप्येव निर्वृतिं सुखं गतास्म ॥ १३ ॥ हे बहिरंतरात्मन् नियामकतया सर्वजगत्स्वामिन् । स पूर्वोक्तगुणविशिष्टस्त्वं अखिललोकपाल। वयं यदर्था यत्प्रयोजनापेक्षासंतस्तव पादमूलं समागताः प्राप्तास्तद्विधत्स्व कुरुष्व । तत्प्रयोजनस्य भवद्भिरनुक्तत्वान्मम तज्ज्ञानं कथं स्यादिति परिहारं कर्तुं न शक्य इत्यभिप्रायेणाह । चतुर्मुखोऽशेषसाक्षिणः सर्वं साक्षात्कुर्वतस्तवाद्येदानीं विज्ञाप्यं किमस्तीति ॥ १४ ॥ हे द्विजदेवमित्र ईश स्वामिन् । अहं गिरित्रश्च रुद्रोऽपि ये च सुरादयो दक्षादयश्चाग्नेः केतवो ज्वाला इव तव सकाशादुत्पन्नास्त्वामाश्रिताश्च। अस्वतंत्राः किंकरा यतोऽतोऽसुरपीडितानामिंद्रादीनां किं वा साधनं विधेम करिष्याम । इंद्रादिभिर्विभाविता ध्यानादिना सेविता अपि वयं तदिष्टकरणासमर्थाः । नन्वग्नेः केतव एव मत्सकाशोत्पन्नमत्स्यकूर्मवद्भवतामपि सुरकार्यसाधकत्वं किं न स्यादित्याशंक्याह । वयं त्वत्तः पृथगत्यंतभिन्नाश्च मत्स्यादिवदभिन्ना अतो नोऽस्माकं शं सुखं यथा स्यात्तथा त्वं विधत्स्व ज्ञापय । पृथगुपदेशात् । पृथग्भूतान्यनेकशः । भिन्नोऽचिंत्यः परमो जीवसंघादित्यादि श्रुत्येत्युक्त एवार्थः ॥ १५ ॥ एवमुक्तरीत्या विरिंचादिभिरीडितस्तुतो हरिस्तेषां विरिंचादीनां हृदयं मनो यथा वर्तते तथैव तद्विज्ञाय बद्धांजलीन्संवृत आच्छादितः सर्वकामान् । सर्वापेक्षा येषां ते तथा तान् ब्रह्मादीन्प्रति जीमूतगभीरया मेघध्वनिवद्गंभीरया गिरया वाचा जगाद ॥ १६ ॥ सुराणां ब्रह्मादीनामीश्वरः

स्वामी नारायणस्तस्मिन्सुरकार्ये विषये यद्यपि स्वयमेक एवान्यसहायरहित एव कर्तुमीश्वरः समर्थः। तथाऽपि ब्रह्मादिभिः समुद्रोन्मथनादिभिर्विहर्तुकामः संस्तान्प्रत्याह ॥ १७ ॥ हे ब्रह्मन् चतुर्मुख शंभो महादेव हे देवा इंद्रादयः। गुयं। सर्वे वो युष्माकं यथा येनप्रकारेण श्रेयः पुरुषार्थः स्यात्तथा मम भाषितमवहिताः स्वस्थांतःकरणाः संतः शृणुत। तच्छ्रवणाद्वो हंता हर्ष एव स्यादतः पुरा प्रथमं तच्छ्रुणुतेति ॥ १८ ॥ हे ब्रह्मादयः। वो युष्माकमात्मनः परमात्मनः सकाशाद्भवः कल्याणं स्वस्थतया स्थितिश्च यावत्स्यात्तावत्कालेन सत्यसंकल्पतो विष्णुनान्यथा तु करिष्यतीत्यादि प्रमाणसिद्धसंकल्पेन हरिणा प्रेरितप्रसिद्धकालेनानुगृहीतैः प्रबलीकृतैर्यातुधानै राक्षसैर्दैतेयैश्च संधिं संधानं विधीयतां क्रियतां। भवो भद्रे च संतापामिति नानार्थमुक्तमाला। कालाख्यरूपिणस्तवेति दशमस्कंधोक्तेः कालशब्दवाच्यत्वं हरेरपि ज्ञेयं ॥ १९ ॥ हे देवाः स्वेषां कार्यार्थगौरवे कर्तव्यप्रयोजनस्य महत्वे सति अर्थस्य प्रयोजनस्य पदवीं मार्गं गतैर्जनैररयः शत्रवोऽपि अहिमूषकवत्संधेयास्तात्कालिकसमाधानवचनैर्वशीकर्तव्याः। यावन्मयूरसंत्रस्तः सर्पो मूषकवेश्मानि। निलीय निर्भयः पश्चाद्भक्षित्वा मूषकं गत इति तांत्रिकोक्तोऽहिमूषकन्यायो ज्ञेयः। अथ च सर्पग्राहेण केनचित्पुरुषेण सर्पमूषकौ गृहीत्वा कस्यांचिन्मंजूषायां स्थापितस्तत्रातिक्षुधितसर्पोऽत्रैकमूपकभक्षणादप्यस्माद्बंधनाद्बहिर्गत्वाऽनेकतद्भक्षणमेवोचितं मत्वा स्वसाहायमूषकेणालोचनमकरोत्। रे त्वं मूपक। त्वं मे शिरसि स्थित्वा तदूर्ध्वभागं खादि च छिद्रं कुरु तेनावां बहिः सुखवंतो स्याव इति यथाऽहिर्मूषकेन संधानमकरोत्तथेत्यप्याहिमूपकन्यायमाहुः ॥ २० ॥ हे देवाः। युष्माभिरमृतस्योत्पादने यत्नोऽविलंबितं शीघ्रं क्रीयतां। पीतस्य यस्यामृतस्य बलान्मृत्युग्रस्तः संभावितमरणोऽपि जंतुः प्राण्यमरो मरणरहितो भवेत् ॥ २१ ॥ हे देवाः। यूयं क्षीरस्योदधौ समुद्रे सर्ववीरुधो भूम्यामेव प्रसरंत्यो लतातृणानि लतावृक्षाद्यारूढवल्लीः क्षिप्त्वा मंदरं पर्वतं मंथानं मथनसाधनकाष्ठसंमितं कृत्वा वासुकिं सर्पं नेत्रं मथनकाष्ठपरिवेष्टनरज्जुं कृत्वा दैत्यैः सहातंद्रिता आलस्यरहिताः संतः क्षीरोदधिं निर्मथध्वं। तत्र दैत्याः क्लेशभाजो भविष्यंति यूयं तु मया सह येन निमित्तेन फलग्रहाः फलभागिनो भविष्यथ ॥ २३ ॥ हे सुराः। यूयमसुरा यदिच्छंति तदनुमोदध्वं। सर्वेऽर्थाः पुरुपार्थाः सांत्वया समाधानेन यथा सिध्यंति न तथा संरंभेणासमाधानेन सिध्यंति ॥ २४ ॥ हे सुराः। वो युष्माभिर्जलधिसंभवात्कालकूटाद्विषान्न भेत्तव्यं जातु

कदाचिदपि समुद्रोत्पन्नवस्तुषु लोभो न कार्यो रोषः कोपः कामस्तु कामोऽपि न कार्यः ॥ २५ ॥ हे राजन्। भगवान्पुरुषोत्तमो देवान्प्रतीति सामादिश्य ज्ञाप्य यतः स्वयं स्वच्छंदगतिः स्वेच्छाधीनप्रवृत्तिरत ईश्वरो हरिस्तेषां देवानामंतर्दधेऽदृश्योभूत् ॥ २६ ॥ अथ हरेरदर्शनानंतरं पितामहश्चतुर्मुखो भवो रुद्रश्च तस्मै भगवते नारायणाय नमस्कृत्य स्वं स्वं धाम सत्यलोककैलासरूपमाश्रयं जग्मतुः। सुराश्चेंद्रादयो बलिमीयुः प्राप्ताः ॥ २७ ॥ संधिविग्रहकालवित्संधानविरोधकालज्ञो दैत्यराड्बलिरथ स्वसमीपगमनानंतरं संपन्नान्स्वसमीपप्राप्तान् अरीन् शत्रून् देवान्दृष्ट्वा जातक्ष्वेलान् जातदर्पान् जनितसिंहध्वनींश्च स्वनायकान्स्वसेनानायकान् स्वः स्वयं नायकः स्वामी येषां ते तथा तान् स्वभृत्यान्दैत्यान् दृष्ट्वोच्चैरत्यंतं न्यषेधयत्क्ष्वेलादि मा कुरुध्वमिति न्यवारयत् । दृष्ट्वारीन्नप्यसंपन्नानिति पाठेऽसंपन्नानैश्वर्यरहितानरीन्दृष्ट्वाऽपीति योजना । शेषं पूर्ववत् । क्ष्वेलोऽदर्पे सिंहनाद आस्फोटे भुजसविथनोरिति मुक्तमाला । इंद्रादयो देवाः स्वसभायामासीनमुपविष्टमसुराणां यूथपैः समूहरक्षकैर्गुप्तं रक्षितं परमयोत्कृष्टया श्रिया संपदा जुष्टं सेवितं । जिता अशेषाः सर्वलोका येन स तथा । तं वैरोचनं विरोचनाख्यासुरसुतं बलिमुपागमन् ॥ २९ ॥ तत्र महेंद्रः शचीपतिः पुरुषोत्तमाद्यत्स्वशिक्षितं तदेव सर्वमभ्यभाषत । यतः स्वयं महामतिरत एव श्लक्ष्णया क्षरतः सूक्ष्मया मृदुभूतया च वाचा बल्यादीन्सांत्वयित्वाऽभ्यभाषत ॥ ३० ॥ दैत्यस्य बलेर्भृत्यास्तथा तत्र सभायामुपविष्टशंबरारिष्टनेमित्रिपुरवासिप्रभृतयो येऽन्येऽसुराधिपास्ते सर्वे तन्महेंद्रोक्तमन्वरोचंत प्रीत्यांऽगीचक्रुः ॥ ३१ ॥ ततोंऽगीकारानंतरं देवासुराः परस्परं कृतं सौहृदं स्नेहो यैस्ते। तथा संतः संविदं यूयं वयं च मिलित्वा समुद्रमथनं कुर्म इति संकेतं कृत्वाऽमृतार्थे परमुद्यममुद्योगं चक्रुः ॥ हे परंतपेति शुकः परीक्षितं संबोधयाति ॥ ३२ ॥ अन्येषां दुःशकः प्राप्तुमशक्यो मदो येषां ते दुर्मदास्ते देवासुरास्ततः संकेतानंतरं मंदरगिरिमंजसा सम्यगनायासेनोत्पाट्य यतः परिघवदृढतरबाहवः शक्ताश्चातस्तं गृहीत्वाऽपि नदंतः संत उदधिं क्षीरसमुद्रं निन्युः प्रापितवंतः ॥ ३३ ॥ शक्रवैरोचनादयो देवेंद्रबलिप्रभृतयो दूरं भारोद्वहनभारभूतमंदरपर्वतधारणेन श्रांताः संतोऽत एव विवशाः परवशाः संतस्तं मंदरं वोढुं धर्तुमपपारयंतोऽसमर्थाः संतः पथि मार्गे तं मंदरं जहुस्त्यक्तवंतः ॥ ३४ ॥ कनकाचलः स गिरिर्मंदरस्तावत्तदा निपतन्सन् महता भारेण निमित्तेन बहूनमरदानवांश्चूर्णयामास ॥ ३५ ॥ तत्र तदा भगवान्नारायणस्तानमरदानवांस्तथा तेन प्रकारेण

भग्नबाहूरुकंधरान् अत एव कर्तव्ये भग्नमनसश्चाज्ञाय नाम्ना गरुडध्वज इति रूपवानाविर्बभूव ॥ ३६ ॥ स गरुडध्वजो गिरिपातविनिष्पिष्टानमरदानवान्विलोक्येक्षया स्वकृपादृष्ट्या जीवयामास । तत्रापि निर्जरान्देवान्यथा पूर्वं व्रणरहितास्तथा विव्रणान् पर्वताभिघातजक्षतताच्चिन्हराहितान् । चकारेति शेषः ॥ ३७ ॥ गरुडध्वजो गिरिं मंदरमेकेन हस्तेन लीलयाऽनायासेन गरुडे आरोप्य स्थापयित्वा स्वयमप्यारुह्य सुरासुरगणैर्वृतः सन् अब्धिं क्षीरसमुद्रं प्रति प्रययावगच्छत् ॥ ३८ ॥ पततां पतनं कुर्वतां पक्षीणां श्रेष्ठः सुपर्णनामा गरुडः स्वस्य स्कंधाद्गिरिं मंदरमवरोप्यावतारयित्वा जलांते क्षीरसमुद्रोदकमध्ये उत्सृज्य हरिणा गरुडध्वजेन विसर्जितस्त्वं गच्छेति त्यक्तः सन् स्वस्थानं ययौ । अनंतोढो मंदरस्तु यदा वैवस्वतेंऽतरे । अमृतार्थे सुपर्णोढो रैवतस्यांतरे मनोरित्यत्र तात्पर्यसूचनाय सुपर्ण इत्युक्तं । एवं च वैवस्वतमन्वंतरे रैवतमन्वंतरेऽप्यमृतार्थं क्षीरसमुद्रमथनं कृतं । तत्र रैवतमन्वंतरे सुपर्णनामकेन गरुडेन मंदरो धृतः । वैवस्वतांतरे त्वनंतनाम्ना गरुडेनेति विशेषो ज्ञातव्यः ॥ ३९ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ८—६ ॥ ॥

॥ हरिः ॐ ॥ ते देवासुरा नागराजं वासुकिनामसर्पं फलभागेन भागशः फलदानं प्रतिज्ञयामंत्र्य कथयित्वा तं वासुकिं नेत्रं रज्जुरूपं तस्मिन्गिरौ मंदरे परिधाय वेष्टयित्वा मुदान्विताः संतोऽब्धिं क्षीरसमुद्रं । ममंथुरिति शेषः ॥ १ ॥ हे कुरूद्वह । सुरा असुराश्च यत्ताः सन्नद्धाः संतोऽमृतार्थे एवमब्धिं मथितुमारेभिरे उपक्रांतवंतः । तस्मिन्समये हरिर्गरुडध्वजो वासुकेः पुरस्तान्मुखभागं जगृहे यतस्ततो देवाश्च तद्भागग्रहा अभवन् ॥ २ ॥ दैत्यपतयो महापुरुषस्य गरुडध्वजस्य तद्देवैः सह वासुकिमुखभागग्रहणरूपचेष्टितं व्यापारं नैच्छन्न संमतिं चक्रुः । वयमहेर्वासुकेरमंगलं पुच्छं बालं न गृह्णीमः । सर्पदशनभयेन बालं जग्रहुरित्यपयशशंकया तद्बालस्यामंगलत्वमाहुर्दैत्या इति ज्ञेयं ॥ ३ ॥ यतो वयं स्वाध्यायश्रुतेन ऋगादि वेदश्रवणेन संपन्ना गुणकर्मभिः प्रख्याताश्च तदेतन्न गृह्णीम इति तूष्णीं स्थितान्दैत्यान्पुरुषोत्तमो विलोक्य स्मयमानो मंदहासं कुर्वन्सन् अमरैः सहितः सन् अग्रं मुखं विसृज्य पुच्छं जग्राह । कश्यपनंदनास्ते देवासुरा एवं कृतस्थानस्य मुखपुच्छादिरूपस्य विभागो यैस्ते तथा संतः परमायत्ताः संतोऽमृतार्थं पयोनिधिं ममंथुः । एवमर्णवे मथ्यमाने सति सोऽद्रिर्मंदरो यतोऽधस्तादाधाररहितस्ततोऽपोचलनादपोऽ-

विशत् । जलेष्वमज्जत ॥ ६ ॥ हे पांडुनंदन । यदा मंदरो बलिभिर्बलिष्ठैर्देवासुरैर्ध्रियमाणो धार्यमाणोऽपि गौरवाद्भरत्वादेवमपोऽविशत् । तदा ते देवासुराः स्वपौरुषेऽतिबलीयसा दैवेन स्वादृष्टप्रेरकेण हरिणा नष्टे भग्ने सति सुनिर्विण्णमतिविभ्रांतं मनो येषां तथा सन् परिम्लानं मुखवर्चोलक्षणरसरहितं यन्मुखं या च श्रीस्तत्कांतिस्तद्वंत आसन् ॥ ७ ॥ दुरंतवीर्योऽवितथाऽव्यर्थोऽभिसंधिरिच्छा यस्य स ईश्वरो हरिर्विघ्नेशस्य गतिं मंदरपर्वतस्य जलमज्जनहेतुभूतां गतिं प्रवृत्तिं विलोक्य महत्काच्छपं कूर्मसंबंधि वपुः कृत्वा तोयं क्षीरोदजलं प्रविश्य गिरिं मंदरमुज्जहार । हरेः सामर्थ्यातिशयप्रकटनाय हरिप्रेरणयैव विघ्नराजेन मंदरमज्जनमकारीति तात्पर्यं ज्ञेयं ॥ ८ ॥ सुरासुरा उच्छ्रितमुद्धृतं कुलाचलं तं मंदरं वीक्ष्य क्षीरसमुद्रं निर्मथितुं समुत्थिताः । स कूर्मरूपी हरिरपरो महान्द्वीप इव लक्षयोजनप्रस्तारिणा विस्तारवता स्वपृष्ठेन मंदरं दधार ॥ ९ ॥ हे अंगप्रिय । सुरासुरेंद्रैः स्वभुजवीर्येण वेपितं कंपितं स्वपृष्ठतः पृष्ठे परिभ्रमंतं गिरिं मंदरं बिभ्रत्साकल्येन प्रमातुमशक्यतयाऽप्रमेय आदिकच्छप आदिकूर्मस्तस्य मंदरस्यावर्तनं परिभ्रमणमंगस्य शरीरस्य कंडूयनं कंडूतिपरिहाराय कृतनखादिस्पर्शतुल्यं मेने ॥ १० ॥ न विद्यते बोधस्तत्तत्कार्यज्ञानं येषां ते तथा तान् रूपयति तत्तदुपायं बोधयतीत्यबोधरूपोऽबोधोऽज्ञानं भवत्यस्मादित्यबोधस्तमोगुणस्तत्प्रेरयतीत्यबोधरूपो विष्णुस्तेषामसुराणां बलं शारीरं वीर्यं पराक्रमं चेरयन्प्रेरयन्नसुराणामिदं नियामकमित्यासुरं तेन रूपेणासुरानाविशत् । तथा देवगणांश्चोद्दीपयन् बलवीर्यतयाऽभिवृद्धयन् दैवनियामकतया दैवेन रूपेणाविशन्नागेंद्रं वासुकिं नागरूपेणाविशत् । तत्तन्नाम्नोच्यते विष्णुः सर्वशास्त्रत्वहेतुत इत्यादेः ॥ ११ ॥ दिव्यंतरिक्षे ब्रह्मा चतुर्मुखो भवो रुद्र इंद्रस्त एव मुख्या येषां तैरभिष्टुवद्भिः संस्तुवद्भिः सुमनोभिः पुष्पैरभिवृद्धः सहस्रबाहुरन्यो रूपांतरधारी अगेंद्रं पर्वतश्रेष्ठं मंदरमुपर्यूर्ध्वभागं हस्तेनाक्रम्यान्यो गिरिराडिव तस्थौ । शैलवृक्षौ नगावगौ । स्त्रियां सुमनसः पुष्पमित्यमरः ॥ १२ ॥ नेत्रगोत्रयो रज्जुभूतवासुकिमंदरपर्वतयोराविशता मंदरस्योपर्यधश्च स्थितेनात्मानि स्वस्य शरीरे चाविशता परेण हरिणा समेधिताऽभिवर्धितास्त एव मदोत्कटा देवासुरा महाद्रिणा मंदरेण क्षोभितं चलीकृतं नक्राणां ग्राहादि जलचराणां चक्रं समूहो यस्मिंस्तमब्धिं तरसा वेगेन ममंथुः ॥ १३ ॥ पौलोमकालेयबलील्वलादयोऽसुरा अहींद्रस्य सर्पश्रेष्ठस्य वासुकेः करालानि क्रूराणि दिक्षु स्थितानि यानि मुखानि तेभ्यो श्वास-

द्वारा निस्सृतो योऽग्निस्तद्धूमेनाहतं वर्चः कांतिर्येषां ते तथा संतो दावाग्निदग्धा सरला इवाभवन् ॥ १४ ॥ भगवद्भर्त्विशा घना मेघाः समुद्रस्योर्मिभिस्तरंगैरुपगूढाः संबद्धाः शैत्यगुणोपेता वायवश्च मेघवायुनियामकदेवाः समुद्रोन्मथनोद्युक्तान्देवांश्च तस्य वासुकेः श्वासाग्निशिखाहतप्रभान् अत एव धूम्राणि धूमवर्णान्यंबराणि वस्त्राण्युष्णीषादीनि स्रजःपुष्पमालिका वराणि कंचुकानि च कंचूरूपवस्त्राणि येषां तान् दृष्ट्वा तेषु क्रमेणाभ्यवर्षन् ववुश्च । समित्युपसर्गेणाभिवर्षणस्य देवानुकूलतामाह ॥ १५ ॥ देवासुराणां वरूथानि सैन्यानि पातीति पास्तैर्मथ्यमानात्सिंधोः क्षीरसमुद्राद्यदा सुधाऽमृतं न जायेत नोत्पन्नं नोत्पत्स्यति चेति देवासुराणां बुद्धिरभूत्तदाऽजितनामा भगवान् स्वयं साक्षादब्धिं निर्ममंथ ॥ १६ ॥ मथनसमयेऽजितशोभाविशेषमाह ॥ मेघश्याम इत्यादिना । नीलमेघवच्छामः कनकस्य सुवर्णस्य परिधिः कांची सुवर्णस्य यस्य स तथा । परिधिः परिधाने स्यात्कांच्यां चेति रत्नमाला । कर्णयोर्विशिष्टो द्योतः प्रकाशो ययोस्ते कर्णविद्युते कुंडले तयोर्विशिष्टा द्युत्प्रकाशो यस्य स तथा मूर्धनि शिरसि किरीटेन प्रकाशमानविलुलिता वनस्रक् वनमाला तां धरतीति तथोक्तो गमनचलितवैजयंतीधरो रक्तनेत्रांतो जगतामभयदैर्जैत्रैर्जयशीलैर्दोर्भि-र्हस्तैर्दंदशूकं सर्पं वासुकिं गृहीत्वा मथ्ना मथनसाधनकाष्ठायितेन मंदरेणाब्धिमथ्नन् धृतोऽद्रिर्मंदरो येन तथा सन् प्रतिगिरिरिवाशो-भत । दंदशूको बिलेशय उरग इत्यमरः ॥ १७ ॥ देवासुरैर्निर्मथ्यमानात्संभ्रांता मीना उत्कृष्टमकरा अहयः सर्पाः कच्छपाः कूर्मास्तिमयो दशयोजनपरिमिता मीना द्विपा गजा ग्राहा नक्रास्तिमीन् गिलंति ग्रसंतीति तिमिंगिलाः शतयोजनपरिमिता मीना-स्तैराकुलाच्चंचलादुदधेः क्षीरसमुद्रादग्रतः प्रथमं महोल्बणं हालाहलाख्यं विषमभूदुत्पन्नं ॥ १८ ॥ अंग हे प्रिय । सेश्वराः स्वस्व-स्वामिसहिताः प्रजाजना असह्यवीर्यमुग्रवेगमत एव दिशि दिशि विसर्पत्प्रसरन् उपर्युत्सर्पदधश्चेति सर्वतो गच्छत्तद्विषं वीक्ष्य भीताः संत्यः केचिदरक्ष्यमाणाः संत्यः सदाशिवं शरणं दुद्रुवू रक्षकत्वेन तं प्राप्ताः ॥ १९ ॥ प्रजास्त्रिलोक्या भवाय मंगलायाभिमुखं देव्या पार्वत्याऽभियुतमद्रौ कैलासे मुनीनां मध्य आसीनं स्वस्यापवर्गहेतोर्मोक्षार्थं तपो जुषाणं कुर्वाणं देवानामिंद्रादीनां वरमुत्तमं महादेवं श्रुतिभिर्महादेवाय धीमहीत्यादिभिः स्तुवंत्यः प्रणेमुर्नमश्चक्रुः ॥ २० ॥ अत्र प्रजाः श्रीपार्वतीपतिं तदंतर्यामिणं शिवाख्यं नारा-यणं च मोक्षायोग्यानां संसारिणां तमोयोग्यानां च हरिहरयोर्भेदविषये संदेहविपर्ययजननाय संकलय्य स्तुवंति । अत्र चांत-

रंगाद्युपपत्तिभिरयमेवार्थ इति विज्ञायेत । तथाहि । हे देवानामिंद्रादीनां देवभूतानां प्रमथानामात्मन् स्वामिन् । भूतानि स्थावरप्राणिनो भावयत्युत्पादयतीति भूतभावन । हे महादेव पार्वतीपते त्वच्छरणापन्नान्नस्त्रैलोक्यदहनादिपात्त्राहीत्यधिष्ठानभूतरुद्रस्तुतिः ॥ २१ ॥ तदंतर्यामिदृष्ट्या स्तुवंति ॥ त्वमेक इत्यादिना । हे शिवांतर्यामि नारायण । त्वमेक एव सर्व जगतो ब्रह्मरुद्रादिलक्षणस्य बंधमोक्षदाने ईश्वरः समर्थः । अत एव कुशलाः स्वपुरुपार्थेष्वभिनिविष्टाः प्रपन्नार्तिहरं गुरुं श्रुत्यादिभिर्हितोपदेष्टारं तं पूर्वोक्तगुणविशिष्टं त्वामर्चयंति । न हीयं स्तुतिः पार्वतीपतौ संभवति । तस्य नारायणादिस्वातिरिक्तसर्वचेतनबंधमोक्षदातृत्वस्य स्वमोक्षार्थं तपःकरणादिना बाधितत्वात् । न हि स्वातिरिक्तसर्वमोक्षादिदः स्वमोक्षार्थं तपःकुर्यात् । सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने । बंधमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडिति स्कांदपुराणवचनात् । अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः । आनंददश्च मुक्तानां स एवैको जनार्दन इति वचनाच्च । यत्तच्छिवाख्यं परमात्मतत्त्वं देवः स्वयंज्योतिरवस्थितिस्त इत्युत्तरग्रंथे । हे देव महारुद्र । यद्यस्मात्ते तव चावस्थितिरवस्थानं तत्परमात्मतत्त्वं शिवाख्यं स्वयंज्योतिः स्वप्रकाशो नारायण इति । न ते गिरित्रेत्यत्र च । हे गिरित्र गिरिश । ते हृदि यत्परंज्योतिर्नारायणाख्यं ब्रह्मवर्तते तदखिला ये लोकपाला इंद्रादयो विरिंचश्चतुर्मुखो वैकुंठाख्याः सुरेंद्राः शुभ्राख्याद्दषेर्विकुंठायां जाता वैकुंठैःसुरसत्तमैरेतत्स्कंधप्राक्तनपंचमाध्यायोक्तैश्च गम्यं साकल्येन ज्ञातुमशक्यमिति च विस्पष्टं रुद्रांतर्यामिहरिस्तुतिप्रतीतेश्च प्रजानामभिमुखतयास्थितरुद्रांतर्यामिण्यपि । अंतर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि सर्वे शब्दाः प्रयुज्यंते सति भेदेऽपि वस्तुष्वित्यादि प्रमाणैस्त्वमित्याद्युपपत्त्याऽस्मदुक्तार्थो युक्त इत्यास्तां तावत् ॥ २२ ॥ हे भूमन्पूर्ण । रुद्रांतर्यामिन्विष्णो । यदाऽस्य जगतः सत्त्वादिगुणमय्या सत्त्वगुणनियामिकया स्वशक्त्या सर्गस्थित्याप्ययान् उत्पत्तिस्थितिसंहारान् धत्से विधत्से करोषि । तदा स्वयमेव स्वं साकल्येनैक्षत इति स्वदृक् क्रमेण ब्रह्माविष्णुशिवाभिधां धत्से धारयसि । अत्रायं विवेकः । चतुर्मुखे ब्रह्मरूपेण स्थित्वा सर्गं करोषि विष्णवभिधेन साक्षाद्रूपेण स्थितिं शिवनामकेन रुद्रे प्रविष्टरूपेण संहारमिति । ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । अहं ब्रह्मा च शर्वश्च जगतः कारणं परं । आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः । आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज । सृजन् रक्षन्हरन्विश्वं दध्रे संज्ञाः क्रियोचिताः । इत्यादि समाख्यानात् । सत्त्वादि गुणनियामकशक्त्या

जगज्जन्मस्थितिसंहारकर्तृत्वं विष्णोरेव मुख्यं । निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । ब्रह्मा च शर्वश्च कालाख्या रूपिणस्तवेति दशमस्कंधे चतुर्मुखरुद्रयोरीश्वरं प्रति तयोः प्रत्येकं सृष्टिसंहारमात्रकरणयोर्मध्ये शिवस्येशशब्दितहरिणा क्रियमाणजगत्संहारनिमित्तमात्रत्वस्य विस्पष्टत्वाच्च । भूमा संप्रसादादध्युपदेशादिति सूत्रभाष्यादौ भूम शब्दस्य विष्ण्वेकनिष्ठत्वावगमाच्चात्रस्तूयमानो विष्णुरेव न तु पार्वतीश इत्यविवादं ॥ २३ ॥ तमेव विष्णुं स्तुवंति । हे भूमन् विष्णो । गुह्यमतिरहस्यं परमं ब्रह्म त्वमेव । नारायणपरं ब्रह्म परंधाम परमं महद्ब्रह्म इत्यादि प्रत्यक्षश्रुतिस्मृतिभ्यः । सदसतां पृथिव्यादि पंचभूताख्यानां भावानां भावनमुत्पादकं । आत्मन आकाशः संभूत इत्यादेः । यदन्यद्वायोश्चांतरिक्षं चैतदिति माध्यंदिन श्रुत्यादेः । नानाशक्तिभिः सृष्ट्यादिहेतुभिराभासः प्रकाशमान आत्मांऽतर्यामी जगदीश्वरः ॥ २४ ॥ त्वमेव शब्दयोनिः पूर्वोक्तानेकगुणविशिष्टतया ऋगादि शास्त्रप्रतिपाद्यो जगत आदिकालस्थित आत्मशब्दवाच्यस्त्वमेव । आत्मा वा इदमेक एवाग्र आसीदित्यादेः । प्राणेंद्रियद्रव्यगुणः स्वाधीनो भावः सत्तावतो यत्स्मात्स तथोक्तः । त्वमेव कालकृत्सत्यसंकल्पो यज्ञात्मा च सत्यं चिदानंदरूपं ऋतं सर्वदैकप्रकारेण स्थितं धारकत्वाद्धर्मः । यत्त्रिवृत् अकारउकारमकाररूपवर्णत्रयवद्यदक्षरमोंकाररूपं तत्प्रतिपाद्यं च त्वमेवेति । ॐ इत्येकाक्षरं ब्रह्मेति वेदे वेदांत आमनंति ॥ २५ ॥ अखिलानां देवातानां हविराधातरतयाऽऽत्मदेहस्थानां योऽग्निस्ते मुखं मुखाज्जातस्तदाश्रितश्च । मुखादिंद्रश्चाग्निश्चेत्यादि श्रुतेः । हे लोकभव सर्वलोकोत्पादक हरे । क्षितिं तवांघ्रिपंकजं पद्भ्यां भूमिरित्यादि श्रुतय आमनंति । अखिलदेवतानामात्मनः स्वामिनस्ते कालोगतिः । दिशश्च कर्णौ जलेशो वरुणो रसनं जिव्हं ॥ २६ ॥ हे भगवन् । नभोंऽतरिक्षं ते नाभिः । नाभ्य आसीदंतरिक्षमिति श्रुतिः । नभस्वान्वायुस्ते श्वसनं श्वासलक्षणप्राणे जन्यः । प्राणाद्वायुरजायतेति श्रुतिः । सूर्यस्ते चक्षुषि । चक्षोः सूर्योऽजायतेति श्रुतेः । जलं ते रेतो वीर्यस्थानीयं तवात्मा देहः परावरात्मनां मुक्तामुक्तचेतनानामाश्रयः । मुक्तानां परमा गतिरित्यादेः । सोमश्चंद्रस्ते मनः । चंद्रमा मनसो जात इति श्रुतेः। द्यौस्ते शिरः । शीर्ष्णो द्यौः समवर्तत इति श्रुतेः । यथाहि पौरुषं सूक्तं नित्यं विष्णुपरायणमित्यादि प्रमाणेन विष्ण्वेकविषयतया प्रमितपुरुषसूक्तसमाख्यया चात्र विष्णुरेव स्तूयत इत्यविवादं ॥ २७ ॥ हे त्रयीमयात्मन् ऋगादि वेदत्रये प्रधानचेतनतया प्रतिपाद्य । शिवांतर्यामिन् । वेदैश्च सर्वैरहमेव वेद्यः । नारा-

ओषधयः फलपाकांता व्रीहियवादयो वीरुधो लता रोमाणि तनुरुहस्थानीयाः । गायत्र्यादि सप्तछंदांसि तव सप्तत्वगादि धातवो धर्मदेवता यमस्तव हृदयं ॥ २८ ॥ इदानीमधिष्ठानभूतपार्वतीपतिं स्तुवंति । हे ईश पार्वतीपते । उपनिषत् ईशानः सर्वविद्यानामित्यादि रूपा तव पंचमुखानि मुखेभ्यो जाता । यैः । ईशानः सर्वविद्यानां । वामदेवाय नमो ज्येष्ठाय । अघोरेभ्यः । सद्यो जातं प्रपद्यामीत्यादि पंचमंत्रैरष्टोत्तरात्रिंशन्मंत्रसमुदायः कलारूपो जात इति शेषः । हे महादेव । यद्यस्मात्ते तवावास्थितिः कैलासाधिवासादि पदं प्राप्तं तत्ते हृद्यवस्थितं ज्योतिः शिवाख्यं परमात्मनो विष्णोस्तत्त्वं स्वरूपं । विष्णुरिति यावत् । अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वमिति श्रुतौ रुद्रो विष्णोर्देवस्य प्रभृथे पूजने कृते सति रुद्रियं रुद्रसंबंधिमहित्वं कैलासाधिपत्यादि रूपं विदे विविदे हि इति स्पष्टत्वात् । सर्वस्य चाहं हृदि संनिविष्टः । ज्योतिर्हृदयमाहितं यत् । यो वेद निहितं गुहायां । नारायणः परं ज्योतिरित्यादि श्रुत्यर्थपर्यालोचनायां प्रस्तुत-स्वयं ज्योतिषो विष्णुत्वावगमात् । आत्मा नारायणः परस्तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्मा स शिवः स हरिः सेंद्रः सोऽक्षरः परमः स्वराडित्यादि श्रुतिस्मृतिषूच्यमानपरमात्मनः । द्वाविमौ पुरुषौ लोके क्षराक्षर एव च । उत्तमः पुरुष-स्त्वन्यः परमात्मेत्युदाहृतः । यस्मात्क्षरमतीतोऽहमित्यादिना क्षराक्षरशब्दितरमाब्रह्मादिचेतनान्यचेतनस्य विष्णुत्वावगमात् । अय-मेवैतच्छ्लोकार्थः । न तु पार्वतीपतिरत्र शिवपरमात्मादि शब्दाभिधेयः । तस्य । हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽ-ब्जभवनाकपतीन् कुतोऽन्यानिति दशमोत्तरार्धे रुग्मिण्या । अद्भिः संभूतो हिरण्यगर्भ इति श्रुत्याऽब्जशब्दवाच्यतया संभावितेन चतुर्मुखेन सह भव शब्दवाच्यस्य नश्वरैश्वर्यत्वेनैतत्स्तुत्ययोग्यत्वात् ॥ २९ ॥ हे मृड रुद्र । अधर्मो निर्ऋतिस्ते छायाऽऽश्रितः । यैः सत्त्वादिभिर्विसर्गो जगस्थितिसृष्टिसंहारास्तानि सत्त्वरजस्तमांसि । ते नेत्रत्रयं साक्षान्मुख्यो मनुः स्वायंभुवः शास्त्रकृतः पाशुपतादिकर्तुस्तवेक्षा दृष्ट्याश्रयः । देवर्षिर्नारदस्ते तव छंदोमय इच्छानुसारी ॥ ३० ॥ हे गिरित्र कैलासपालक । पार्वतीश । ते हृदि स्थितं परंज्योतिः शिवाख्यं नारायणः । नारायणः परं ज्योतिरिति श्रुतेः । विरिंचो ब्रह्मा अखिललोकपाला निःशेष-

लोकपालका अष्टदिक्पालकैश्च वैकुंठसुरेंद्रः शुभ्राख्याद्विजाद्विकुंठायामुत्पन्नास्तैश्च साकल्येन गम्यं न । किमस्माभिः । यत्र परंज्योतिषि रजस्तमः सत्त्वं च गुणत्रयं च बाधकतया नास्ति । न हि द्वितीयो गुणसंगवर्जितः सृजत्यवत्यत्ति न बध्यतेऽजः । यद्ब्रह्म गुणपूर्णं । यच्च निरस्तभेदं । स्वावतारेष्वन्योन्याभावरूपपृथक्त्वशून्यं । अथ कस्मादुच्यते ब्रह्मेति बृहंतो ह्यस्मिन् गुणाः । मय्यनंतगुणे । नेह नानाऽस्ति किंचन । न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हीत्यादेः ॥ ३१ ॥ हे ईश रुद्र । कामो मदनोऽध्वरो दक्षयज्ञस्त्रिपुरा दैत्याः कालहराख्याद्या येऽनेकभूतद्रुहो बहुप्राणिद्रोहिणस्तान् क्षपयतः संहरतस्ते यच्चरितं तत्ते स्तुतौ नालं । यद्यस्मात्त्वमंतकाले प्रलयकाले आत्मकृतं स्वनिर्मितं जगत्स्वनेत्रवन्हेः स्फुलिंगैरग्निकणैः सहितया शिखया ज्वालया भसितं भस्मीकृतं ॥ ३२ ॥ हे ईश । येऽविवेकिन आत्मारामे स्वरमणे नारायणेऽभिविष्टांतःकरणतया गुरुभिः सनकादिभिः स्वहृदि चिंतितांघ्रिद्वंद्वमुमया सह तपसाऽभितप्तं धर्मांतरं च चरंतं कुर्वाणं त्वा त्वां स्मशाने निरतमुग्रवपुषमस्थिमालादिना भयंकरदेहं कत्थंतेऽतिक्रम्य वदंति निंदंति । ते भूतभूतिं प्राणिनामैश्वर्यप्रदं त्वामविदोऽज्ञानिनस्तव सकाशाज्जायमानभूतभूतिं न जानंति । ये ज्ञात्वाऽपि निंदंति ते हीनलज्जा लज्जाहीनाः ॥ ३३ ॥ हे ईश । यस्मात्सदसतः पंचमहाभूताभिमानिदेवेभ्यः परत उत्तमस्य तस्य ते हृदिस्थनारायणस्यांजः सम्यक् स्वरूपगमने ज्ञाने न ते गिरित्रेत्याद्युक्तरीत्या ब्रह्मादयोऽपि न प्रभवंति । तत्सर्गसर्गविषया ब्रह्मसृष्टस्वायंभुवादि सृष्टिविषया वयं न प्रभवाम इति किमुत । यद्यपीत्थं वयं स्तुतावशक्तास्तथाऽपि येयं स्तुतिः सा भक्तिमात्रं केवलं भक्तिः । न चात्र किंचिद्गुणोत्कर्षख्यापनं तदुचितमस्तीति भावः । नन्वत्र रुद्रस्वरूपमेव ब्रह्माद्यगम्यमित्युच्यत इति किं न स्यादिति चेन्न । अप्रामाणिकत्वात् । प्रत्युतास्मिन्स्कंध एव रुद्रेण नाहं परायू ऋषयो न मरीचमुख्याः । जानंति यद्विरचितं खलु सत्वसंघाः । यन्मायया मुषितचेतस एत्येत्यादिना स्वेन चतुर्मुखाद्यैश्च विष्णोरत्राज्ञेयत्वमुच्यते । अजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मीत्यादि दशमस्कंधादौ च ॥ ३४ ॥ हे महेश्वर । तव हृदि स्थितमेतच्छिवाख्यं नारायणं परं सर्वोत्तमं पश्यामः । तस्मात्परमुत्तमं न प्रपश्यामः । मत्तः परतरं नान्यत्किंचिदास्ति धनंजय । पुरुषान्न परं किंचित् । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमित्यादेः । अव्यक्तकर्मणोऽविचारेऽप्रतीतचरित्रस्य ते व्यक्तिर्जन्म लोकस्य जडस्य मृडनाय सुखाय । भवतीति शेषः ।

अनेन मदुत्तमत्वान्मदंतर्यामिनारायणस्तुतिवन्नारायणादुत्तमस्तुतिः किं न क्रियत इति निरस्तं । तदुत्तमाभावस्य प्रमापनात् ॥३५॥ एवं प्रजाभिः स्तुतः सर्वेषां भूतानां प्राणिनां सुहृदुपकारी देवो रुद्रस्तासां प्रजानां तद्व्यसनं क्लेशं वीक्ष्य जनितया कृपया भृशं पीडितो भृशमत्यंतं पीडितः संजातक्लेशः सतीं प्रतिव्रतां स्वस्य प्रियां पार्वतीं प्रतीदं वक्ष्यमाणमाह ॥ ३६ ॥ हे भवानि पार्वति । प्रजानामेतद्वैशसं क्लेशं त्वं पश्य । एतद्वैशस्यमहो आश्चर्यं । बत खेदो जायते । द्रष्टॄणामिति शेषः । उक्तक्लेशनिमित्तमाह । क्षीरोदमथनोद्भूतात्कालकूटाद्युपस्थितं वैशसमिति ॥ ३७ ॥ हे भवानि । प्राणपरिपालनेच्छूनामासां प्रजानामभयं भयपरिहरणं मे मया विधेयं । हीत्यस्य प्रामाणिकत्वं दर्शयन्नाह । प्रभोः समर्थस्य दीनपरिपालनं यत् । एतावान्हि इयानेवार्थः प्रयोजनं । हि हेताववधारण इत्यमरः ॥ ३८ ॥ अस्मिन्नर्थे सदाचारमाह । साधवः प्राणिन आत्मनो नारायणस्य मायया मोहनस्य मोहन-शक्त्या भ्रांतेष्वत एव स्वेषु बद्धवैरेष्वपि क्षणभंगुरैः स्वैः स्वकीयैः प्राणैर्भूतानि पांति संरक्षंति ॥ ३९ ॥ हे भद्रे । भूतेषु कृपयतो दयां कुर्वतः पुंसः सर्वेषां भूतानामात्मा स्वामी हरिः प्रीयते प्रीतो भवति । भगवति हरौ प्रीते सति सचराचरो जंगमस्थावर-चेतनसहितोऽहं प्रीतः संतुष्टो भवामि । मदादि सर्वचेतनानां सर्वैः स्वधर्मैः सर्वपुरुषार्थसाधनहरिप्रीतिरेवसंपाद्या । तत्कर्म हरितोषं यत् । किमलभ्यं भगवति प्रसन्ने श्रीनिकेतन इत्यादेः । अत्र सर्वात्मा हरिरित्यनेनांतर्यामि बृहदारण्ये पृथिव्याद्यंतर्यामित-योक्तो विष्णुरेवेति वेदनात् । स्वांतर्यामित्वमपि हरेः प्रकटितं । तेनात्र रुद्र एव परमात्मेत्याशंकाऽनवकाशः ॥ ४० ॥ तस्मा-द्धरिप्रीतिसद्भावादहं गरं विषं भुंजे । मे सकाशात्प्रजानां स्वस्ति क्षेमोऽस्तु । विश्वभावनो जगदुपास्यो भगवान् ऐश्वर्यादि षड्गुणवान् रुद्रो भवानीं पार्वतीं प्रत्येवमामंत्र्य कथयित्वा तद्विषं जग्धुं भक्षितुमारेभे उपक्रांतवान् । भवानी च यतो रुद्रस्य प्रभावं सामर्थ्यं जानातीति प्रभावज्ञाऽतो रुद्रकार्यमन्वमोदत सुखमनुज्ञातवती ॥ ४२ ॥ ततस्तदनंतरं भूतभावनो महादेवो जगद्व्यापि हालाहलं विषं भूतकृपया स्वस्य करतलीकृत्याभक्षयत् । वायुभक्षणावशिष्टं रुद्रोऽपिबादित्यत्र तात्पर्यं । मुख्यप्राण एवात्र प्रजाभिः प्रथमं प्रार्थितः समुद्रमथनोत्पन्नं विषं सुवर्णपात्रे स्वयं संपूर्यापिबत् । अविशिष्टं किंचिद्विषं स्वकराभ्यामुन्मथ्य रुद्रायादात् । वायुरस्मा उपामथ्य पिनष्टस्य कुनन्नम । केशी विशस्य पात्रेण यद्रुद्रेणापिबत्सहेत्यादि श्रुतेः । कलेरसुरश्रेष्ठस्याभिमन्यमानं शरीररूपं यत्कलमषं

विषं तत्तस्याप्युक्तरीत्या महानुभवस्य स्वल्पपायिनोऽपि रुद्रस्य स्ववीर्यं दर्शयामास । किं तद्विषदर्शितं सामर्थ्यमित्यत आह । गले रुद्रस्य कंठे नीलं नीलरूपं यच्चकारतदेव तत्सामर्थ्यमिति । तच्च तदपि नीलरूपं साधो रुद्रस्य विभूषणत्वमुपपादयति । साधवो जनो लोकतापेन जनसंतापेन स्वयं तप्यंत इति यत्तत् । अखिलानां चेतनानामात्मनोंऽतर्यामिणः पुरुषस्य पूर्णषड्गुणस्य हरेः परमाराधनं हीति । अंतर्बहिः पुरुषाकाररूपैरित्यादेरत्र सर्वचेतनांतर्यामिपुरुषशब्दितो विष्णुरेव ॥ ४४ ॥ प्रजा जना दाक्षायणी सती रूपा पार्वती ब्रह्मा चतुर्मुखो वैकुंठश्च विष्णुरपीत्येते देवानामिंद्रादीनां देवस्य मीढुषो भक्ताभीष्टवर्षकस्य शंभोर्महारुद्रस्य तद्विषपानलक्षणं कर्मकार्यं निशाम्य दृष्ट्वा शशंसिरे । हे रुद्र । त्वं समर्थ इति स्तुवंतः । वैकुंठश्चेत्यनेन विष्णोर्विषपानसामर्थ्ये सत्यपि मुख्यप्राणरुद्रयोः कीर्त्यभिवृद्धये तन्न पीतवानिति सूच्यते ॥ तदुक्तं ॥ रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं विभुः । न संजन्हे समर्थोऽपि वायुं चोचे प्रशांतये इति । प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः । पारतंत्र्याद्वै सादृश्याद्वयोः श्रेष्ठे चोष्टितमिति दशमस्कंधे मुख्यप्राणादीनां जगत्स्रष्टृणां शक्तीनां स्वतंत्रत्वेन प्रमितश्रीनारायणाधीनत्ववर्णनेन शास्त्रेणोपाध्यायमितिवत् । वायुर्यद्रुद्रेणापिबत्सहेति पूर्वमस्माभिरुक्तरीत्या विषपाने प्रधानाप्रधानयोर्मुख्यप्राणरुद्रयोर्विषपानादि शक्तीनामपि हर्यधीनत्वाविवादाच्चायमेवार्थो युक्तः ॥ विषं पिबतो रुद्रस्य पाणेर्यद्विषं किंचित्प्रस्कन्नं गलितं भूमौ पतितं तद्वृश्चिकाः प्रसिद्धाः कृमिविशेषा विषौषध्यो लांगलाद्या दंदशूका दंशनशीलसर्पा अपरे च व्याघ्रादयो ये विषदंतास्ते जगृहुः स्वीकृतवंतः । स्म हीति निपाताभ्यामस्य सामर्थ्यस्य श्रुत्यादिप्रसिद्धिं दर्शयति ॥ ४६ ॥ इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ॥ ८ ॥—७ ॥ ॥

॥ हरिः ॐ ॥ एवं रुद्रेण विषपाने कृते सति तेऽमरा दानवाः प्रीताः संतः सिंधुं क्षीरसमुद्रं तरसा वेगेन ममंथुः । ततो मथितात्समुद्राद्धविर्धान्यग्निहोत्रादि हविर्योग्यक्षीरादि दात्री कामधेनुरभवत् ॥ १ ॥ हे नृप । ऋषयस्त्रिकालदर्शिनो ब्रह्मवादिनः परब्रह्मप्रतिपादकवेदाध्ययनशीला मुनयोऽग्निहोत्रोपयुक्तां तां धेनुं यज्ञस्य देवानां पानस्य पानयोग्याय मेध्याय पवित्राय हविषे हविरर्थं जगृहुः । देवानां पानयोग्यं क्षीरादि यस्मिंस्तस्य यज्ञस्येति वा ॥ २ ॥ ततस्तदनंतरं क्षीरसमुद्राच्चंद्रवत्पांडुरः शुभ्रो नाम्नोच्चैःश्रवा हयोऽश्वोऽभूदुत्पन्नः । बलिर्विरोचनस्तस्मिन्नुच्चैःश्रवसि स्पृहामाकांक्षां चक्रे । ईश्वरस्य विष्णोः शिक्षयाऽऽज्ञया ।

इंद्रस्तत्स्पृहां न चक्रे ॥ ३ ॥ तत ऐरावताख्यो वारणानां गजानामिंद्रः श्रेष्ठः स्वस्य चतुर्भिर्दंतैः श्वेतपर्वतस्य भगवतोऽनुग्रहेण महाकांतिं हरन् सन्विनिर्गतः ॥ ४ ॥ तदनंतरं सुरलोकं स्वर्गं विभूषयतीति विभूषणः पारिजातो वृक्षोऽभवत् । यः पारिजातो भुवि भवान्यथा पार्थैर्भूम्यां स्थितैः पुरुषार्थैरर्थिनः पुरुषार्थकांक्षिणः पुरुषान् तथा पूरयति पूर्णान्करोति ॥ ५ ॥ ततो निष्कं कंठाभरणं कंठेषु यासां ताः सुवाससः स्वर्गिणां स्वर्गस्थप्राणिनां वल्गुगतिलीलावलोकनैर्मनोहरगमनक्रीडाकटाक्षदर्शनै रमण्यः सुखजनका अप्सरसो जाताः । ततो रमयति सुखयति स्वदर्शनादिनेति रमा भगवति विष्णौ परा तात्पर्यलक्षणभक्तिमती साक्षान्निरुपचारेण श्री शब्दवाच्या लक्ष्मीः । सौदामिनिकृता रूपा विद्युत्तटिद्यथा तथा स्वकांत्या दिशो रंजयत्यलंकुर्वति सत्याविरभूत् । अत्र साक्षाच्छ्रीरित्यनेन सर्गाभिमानिश्रीर्निवारिता आविरभूदित्यनेन लक्ष्म्या ज्ञानानंदात्मकदेहतया नारायणवत्प्रादुर्भाव एव । न तु देहोत्पत्तिरित्यसूचि ॥ ७ ॥ तस्यां लक्ष्म्यां ससुरासुरमानवाः सर्वे प्राणिनो रूपं सौंदर्यमौदार्यं महत्वं वयस्तारुण्यं वर्णो रूपं सुवर्णादि रूपं तेषां महिम्ना माहात्म्येनाक्षिप्तं स्थापितं चेतोऽन्तःकरणं यैस्ते तथा संतः स्पृहां चक्रुः ॥ ८ ॥ लक्ष्मीसौंदर्यादिना वशीकृतांतःकरणतयेंद्रादीनां तत्सेवाप्रकारमाह ॥ तस्याश्चेत्यादिना । महेंद्रस्तस्या अद्भुतमाश्चर्यकरं महदासनं महत्पूज्यमासनमानिन्ये । मूर्तिमत्यो देहधारिण्यः सरिच्छ्रेष्ठा भागीरथ्यादि देवता सुवर्णकलशैः शुचि निर्मलं जलमानिन्युः ॥ ९ ॥ भूमिदेवता अभिषेचनिका अभिषेकोचिताः सकलोषधीरहरदानीतवती । गावः पवित्राणि क्षीरादीनि पंचगव्यादीन्याहरन् । वसंतो माधवं चैत्रोत्पन्नं मध्वाहरत् ॥ १० ॥ ऋषयोऽभिषेकं यथाविधं कल्पयांचक्रुः कृतवंतः । गंधर्वा भद्राणि मंगलानि जगुर्नटा विद्याधरादयो ननृतुः किन्नराश्चजगुः ॥ ११ ॥ वाद्यघोषका मृदंगपणवमुरजानकगोमुखान्यवादयन् । शंखवेणुवीणानां तुमलान्संदडितान्निःस्वनांश्चक्रुः ॥ १२ ॥ ततो दिशा इभा गजा ऐरावताद्यः पूर्णकलशैर्ब्राह्मणोक्तैर्महाभिषेकसूक्तवाक्यैः पद्माकरां सतीं निर्दुष्टां श्रियमभिषिषिचुः ॥ १३ ॥ समुद्रो वरुणः पीतकौशेयवाससी हरिद्रावर्णकुशकृमिनिर्मितवस्त्रे । मत्ताः पुष्परसपानजमदोपेताः षट्पदा भ्रमरा यस्यास्तामत एव धुनानां चंचालयंतीं नानासुगंधपुष्पानिर्मितां स्रजं मालां च समुपाहरत् ॥ १४ ॥ प्रजापतिविश्वकर्मा देवशिल्पिर्विचित्राणि भूषणान्याहरत् । सरस्वती ब्रह्माणी हारं मुक्तासरमजो ब्रह्मा पद्ममाहरत् । नागाः सर्पाः

कुंडले कर्णाभरणेऽहरन् ॥ १५ ॥ ततस्तदनंतरं लक्ष्मीः कृतं स्वस्त्ययनं पुण्याहो यया सा सती । नदंतो ध्वनिं कुर्वाणो द्विरेफा भ्रमरा यस्यां सा तामुत्पलस्रजं पाणिना प्रगृह्य सुकपोलकुंडलं सुशोभनं व्रीडया लज्जया हासेन च सहितं वक्त्रं मुखं दधती सती चचार संचारं कृतवती ॥ १६ ॥ अतिकृशोदर्यत्वल्पमध्यदेशा निरंतरं घनं समं चंदनकुंकुमकेसराभ्यां भूपितं लिप्तं स्तनद्वयं च दधाना ततस्ततस्तत्र तत्र वल्गुभिर्मनोहरैः सिंजितैर्भूषणध्वनिभिः। भूषणानां तु सिंजितमित्यमरः । विसर्पती संचारं कुर्वती सा रमा हेमलतेव बभौ ॥ १७ ॥ सा लक्ष्मीर्निरवद्यं पारतंत्र्याद्यशेषदोषविदूरमव्याभिचारिणोऽतिव्याप्तिरहिताः संतुष्टेऽव्याप्त्यसंभवविधुर गुणाः शुभधर्मा यस्य तमात्मनः स्वस्य ध्रुवं सर्वदैकप्रकारतया स्थिरतरं पदमाश्रयीभूतं पतिं गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेशादिषु विलोकयंती सती नान्वविंदत न प्राप्तवती । त्रैविष्टपेया देवाः ॥ १८ ॥ गंधर्वादिषु स्वपतित्वायोग्यताविमर्शप्रकारमाह ॥ नूनं तपो यस्येत्यादिना सोऽप्यमंगल इत्यंतेन । यस्य तपः कायशोषणादिरूपं शरीरशोषणं प्राहुस्तपसामुत्तमं तप इत्यादि प्रमाणसिद्धमस्ति । तस्य पुरुषस्य मन्युनिर्जयः कोपजयो नास्ति । मन्युः क्रोधे क्रतौ दैन्य इति नानार्थरत्नमाला । नूनं निश्चयः । अनेन ऋषयो निराकृताः । क्वचित्पुरुषे ज्ञानमस्ति तज्ज्ञानं संगवर्जितं फलाकांक्षारहितं न। नूनमिति । अनेन बृहस्पत्यादयो निराकृताः । देवेषु कश्चिच्चतुर्मुखो महानस्ति । तस्य कामनिर्जयो नास्ति । प्रजापतिः स्वां दुहितरमभ्यध्यायादिति श्रुतेः । यः परतो व्यपाश्रयोऽन्याश्रितः स्वसंपदेऽस्य देवस्येति पूर्वोक्तश्रुतौ विष्ण्वनुग्रहेण प्राप्तपदो रुद्र ईश्वरः किं नेत्यर्थः । ईश्वरः सर्वभूतानामिति श्रुतिर्निरवकाशाऽस्य देवस्येति श्रुत्या बाधितार्थतया विवक्षितसर्वभूतेश्वरत्वं प्रतिवदतीति भावः ॥ १९ ॥ क्वचिद्यमादौ धर्मोऽस्ति । यस्य धर्मादेर्भूतेषु सौहृदं स्नेहो दया नास्ति । निर्दयव्यापारप्रवृत्तत्वात् । क्वचित्कुबेरादौ त्यागो द्रव्यदानमस्ति । तच्च त्यजनं तस्य मुक्तिकारणं न । कस्यचित्पुंस इंद्रादेर्वीर्यमस्ति । तच्चाजस्य हरेर्वीर्यात् । निष्कृतं निष्क्रांतमनाश्रयं न तदेवं नारायणं विना । समो गुणादिकार्यक्रोधादि दोषरहितः समस्तचेतनेष्वपि द्वितीयो नास्ति ॥ २० ॥ क्वचित्पुरुषे चिरायुरस्ति । शीलेन सत्स्वभावेन युक्तं मंगलं नास्ति । क्वचिच्च तदपि शीलं मंगलमप्यस्ति । तथाऽप्यायुष इयत्तावेद्यं ज्ञानं नास्ति । यत्र कुत्रचोभयमायुर्ज्ञानं चेत्युभयमस्ति सोऽपि कालांतरेण मरणवत्त्वेनामंगलः । कश्चन लोकविलक्षणः

सुमंगलः सर्वदा मांगल्ययुक्तः श्रीनारायणो मां कांक्षते । ययोरेव समं वित्तमित्यादि श्रुतिस्मृतिसिद्धसाम्यस्य द्वावेतौ नित्यमुक्ता-वित्यादि श्रुतिसिद्धत्वात् । मम सर्वकालेऽपि तत्स्त्रीत्वात् । मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमिति तदुक्तेरित्याद्यर्थे हि शब्देनाह । नारायणस्य सर्वचेतनवैलक्षण्यं सर्वदा मांगल्यं च । द्वाविमौ पुरुषौ लोके । उत्तमः पुरुषस्त्वन्यः । मंगलानां च मंगलमित्यादि भारतासिद्धं ।। २१ ।। रमैवं विमृश्य विचारं कृत्वाऽव्यभिचारिसद्गुणं निजैकाश्रयाः केवलं स्वाश्रिता भक्त्यादि सद्गुणवंतश्च ये मुक्तास्तेषामाश्रयं । मुक्तानां परमा गतिरित्यादेः । संसारिणां स्वभक्तानां मुकुंदं मोक्षप्रदं स्वसत्ताप्रतीतिप्रवृत्तिषु निरपेक्षं पराकांक्षारहितमीप्सितं सर्वदाऽपेक्षितं सर्वजनैः सर्वैः सौंदर्यादि गुणैरपेक्षितं परं सर्वोत्तमं श्रीनारायणं वरं पतिं वव्रे स्वीकृतवती ।। २२ ।। वरणप्रकारमाह ।। तस्येति । रमा तस्य श्रीनारायणस्यांसदेशे उशतीं मनोरमां भक्तानामभीष्टप्रदां च । माद्यतः पुष्परसपानमदोपेता ये मधुव्रता भ्रमरास्तेषां वरूथं स मूहस्तेषां गिरा वाण्योपघुष्टां ध्वन्युपेतां नवकंजमालां नूतनकमल-मालां निवीय प्रक्षिप्य व्रीडया लज्जया सहितो यो हासस्तेन विकसद्विस्तृतं यन्नयनं तेन तन्मुखारविंदं पश्यती भीता भयभक्ति-युता सति स्वधाम स्वगृहस्थानीयं तस्य हरेरुरो वक्षस्थलं च पश्यती सती निकटे समीपे तस्थौ । अनाद्यनंतकालेऽपि विष्णु-मेवाश्रिता रमा । अन्येषां ज्ञापनार्थाय दोषानुक्त्वेतरान् जहाविति प्रमाणात् । हरेरिदानीमेव लक्ष्मीप्राप्तिर्न पूर्वमिति न मंतव्यं । स्वस्याः श्रिय इत्युत्तरश्लोकाच्च ।। २३ ।। त्रिजगतो लोकत्रयस्य जनक उत्पादकतया पितुः स्थानीयो जनन्या मातुःस्थानीयाया विभूतेरैश्वर्याभिमानिन्या अनादिकाले स्वस्याः श्रियः स्वकीयपत्न्याः श्रीदेव्याः स्ववक्षस्थलं परमं निवासमुत्तमवासस्थलमकरोत् । श्रीर्यत्र हरेर्वक्षस्थले स्थिता सति साधिपतीन् सस्वामिचतुर्मुखादिसहितान् त्रिलोकान् लोकत्रयस्थजनान् यतस्ते जनाः स्वाः स्वकीयाः प्रजा अत एव सकरुणेन कृपायुक्तेन निरीक्षणेनावलोकनेनैधयताऽभिवृद्धैश्वर्ययुक्तानकरोत् ।। २४ ।। तस्मिंल्लक्ष्मीनारा-यणविवाहोत्सवे शंखादि वाद्यानां स्वनो ध्वनिः सस्त्रीणामप्सरसहितानां नृत्यतां विद्याधराणां गायतां देवानुगानां गंधर्वाणां ध्वनिश्च पृथक् प्रत्येकमभूत ।। २५ ।। ब्रह्मरुद्रांगिरसमुख्याः श्रेष्ठा येषां ते सर्वे विश्वसृजो विभुं हरिं पुष्पवर्षिणः संतस्तल्लिंगै-र्हर्यसाधारणधर्मप्रतिपादकैरवितथैरनुपचरितार्थैर्मंत्रैर्विष्णोर्नुकं वीर्याणीत्यादिरूपैरीडिरे तुष्टुवुः ।। २६ ।। प्रजापतिना चतुर्मुखेन

सहिताः सप्रजापतयो देवा रुद्रादयस्तदितरप्रजाश्च श्रियाविलोकिताः संतः शीलादिगुणसंपन्नाः संतः परामुत्तमां निर्वृतिं मुदं लेभिरे ॥ २७ ॥ यदा दैत्यदानवा लक्ष्म्योपेक्षितास्तदा यतो निःसत्त्वा अतो निरुद्योगा अपि यतो गतत्रपा अतो लोलुपा बभूवुः । निःसत्त्वाः शरीरशक्तिरहिता अतो निरुद्योगाश्च यतो गतत्रपास्त्यक्तलज्जा अतो लोलुपाश्च लक्ष्म्याकांक्षावंतश्च बभूवुरिति वा ॥ २८ ॥ अथ वारुणी सुराभिमानी देवता कमललोचनकन्योत्पन्ना । तामसुरा हरेरनुमतेन संमत्या जगृहुः ॥ २९ ॥ अथासुरैर्वारुणीस्वीकारानंतरममृतार्थिभिः काश्यपैः कश्यपपुत्रैः सुरासुरैर्मथ्यमानादुदधेः क्षीरसमुद्रात्परमाद्भुतोऽत्याश्चर्यकरः पुरुष उदतिष्ठदुत्तस्थौ । हे महाराजेति परीक्षित्संबोधनं । उदतिष्ठादित्यनेनोक्तं प्रादुर्भावाभिज्ञतया स्तुत्यर्थं ॥ ३० ॥ उत्थितं पुरुषं विशिनष्टि ॥ दीर्घेत्यादिना । दीर्घा आजानाववलंबिनः पीवराः पुष्टा दोर्दंडा दंडवत्पराशिक्षणदक्षा हस्ता यस्य सः कंबुवच्छंखवद्वलित्रयोपेता ग्रीवा यस्य सः । अरुणे कमलदलगर्भवद्रक्ते ईक्षणे नेत्रे यस्य सः । शामलो नीलमेघश्यामस्तरुणः षोडशवार्षिकः स्रग्वी वैजयंत्यादिमालाधरः सर्वाभरणभूषितः ॥ ३१ ॥ पीतवासाः पीतांबरवान् महद्विस्तृतं पूज्यं च वक्षो यस्य स महोरस्कः सुमृष्टेऽतिशयशोभितसुवर्णात्मके रत्नखचिते कर्णाभरणे यस्य स समृष्टमणिकुंडलो नीलाः कुंचिता वक्रीभूताः केशांता यस्य सः । सिंहस्य विक्रमवत्पराक्रमवद्विक्रमा यस्य सु समीचीनो भगः समग्रैश्वर्यादि षड्गुणा यस्य सः ॥ ३२ ॥ अमृतस्यामृतेन पूर्णं कलशं बिभ्रद्दधानो वलयाभ्यां कटकाभ्यां भूषित एतादृशः पुरुष उदतिष्ठादिति पूर्वेणान्वयः । स पुरुषः कस्यांशः किं नामकः किं कार्यं इत्यत आह ॥ सवा इति। स पूर्वोक्तपुरुषः साक्षादनुपचारेण भगवच्छब्दवाच्यस्यान्यतमो मुकुंदात्को नाम लोके भगवत्पदार्थ इति स्मृतेः। विष्णोर्नारायणस्यांशांशसंभवः ॥ ३३ ॥ धन्वंतरिरिति ख्यातः प्रसिद्ध आयुर्वेदस्य वैद्यशास्त्रस्य दृक् द्रष्टा । इज्यं यज्ञहविर्भोक्ता य एवं विधस्तमसुराः सर्वेऽवलोक्यामृतमाहृतमाहारो यस्मिंस्तं कलशं चावलोक्य ॥ ३४ ॥ सर्ववस्तूनि लिप्संत आकांक्षमाणाः कलशं तरसाऽपहरन् । असुरैरमृतस्य भाजने पात्रे तस्मिन्कलशे नीयमाने सति देवा विषण्णं क्लेशंतं मनो येषां ते तथा संतो हरिं शरणमाययुः ॥ ३५ ॥ भृत्यानां देवानां कामं मनोरथं करोतीति कृत् भगवान् धन्वंतरिरित्युक्तरीत्या तेदा देवानां दैन्यमालोक्य । हे देवा यूयं मा खिद्यत व्यथां न कुर्वत । अहं स्वमायया तेषामसुराणां मिथः परस्परं कलहं जनयित्वा

वो युष्माकमर्थं प्रयोजनममृतपानरूपं साधयिष्ये । इत्याहेति शेषः ॥ ३६ ॥ हे प्रभो । तस्मिन्नमृतरूपेऽर्थे तर्षेणाकांक्षायुतं चेतो मनो येषां तेषामसुराणामहं पूर्वमिदममृतं दृष्टवान् गृहीतवान् पास्ये त्वं नेत्यादि रूपः कलिः कलहोऽभूत् ॥ ३७ ॥ हे राजन् । दैतेया दैत्यादयोऽसुरा जातमत्सराः संतो यतः स्वयं दुर्बला अतः स्वतः प्रबलान् गृहीतामृतकलशान् स्वान्स्वकीयानेव इति प्रत्यषेधन्मुहुर्मुहुः । किमिति । हे असुराः । ये तुल्ये समाने आयासे समुद्रमथननिमित्ते हेतवः कारणीभूता देवा अपि स्वभाग" मर्हंति । यथा बहुकर्तृकानेकाहर्निवर्त्यसत्रयागे सर्वे समानफलभागिनस्तथैष धर्मः सनातनः सदातनो यतोऽतोऽस्मिन्विवादकाले कर्तुरुचित इति ॥ ३९ ॥ हे राजन् । एतस्मिन्नंतरेऽस्मिन्नसुरकलहसमये सर्वोपायविदामीश्वरो विष्णुरनिर्देश्यमिदमेतादृगिति निर्देष्टुमशक्यमत एव परमाद्भुतं योषित्स्त्रियो रूपं दधार प्रादुश्चकारेत्यर्थः ॥४०॥ तं नारायणीरूपं वर्णयति ॥ प्रेक्षणीयेत्यादिना । सौंदर्यकोमलतादि गुणैः प्रेक्षणीयमवश्यं द्रष्टव्यं यदुत्पलं नीलोत्पलं तद्वच्छामं नीलवर्णं सर्वावयवैः करचरणादिभिः सुंदरं समाने करणाभरणे यस्य तत् सुकपोलेन समीचिनगंडस्थलेनोन्नतनासिकया च युक्तमाननं यस्य तत् ॥ ४१ ॥ नव यौवनेन नूतन तारुण्येन निस्पंदतोनिश्चलतोः स्तनयोः कुचयोर्भारेण कृशं स्वल्पमुदरं यस्य तत् । मुखस्यामोदे परिमलेऽनुरक्ता अलयस्तेषां झंकारे-णोद्विग्ने चंचले लोचने यस्य तत् ॥४२॥ उत्फुल्ला विकसिता मल्लिका यस्यास्तां मालां स्वकेशभारेण बिभ्रच्छोभमाना ग्रीवा कंठाभरणं च यस्य तत् । शोभनाभ्यां भुजांगदाभ्यां भूषितं ॥४३॥ विरजं मालिन्यादि दोषरहितं यदंबरं वस्त्रं तेन संवीतं वेष्टितं वधोः स्त्रियो विद्यामानया शोभया चित्रमाश्चर्यकरं कांच्या कट्याभरणेन प्रविलसदतिप्रकाशं वल्गुभ्यां मनोहराभ्यां स्फुरद्भ्यां प्रकाशमानाभ्यां नूपुराभ्यां पादांगदाभ्यां युक्तं ॥४४॥ सव्रीडेन सलज्जेन स्मितेन हासेन युक्तैर्विक्षिप्तैर्भ्रूविलासैः सहितैरवलोकनैर्दैत्यानां यूथं समूहं पांति रक्षंतीति यूथपास्तेषां चेतःस्वंतःकरणेषु कामं स्वविषयेच्छां मुहुः पुनरुद्दीपयदभिवृद्धं कुर्वद्योषिद्रूपं दधारेति पूर्वेणान्वयः ॥४५॥ हे असुराः । अन्योन्यतः परस्परं एकस्माद्येक इति यावत् । सुधापात्रं हरंतः संतो बलात्कारेण स्वीकुर्वाणः संतस्त्यक्तं सौहृदं स्नेहलक्षणं यैस्तैस्तथा संतःक्षिपंतस्तिरस्कुर्वंत एवं दस्यूनां चोराणां धर्मेण प्रवृत्ताः संतः आयांतीं स्त्रियं ददृशुः ॥ ४६ ॥ ते असुरास्तां दृष्ट्वा जातो हृच्छयः कामो येषां ते तथा संतस्तेऽसुरा अस्याः स्त्रियो रूपमहो आश्चर्यकरं धाम तेजोऽहो नवं वयस्ता-

रुण्यमहो इति परस्परं वदंतस्तामभिद्रुत्य पप्रच्छुः प्रश्नं कृतवंतः ॥ ४७ ॥ प्रश्नप्रकारं दर्शयति ॥ का त्वमित्यादिना । हे कंजपलाशाक्षि कमलपत्रवद्विशालतादिगुणवन्नेत्रे । त्वं काऽसि । कुतः कस्मादागता । किं कार्यं चिकीर्षसि कर्तुमिच्छसि । हे वामोरु मनोहरोरुमति । त्वं कस्य पुत्री कस्य भार्याऽसि तन्नोऽस्माकं वद । त्वं नो मनांसि मथ्नतीव भासि ॥ ४८ ॥ हे स्त्रि । वयं त्वाममरैर्दैत्यैः सिद्धगंधर्वचारणैश्च लोकेशैरिंद्रादिभिश्च न तु स्पृष्टपूर्वां पूर्वमस्पृष्टामननुभुक्तां जानीमः । यदैवं त्वं लोकेशैश्चास्पृष्टपूर्वा तदा नृभिर्मनुष्यैरस्पृष्टपूर्वेति कुतो वक्तव्यं ॥ ४९ ॥ हे सुभ्रु । त्वं सघृणेन दयावता विधिनाऽस्मददृष्टप्रेरकेनेश्वरेणास्मदादिशरीरिणां सर्वेंद्रियमनःप्रीतिं विधातुं कर्तुं प्रेषिता किं प्रेषिता नूनं निश्चयः ॥५०॥ हे भामिनि । अननुकूलेषु कोपनशीलेषु सुमध्यमे । सा त्वमेकवस्तुन्यमृतलक्षणविषये स्पर्धमानानामत एव बद्धवैराणां ज्ञातीनां नोऽस्माकं शं सुखं विधत्स्व कुरु ॥५१॥ हे सुभ्रु । वयं कश्यपार्जितद्रव्यभोक्तारः कृतपराक्रमा भ्रातरश्च । त्वयाऽस्मिन्नमृते विभज्यमानेऽस्माकं भेदः कलहो यथा न भवेत्तथा नीतिमनतिक्रम्यामृतं विभजस्व ॥ ५२ ॥ मायया स्वेच्छया योषिद्वपुः स्त्रीरूपधारी हरिर्दैत्यैरित्युपामंत्रितः प्रार्थितः सन् प्रहस्य रुचिरापांगैर्मनोहरकटाक्षैरसुरानीक्षन्सन्निदं वक्ष्यमाणवचनमब्रवीदुक्तवान् ॥ ५३ ॥ हे पुरुषाः कश्यपस्य दायादाः पुत्राः । यूयं पुंश्चल्यां स्वैरिण्यां स्वेच्छया नानापुरुषकामिन्यां कथं संगता विश्वस्ताः । पंडिता ज्ञानिनः कामिनीषु स्वेच्छाचारासु स्त्रीषु विश्वासं जातु कदाचिन्न यांति ॥ ५४ ॥ हे सुरद्विषः । पंडिताः शालावृकाणां कपिक्रोष्टुशुनां स्वैरिणीनां स्त्रीणां च सख्यान्यस्थिराण्याहुः । नूत्नं नवं नवं विचिन्वतामिति हेतुगर्भविशेषणं । शालावृकाणां विचिन्वतीनामिति स्त्रीणामिति ज्ञेयं ॥ ५५ ॥ तेऽसुरास्तस्याः स्त्रिय इत्युक्तलक्षणैः क्ष्वेलितैः परिहासपूर्वकच्छद्मवचनैरस्वस्थमनसः संतो भावगंभीरं जहसुर्हासं कृतवंतोऽमृतस्य भाजनं पात्रं ददुश्च ॥५६॥ ततो हरिरमृतभाजनं गृहीत्वेषत्स्मितेन शोभा यस्यास्तया गिरा वाण्याऽऽह । हे असुराः । मया कृतं क्वच कुत्रचित्साध्वसाधु वा । यत्तु तद्युष्माभिरभ्युपेतमंगीकृतं यदि तर्हीमां सुधाममृतं वो युष्माकं विभजे विभागं कृत्वा दास्यामीत्येवं रूपया गिरा बभाषे ॥ ५७ ॥ असुरपुंगवा इत्युक्तरूपं तस्या अभिव्याहृतं वचनमाकर्ण्य श्रुत्वा यतस्तस्याप्रमाणविदः स्वरूपानभिज्ञा अतस्तत्कार्यं तथास्त्वित्यन्वमंसतानुज्ञातवंतः ॥ ५८ ॥ अथ कृतस्नानास्तेऽसुरा वासांसि परिधायातिभूषिताः संतो द्विजैः कृतस्वस्त्ययनाः संतो

हविषाऽनलं हुत्वा वि परमात्मानं प्रीणंतीति विप्रास्तथा भूतेभ्यो ब्राह्मणेभ्यो गां दत्वा प्रागग्रेषु कुशेषु यथोपजोपं यथा सुखं स्यात्तथा प्राविशन्नुपविष्टाः ॥ ६० ॥ माल्यैः पुष्पमालाभिश्च । माल्यं पुष्पे पुष्पदाम्नेति रत्नमाला । जुष्टायां सेवितायामलंकृतायां धूपैः कृष्णागर्वादिजैरामोदिता परिमलिता या शाला तस्यां सुरेषु दितिजेषु च प्राङ्मुखेषु पूर्वाभिमुखेषूपविष्टेषु सत्सु ॥ ६१ ॥ हे नरेंद्र परीक्षित् । सा नारायणी तस्यां सभायां कलभवद्गजहस्तवत्क्रमवर्तुलत्वादिगुणविशिष्टयोरूर्वोर्लसत्प्रकाशमानं दुकूलं यस्याः सा श्रोणितटाभ्यामलसा मंदा गतिर्यस्याः सा मदेन हर्षोद्रेकेण विव्हलेक्षिणी यस्या साः कनकनूपुरयोः सिंजितेन ध्वनिना कूजंती कुंभस्तनी कलशपाणिः सती विवेश प्रवेशं कृतवती । कलभः करिपोते स्यात्करिहस्ते पुमानयमिति मुक्तामाला ॥ ६२ ॥ देवासुराः कनककुंडलचारुकर्णौ नासाकपोलश्च यस्य तद्वदनं यस्यास्तां । विगलितः स्तनच्युतः स्तनपट्टिकाया अंतो यस्यास्तां श्रिया कांत्यादि संपदा युक्तं मुखं यस्यास्तां परदेवताख्यां नारायणीं संवीक्ष्य तस्या उत्स्मितेनोत्कृष्टमंदहासेन सहितेन वीक्षणेन वीक्षिताः संमुमुहुरतिभ्रांता बभूवुः ॥ ६३ ॥ अच्युतो जातिनृशंसानामुत्पत्तिमारभ्यान्याहिंसकानां सर्पाणां सुधादानमिव क्षीरप्रदानमिवासुराणां सुधाया अमृतस्य दानं दुर्नयमनीतिरिति मत्वा तानुद्दिश्य तां सुधां न व्यभजत् ॥ ६४ ॥ जगत्पतिरुभयेषां देवासुराणां पृथक् पंक्तिं कल्पयित्वा स्वासु स्वासु पंक्तिषु ता असुरदेवता उपवेशयामास ॥ ६५ ॥ गृहीतामृतकलशो हरिरुपसंचरैः समीपसंचरणादिभिर्दैत्यान्वंचयन् दूरस्थान्देवान् जरामृत्युहरां सुधां पाययामास ॥ ६६ ॥ हे नृप । नारायण्यां कृतस्नेहाः कामुकत्वात्तेऽसुरा एवं नारायण्या वंचने कृतेऽपि स्वकृतं समयं संकेतं त्वया यथा क्रियते तथाऽस्माकं संमतमित्यादि रूपं पालयंतः संतः स्त्रिया सह विवादे जुगुप्सया च युक्ताः संतस्तूष्णीमासन् ॥ ६७ ॥ तस्यां कृतोऽतिप्रणयः स्नेहो यैस्ते प्रणयस्यापायो नाशः स्यादिति कातरा भीता बहुमानेनाबद्धाश्चासुरा. किंचनाप्रियमनिष्टं नोचुः ॥ ६८ ॥ स्वर्भानू राहुर्देवानां लिंगेन चिन्हेन प्रतिच्छन्न आच्छादितस्वरूपः सन्देवानां संसदि पंक्तौ प्रविश्य सोममममृतमपिबत् । चंद्रार्काभ्याममयं राहुरिति हरये सूचितश्च । राहुः स्वर्भानुरित्यमरः ॥ ६९ ॥ हरिः क्षुरवन्नापितशस्त्रवद्धारावता चक्रेणामृतं पिबतस्तस्य राहोः शिरो जहारापहृतवान् । तस्य राहोः कबंधः शिरोरहितदेहः सुधयाऽमृतेन प्लावित आर्द्रीकृतोऽपतत् । शुद्धोदसमुद्र इति शेषः

॥ ७० ॥ अजो ब्रह्मा राहोः शिरोऽमृतानीतं ग्रहमचीक्लृपत् कल्पितवान् । यो ग्रहः पर्वणि सूर्यचंद्रोपरागयोश्चंद्रार्कौ प्रति वैरधीः सन् अभिधावति ॥ ७१ ॥ लोकभावनः सर्वजगदुत्पादको भगवान्हरिर्देवैरमृते पीतप्राये प्रायशः पीते सति । असुरेंद्राणां पश्यतां सतां पुरुषरूपं स्वरूपं जगृहे स्वीकृतवान् । प्रभुरित्यनेनाघटितघटनसामर्थ्यं हरेः सूचयति ॥ ७२ ॥ एवं सुरासुरगणाः समानदेशकालकारणार्थप्राप्त्युपायगमनादिवंतोऽपि फलविषये विकल्पाः फलतदभाववतोऽभवन् । तदेव दर्शयति । सुरगणा यस्य हरेः पादपंकजरजाश्रयणादमृतरूपं फलमंजसा निर्विघ्नेनापुर्दैत्यास्तदभावान्नापुः । स एव फलार्थिभिः सेव्य इति शेषः ॥ ७३ ॥ नन्वसुराणामपि ब्रह्मरुद्राद्याश्रयणात्कथं फलप्राप्तिर्ब्रह्मरुद्रविष्णूनां समत्वादित्याशंक्य श्रीहरेरेव ब्रह्मरुद्राभ्यामुत्तमत्वेन तदनुग्रहमभिभाव्यासुराणां फलादाने स्वपादपद्माराधकदेवानां फलदाने च समर्थत्वादिनैवं शंक्यमिति परिहरति ॥ यदीति । नृभिः फलार्थिभिः पुरुषैरुद्यतेषु फलदानाभिमुखेषु देवात्मजादिषु वसुकर्ममनोवचोभिर्द्रव्यक्रियाकरणवाक्यैर्यदर्चनं पुरस्तात्प्रथममेव ते स्वतंत्रा इति बुद्ध्या क्रियते तदसदुष्टं निष्फलं भवेत् । यतस्तैरेव देवात्मजादिभिरेव स्वेषामर्चनादि यत्स्वातंत्र्यबुध्या स्वमात्राराधकैः क्रियते तत्तास्मिन् हरौ समर्पितं भवति । यत्पुनर्मूलनिषेचनं प्रथमत एव हरिपूजादिकं क्रियते तद्वृक्षमूले उदकसेचनं यथा सर्वस्य वृक्षस्य साधनं भवति । तद्वत्सर्वस्यापि फलस्य हरिगुरुदेवताऽनुग्रहप्राप्यस्य साधनं भवति । येऽप्यन्यदेवताभक्ता यजंत्यविधिपूर्वकं। अंतवत्तु फलं तेषां । देवा विष्णवर्पणं कृत्वेत्यादेः ॥ ७४ ॥ इति श्रीभागवतटिप्पण्यामष्टमोऽध्यायः ॥ ८—८ ॥ ॥

॥ हरिः ॐ ॥ श्रीहरिचरणारविंदभक्त्यादिसाधनेनैव श्रेयः प्राप्तिस्तदभावे तदभाव इति ज्ञापयितुं देवासुरजयापजयाद्याहाध्यायद्वयेन शुकः । हे नृप । दानवदैतेया वासुदेवपराङ्मुखा भक्त्यादिविधुरास्ततः कर्माणि क्षीरसमुद्रमथनरूपे युक्ता मनोयुक्ता यत्ताश्च प्रयत्नवंतोऽपीत्युक्तरीत्याऽमृतं नाविंदन्न प्रापुः ॥ १ ॥ हे राजन् । गरुडवाहनोऽमृतं साधयित्वा सुरान्पाययित्वा च सर्वभूतानां पश्यतां सतां ययौ ॥ २ ॥ दितिनंदना दैत्याः सपत्नानां स्वशत्रूणां देवानां परामुत्कृष्टामृद्धिमैश्वर्याभिवृद्धिं स्वेषां तदभावं च दृष्ट्वाऽमृष्यमाणा असहिष्णवः संत उद्धृतायुधाः संतो देवान्प्रत्युत्पेतुः ॥ ३ ॥ ततः सुरगणा यतो नारायणपरास्ततः पीतया सुधयैधिता बलाद्यभिवृद्धाः संतः शस्त्रैरसुरैः प्रति संयुयुधुः ॥ ४ ॥ हे राजन् । तत्र तस्मिन्काले उदन्वतः समुद्रस्य

रोधसि तीरे परमदारुणोऽतिक्रूरस्तुमुलः संदर्तितो वीराणां रोमहर्षणकरो देवासुराणां रणः । अभवदिति शेषः । उदन्वानुदधिः सिंधुः सरस्वान्सागरोऽर्णवः । कूलं रोधं च तीरं चेत्यमरः ॥ ५ ॥ तत्र रणे सपत्नाः शत्रवस्ते देवासुराः संरब्धमनसः कोपाटोपयुक्तांतःकरणाः संतोऽन्योन्यं परस्परं समासाद्यासिभिः खड्गैर्बाणैः शरैर्विविधायुधैश्च निजघ्नुस्ताडितवंतः ॥ ६ ॥ तदा निनदतां मुहुर्मुहुर्ध्वनिं कुर्वतां शंखतूर्यमृदंगाणां हस्त्यश्वरथपत्तीनां च निःस्वनोऽभवत् ॥ ७ ॥ तस्मिन्संयुगे युद्धे रथिनो रथिभिः पत्तयः पादचारिणः पत्तिभिः सह हयाश्च हयैरिभा गजाश्चेभैः समसज्जंत संयुक्ता बभूवुः ॥८॥ केचिद्भटा वीरा उष्ट्रैर्दीर्घग्रीवैः केचिद्भटा द्विजैः पक्षिभिरपरे खरैर्गर्दभैः केचिद्गौरैः श्वेतैर्मृगैः केचिदृक्षैः करडीत्यपभ्रष्टैर्भल्लूकैर्द्वीपिभिर्व्याघ्रैर्हरिभिः सिंहैर्गूढाः संतो निर्ययुः । युद्धाय निर्जग्मुः ॥९॥ अन्यैर्गृध्रैरपरे कंकैरपरे बकैः केचित्सेनाभासैः कुत्सितैः सेनैरपरे तिमिंगिलैरन्ये शरभैरष्टपदमृगविशेषैः केचिन्महिषैरन्ये खड्गैरपरे गोवृषैः केचिद्गवैरन्येऽरुणै रक्तवर्णैर्मृगविशेषैर्निर्ययुः ॥ १० ॥ अन्ये शिवाभिर्जंबुकस्त्रीभिः केचिदाखुभिः इलीत्यपभ्रष्टैः केचित्कृकलासैः ओतीकाटेत्यपशब्दैः केचिच्छशैः प्रसिद्धैर्नरैः केचिद्बस्तैरजैरपरे कृष्णसारैरन्ये हंसैरपरे सूकरैर्वराहैर्निर्जग्मुः ॥११॥ अन्ये जलस्थलानां खगैः पक्षिभिर्विकृता विकारं प्राप्ता विग्रहाः शरीराणि येषां तैः सत्त्वैः प्राणिभिरुभयोः सेनयोरग्रतोऽग्रे विविशुः ॥ १२ ॥ हे पांडुनंदन पांडुकुलसंतोषक परीक्षित् राजन् । देवदानववीराणां ध्वजिन्यौ सेने सागरे यादसांजलचर-प्राणिनां समूहौ वीचीनां तरंगाणां मालाभिः पंक्तिभिरिव । चित्रैराश्चर्यकरैर्ध्वजस्तंभैः पटैश्च सितैः शुभ्रैरमलैर्निर्दोषैरातपत्रैः सौराकिरणानीतसंतापाद्रक्षकैः छत्रैः । महाधनैर्बहुद्रव्यविक्रियैर्वज्ररखचितदंडवद्भिर्विभ्राजद्भार्हचामरैः । प्रकाशशीलमयूरगरुत्मतचामरैः वातेन तीव्रगमनजनितवायुनोद्धूतैरुर्ध्वं चलितैरुत्तमोष्णीषैः श्रेष्ठशिरोबंधकवस्त्रैः सत्कृतैर्निर्दुष्टतया कृतैर्वर्मभूषणैः कवचालंकारैर्वि-शदैः शाणोल्लीढतया प्रशस्तैः सूर्यरश्मिभिः संयुक्तैर्निमित्तैः सुतरां स्फुरद्भिः प्रकाशमानैर्ध्वजिन्यौ सेने रेजतुः शुशुभाते ॥ १५ ॥ हे प्रभो परीक्षित् । वैरोचनो विरोचनपुत्रो बलिर्यस्य संख्ये देवासुरयुद्धेऽसुराणां चमूपतिः सेनापतिर्भूत्वा मयेनासुरवर्धकेन निर्मितं कामेनेच्छानुसारेण गच्छतीति कामगमाकाशगमनशक्त्याऽतिशयेन वैहायसं नाम । सर्वैः सांग्रामिकैर्युद्धसाधनैरुपेतं सर्वेषा-माश्चर्यकरं । अत एवाप्रतर्क्यमूहितुमशक्यमनिर्देश्यं वक्तुमशक्यं दर्शमानमप्यदर्शनं दर्शनराहितं । अद्भुतत्वादनिर्वाच्यमित्यादेः ।

एतादृशं विमानं श्रेष्ठयानमास्थितः आरूढः सन् सर्वैरनीकाधिपैः सेनानायकैर्वृतः सन् बालव्यजने छत्रं चेत्येपामग्र्यैः श्रेष्ठैरुदये चंद्र इव रेजे दीप्तवान् ॥ १८ ॥ नमुच्यादयस्त्रिपुराधिपा असुराणां यूथानां समूहानां पतयोऽसुरा यानैः स्वस्वारूढविमानैस्तस्य बलेः सर्वतो दिक्षु स्थिता आसन् । पौलोमकालेयनिवातकवचाख्यगणस्था अन्येऽसुराश्चासन् ॥ २२ ॥ रणमुखे बहुवारं निर्जित-देवाः । एतेन नमुच्यादयो निवातकवचांताः सर्वे सोमस्यामृतस्याप्राप्तस्वभागाः संतः केवलं क्लेशभाजिनः संतो युद्धार्थं सिंहनादं विमुंचंतः संतो बहुध्वनीन् शंखान् ध्वनियुक्तांश्चक्रुः । यदा तदा बलिभिरिंद्रः सपत्नान् शत्रून् शूरानुत्सिक्तानभिवृद्धान् दृष्ट्वा भृशं कुपितश्चुकोप ॥ २४ ॥ एवं कुपितोऽसुरसेनामभिविशन्प्रवेष्टुमिच्छुः । स्वराट् स्वर्गाधिपतिरिंद्रोऽहर्पतिः सूर्यः स्रवत्प्रस्रवणं स्यंदमाननिरोदकमुदयपर्वतं यथा तथा स्रवन्मदजलं दिग्गजमैरावतमारुरोह ॥ २५ ॥ वाय्वग्निवरुणादयो लोकपाला देवा नाना-प्रकारवाहनध्वजायुधयुक्ताः संतस्तस्येंद्रस्य सर्वतो दिक्षु स्वगणैः स्थिता संरक्षका आसन् ॥ २६ ॥ ते देवासुरा अन्योन्यं परस्परमभिसंहृत्य मिलित्वा द्वंद्वयोधिनो द्वौ द्वौ मिलित्वा युद्धं कर्तुमिच्छवः संतो नामभिराव्हयंतस्तत्तन्नामग्रहणं कारयंतो मिथः परस्परं क्षिपंतस्तिरस्कुर्वंतोऽग्रे सेनामुखे विशंतः प्रविशंतो युयुधुर्युद्धं चक्रुः ॥ २७ ॥ हे राजन् । बलिरिंद्रेण युयोध । बृहस्पतिस्तारकेण युयोध । वरुणो हेतिना मित्राख्यः सूर्यः प्रहतिनाऽयुध्यत् ॥ २८ ॥ यमस्तु कालनाभेनासुरेण विश्वकर्मा देवतक्षको मयेनासुरतक्षकेन युयुधेति वै प्रसिद्धं । शंबरोऽसुरस्त्वष्ट्राख्यादित्येन विरोचनोऽसुरः सवित्राख्यादित्येन युयुधे ॥ २९ ॥ अपरा-जिताख्यदेवेन नमुचिरसुरो युयुधे । अश्विनो देवो वृषपर्वणाऽसुरेण शर्मिष्ठा पित्राऽयुयुधत् । बाणोऽसुरज्येष्ठः श्रेष्ठो यस्य तेन शतेन शतसंख्याकैर्बलेरसुरस्य सुतैः सह प्रसिद्धः सूर्यो देवो युयुधे ॥ ३० ॥ सोमश्चंद्रश्च राहुणाऽसुरेण युयुधे । अनिलो वायुः पुलो-म्नासुरेण । न रियंत ब्रह्मादि वरबलेन न क्षियंत इति नरा महिषासुरादयस्तानश्नातीति नराशिनी । भक्तानां मंगलं दत्तत्वाद्भद्राऽ-सुराणां संहारकत्वात्काली दुर्गादेवी निशुंभशुंभाभ्यां युयुधे । निशुंभशुंभयोरिति कर्तरि षष्ठी ॥ ३१ ॥ हे अरिंदम शत्रुशिक्षक । परीक्षित्संबोधनं । वीररसाभिज्ञत्वख्यापनाय वृषाकपिस्तु देवो जंभनासुरेण विभावसुरग्निर्महिषेणासुरेण । सहवातापिर्वातापिसाहि-तेल्वलोऽसुरो ब्रह्मपुत्रैर्वसिष्ठादिभिर्युयुधे ॥ ३२ ॥ दुर्मर्षोऽसुरः कामदेवेनोत्कलोऽसुरो मातृभिर्ब्रह्मादि सप्त मातृभिः । बृहस्पति-

देवाचार्यस्तूशनसा शुक्रेणासुराचार्येण शनैर्मंदं चरतीति राशिष्विति शनैश्वरो देवो नरकेणासुरेण युयुधे ॥ ३३ ॥ एकोनपंचाशन्मरुतो देवा निवातकवचैरसुरैः । अष्टवो वसवो देवाः कालेयैरसुरैः । दश विश्वेदेवास्तु पौलोमैरसुरैः । एकादशरुद्राः क्रोधवशैरसुरैः सह युयुधुः ॥ ३४ ॥ बलींद्रादयोऽसुराः सुरेंद्राः संहत्य परस्परं प्राप्य द्वंद्वेनाजौ युद्धभूमावेवं युद्ध्यमानाः संतोऽन्योन्यमासाद्य खड्गादिभिरोजसाऽवष्टंभनशक्त्या निजघ्नुः । एवं परस्परं जिगीषवो जेतुमिच्छवः संतस्तीक्ष्णशरान् क्रूरान् बाणांश्चिक्षुपश्च ॥ ३५ ॥ ते देवासुराः परस्परं भृशुंडिभिश्चक्रैर्गदाभिःऋाष्टिभिः साधारणखड्गैः पट्टिशैर्विस्तृतखड्गैः शक्तिभिरयोमुखैर्दीर्घदंडैरुल्मुकैर्गतज्वलाग्नियुक्तकाष्ठैः प्रासैरूर्ध्वमधश्चायोमुखैर्दंडैः परश्वधैः कुठारैर्निस्त्रिंशैस्त्रिंशदंगुलिभ्योऽधिकदीर्घखड्गैर्भल्लैर्बाणैः परिघैः कवाटपृष्ठोपोद्बलकदारुविशेषैः पृथुपुष्टबृहच्छिरो दंडविशेषैर्भिंडिपालैः शिरांसि चिच्छिदुर्द्विधा कुर्वंतः ॥ ३६ ॥ रथैः सहिता गजास्तुरंगाश्वाश्वाः पदातयः पादचरा नरा विविधा आरोहंतीत्यारोहा गजाद्यारूढाः पुरुषास्तैः सहिताः सारोवाहा वाहनविखंडिताश्छिन्ना बभूवुः । एवं तत्र वीरा निकृंताश्छिन्ना बाहव उरवः शिरोधरा ग्रीवाऽग्रयः पादा येषां ते तथा बभूवुः । छिन्नानि ध्वजाज्यासानि धनूंषि तनुत्राणि कवचानि भूषणानि येषां ते तथा चासन् ॥ ३७ ॥ तेषां गजाश्वपदातीनां पदाघातैः पादसंघट्टनै रथांगै रथचक्रैश्च चूर्णितादायोधनाद्युद्धमंडलादुत्थित उल्बणस्तीक्ष्ण उच्छ्रित उन्नतो रेणुर्धूलिस्तदा दिशः खमाकाशं द्युमणिं सूर्यं चाच्छादयन् स्थितोऽपि असृक्स्रुतिभिः रक्तप्रवाहैः परिप्लुतः क्लिन्नो न्यवर्तत शांतोऽभूत् ॥ ३८ ॥ तदा भूरुद्वृत्तानि शिरसः स्खलितानि किरीटानि शिरोभूषणानि कुंडलानि कर्णाभरणानि येषां तैः संरंभेन कोपाटोपेन युक्ता दृशा नेत्राणि येषां तैः परिदष्टानि दंतैर्गृहीता दता दंतानां छदा आच्छादका ओष्ठा येषां तैः शिरोभिः सहाभरणैः सहायुधैर्महाभुजैः करभवद्गजहस्तवत् क्रमवर्तुलत्वपुष्टत्वादि गुणैरुरुभिः प्रस्तृता आच्छादिता साति बभौ ॥३९॥ तत्र मृधे युद्धे कबंधाः वीरानपश्यंतः संत उद्धृतायुधैर्दंडाकारैर्हस्तैर्युक्ताश्च संत उत्पेतुरुपरि पतिता अभवन् ॥४०॥ बालिर्दशभिः शरैर्महेंद्रं त्रिभिः शरैरैरावतं चतुर्भिः शरैश्चतुःसंख्याकान्वाहान् एकेन शरेण । आरोहत्यनेनेत्यारोहः । वाहनप्रेरकस्तं चाच्छैयत्तताड ॥४१॥ स शक्रो यतः शीघ्रविक्रमस्तत आपतत आगच्छतो प्राप्तान् स्वप्राप्तिशून्यान् मध्ये तावत्संख्याकैर्निशितैः शाणोल्लीढैर्भल्लैर्बाणैर्हसन्निव परिहासं कुर्वान्निव चिच्छेद

॥ ४२ ॥ बलिस्तस्येंद्रस्योत्तमं कर्म स्वशरच्छेदनरूपं वीक्ष्य दुर्मर्षोऽसहिष्णुः सन् शक्तिमाददे जगृहे । हरिरिंद्रो बलेर्हस्तस्थां महोल्काभामत एव ज्वलंतीं तां शक्तिमच्छिनद्द्विधा चकार ॥ ४३ ॥ विभुः शत्रुजयसमर्थ इंद्रो बलिस्ततः शूलमनंतरं प्रासं तोमरमृष्टयश्चेत्येवमादि यद्यदस्त्रं समादद्याद्गृहीतवांस्तत्सर्वमच्छिनत् ॥ ४४ ॥ हे प्रभो । अनंतरमसुरो बलिरदृश्यत्वं गतः सन् असुरसंबंधिनीं भ्रांतिजनकां विद्यां सृष्टवान् । ततो मायाया देवसैन्योपरि भागे पर्वतः प्रकटोऽभूत् ॥ ४५ ॥ ततः पर्वताद्दवाग्निनाऽरण्यवान्हिना दह्यमाना जलमानास्तरवो वृक्षाः पतिता उन्नतशिखराः । शिलाश्च पाषाणा अपि द्विषतामसुरद्वेषिणां देवानां बलं सैन्यं चूर्णयंतः पतिताः ॥ ४६ ॥ सवृश्चिका महोरगा अजगरा दंशनशीला दंदशूकाः सर्पाः सिंहव्याघ्रवराहाश्च महतः पूज्यान्सुरान् मर्दयंतो निपेतुः । आन्महत इत्यादिना महच्छब्दस्याकारादेशः ॥ ४७ ॥ हे विभो । शूलहस्ता विवाससो वस्त्ररहिताः । छिंधि द्विधा कुरु । भिंधि विधारयेति वादिन्यः शतसंख्याका यातुधान्यो राक्षस्यस्तथा राक्षससमूहाश्च समुत्पेतुः ॥ ४८ ॥ ततो व्योम्न्याकाशे महामेघाः स्तनयित्नवो गर्जनशीला गंभीराः परुषाः क्रूराः स्वना ध्वनयो येषां ते तथा संतो वातैराहताश्च संघटिताः संतोऽगारान्साग्निकाष्ठमुखान्मुमुचुस्त्यक्तवंतः ॥ ४९ ॥ दैत्येन बलिना सृष्ट उत्पादितः श्वसनो वायुसारथिः सहायो यस्य श्वसनसारथिः सांवर्तकः प्रलयाग्निरिवातितीक्ष्णः सुमहान् अतिस्थूलतरो वन्हिर्विबुधानां देवानां ध्वजिनीं सेनामधाक् भस्मीचकार ॥ ५० ॥ तदनंतरं प्रचंडवातैरतितीक्ष्णवायुभिरुद्धूता जनिता ये तरंगास्तैरावर्तैश्चक्राकारभ्रमजलैश्च भीषणो भयंकर उद्वेलः समुद्रो मर्यादातिलंघी सन् समुद्रः सर्वतः सर्वासु दिक्षु प्रत्यदृश्यत दृष्टोऽभूत् ॥ ५१ ॥ सुराणां सैनिकाः सेनारक्षका महामायैरत एवालक्ष्याऽगेया गतिः स्थितिस्तया भीषणैर्भयजनकैर्दैत्यैरेवमुक्तप्रकारेण मायासु सृज्यमानासु सतीषु विषेदुर्व्यथिता बभूवुः । हे नृप । यत्र यदेंद्रादयो देवास्तत्प्रतिनिधिं बल्याद्यसुरसृष्टमायाप्रतीकारं न विदुरज्ञातवंतस्तत्र तदा विश्वभावनः सर्वोत्पादको भगवान्नारायण इंद्रादिभिर्ध्यातः सन्प्रादुरभूत् ॥ ५२ ॥ प्रादुर्भावानंतरं भगवान् सुपर्णस्य गरुडस्यांसयोः कृतौ स्थापितौ पल्लवसदृशांघ्री यस्य स तथा सन् पिशंगं हरिद्रावर्णसदृशं वासो वस्त्रं यस्य स तथा सन् नवकंजवन्नूतनकमलवदम्लानविस्तृतलोचने नेत्रे यस्य स तथा सन् । अष्टसंख्याकायुधोपेतहस्तः सन् उल्लसन्नतिप्रकाशमानः श्रिया कांत्या युक्तो यः कौस्तुभोऽस्त्युत्तम-

तयाऽनर्घ्याणि मौल्यरहितानि किरीटकुंडलानि मुकुटकर्णाभरणानि यस्य स तथा च सन् देवासुरैरदृश्यत ॥ ५४ ॥ प्रतिबोधे जागरे आगते सति स्वप्नावस्थाद्रष्टा गजतुरगादिर्यथा विनश्यति चक्षुषा दृश्यो न भवति तथा महतामुत्तमानां महीयस्युत्तमे नारायणे तस्मिन्युद्धे प्रविष्टे सति असुरमायाकर्मजाः पर्वतवृक्षादयो विनेशुरदृश्या अभूवन् । नैतद्विचित्रमित्याह। हरिस्मृतिः सर्वविपद्भ्यो विमोक्षिणी विमोचिका किमु हरिरिति ॥ ५५ ॥ हे नृप । अनंतरमरीन् शत्रून् वहत्युद्धरति रणभूमेरित्यरिवाहः शत्रुपलायनकरः । अरिर्मृगारिः सिंहो वाहो यस्येति चारिवाहः । इभस्य गजस्यारिः सिंहो वाहो यस्येतीभारिवाहः । अस्मिन्पाठद्वये वाह शब्दोऽण प्रत्ययांतः कुंभकार शब्दवज्ज्ञेयः । कालनेमिरसुरो युद्धे गरुडवाहं भगवंतं दृष्ट्वा स्वत्रिशूलमाविद्ध्य भ्रामयित्वा हरये आहिनोत् प्रेषयामास । त्रयाणां लोकानां वैकुंठश्वेतद्वीपानंतासनानां सत्त्वरजस्तमसामधीशोऽधिकस्वामी नारायणो गरुडशिरसि पतत्त्रिशूलं लीलयाऽनायासेन गृहीत्वा तेन शूलेन वाहनसहितं शत्रुं कालनेमिमहनत्तताड हिंसितवांश्च ॥ ५६ ॥ अतिबलौ माली सुमाली चेत्युभौ यद्यदा युधिरणभूमौ हरिणा कृतशिरसौ संतौ पतितौ । अथानंतरं माल्यवानसुरोंऽडजानां पक्षीणामिंद्रं श्रेष्ठं गरुडमाहत्य भ्रामयित्वा गदया यावद्यदाऽहनत्तताड तावत्तदाऽऽद्यः पुराणपुरुषो भगवान्नदध्वनिं कुर्वतोऽरेर्माल्यवतः शिरोऽरिणा चक्रेणाच्छि-नत् । अत्रायं विशेषो ज्ञेयः । कालनेम्यादयः सर्वे हरिणा निहता अपि शुक्रेणोज्जीविताः संतः पुनरते वै निपातिता इति ॥ ५७ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ८—९ ॥ ॥

॥ हरिः ॐ ॥ अथोऽनंतरं शक्र इंद्रः समीरणो वायुरादिर्येषां ते तथा संतः स्वयं पूर्वं यैर्यैरसुरैरभिसंहता योद्धुं मिलि-तास्तांस्तान् भृशमत्यंतं जघ्नुः शस्त्रैस्ताडितवंतः ॥ १ ॥ यदा भगवानैश्वर्यादि षड्गुणोपेतः पाकाख्यमसुरं शास्ति शिक्षतीति पाकशान इंद्रः संरब्धकोपाटोपयुक्तः सन् वैरोचनाय विरोचनपुत्रबलये वज्रायुधमुदयच्छद्दातुमुद्यतस्तदा प्रजाजना असुरप्रकृतयो हाहेत्यतिखेदः समागतोऽस्माकमिति चुक्रुशुरार्त्तध्वनिं चक्रुः ॥ २ ॥ वज्रपाणिरिंद्रः स्वस्य पुरोऽग्रे स्थितं युद्धे सुमनस्कं शस्त्रास्त्रैः सुसंपन्नं महामृधे विचरंतं बलिं तिरस्कृत्येदं वक्ष्यमाणं वचनमाहोक्तवान् ॥ ३ ॥ हे मूढ कर्तव्यज्ञानरहित । बले त्वं नटवदैंद्र-जालिकवन्मायाभिरिंद्रजालादिभिर्मायेशान्नोऽस्मान् जेतुमिच्छसि । ऐंद्रजालिको बालानविवेकिनः स्वमायया निबद्धाक्षान्

आवृत्तदृष्टीन् कृत्वा तद्बालधनं नभः स्वावकाशस्थलं नयति हि ॥ ४ ॥ हे बले । ये जना मायाभिः कपटकर्मभिर्दिवं स्वर्गमारुरुक्षंत्यारोढुं प्राप्तुमिच्छंति ततः स्वर्गादप्युत्सिसृक्ष्यंत्यूर्ध्वलोकं गंतुमिच्छंत्यहं तान्दस्यूंश्चोरान्कपटिनः स्वायोग्यापेक्षा न कर्तव्येति ज्ञानशून्यान्पूर्वस्मात्पूर्वं प्राप्तात्पदात्स्थानाद्विधुनोम्यधश्च्यावयामि । तस्माच्चाधःस्थानादप्यधो विधुनोमि । आरुरुक्षंतीत्यादि गदानुकरणेनात्र मायाभिस्तूत्सिसृप्संतमिंद्राद्यामारुरुक्षतः अवदस्यून् रघूनथाः इत्यृचं प्रमाणयाति ॥ ५ ॥ हे मंदात्मन् मूढचेतन बले । स उक्तगुणोऽहं दुष्ट कर्मिणस्ते तव शिरः शतग्रंथिना वज्रेण हरिष्ये । अतस्त्वं ज्ञातिभिः सगोत्रैरसुरैः सह घटस्व युद्धोद्योगं कुरुष्व ॥ ६ ॥ एवमिंद्रोदितबलिरिंद्रं वक्ति ॥ संग्राम इति । हे इंद्र । युद्धे वर्तमानानां कालाख्यरूपिणस्तवेति दशमस्कंधोक्तरीत्या काल शब्दवाच्यहरिणा नोदितानि प्रेरितानि कर्माणि पुण्यपापरूपाणि येषां तेषां सर्वेषां वीर्याणां कीर्तिर्यशोऽकीर्तिश्च जयोऽनभिभवोऽजयोऽशिवो मृत्युरपमृत्युश्चेत्येतेऽनुक्रमात्क्रमेण स्युर्भविष्यंति ॥ ७ ॥ सूरयो ज्ञानिनो जनास्तं पूर्वोक्तमिमं कालरशनं कालाख्यभगवदिच्छारज्जुं पश्यंति जानंतीत्यतः स्वेषां जयादौ प्राप्ते सति न हृष्यंति संतोषं न प्राप्नुवंति । अपजयादौ च न शोचंति । कालशब्दितस्यादृष्टप्रेरकनारायणस्यातंत्र्यज्ञत्वात् । तत्र तस्मिन्विषये स्वातंत्र्ये यूयमपंडिता अज्ञानिनोऽत एवं ब्रूथ ॥ ८ ॥ वयं तत्र जगदावात्मानं जीवं कारणं स्वतंत्रं मन्यमानानामत एव साधुभिः हरिस्वातंत्र्यज्ञैरेते वृथा नष्टा इति शोच्यानां वो युष्माकं मर्मताडना गिरो न गृण्हीमो नांगीकुर्मः ॥ ९ ॥ वीरः पराक्रमी अत एव प्रतिवीरान्मर्दयतीति मर्दनो बलिर्विभुमिंद्रमित्याक्षिप्य तिरस्कृत्य कर्णपर्यंतमाकृष्टैर्नाराचैर्बाणैः पुराक्षेपैस्तिरस्कारवचनैरहतमपि पुनरहनत्तताड ॥ १० ॥ तथ्यं यथा वदतीति वादी तेन वैरिणा शत्रुभूतेन बलिनैवमुक्तप्रकारेण निराकृतो देव इंद्रस्तोत्रेण गमनार्थं गजबोधककाष्ठेनाहतो द्विपो गज एव तत्कृतमधिक्षेपं नामृष्यत न सेहे ॥ ११ ॥ अनंतरमिंद्रस्तस्मै बलयेऽव्यर्थं शत्रुमर्दकं कुलिशं वज्रं प्रहरत् वज्रेण तं तताड । स बलिर्वज्रेणाहतः सन् छिन्नपक्षोऽचलः पर्वत इव सयानो भूमौ न्यपतत् ॥ १२ ॥ जंभोऽसुरो यतः स्वयं बलेः सखाऽतः स्वस्य सखायं बलिं भूमौ पतितं दृष्ट्वा तस्मिन्सुहृदत्यंतस्नेहयुक्तांतःकरणः सन् हतस्य मृतस्यापि बलेः सौहार्दं स्नेहं समाचरन्सन् इंद्रमभ्ययात् युद्धार्थमभिमुखो जगाम ॥ १३ ॥ सिंहवाहनः सुमहाबलः स जंभासुरः शक्रमिंद्रमासाद्य गदामुद्यम्योत्धृत्य रंहसा वेगेन जत्रौ

कंठकूबरेऽताडयत् । गजमैरावतं चाताडयत् ॥ १४ ॥ गज ऐरावतो गदाप्रहरेण व्यथोपेतो भृशमत्यंतं विव्हलितश्चंचलीकृतश्च सन् जानुभ्यां धरणीं भूमिं स्पृष्ट्वा परममत्यंतं कश्मलं मूर्च्छां ययौ ॥ १५ ॥ तत ऐरावतस्य भूमौ जानुभ्यामुपवेशानंतरं दशशतसंख्याकैर्हरिभिरश्वैर्वृतो रथो मातलिनेंद्रसारथिनाऽऽनीतविभुरिंद्रस्तं द्विपमैरावतमुत्सृज्य रथमारुरुहे ॥ १६ ॥ दानवेषु दनुपुत्रेषु सत्तमोऽत्युत्तमो जंभस्तस्येंद्रस्य यंतुः सारथेस्तत्कर्म गजपातं रथदानरूपं पूजयन् बहुमानयन् स्मयमानश्च सन् मृधे ज्वलता शूलेन तं तु मातलिनमहनत् ॥ १७ ॥ मातलिः सुतरां दुःखे प्राप्तेऽपि सहनशीलो यतो रुजं शूलताडनजमुपद्रवं सत्त्वं शारीरशक्तिमाश्रित्य सेहे मर्षितवान् । अथेंद्रः सक्रुद्धसन् वज्रेण जंभस्य शिरोऽपाहरत् ॥ १८ ॥ तस्य जंभस्य ज्ञातयो नमुचिर्बलः पाकश्चेत्येते नारदर्षेः सकाशाज्जंभं हतं श्रुत्वा त्वरान्विताः संतस्तत्र युद्ध उपेयुः समागताः ॥ १९ ॥ नमुच्यादयः परुषैर्निष्ठुरैर्वचोभिरिंद्रं मर्मसु मर्दयंतः संतो मेघा धाराभिः पर्वतमिवेंद्रं शरैरवाकिरन् ॥ २० ॥ बलोऽसुरो हरयः श्वेता अश्वा यस्य तस्येंद्रस्य शतसंख्याकानरीनश्वान्नाजौ रणे तावद्भिर्दशसंख्यैः शरैर्युगपद्येकदाऽर्दयामास । यतो लघुहस्तवान् शीघ्रबाणमोचनादि चातुर्योपेतहस्तः ॥ २१ ॥ पाकोऽसुरो बाणानां शताभ्यां शतद्वयेन मातलिं रथं चावयवशः सर्वेष्ववयवेषु पृथक् तताड । रणे तस्य तत्कर्म सकृद्युगपदेव बाणानां संधानसहितमोक्षणेन निमित्तेन पश्यतामाश्चर्यकरमभूत् ॥ २२ ॥ नमुचिरसुरः संख्ये युद्धे पंचदशसंख्याकैः स्वर्णखचितपुंखैर्ज्यासंयोज्यपृष्ठैर्महद्भिः स्थूलैरिषुभिर्बाणैरिंद्रमाहत्य तोयेनोदकेन सहितः सतोयस्तोयदो मेघ इव व्यनदन्नादं चकार ॥ २३ ॥ असुरा अंबूनि जलानि ददतीत्यंबुदा मेघाः प्रावृषो वर्षाकालस्य सूर्यमिव शराणां कूटेन समूहेन रथसारथिभ्यां सहितं शक्रं सर्वतः छादयामासुः ॥ २४ ॥ सहानुगा देवगणास्तमिंद्रमलक्षयंतोऽपश्यंतोऽतीव चंचला अनायका रक्षकस्वामिरहिताः शत्रुबलेन निर्जिताः संतः समुद्रे विदारितनावो व्यवहारिणो यथा तथा विचुक्रुशुः ॥ २५ ॥ तुरां वैरिवेगं सहतीति तुराषाडिंद्रोऽश्वरथध्वजश्रेष्ठसहितः सन् बाणबद्धपंजराद्विनिर्गतः सन् क्षपाया रात्र्या अत्ययेऽपगमे साति स्वतेजसा सूर्य इव दिशः खमाकाशं पृथिवीं च रोचयन् बभौ । तुराषाण्मेघवाहनः । त्रियामा क्षणदाक्षपा । अनंतं सुखवर्त्म खमिति चामरः ॥ २६ ॥ वज्रधरो देव इंद्रः परैः शत्रुभिरसुरैः स्वस्य पृतनां सेनामभ्यर्दितां निरीक्ष्य रुषा कोपेन रणे रिपून् असुरान्हंतुं वज्रमुदयच्छदुद्धतवान् । वाहिनी

पृतना चमूः। कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधावित्यमरः ॥ २७ ॥ स इंद्रोऽष्टधारेण तेनैव वज्रेण बलपाकयोः शिरसी पश्यतां ज्ञानिनां भयं जनयन्सन् जहार ॥ २८ ॥ हे नृपते। नमुचिरसुरस्तद्बलपाकवधं दृष्ट्वा शोकासहिष्णुताकोपसहितः सन् इंद्रं हंतुमिच्छुरत्युद्योगं चकार ॥ २९ ॥ तदेव दर्शयति ॥ अश्मेत्यादिना। दानवोत्तमो नमुचिरयोविकृतं घंटायुक्तं सुवर्णभूषितं शूलं प्रगृह्य क्रुद्धः सन् इंद्रमभ्यद्रवत्। अश्मसारमय इति कोशः। सुवर्णं हेमहाटकामिति च ॥ ३० ॥ महावीर्यो नमुचिस्तच्छूलमाविद्ध्य भ्रामयित्वा देवराजायेंद्राय त्वं हतोऽसीति विसर्जयन् मुंचन् मृगराट् सिंह इव नदन् ध्वनिं कुर्वन् प्राहिणोच्चिक्षेप ॥ ३१ ॥ हे नृप। त्रिदशपतिर्हरिरिंद्रो गगनस्याकाशस्य तले प्रदेश आपतदागच्छन्महान् जवो वेगो यस्य तच्छूलमिषुभिः सहस्रधा चिच्छेद। कुलिशेन वज्रेण पुनरपि रुषान्वितः सन् तन्नमुचिकं शिरो धरतीति कंधरः कंठस्तस्मिन्नहनत्। तेन तस्य शिरोऽहरत् अपहृतवान् चिच्छेदे। कुलिशं भिदुरं पविरित्यमरः ॥ ३२ ॥ ततः सुरपतिनेंद्रेणोजसा शक्त्येरितः क्षिप्तोऽपि ऊर्जित उत्कृष्टोऽपि वज्रो यः सोऽस्य नमुचेस्त्वचमपि कंठस्थानं न बिभेदेति तत्तदद्भुतं परं केवलं। एवमतिवीर्यमसुरं भिनत्ति विदारयतीत्यतिवीर्यवृत्रभिदपि इंद्रो नमुचिशिरोधरभागकंठत्वचा तिरस्कृतः ॥ ३३ ॥ यतो यस्मान्नमुचौ प्रयुक्तो वज्रः प्रतिहतस्तस्मात्कारणादिंद्रः शत्रोर्नमुचो बिभेत् भीतियुक्तोऽभूत्। लोकानामेतद्रणद्रष्टॄणां जनानां विमोहनं भ्रांतिजनकं दैवयोगेनादृष्टप्रेरकेश्वरेच्छयेदं किं जातमिति चिंतयामास ॥ ३४ ॥ तमेव विशदयंति ॥ येनेत्यादिना। येन वज्रेण मे मया पूर्वं पतत्त्रैः पक्षैः पततां भुवि ग्रामग्रामे निविशतामुपाविश्यमानानामद्रिणां पर्वतानां भारैः प्रजानां जनानामत्यये नाशे सति पक्षच्छेदकृतस्तत्तादृशं त्वाष्ट्रस्य दधिचेरस्थिनिर्मिततया त्वाष्टं त्वाष्ट्राख्योत्तमतपः प्रचुरं च येन वज्रेण वृत्रोऽसुरो विपाटितो विदारितोऽन्येऽपि बलोपेताः सर्वास्त्रैरक्षता अविदारितास्त्वचो येषां तेऽपि विपाटिताः। स तादृशगुणोऽयं वज्रो मया क्षुद्रतरेऽसुरे नमुचौ मुक्तः प्रतिहतो वृथाऽभूत् तस्मादहं ब्राह्मणतपः सामर्थ्योपेतमप्यत्र नमुचिवधे कारणं तत्तं दंडं वज्ररूपं नाददे न गृहिष्यामीति ॥ ३७ ॥ इति विषीदंतं क्लेशं कुर्वंतं शक्रं प्रति हे इंद्र अयं दानवो नमुचिः शुष्कैरथो आर्द्रैश्च वस्तुभिर्वधं मरणं नार्हतीत्यशरीरिणी वागाह ॥ ३८ ॥ हे मघवन् यस्मादस्मै नमुचये आर्द्रशुष्काभ्यां मृत्युर्नैव स्यादिति वरो दत्तोऽत एतस्मात्कारणात्ते रिपोर्नमुचेर्वधायान्य उपायश्चिंतनीयः ॥ ३९ ॥ मघवान् धनादि-

१२ ॥ संपन्न इंद्रस्तामुक्तप्रकारां देवीं गिरमाकर्ण्य श्रुत्वाऽतिसमाधानोपेतांतःकरणःसन् यत्केवलशुष्कमार्द्रं च न भवति तादृग्वस्तु चिंतयानः सन् शुष्कार्द्रोभयात्मकं फेनलक्षणमुपायमपश्यदृष्टवान् ॥ ४० ॥ इंद्रो न शुष्केण केवलं शुष्कभिन्नेन न चार्द्रेण केवलमार्द्रभिन्नेन च फेनेन नमुचेः शिरो जहार । मुनिगणा विभुं शत्रुहननसमर्थं तमिंद्रं स्तुवंतो माल्यैः पुष्पैरवाकिरन् । माल्यं पुष्पे पुष्पदाम्नीति नानार्थमुक्तावलि ॥ ४१ ॥ तदा गंधर्वेषु मुख्यौ प्रधानौ नाम्ना विश्वावसुः परावसुर्जगदतुर्गानं चक्रतुः । देवदुंदुभयो भेर्यो नेदुर्ध्वनिं चक्रुः । नर्तक्योऽप्सरसो मुदा संतोषेण नर्तनं चक्रुः ॥४२॥ केसारिणः सिंहा मृगान्यथा तथा वाय्वग्निवरुणादयोप्यन्ये देवाः स्वस्वप्रतिद्वंद्वान् स्वैर्द्वंद्वीभूय युद्धचतोऽसुरान्सूदयामसुर्हतवंतः ॥ ४३ ॥ हे नृप । तदा ब्रह्मणा चतुर्मुखेन दानवानां संक्षयं दृष्ट्वा देवान्प्रति प्रेषितो देवर्षिर्नारदो विबुधान्देवान्वारयामास युद्धं मा कुरुध्वमित्यवोचत् ॥ ४४ ॥ तदेव निमित्तकथनपूर्वं विशदयति ॥ भवाद्भिरिति । हे देवाः नारायणभुजाश्रयैर्भवाद्भिरमृतं प्राप्तं भवंतः श्रिया संपदा समेधिता अत्यभिवृद्धाश्चातः सर्वे यूयं विग्रहात्कलहादुपारमत शांताभवतेति ॥ ४५ ॥ देवा मुनेर्नारदस्य वचो बहुमानयंतः स्वेषामसुरेषु मन्युं सरंभं कोपाटोपं संयम्य निगृह्यानुचरैर्गंधर्वैः संगीयमानाः संतः सर्वे त्रिविष्टपं स्वर्गं ययुः प्रापुः । मन्युः क्रोधे क्रतौ दैन्ये । सुरलोको द्यौ दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपमिति चामरः ॥ ४६ ॥ तस्मिन्देवासुररणे येऽसुरा अवशिष्टास्ते नारदसंमत्या विपन्नमापद्गतं बलिमादायास्तपर्वतं गताः ॥ ४७ ॥ तत्रास्तपर्वते उशनाः शुक्रः संजीविन्याख्यविद्यया अविनष्टावयवान्विद्यमानशिरोधरानसुरान् उज्जीवयामास प्राणधारिणोऽकरोत् । उशना भार्गवः कविरित्यमरः ॥ ४८ ॥ तत्र बलिरसुर उशनसा शुक्रेण स्पृष्टः सन् पुनः प्राप्तेंद्रियशक्तिः स्मृत्यादिमान्सन् यतः स्वयं लोकतत्त्वे जनः स्थितौ विचक्षण ईश्वरपराधीनत्वादि विवेकावानत इंद्रेण पराजितोऽपि खेदं नाकरोत् ॥ ४९ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ८—१० ॥ ॥

॥ हरिः ॐ ॥ श्रीहरौ भक्त्युत्पादनाय महादेवस्तुत्याऽनेकगुणवत्त्वमाहात्म्यं हरेः प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादौ
रुद्रगमनप्रकारमाह ॥ वृषभध्वज इत्यादिना । वृषो नंदिकेश्वरो ध्वजपटे चिन्हतया यस्य स वृषध्वजो रुद्रो हरेर्नारायणो योषितो ॥ ३२ ।
नारायण्याख्यस्त्रीरूपेण दानवान्मोहयित्वा सुरगणान्सोममममृतमपाययत् । गिरौ कैलासे शेते स्वपितीति गिरिश इतीदं वृत्तांतं

निशम्य श्रुत्वा वृषमारुह्य सर्वैर्भूतगणैर्वृतः सन् देव्या पार्वत्या च सहितः सन् यत्र मधुमसुरं सूदति हिनस्तीति मधुसूदनो नारायण आस्ते तं द्रष्टुं ययौ ॥ २ ॥ भवो भक्तमांगल्यदो हरो भगवता नारायणेनोमया पार्वत्या सह सादरं सभाजितो बहुमानितः सन्नुपविष्टो भगवंतं प्रतिपूज्य स्मयन्निवेदमुवाच ॥ ३ ॥ देवानां ब्रह्मादीनां देव जगद्व्यापिन् चेतनाचेतनविश्वव्यापक पूर्वोक्तजगदीशात एव जगन्मयशब्दित हे हरे त्वं सर्वेषां भावानां पदार्थानां हेतुर्निमित्तकारण आत्माऽन्तर्यामीश्वरश्च ॥ ४ ॥ ये श्रेयस्कामाः सर्वोत्तमत्वदर्शनेच्छा एकांतिनो मुनयो मौनशीला ऋषयः सनकादयो निराशिप ऐहिकामुष्मिकफलाशारहिताः संत उभयत ऐहिकामुष्मिकयोः संगं स्नेहं विसृज्य तव चरणांभोजमेवोपासते ॥ ५ ॥ ननु सनकादीनामुभयतः संगाभावे निर्गुणब्रह्मोपासनमेवोचितं न तु सगुणब्रह्महर्युपासनमित्यतस्त्वमेव निर्गुणं ब्रह्म न त्वदन्यन्निर्गुणं ब्रह्मास्तीत्याह ॥ त्वं ब्रह्मेति । हे हरे । देशकालगुणैः पूर्णमत एव ब्रह्मशब्दितं विगुणं निर्गुणं सत्त्वादि गुणरहितमानंदमात्रं केवलानंदरूपमत एव विशोकमविकारं स्वरूपगुणशक्त्यादिभिरनन्यदभिन्नमन्यच्चेतनाचेतनात्मकजगतो भिन्नममृतं नित्यमुक्तं परं ब्रह्म । ब्रह्मविदाप्नोतीत्यादि श्रुतितात्पर्यगोचरं त्वमेव । ननु यतो वा इमानि भूतानि जायंतेत्यादि श्रुतिषु सर्वजगदुत्पत्तिस्थितिसंहारकारणस्यैव परब्रह्मताऽवगमात् कथमस्य स्थितिमात्रकर्तृतया प्रसिद्धस्य विष्णोः परब्रह्मतेत्यत आविश्वस्य समस्तस्य जगत उत्पत्तिस्थितिलयानां हेतुर्निमित्तमिति आत्मनां सर्वचेतनानामीश्वरस्य तस्मिन् जगदुपादानप्रकृत्यादावुपेक्षवत्तया-नपेक्षजडप्रकृत्यादिकं विनाऽजसर्जनादिसामर्थ्यवत्त्वेऽपि स्वेच्छया तदंगीकरोषीति निरपेक्ष इत्यादि श्रुतिप्रतिपाद्योऽसीति भावः ॥ ६ ॥ ननु सदेव सोम्येदमग्र आसीत् असद्वा इदमग्र आसीत् न संतं नासदित्युच्यते इत्यादिषु सदसदादि विलक्षणवस्तुवाचकशब्दाभिधेयस्य कथमनन्यत्वं घटत इत्यतो दृष्टांतमुखेन तदुपपादयति । यथा कटकमुकुटाद्यात्मना कृतं तदुपादानरूपेण कृतं स्वर्णमेकमेवेह सुवर्णवस्तुनि भेदो नास्ति यथा तथा कार्यकारणरूपसदादिशब्दवाच्येषु महत्प्रधानादिषु तत्तत्प्रेरणाय स्थितस्य सदादिशब्दवाच्यस्य तवापि भेदो नास्तीत्याह ॥ सदसद्द्वयमद्वयं च त्वमेक एवेति । एवं सत्यपि यतस्त्वं गुणानां व्यतिकरः कार्यार्थसमवायविशेषहेतुस्तत्तत्कार्यप्रवर्तकत्वेन तत्र तत्र स्थितोऽतो जनैरज्ञैरज्ञानतः । एकमेवाद्वितीयं । न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हीति च । सर्वेषां भूतानामंतरपुरुषः स म आत्मेति

विद्यादित्यादि श्रुत्यर्थपरिज्ञानात् । त्वयि विकल्पो भेदो विहितः कल्पितः । ननु स्वाभाविकभेदस्य भगवद्रूपादावभावेऽपि सोपाधिकभेदः किं न स्यादित्याशंकानिरासायाह ॥ त्वं निरुपाधिकश्चेति । युक्तं चेतान्निरूपाधिकत्वमानंदमात्रस्येति व्युत्पादनानपेक्षा ॥ ७ ॥ ननु केचिद्ब्रह्मैव जगत्कारणं स्वतंत्रमित्याहुः । केचित्कर्मादिकमाहुः । कथमत्र निर्णय इत्याशंक्य तत्तन्मतेषु तत्तच्छब्दप्रातिपाद्यस्त्वमेवेति निर्णयोपपत्तिरित्याह ॥ त्वां ब्रह्मेति । केचिद्वेदांतिनस्त्वां ब्रह्मेत्यवयंति जानंति । एके मीमांसका धर्ममवगच्छंति । एके पौराणिकाः परेशं त्वां सदसतः परं पुरुषमवगच्छंति । अन्ये पांचरात्रकास्त्वां विमलोत्कर्षणी ज्ञानाक्रियायोगा तथैव च । प्रव्हीसत्यातथेशानानुग्रहेति नवशक्तियुतं परं वदंति । केचिदेकांतिनोऽव्ययं चतुर्विधनाशरहितमात्मतंत्रं स्वसत्ताप्रतीतिप्रवृत्तिषु परानपेक्षं महापुरुषं वदंति ॥ ८ ॥ ननु तवाऽपि ममसमत्वाभिमाने कथमियं स्तुतिर्घटत इत्यतस्तदभावं व्यनक्ति ॥ नाहमिति । हे परेश । यस्य तव माययेच्छया मुषितानि तत्त्वज्ञानादपहृतानि चेतांस्यंतःकरणानि येषां तेऽहं रुद्रः परायुश्चतुर्मुखो मरीचिमुख्या ऋषयो यद्विरचितं न जानंति । सत्त्वगुणादुत्पत्त्यभावात्तदज्ञानं किं न स्यादित्यत आह ॥ सत्त्वसर्गा अपीति । शश्वदेकप्रकारेणाभद्राऽमंगलाप्रवृत्तिः प्रवृत्तिर्येषां ते दैत्या मर्त्यादयो यस्य तव विरचितं न जानंतीति किमु वक्तव्यमिति । अनेन पौंड्रकवासुदेवभास्करादिमतप्रसक्तमावयोः साम्यमसदित्युक्तं भवति ॥ ९ ॥ यत एवमावयोरत्यंत भेदस्ततस्त्वमेव जगतः स्थितिजन्मनाशान् सर्वेषां भूतानां हितमपेक्षितं च चेतनजगतो बंधमोक्षावपि करोषि । यतस्त्वं वायुर्यथा खमाकाशं विशति तथा चराचराख्यं जगत्तदात्मकतया तत्प्रेरकतया विशसि । तत्सृष्ट्वा तदेवानुप्राविशदित्यादेः । एवं तत्तत्प्रेरणाय तत्तत्प्रविष्टतया तत्तदुपजीव्यतया त्वं । सर्वं खल्विदं ब्रह्म । पुरुष एवेदं सर्वं तद्विश्वमुपजीवाति । सर्वं समाप्नोषि ततोऽसि सर्व इत्याद्यवगमयतीत्यवगम आगमः । आगमस्ते स्तुतिर्गुणोत्कर्षख्यापनसमर्थो नाहमिति स्तुत्युपसंहारः ॥ १० ॥ एवं हरो हरिं स्तुत्वा स्वापेक्षितं



विज्ञापयाति । हे हरे । स्वेच्छया रममाणस्य गुणैः पूर्णास्तेवतारा नारायिण्यन्या मया दृष्टाः सोऽहं ते त्वया यद्योषिद्वपुः शरीरं धृतं तद्द्रष्टुमिच्छामि । तद्दर्शने स्वस्यांतःकरणौत्कंठ्यमाह । येन स्त्रीशरीरेण दैत्याः संमोहिताः सुरा अमृतं पायिता वयं तद्दि-
दृक्षव [illegible] कौतूहलं कदा द्रक्ष्यामीति बाढिः ॥ १२ ॥ एवं भगवान्विष्णुः शूलपाणिना रुद्रेण

प्रार्थितः सन् गिरिशं प्रत्यभिप्रायेण गभीरं यथा तथाऽभाषत ॥ १३ ॥ हे रुद्र । दैत्यानां कौतूहलायाश्चर्यबुद्धिजननाय पीयूषस्यामृतस्य भाजने पात्रे दैत्यहस्तं गते सति देवकार्याणि संपाद्यामीति पश्यता बुद्धिमता मया योपिद्वेषः कृतः । पीयूषममृतं सुधा । भाजनं पात्रमित्यभिधानं ॥ १४ ॥ हे सुराणामिंद्रादीनां सत्तमात्युत्तम रुद्र । तद्रूपं द्रष्टुमिच्छतस्तव दर्शयिष्यामि । तद्रूपं कामुकानां संकल्पप्रभवस्य कामस्योदय उत्पत्तिर्यस्मात्तथा मंतव्यं । कामार्त्तिमतामपि कामजनकं ज्ञेयमित्यर्थः ॥ १५ ॥ भगवान् विष्णुरिति रुद्रं प्रति वदन्नेवादृश्योऽभूत् । तदा भवो रुद्र उमया सह सर्वासु दिक्षु स्वनेत्रं प्रचारयन्नास्ते । ततो रुद्रो विचित्राणि पुष्पाण्यरुणाः पल्लवाः किसलया येषु तैर्द्रुमैर्युक्ते समीपस्थवने कंदुकक्रीडां कुर्वतीं लसत्प्रकाशमाने नितंबे कटिप्रदेशे पर्यस्ते क्षिप्ते दुकूलमेखले परिधानीयवस्त्रकांचौ यस्यास्तां स्त्रियं ददर्श ॥ १७ ॥ आवर्तनोद्वर्तनाभ्यामधोर्ध्वप्रदेशं प्रपणाद्भ्यां कंपिताश्चलिता स्तनौ तत्कांत्यादिगुणैः प्रकृष्टहारश्चेत्येतेषामुत्कृष्टभारैः पदे पदे प्रतिपादविक्षेपे मध्यतः कटिप्रदेशे भज्यमानानामिव स्थितां गमनेन चलत्पादपल्लवां ततस्ततस्तत्प्रदेशं नयतीं प्रापयतीं ॥ १८ ॥ दिक्षु भ्रमतश्चरतः कंदुकस्य चापलैरितस्ततो गमनरूपचंचलधर्मैः प्रोद्विग्ने चंचले तारे कनीनिके ययोस्ते चायते विस्तृते च लोले चंचले कंदुकग्रहणतृष्णासहिते च लोचने नेत्रे यस्यास्तां स्वकर्णयोर्विभ्राजितेऽतिप्रकाशिते च ये कुंडले कर्णाभरणे ताभ्यामुल्लसंतौ प्रकाशमानौ गंडस्थलावलकाश्चूर्णकुंतलाश्च तैर्मंडितमलंकृतमाननं मुखं यस्यास्तां । लोलश्चलसतृष्णयोरिति नानार्थमुक्तावली ॥ १९ ॥ श्लथत्कटिप्रदेशाच्च्यवद्दुकूलं यस्यास्तां विच्युतां कलितग्रंथिं कबरीबंधितकेशसमूहं वल्गुना मनोहरेण वामकरेण सन्नह्यतीं केशान्मेलयित्वा बध्नंतीमन्येन दक्षिण करेण कंदुकं विनिघ्नतीं ताडयंतीमात्ममायया स्वकीय मोहनशक्त्या जगद्विमोहयंतीं भ्रामयंतीं ॥ २० ॥ देवो रुद्रस्तां वीक्ष्य इत्युक्तप्रकारकंदुकलीलया ईषदल्पा व्रीडा लज्जा तत्सहितं यास्मिंस्तं मंदहासः स्फुटमतिस्पष्टं विसृष्टो यः कटाक्षो नेत्रांतावलोकनं येन मूढो विवेकरहितो भ्रांतश्च सन् स्वकर्तृकं स्त्रीकर्मकं यत्प्रेक्षणं यच्च स्त्रीकर्तृकं स्वकर्मकं प्रतिसमीक्षणमवलोकनं ताभ्यां निर्वृतः संतोषातिशयवानात्मांऽतःकरणं यस्य स तथा सन् आत्मानं स्वमंतिके स्थितां पार्वतीं स्वगणांश्च न वेद । स्वात्माद्यनुसंधानरहितोऽभूत् । किंचिदीषन्मनागल्पे । न्हीस्त्रपा व्रीडेति चामरः ॥ २१ ॥ तस्या उक्तगुणनारायण्याः कराग्रात्स्रस्तः कंदुको यदा दूरं गतो रुद्रस्तं

कंदुकमनुगच्छंत्या लघु सूक्ष्मं कटिसूत्रसहितं वस्त्रं महादेवस्य पश्यतः सतो मरुताऽपाहरत् । सा नग्नाऽभूत् ॥ २२ ॥ भवो रुद्रो रुचिरो मनोहरोऽपांगः कटाक्षो यस्यास्तां सौंदर्यातिशयेन दर्शनीयामवश्यं द्रष्टव्यामत एव मना रमयति सुखयतीति मनोरमां तामेवमुक्तरीत्या दृष्ट्वा विशेषाकारेण लज्जां कुर्वत्यां तस्यां मनश्चक्रे ॥ २३ ॥ तथा तादृश्या नारायण्याऽपहृतं विज्ञानं परदारान्न कांक्षेदित्यादि रूपं यस्य स तथा सन् तन्निमित्तं जातकामेन चंचलो भवान्याः पार्वत्याः पश्यंत्यां सत्यामपि लज्जारहितः सन् तत्पदमनुययौ ॥ २४ ॥ वस्त्ररहिता नारायण्यागच्छंतं रुद्रं दृष्ट्वा भृशं लज्जतेव वृक्षेषु स्वशरीरमाच्छादयंती हसंती च सती नान्वतिष्ठत । रुद्रानुकूलाऽसत्येकत्र न तस्थौ ॥ २५ ॥ कामवशं गतोऽत एव काम्या लाभेन दुःखितांतःकरणो गजयूथपः करेणुं गजस्त्रियमिव भगवान् ऐश्वर्यादिगुणसंपन्नो भवः कामवशो व्यथितेंद्रियश्च सन् नारायणीमनुगतवान् । करेणुरिभ्यामित्यमरः ॥ २६ ॥ स रुद्रोऽतिवेगेनानुगत्वाऽनिच्छतीमिव स्थितां स्त्रियं नारायणीं केशबंधे कबर्यां गृहीत्वा स्वसमीपं प्रापयित्वा बाहुभ्यामालिलिंगे ॥ २७ ॥ सा नारायणी गजेन गजस्त्रीव भगवता रुद्रेणोपगूढबाहुभ्यामाच्छादिता तदनंतरं परस्परं विश्लिष्टकेशा सतीतस्ततः पादप्रसारणं कुर्वती सती पुष्टकट्यग्रभागवती देवेन विष्णुना निर्मिता सा माया नारायणींद्रादिदेवोत्तमरुद्रभुजमध्यात्स्वां मोचयित्वा द्रुतं जगाम । अंगेति प्रियसंबोधनं ॥ २९ ॥ रुद्रोऽद्भुतकर्मणस्तस्य नारायणीरूपस्य विष्णोः पदवीं मार्गं प्रत्यपद्यतागतवान् । स्वशत्रुवैरिणा कामेन विनिर्जितश्चात्यंतं कामुकोऽभूदित्यर्थः ॥ ३० ॥ वासितां गजस्त्रियमनुगच्छतः शुष्मिणोऽतिरेतस्कस्य गजयूथपस्येव नारायणीमनुधावत आशु गच्छतोऽव्यर्थवीर्यस्य रुद्रस्य रेतश्चस्कंद स्खलितं । वासिता स्त्रीकरिण्योश्चेत्यमरः ॥ ३१ ॥ हे महीपते । मह्यां भूमौ यत्र यत्र स्थले महात्मनस्तस्य रुद्रस्य रेतोऽपतत् । तानि तानि रुद्रस्य हेम्नः सुवर्णस्य च क्षेत्राण्याकरा आसन् ॥ ३२ ॥ नदीसरोवरपर्वतेषु वनोपवनेषु च रुद्रक्षेत्रेषु ऋषय आसन्यत्र क्वच तत्र हरः संनिहितोऽभूत् ॥ ३३ ॥ हे नृपश्रेष्ठ । स रुद्रः स्वकीये रेतसि स्कन्ने भुवि पतिते सति जातसंज्ञः सन् आत्मानं स्वं देवस्य विष्णोर्मायया मोहनशक्त्या जडीकृतं मंदजनवत्कामुकं कृतमपश्यत्ज्ञातवान् । तदनंतरं कश्मलात्परस्त्र्यनुधावनरूपात्सान्निवृत्तोऽभूत् ॥ ३४ ॥ अथ जगत्स्वामिनः साकल्येन तदनुग्रहमंतरेण चाज्ञेयसामर्थ्यस्य विष्णोरवगतमाहात्म्यः सन् सम्यग्ज्ञातसर्वचेतनोत्तमत्ववान्सन् तस्य ॥ ३४

विष्णोरुदाहृतं नारायणीरूपं दर्शयेति प्रार्थनासमये यत्सुरसत्तमेति वचनं तत्स्वसाम्याभिप्रायं न मेने । यच्च कामिनामकामिनां च कामजनकामिति तदुदाहृतं तच्चानृतं न मेने । यदपि त्वामपि मोहयिष्यामीत्यभिप्रायेणोक्तं तत्कामिनां च संकल्पप्रभवोदयमिति तदुदाहृतं तत्प्राङ्न मेने । यतोऽथानंतरमवगततत्स्वमोहकत्वरूपमाहात्म्य इत्यादि योजनाऽत्र द्रष्टव्या । अत एवोक्तं प्राक् भावगंभीरमिति ॥ ३५ ॥ मधुसूदनस्तं रुद्रमविक्लवमपरवशं । स्वस्थमिति यावत् । अव्रीडं कामुकं लज्जारहितं । आलक्ष्य दृष्ट्वा परमप्रीतः सन् स्वां पौरुषीं पुरुषरूपां तनुं बिभ्रन्सन् उवाच ॥ ३६ ॥ अंग हे प्रिय । विबुधश्रेष्ठ रुद्र । त्वं मम मायया मोहितोऽस्यनंतरं दिष्ट्या मदिच्छयाऽऽत्मनस्तव स्वां निष्ठां स्थितिं स्थितो गतोऽसि । यत्तत्सा माया स्वैरं स्वेच्छया तर्तुमशक्येति भावः । मामेव ये प्रपद्यंते मायामेतां तरंति त इति स्मृतेः ॥ ३७ ॥ हे रुद्र । त्वां विना को नु पुमान् स्त्रियादिविषये विपक्तः प्रवृत्तांतःकरणोऽपि तांस्तान् भावान् शृंगादीन्प्रदर्श्य मानसविकारान्विसृजतीं । अत एवाकृतात्माभिः परमात्मानुग्रहासंपादकैस्तर्तुमशक्यां मे मायामतितरेत् । विकारो मानसो भाव इत्यमरः ॥ ३८ ॥ हे रुद्र । गुणमयी सत्त्वादिगुणात्मिका सेयं माया जडप्रकृतिलक्षणा त्वां नाभिभविष्यति भ्रांततया तिरस्कृतं न करिष्यति । तत्र निमित्तमाह ॥ मया समेतमित्यादिना । कालाख्यरूपवता कालनाम्ना भागशोंऽशेन मया समेतं त्वामिति ॥ अयमभिप्रायः ॥ कालनियामकतया संहर्तृतया च कालशब्दवाच्यस्त्वयि स्थितोऽहं यदा त्वां भक्तत्वेनानुगृण्हामि तदा त्वं भ्रांतिमुक्तरूपां न यास्यसीति । मया सम्यगितो भक्ततया भ्रांतो मा भूदित्यंगीकारः प्राप्त इति यत्सामर्थ्येनायमभिप्रायोऽवगम्यते । अन्यथा कालादि शब्दवाच्यभगवदंशस्य रुद्रे सर्वदा सत्वात्प्राक्तना रुद्रभ्रांतिर्नोपपद्यत इति ज्ञातव्यं ॥ ३९ ॥ हे राजन् । रुद्रो भगवता श्रीवत्साचिन्हवता सत्कृतः सन् तमामंत्र्य परिक्रम्य प्रदक्षणीकृत्य सगणः सन् स्वाश्रमं ययौ ॥ ४० ॥ हे भारत । आत्मनो विष्णोरंशभूतां मायां नारायणीरूपां भवानीं पार्वतीं प्रति ऋषिश्रेष्ठानां शंसतां कथयतां स्तुवतां सतां भगवान् भवः प्रीत्या तां मायां तुष्टाव स्तुतवान् ॥ ४१ ॥ हे भवानि । त्वं परस्योत्तमस्य पुंसोऽजस्य विष्णोर्मायां नारायणीरूपां त्वं व्यपश्योऽप्यद्राक्षीः । किं च परदेवताया विष्णोः कलानामंशवतां ऋषभश्रेष्ठोऽप्यहं वशोऽपि वशीकृतांतःकरणोऽपि यया मामया विमुह्ये भ्रांतोऽस्मि । मनोनिग्रहेऽस्वतंत्रा अन्ये विमुह्येयुरिति किमुत ॥ ४२ ॥ हे भवानि ।

त्वं योगादुपासनादि लक्षणात्समानां वर्षाणां सहस्रांते उपारतं निवृत्तं मामुपेत्य यमपृच्छत्पृष्टवत्यसि सः साक्षात्पुराणः पुरुष एष नारायणीरूपो यत्र विष्णोः कालः परिमितायुष्यज्ञापको जरादिविकारजनकश्च न विशते प्रविष्टो न भवति । वेदोऽपि यं साकल्येन प्रतिपादयितुं न विशते ॥ ४३ ॥ हे तात कृपास्पदपरीक्षित् । मया ते तव सिंधोः क्षीरसमुद्रस्य मथनकाले येन महाचलो मंदरः पृष्ठे धृतस्तस्य शार्ङ्गधन्वनो हरेर्विक्रम इत्युक्तप्रकारेण कथितः ॥ ४४ ॥ एतादृशं शार्ङ्गधन्विनो वीर्यं शृण्वतः पुनःपुनरनुकीर्तयतश्चोद्यम उद्योग ऐहिकपारत्रिकसाधनः क्वचित्कस्मिन्विषयेऽपि जातु कदाचिदपि नरिष्यते क्षयवान्न भवति । यस्मात्कारणादुत्तमैर्ब्रह्मादिभिः स्तुत्यः श्लोकः कीर्तिर्यस्य तस्य हरेर्गुणानुवर्णनं तद्गुणश्रवणं च समस्तसांसारिकश्रमनाशकं तस्मात्तदुभयं मुमुक्षुणाऽवश्यमनुष्ठेयं ॥ ४५ ॥ एवं भगवद्गुणकीर्तनोद्रिक्तभक्तिः शुक उक्तगुणं भगवंतं स्तुवन्नमति ॥ असदविषयमिति । यो हरिः सिंधोः क्षीरसमुद्रमध्ये मथनजममृतमसतामभक्त्यादिदोषवतामसुराणामविषयं तत्साधनागोचरमप्राप्यं । भावेन भक्त्या सतां भक्तानां प्राप्यं । स्वस्यांघ्रिं । पादपद्मं प्रपन्नान् शरणागतान् अमरवर्यान्देवश्रेष्ठान् आशयन्भोजयामास । पाययामासेति यावत् । किं कुर्वन् । सुरारीनसुरान् कपटेन छद्मना युवतेः स्त्रियो वेषेण नारायण्याख्येन मोहयन्सन् । अहं तं तादृशगुणमिमं स्वपादसमीपं पूजाद्यर्थमुपसृतानां प्राप्तानां कामानामभिलाषाणां पूरकं नतोऽस्मि ॥४६॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ८–११ ॥

॥ हरिः ॐ ॥ शुकः स्वायंभुवादि चाक्षुषांत मन्वंतरस्थितिं सविस्तरं निरूप्य सप्तमस्य वैवस्वताख्यस्य मनोर्वंशादिस्थितिं निरूपयन्नेव तदविनाभूतहरेर्माहात्म्यमेव प्रतिपादयति ॥ मनुरित्यादिना । हे राजन् । श्राद्धदेव इति श्रुतः प्रसिद्धो वर्तमान इदानीं ततः सप्तमो विवस्वतः पुत्रो वैवस्वतो मनुस्तस्यापत्यानि पुत्रान्मे मम सकाशाच्छृणु ॥ १ ॥ इक्ष्वाकादयो वसुमदंता दश वैवस्वतमनोः पुत्राः । हे परंतप शत्रुसंतापक परीक्षिद्राज । वैवस्वतेऽतरे आदित्या इत्यादि ऋभव इत्यंत नामानो देवास्तेषां पुरंदरनामेंद्रः ॥ ४ ॥ कश्यपादयो वसिष्ठांताः सप्तर्षयो वैवस्वतमन्वंतरे ॥ ५ ॥ अत्र वैवस्वतमन्वंतरेऽपि कश्यपाद्दषेरदितिदेव्यां भगवतो नारायणस्य जन्म प्रादुर्भावोऽभूत् । प्रादुर्भूतस्य नामाद्याह । प्रादुर्भूतो विष्णुरादित्युत्पन्नदेवानामनुजो वामनाख्यरूपधारीति ॥ ६ ॥ पूर्वोक्तमनुसंख्यां स्मारयन्नेव भविष्यन्मनुकथाकथनस्याऽपि विष्णुशक्तिप्रकाशकत्वेनावश्यकत्वं सूचयन्नेव

तत्प्रतिजानीते ॥ संक्षेपत इत्यादिना । हे राजन् । मया ते सप्त मन्वंतराणि संक्षेपत उक्तानि । अथ चो यस्माद्भविष्याण्यपि मन्वंतराणि विष्णोः शक्त्यन्वितानि । अथ तस्मात्तान्यपि ते वक्ष्यामीति ॥ ७ ॥ हे राजेंद्र । विवस्वान्नामकादित्यस्य संज्ञा छाया चेति द्वे भार्ये । उभे च विश्वकर्मणः सुते । ये प्राक् पूर्वं तवाभिहिते उक्ते तदपेक्षया वडबा नाम्नी तृतीया विवस्वतोर्भार्यास्तासां मध्ये संज्ञासुता यमो यमी श्राद्धदेव इति त्रयः । छायायाश्च सुतान्वक्ष्यमाणान् शृणु ॥ ९ ॥ सावर्णिर्या सावर्णाख्यस्य भार्या सा तपनी नाम्नी कन्या शनैश्चरेति त्रयः छायासुताः । अश्विनौ वडबायाः पुत्रौ ॥ १० ॥ हे नृप । अष्टमेंऽतरे मन्वंतरे याते गते सति सावर्ण्यमनुर्भविता भविष्यति । तस्य सावर्णेर्निर्मोहविरजस्काद्याः पुत्राः ॥ ११ ॥ तत्र सावर्णिमन्वंतरे सुतपसविरजाऽमितप्रजा इति नामानो देवास्तेषां देवानां विरोचनस्यासुरस्य सुतो बलिरिंद्रो भविष्यति ॥ १२ ॥ यो बलिः पदत्रयं याचमानाय विष्णवे वामनरूपिणे इमां पृथिवीं दत्वा राद्धमैश्वर्यादिभिर्वृद्धमिंद्रपदं स्वर्गं हित्वा परिपूज्यस्ततो विष्णोरनुग्रहात्सिद्धिं मोक्षलक्षणमवाप्स्यति । बलिशब्दवाच्ययोः कर्मदेवासुरयोर्मध्ये कर्मदेवस्य मोक्ष इति ज्ञातव्यं ॥ १३ ॥ योऽसौ बलिर्भगवता वामनेनाप्रीतेन बद्धः पुनः प्रीतेन स्वर्गाधिके सुतले निवेशितः स्थापितः सन् स्वराड् स्वर्गाधिपेंद्र इवाधुनाऽऽस्ते ॥ १४ ॥ अष्टमे सावर्णिमन्वंतरे गालवो दीप्तिमान् प्रशस्तकांतिर्दीप्तिमन्नाम रामो भार्गवो द्रोणपुत्रोऽश्वत्थामा तथा कृपाचार्यो ऋष्यशृंगोऽस्माकं पिता भगवान् बादरायणः ॥ १५ ॥ इतीमे स्वयोग्यात्सप्तर्षयो भवंति । हे राजन् । इदानीमिमे सप्तर्षयः स्वकीये आश्रमपदे संति ॥ १६ ॥ देवगुह्याख्यात्सरस्वतीनाम्न्यां प्रादुर्भूतः प्रभुर्नामेश्वरो हरिः पुरंदराख्येंद्रस्य स्थानं स्वर्गं पुरंदरादपहृत्य बलये दास्यति ॥ १७ ॥ हे नृप । वरुणोत्पन्नो दक्षसावर्ण्याख्यो नवमो मनुर्दक्षसावर्णेर्भूतकेत्वादयः सुताः ॥ १८ ॥ दक्षसावर्णिमन्वंतरे पारामरीचिगर्भा इत्यादि नामानो देवाः । अद्भुतनामेंद्रः स्मृतः । द्युतिमत्प्रभृतयस्तत्र सप्तर्षयो भविष्यंति । आयुष्मान्नामकादंबुधराख्यायां ऋषभनामा हरिर्भगवान् प्रादुर्भविता । किलेत्यत्र प्रमाणप्रसिद्धिं सूचयति । अद्भुतो नामेंद्रो येन ऋषभेन संरक्षितः सन् त्रिलोकीं पालयिष्यति ॥ २० ॥ उपश्लोकस्य सुतो महान्पूज्यो ब्रह्मसावर्ण्याख्यो दशमो मनुः । भूरिषेणादयो ब्रह्मसावर्णिपुत्रा हविष्मन्नामकप्रभृतयो द्विजाः सप्तर्षयः । सुधामानो विरुद्धा इत्यादि नामका देवाः शंभुनामेंद्रो दशमो ब्रह्मसावर्णिमन्वंतरे

विष्वक्सेनाभिधाद्विषूचिनाम्न्यां जातः शातनामा विश्वसृजां ब्रह्मादीनां विभुः स्वामी भगवान्नारायणः शंभवाख्येंद्रस्य सखा भविष्यति । विश्वजितेति पाठे तन्नामविषुचीपतेरिति ज्ञेयं ॥ २३ ॥ आत्मवान्प्रशस्तभगवद्विषयमनस्को धर्मसावर्णिनामैकादशो मनुरनागतो भविता । सत्यधर्मादयो दश सावर्णिपुत्राः । विहंगमादयो निर्वाणरुच्यंता देवास्तेषां विहंगमकागमनिर्वाणरुचिनामक-देवानामिंद्रश्च वैधृत्याख्योऽरुणादयः सप्तर्षयः ॥ २५ ॥ तत्रैकादशधर्मसावर्णिमन्वंतरे आर्यकस्य वैधृतायां धर्मसेतुरिति स्मृतो हरेरंशः सुतः सन् त्रिलोकीं धारयिष्यति पालयिष्यति ॥ २६ ॥ हे राजन् । रुद्रसावर्ण्याख्यो द्वादशो मनुर्भविता । देववानुप-देवदेवश्रेष्ठादि नामानो रुद्रसावर्णिपुत्राः ॥ २७ ॥ द्वादशमे रुद्रसावर्णिमन्वंतरे ऋतधामाख्येंद्रो हरितादि नामानश्च देवास्तपो-मूर्तितपश्चाग्नीध्रकादि नामानो रुद्रसावर्णिसप्तर्षयः ॥ २८ ॥ सत्यमनोनामकात्सूनृताख्यायां जातः सर्वकार्यसमर्थः स्वधामाख्यो हरेरंशो द्वादशरुद्रसावर्णिमन्वंतरं पालयिष्यति ॥ २९ ॥ आत्मवान्देवसावर्णिस्त्रयोदशो मनुर्भविष्यति । चित्रसेनविचित्रादि नामानो देवसावर्णिपुत्राः ॥ ३० ॥ सुकर्मसुत्राम नामानो देवा दिवस्पतिरिंद्रस्तदा देवसावर्णिमन्वंतरे निर्मोकतत्त्वदर्शोदयः सप्तर्षयो भविष्यंति ॥ ३१ ॥ देवहोत्रस्य बृहतीनाम्न्यां भार्यायां दिवस्पतिनामकेंद्रस्यैश्वर्यादेरूपहर्ता दाता योगेश्वराख्यो हरेरंशः पुत्रो भविष्यति ॥ ३२ ॥ इंद्रसावर्णिश्चतुर्दशत्वसंख्यापूरकमनुर्भविष्यति । चतुर्दशम इत्यादि प्रयोगे मद प्रत्ययः पूर्णार्थकः । जंतु-भारवचर्याद्या इंद्रसावर्णिपुत्राः ॥ ३३ ॥ विचित्रचाक्षुषनामानो देवाः शुचिर्नामेंद्रो भविष्यति । अग्निबाहुशुचि शुद्धमगधाद्याः सप्तर्षयः ॥ ३४ ॥ नारायणस्य वितानायां हरिर्बृहद्भानुनामतनयः सन् क्रियासमुदायान्विस्तारयिष्यति ॥ ३५ ॥ हे राजन् त्रिषु भूतभविष्यद्वर्तमानाख्येषु कालेष्वनुगतान्येतानि चतुर्दशमन्वंतराणि ते तव प्रोक्तानि येभिर्मन्वंतरैश्चतुर्दशाभिः कृतत्रेताद्वापर-कलियुगसमुदायलक्षणमहायुगसहस्रनामतो दैनंदिनकल्पो मितः परिमित एकस्मिन्दैनंदिनकल्पे स्वायंभुवादयश्चतुर्दश मनवो भवंतीति यावत् ॥ ३६ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ८—१२ ॥ ॥

॥ हरिः ॐ ॥ एवं श्रुतयज्ञादि नामक भगवत्परितोऽपि परीक्षिद्विस्तरेण तच्छ्रवणकामः पुनः पृच्छतीत्याह शुकः ॥ राजेत्या-दिना । तत्रादौ राजा शुकं पृच्छति ॥ मन्वंतरेष्वित्यादिना । हे शुक । भगवान्नारायणो मन्वंतरेषु स्वायंभुवादींद्रसावर्ण्यंतचतुर्दश-

मनुकालेषु यथा केन प्रकारेण प्रवृत्तो भवति । तं प्रकारमिमे स्वायंभुवादि मनवः केन केन प्रकारेण वर्तंते एके येनकेन यास्मिन्कस्मिन्कर्माणि नियुक्ता भवंति तत्सर्वं त्वं मे वदस्व ॥ १ ॥ इति परीक्षिता पृष्टो ऋषिः शुक उवाच ॥ मनव इति । येन नियुक्ता इत्यस्योत्तरमाह । हे महीपते । मनवो मनुपुत्राश्च मुनयश्चेंद्रः सुरगणाश्चेते सर्वे पूर्णषड्गुणत्वादि निमित्तेन पुरुषशब्दितविष्ण्वाज्ञानुवर्तिन एवेति ॥ २ ॥ ननु प्रकृतस्वायंभुवादीनां यज्ञाद्याज्ञानुवर्तनोक्तेः कथमिदानीं पुरुषाज्ञानुवार्तितोच्यत इति मंदाशंकां प्रमादादुत्थां परिहरति ॥ यज्ञादय इति । हे नृप । यज्ञनामकभगवदादयो याः पुरुषशब्दितविष्णुसंबंधिन्यस्तनवोऽवताराः कथिता आभिस्तनुभिर्यज्ञाद्यवतारैः सम्यक् प्रेरिताः स्वायंभुवमन्वादयो जगत्प्रवृत्तिं कारयंति । अनेन येन यास्मिन्कर्माणि नियुक्ता इत्यस्य सामान्यत उत्तरमुक्तमिति ज्ञेयं ॥ ३ ॥ तदेव विशिष्याह ॥ चतुर्युगांत इत्यादिना । चतुर्युगशब्दित दैनंदिनांतिममहायुगांते कालेन प्रलयरूपेण ग्रस्तान्प्रवर्तकाभावेन निगीर्णप्रायान् श्रुतिगणानृषयस्तपसा साधनेन यथावदपश्यन् ततः श्रुतिगणाद्धर्मो सनातनः सार्वकालिको ज्ञातव्यः ॥ ४ ॥ ततस्तदनंतरं ततः श्रुतिगणान् ऋषिभ्यश्चोक्तप्रकारं पादचतुष्टयोपेतं संपूर्णं धर्मं हरिणा च उदिता एतादृशो धर्म इत्युक्ताश्च । उक्तधर्मविषये युक्ताश्च युक्तायुक्तादिनियामकयुक्तियुक्ताश्च मनवः संचारयंति । अद्धा याथार्थ्येन । एवं स्वस्वकीयकाले प्रजापाला नृपा विभागशो विभागेन स्वस्वविभक्तदेशानुसारेण यावदंतं स्वपाल्यभूमिमर्यादा तावन्महीं पालयंति संरक्षयंति । ये देवास्तेऽत्रानुकीर्तितास्ते यज्ञभागभुजः ॥ ६ ॥ इंद्रस्तु भगवता विष्णुना दत्तामुत्कृष्टां त्रैलोक्याधिपत्यादिसंपदं भुंजानोऽनुभवन् त्रींल्लोकान् भूर्भुवःस्वर्लक्षणानि भुवनानि तत्स्थजनांश्च रक्षति । भूलोके कामं कर्षकप्रजेच्छापूर्तिर्यथा तथा मेघैर्वृष्टिं कारयति ॥ ७ ॥ हरिः सिद्धरूपधरः सन् कपिलाद्यवतारो भूत्वाऽनुयुगं प्रतियुगं ज्ञानं ब्रूते । चतुर्युगमिति पाठे कृतादि युगचतुष्टयं । ऋषेर्व्यासादे रूपधारी कर्मयोगं ब्रूते । योगेशो दत्तात्रेयादि रूपवान् योगमणिमादि साधनं ब्रूते ॥ ८ ॥ प्रजेशेषु ब्रह्मादिषु स्थितेन रूपेण सर्गं सृष्टिं करोति । स्वराडिंद्रादिरूपेण दस्यूंश्चोरान् असुरांश्च हंति संहरति । पृथग्गुणस्तमोगुणप्रवर्तको भगवान् कालरूपेण सर्वसंहारकनृसिंहादि रूपेण सर्वेषां जनानामभवाय नाशाय प्रवर्तते ॥ ९ ॥ ब्रह्मादिस्तूयमानो दृश्यते प्राकृतनामरूपरहिताया मायया नारायण्यादिरूपया मोहितात्मभिर्जनैः स्वबुद्धिकल्पितैर्नानाप्रकारैरद्वैतादिभिर्दर्शनैः शास्त्रैरुक्तविधयोपासितो

नैव दृश्यते । दृश्यतेत्वग्र्यया बुद्ध्या प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ इत्यादि श्रुतेः ॥ १० ॥ हे राजन् । पुराविदः पुरातनस्थितिज्ञा यत्र चतुर्दश मन्वंतराण्याहुस्तस्यैतत्कल्पविकल्पस्य दैनंदिनात्मककल्पविशेषस्य प्रमाणं सहस्रयुगपर्ययो महायुगसहस्ररूपं प्रमाणमियत्ता परिकीर्तितमुक्ता ॥ ११ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ८—१३ ॥ ॥

॥ हरिः ॐ ॥ अत्रापि बलिबंधनादि हरेर्माहात्म्यमेव प्रतिपाद्यते । तत्रादौ परीक्षिद्राजोक्तरूपं हरिमाहात्म्यं विस्तराच्छ्रोतुं शुकं पृच्छति ॥ बलेरिति । हे शुक । हरिर्नारायणः स्वयं सर्वलोकेश्वरो भूत्वाऽपि कृपणवद्बलेः सकाशाद्भूमेः पदत्रयं कस्माद्धेतोरयाचत । तया लब्धः प्राप्तोऽर्थः स्वर्गाद्यपहरणलक्षणप्रयोजनोऽपि पुनस्तं बलिं कस्माद्बबंध ॥ १ ॥ सर्वाभीष्टपूर्णस्येश्वरस्य याञ्चाऽनागसि निरपराधिनोऽपि बलेर्बंधनमित्येतन्नोऽस्माकं महाकौतूहलमत्याश्चर्यकरं यस्मात्तस्मादेतत्सकारणं वेदितुं ज्ञातुं वयमिच्छामः । आगोऽपराधो मंतुश्चेत्यमरः ॥ २ ॥ एवं परीक्षिता पृष्टः शुक उवाच । हे राजन् । पुरेंद्रेण देवासुरयुद्धे स बलिरपहृतैश्वर्योऽसुभिः प्राणैर्हापितस्त्याजितः पुनर्भृगुभिः शुक्रादिभिः संजीविन्या जीवितश्चास । तदनंतरं महान् भृगूणां शिष्यो बलिः स्वकीयसर्वपदार्थसमर्पणेन गुरूंस्तान् शुक्रादीन् सर्वप्रकारेण सिषेवे ॥ ३ ॥ महान् अनुभावः स्वसामर्थ्यं येषां ते महानुभावा ब्रह्म भगवंतं नारायणं वेदादींश्चाणत्यवगच्छंतीति ब्राह्मणाः । व्यत्ययो बहुलमिति न्यायेन मध्यवर्णगताकारस्य पूर्वनिपातः । भृगवः शुक्रादयो बलिप्रीतिं कुर्वाणाः संतस्त्रिलोकं जेतुमिच्छंतं बलिं महाभिषेकेण विधिनाऽभिषिच्य सर्वस्वदक्षिणावता विश्वजिन्नामकेन यागेन देवपूजाकारिणमकुर्वन् ॥ ४ ॥ ततस्तदनंतरं शुक्रादिप्रदत्तैर्हविर्भिरिद्धादभिवृद्धाद्धुताशनाद्यज्ञाग्नेः सुवर्णपट्टिकाबंधो रथो हरयः श्वेता अश्वतुरंगमा यस्येंद्रस्य तस्य तुरंगा हयास्तेषां वर्ण इव वर्णो येषां ते हया गमनशालिनोऽश्वाश्च सिंहेन चिन्हरूपेणातिप्रकाशमानो ध्वजश्चास बभूव ॥ ५ ॥ पुरटेन सुवर्णेनोपनद्धं सम्यग्बद्धं दिव्यमलौकिकं धनुश्च बाणैररिक्तावशून्यौ पूर्णौ तूणौ निषंगौ बाणाधारभूतौ दिव्यं कवचं चेत्येतानि यज्ञाग्नेराविर्भूतानीति ज्ञेयं । पितामहश्चतुर्मुखस्तस्य बलेरम्लानान्यतिरोहितकांतिमंति पुष्पाणि यस्यां तां मालां ददौ शुक्राचार्यश्च जलजं शंखं ददौ । विवक्षातः कारकाणि भवंतीत्यत्र संप्रदानविवक्षाभावात्तस्येति षष्ठ्युपपत्तिः । अब्जो शंखे शशांके चेत्यमरः ॥ ६ ॥ एवमुक्तरीत्या स बलिर्विप्रैः शुक्रादिभिरार्जिताः संपादिता योधनस्य युद्धस्य साधन- ॥

भूतपराधौ यस्य स तथा सन् तैः शुक्रादिभिः कल्पितं स्वस्त्ययनं क्षेममांगल्यादिकरं पुण्याहवाचनं यस्य स तथा सन् अथ शुक्रादीन्विप्रान्प्रदक्षणीकृत्य कृतः प्रणामो नमस्कारो येन स तथा सन् स्वपितामहं प्रल्हादमामंत्र्याहं कार्यसिद्ध्यै गच्छामि त्वमनुग्रहाणेत्युक्त्वा नमस्कारं कृतवान् ॥ ७ ॥ अथ महारथो बलिर्भृगुभिर्दत्तं दिव्यं रथमारुह्य समीचीनपुष्पमालाधारी धनुष्मान् खड्गवान् गृहीतनिषंगश्चेत्येवं सन्नद्धः । निषंगा इषुधिर्द्वयोरित्यमरः ॥ ८ ॥ हेम्नः सुवर्णस्यांगदाभ्यां बाहुभूषणाभ्यां लसंतौ प्रकाशमानौ बाहू यस्य सः स्फुरती प्रकाशमाने मकराकारे कुंडले यस्य सो बली रथारूढः सन् धिष्ण्ये आवहनादिरूपे स्वस्थाने वर्तमानो हव्यवाडग्निरिव रराज ॥ ९ ॥ स बलिस्तुल्याः स्वैश्वर्यादिभिः समानैश्वर्यवयः कांतयो येषां तैः स्वसेनासमूहसहितैर्दृग्भिर्दृष्टिभिः खमाकाशं पिबद्भिरिव स्थितैरग्निः परिधीन् समिद्ध इव लोकान्दहद्भिर्दैत्यसेनासमूहरक्षकैर्वृतः सन् संख्याबाहुल्यादिना महतीमसुरसंबंधिनीं ध्वजिनीं सेनां विकर्षन् तन्नियमने विभुः समर्थः सन् ऋद्धां संपदाभिवृद्धामिंद्रपुरीं प्रति भूम्यंतरिक्षे कंपयन्निर्ययौ । द्यावा भूमी तु रोदसीत्यमरः ॥ १० ॥ ते चामरद्रुमाः पारिजातादि देववृक्षा येषु तैः श्रीमद्भिः पुष्पफलादि संपद्युक्तैर्नंदनादिभिरुपवनोद्यानैः कूजतां स्वजातिस्वरं कुर्वतां विहंगानां पक्षिणां मिथुनैः स्त्रीपुरुषैर्गायद्भिरिव स्थितैः पुष्पादिरसपानमदोपेतैर्मधुव्रतैर्भ्रमरैः रम्यां मनोहरामिंद्रपुरीं ययाविति पूर्वेणान्वयः । मधुव्रतोमधुकरोमधुलिण्मधुपालिन इत्यमरः । प्रवालो स्त्रीति सप्रवालानां विद्रुमवतां सुवर्णपल्लवानां फलानां पुष्पाणां चोरूत्कृष्टो भारो यासां ताः शाखा येषां ते प्रवालफलपुष्पोरुभारशाखाः॥ प्रवाले विद्रुमे च नपुंसकामीति नानार्थमुक्तामाला ॥ १२ ॥ यत्रेंद्रपुर्यां हंसचक्रवाककारंडवपक्षिसमुदायसंदटिता नालिन्यः कमलसरोवराः संति । यत्र नलिनीषु सुरैः सेविता बहुमानिताः प्रमदाः स्त्रियः क्रीडंति । तामिंद्रपुरीं ययाविति पूर्वेणान्वयः ॥१३॥ तामेवेंद्रपुरीं विशिनष्टि । परिखभूतया दुर्गस्य परितः खातपूर्णजलरूपया । देवसेवयाऽऽकाशगंगया वृतां । ज्वलदग्निवर्णसदृशवर्णे। प्रकारांतपरितः संचारयोग्यकुड्यरूपाट्टालसहितेन प्राकारेण वृतां। सुवर्णपट्टिकाबंधकपाटवद्भिर्द्वारैः स्फटिकमणिनिर्मितपुरद्वारैश्च वृतां- रुग्मं कार्तस्वरं जांबूनदमष्टापदो स्त्रियामित्यमरः । कपाटमररं तुल्ये । पुरद्वारंतु गोपुरमिति च ॥ १४ ॥ जुष्टां नानाविधजनैः सेवितां विविक्तप्रकृष्टमार्गोपेतां सभाभिश्चत्वरैरंगणे रथ्याभिः रथवीथिकाभिश्चाढ्यां संपन्नां न्यर्बुदसंख्याकैर्विमानैर्देवयानैर्वृतां विश्व-

कर्मणा विनिर्मितां । अंगणं चत्वराजिरे । रथ्या प्रतोली विशिखेति चामरः ॥ १५ ॥ मणिमयैः रत्नप्रचुरैर्वज्रमणिभिर्विद्रुमैः प्रवालैश्च रचितवेदिकावद्भिः शृंगाटकैश्चतुष्पथैर्युक्तमिति पूर्वेणान्वयः । शृंगाटक चतुष्पथे । प्रवालं विद्रुमोस्त्रियामिति चामरः ॥ १६ ॥ यस्यामिंद्रपुर्यां नित्यानि बहुकालवंतीनि वयो रूपाणि येषां ते श्यामाः षोडशवार्षिकाः । विरजवाससो निर्मलवस्त्राः पुरुषाः स्त्रीभिर्वन्हयोऽग्नयोऽर्चिभिः स्वशिखाभिर्ज्वालाभिरिव भ्राजंते । श्यामः षोडशवर्षः स्यात् श्यामवर्णे च तद्वतीति नानार्थरत्नमाला । द्वयोर्ज्वालकीलावार्चिरित्यमरः ॥ १७ ॥ यत्रेंद्रपुर्यां मार्गे सुरस्त्रीकेशेभ्यो विभ्रष्टाया नूतनकल्हारपुष्पमालाया आमोदं परिमलमुपादाय मारुतो वायुर्वातीतस्ततो गच्छति । नूतनं नवं । सौगंधिकं तु कल्हारमिति चामरः ॥ १८ ॥ यत्रेंद्रपुर्यां सुवर्णनिर्मितगवाक्षेभ्यो बहिरागच्छमानेन कृष्णागरुपरिमलवता पांडुरेण शुभ्रेण धूमेनाच्छादितमार्गे सुरस्त्रियो गच्छंति । श्वेतपांडुरा इत्यमरः ॥ १९ ॥ मुक्तामालावलंबिवितानैर्गृहांत उपरिबद्धपटैः रत्नखचितकेतुभिर्ध्वजैर्नानाप्रकारपताकाभिर्वलिभीभिर्गृहस्य परितः शृंगारायावबद्धवक्रदारुभिरावृतां । शिखंडिपारावतभृंगैर्नादो ध्वनिस्तेन संजातो यस्यां तां । वैमानिकानां देवानां स्त्रीणां कलगीतैरस्पष्टाक्षरमनोहरस्वरगानैर्मांगल्योपेतां । नादितामित्यत्र तदस्य संजातं तारकादिभ्य इतच् इत जिति नादशब्दस्य इतच् प्रत्ययः । एवमेव जातीयकेऽपि ज्ञेयं । ध्वनौ तु मधुरास्फुटेकल इत्यमरः ॥ २॥ ॥ मृदंगादीनां ध्वनिभिः सहितां । वाद्यसहितैर्नर्तनैरुपदेवानां गंधर्वाणां गानैर्मनोरमां । स्वप्रभया ज़िताऽभिभूता ग्रहाः सूर्यादि नवग्रहा यया तां ॥ २१ ॥ यामिंद्रपुरीं खला गूढद्वेषा भूतान्प्राणिनो द्रुह्यंतीति प्राणिद्रोहिणः शठाः स्तब्धा मानिनोऽहंकारिणः कामिनो निषिद्धापेक्षावंतो लुब्धा अदानबुद्धय इत्येवमादयोऽधर्मिष्ठा अतिपापिनो न गच्छंतीत्येभिर्गूढद्वेषादिभी रहिता गच्छंत्यपि । अतिशयेनेतमधिष्ठानावित्यधर्म शब्दस्येष्ठन् प्रत्ययः ॥ २२ ॥ वरूथिनीनां पतिः पालकः स्वामी च स बलिस्तां पूर्वोक्तगुणां देवास्तिष्ठत्यस्यामिति देवधानीममरावतीं बहिः समंतात्परितः पृतनया सेनया रुरुधे निरुद्धवान् । अथेंद्रस्त्रीणां भयं जनयन् सन् शुक्राचार्यदत्तं महाध्वनियुक्तं जलजं शंखं दध्मौ ध्वनियुक्तमकरोत् । पृतना च वरूथिनीति हलः । स्त्री योषिदबला योषेत्यमरः ॥ २३ ॥ मघवानिंद्रो बलेस्तत्परमसुद्यममुद्योगमभिप्रेत्य युद्धकरणाभिप्रायेणागत इति सम्यग्ज्ञात्वा सर्वदेवगणोपेतः सन् गुरुं बृहस्पतिं प्रत्येतद्वक्ष्यमाणमुवाच ॥ २४ ॥ हे भगवन्



॥

पूज्य बृहस्पते । नः पूर्ववैरिणो बलेरुद्यम उद्योगो भूयान् । इमं बलिमविषह्यं सोढुं सहितुमशक्यमहं मन्ये । अयं बलिः केन तेजसा तप आदि रूपेणासमः समानरहित आसीत् ॥ २५ ॥ तदेव विवृणोति ॥ नैनमिति । कश्चिदपि वीरः । कुतः । कस्मादपि साधनाद्येनं बलिं प्रत्याभिमुख्येन वोढुं शस्त्रादिकं धर्तुमधीश्वरः समर्थो न भवेत् । अयं बलिर्मुखेनेदं जगत्पिबन्निवास्ते । जिव्हया दशदिशो लिहन्नास्वादयन्निवास्ते । उत्थितोऽभिवृद्धः संवर्ताग्निः प्रलयाग्निरिव दृष्टिभिर्नभोंऽतरिक्षं दहन्निव वर्तते । संवर्त प्रलय इत्यमरः॥२६॥ हे बृहस्पते । त्वं मद्रिपोर्बलेर्यदोजो ऽवष्टंभशक्तिः परनिरोधशक्तिः सहनशक्तिर्बलं शारीरशक्तिस्तेजः प्रताप इत्येतेषां तत्प्रयुक्तदुर्धर्षत्वस्य च कारणं ब्रूहि । यत ओजादिभिरेषः समुद्यमो जातः ॥ २७ ॥ एवं बलिना पृष्टो बृहस्पतिरुवाच । हे मघवन् । तव शत्रोर्बलेरुन्नतेरुत्कर्षस्य कारणं ब्रह्मवादिभिर्गुरुभिर्भृगुभिः स्वशिष्यायोपभृतं विद्योपदेशादिना पूर्तं तेजः शौर्यमिति जानामि ॥ २८ ॥ हे मघवन् । जनाः कृतांतस्य यमस्य पुरः स्थातुं यथा न शक्नुवंति तथा हरिं नारायणं विना भवत्सदृशोऽन्यो देवो भवानपि वाऽस्य बलेः पुरःस्थातुं शक्तो न। कृतांतो यमुनाभ्राता शमनो यमराड्यम इत्यमरः ॥ २९ ॥ हे मघवन् । यत उक्तरीत्या शत्रोर्बलेर्विपर्ययो वैपरीत्यं भवदपकृष्टशौर्यादिमत्वं तस्य तदपेक्षयोत्कृष्टशौर्यादिमत्वं तस्माद्यूयं सर्वे स्वोत्कर्षकालं प्रतीक्षंतः संतो निलयमाश्रयभूतं त्रिविष्टपं स्वर्गमुत्सृज्यान्यत्र यात गच्छत ॥ ३० ॥ एषो बलिः संप्रतीदानीं शुक्रादिविप्राणामनुग्रहेण बलेन शरीरशक्त्योदर्क उत्कृष्ट ऊर्जितपराक्रमश्च । तथाऽप्युत्तरकाले एषामेव शुक्रादीनामवमानेन स्वकृतेन सानुबंधो देहिसंबंध्यादिभिःसहितः सन् विनष्टो भविष्यति । एतर्हि संप्रतीदानीमित्यमरः ॥ ३१ ॥ ते गीर्वाणा देवा अर्थानुदर्शिना भविष्यत्प्रयोजनाभिज्ञेन गुरुणा बृहस्पतिनैवमुक्तरीत्या समंत्रिता विचारिता अर्थाः प्रयोजनानि यैस्ते संतः स्वेच्छानुसारिरूपधारिणश्च संतस्त्रिविष्टपं परित्यज्य गतवंतः। गीर्वाणा दानवारय इत्यमरः ॥ ३२ ॥ विरोचनपुत्रो बलिर्देवेष्विंद्रादिषूक्तरीत्या विलीनेष्वाच्छादितस्वरूपेषु सत्सु स्वयं देवधानीं पुरीममरावतीं । पुर्यामिति यावत् । अधिष्ठाय स्थित्वा भूर्भुवःस्वर्लक्षणं जगत्त्रयं स्ववशं चक्रे । अधिशीङ्स्थासां कर्मेति अध्युपपदानां स्वप्नगतिनिवृत्त्युपवेशनार्थानां शीङ्स्थासामधिकरणस्य कर्मसंज्ञाविधानाद्देवधानीमिति कर्मणिद्वितीया ॥ ३३ ॥ शिष्ये बलौ वात्सल्योपेता भृगवः शुक्रादयः सर्वजगद्विजयवंतं स्वेषामनुव्रतमनुकूलं

शिष्यं तं बलिमश्वमेधानां यज्ञानां शतेनायाजयन् देवपूजाकारिणमकुर्वन् ॥ ३४ ॥ ततः स बलिस्तेषां शुक्रादीनामनुभावेन समग्रानुग्रहरूपेण भुवनत्रये प्रसिद्धां कीर्तिं दिक्षु विस्तारयन् उडूनां नक्षत्राणां राडधिपतिश्चंद्र इव दीप्तिमानभूत् ॥ ३५ ॥ महामना बलिरात्मानं स्वं कृतकृत्यं मुक्तमिव मन्यमानो द्विजैः शुक्रादिभिर्देवेन हरिणा चोपलंभितां प्रापितामभिवृद्धां श्रियं त्रैलोक्यसंपदं बुभुजेऽनुभुक्तवान् ॥ ३६ ॥ इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥ ८—१४ ॥ ॥

॥ हरिः ॐ ॥ अत्रापि पुत्रादर्शनप्रयुक्तव्यथयाऽदितेः कश्यपोपदेशकथनव्याजेन भगवन्महिमैवोच्यते । तत्रादाविंद्रादिगमनानंतरमदितिस्थितिमाह शुकः परीक्षितं ॥ एवमित्यादिना । हे राजन् । एवमुक्तरीत्या स्वपुत्रेष्विंद्रादिषु नष्टेषु दृष्ट्यगोचरेषु सत्स्विंद्रादिदेवानां माताऽदितिस्तदा दैत्यैस्त्रिविष्टपेऽपहृते सति संरक्षकस्वामिरहिता स्त्रीव पर्यंतप्यत्संतापवती बभूव ॥ १ ॥ एकस्मिन्काले चिराद्बहुकालकृतात्समाधेश्चित्तैकाग्रतपसो भगवत्ध्यानाद्विरतः शांतः । ध्यानपरित्यागीति यावत् । भगवान्कश्यपो-मुनिरुत्सवरहितं सुखरहितं च तस्या अदितेराश्रमं गतवान् । हे कुरुकुलोद्धारक राजन् । स कश्यपः कृत आसनपरिग्रहः स्वीकारो येन सह यथा न्यायं शास्त्रमनतिक्रम्यादित्या सभाजितः पूजितः सन् स्वपत्नीमदितिं दैन्योपेतमुखीं दृष्ट्वा तां प्रतीदं वक्ष्यमाणमाह ॥ ३ ॥ हे भद्रे मंगलरूपे गृहमेधिनि गृहस्थाश्रमोपयुक्तधर्मसाधनि अदिते । विप्राणामभद्रममंगलमनिष्टं नागतं न प्राप्तमपि किं । ब्राह्मणानामनिष्टं प्राप्तं किं । एवमग्रे ज्ञातव्यं । अधुना लोके धर्मस्याभद्रं नागतं किं । स्वेच्छानुवर्तिनो मृत्योर्मारकदेवस्य सकाशाल्लोकस्य जनस्याभद्रं नागतं किं ॥ ४ ॥ अयोगिनां हरीच्छादिरूपमोक्षोपायविधुराणां यत्र धर्मार्थकामेषु गृहेषु सद्मादिषु योगः स्नेहलक्षणसंबंधः । तेषां मध्येऽपि कस्यचिदकुशलमक्षेमं । किं वा शब्दौ पक्षांतरसूचकौ । इत्युत्तरत्रापि ॥ ५ ॥ हे गृहमेधिनि । अतिथयो देहसंबंधस्वग्रामियत्वोपकारित्वादिरहिता अन्नाद्यर्थिनो विप्रादयस्तव गृहमभ्येत्य कुटुंबे पुत्रपोषणादावासक्तया त्वया प्रत्युत्थानादिभिरपूजिताः संतः क्वचित्कदाचित्स्वगृहाद्बहिर्याताः किं ॥ ६ ॥ गृहादतिथीनां विमुखतया गमने गृहस्थस्यानिष्टमाह ॥ गृहेष्वित्यादिना । हे गृहमेधिन्यदिते। अतिथयोऽत्यैश्वर्याभावे सलिलैरपि येषु गृहेष्वपूजिता यदा निर्गच्छंति । तदा ते गृहाः प्रेतराजस्य यमस्य गृहस्थानीयाः श्मशानतुल्याः । गृह शब्दस्य गृहाः पुंसि च भूम्न्येवेति बहुवचने पुल्लिंगस्यानुशास-

नात् । तैरिति पुल्लिंगेन गृहपरामर्शोपपत्तिः ॥ ७ ॥ भद्रे हे सति पतिव्रते । कर्हिंचित्कदाचिन्मयि प्रोषिते प्रवासंगते सत्युद्विग्नधिया चंचलबुद्धिमत्या त्वयाऽग्नय आहवनीयगार्हस्पत्यदक्षिणाख्या वेलायां विहितहोमकाले हविषा क्षीरादिरूपेण न हुता अपि किं । गर्हासमुच्चयप्रश्नशंकासंभावनास्वपीत्यमरादत्रापि शब्दः प्रश्नार्थकः ॥ ८ ॥ हे आदिते । गृहान्विता गृहस्थाश्रमिणो येषां गार्हस्पत्यादीनां पूजया सर्वाभीष्टप्रदान् स्वरादिलोकान्यांति । अग्नेः पूज्यत्वे निमित्तमाह ॥ ब्राह्मण इत्यादिना । सर्वेषां देवानां ब्रह्मादीनामात्मनः स्वामिनो विष्णोर्ब्राह्मणो विप्रोऽग्निश्च मुखाज्जातत्वान्मुखं मुखस्थानीयोऽतः पूज्य इति । वा इत्यनेनोक्तार्थे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । मुखादिंद्रश्चाग्निश्च । ब्राह्मणोऽस्य मुखमासीत् । अग्निर्वै देवानामवमो विष्णुः परमः । विष्णुमुखा वै देवा इत्यादि श्रुतिप्रसिद्धिं सूचयति ॥ ९ ॥ हे प्रशस्तमनस्के । तव सर्वे पुत्राः कुशलिनः क्षेमवंतोऽपि किं । अहं भवत्या लक्षणैर्मुखवैकांत्यादिरूपैश्चिन्हैरात्मानं मनोऽस्वस्थं चंचलं लक्षये जानामि । कुशलं क्षेममस्त्रियां । आत्मा जीवे धृतौ चित्ते देहे च परमात्मनीति नानार्थमुक्तामाला । चिन्हं लक्ष्म च लक्षणमित्यमरः ॥ १० ॥ एवं कश्यपेन पृष्टाऽदितिरुवाच । ब्रह्मन् ज्ञानादिपूर्ण गृहमेधिन् गृहस्थाश्रमोचितकर्मकरणपटो । एतद्गृहपते कश्यप । द्विजगवां धर्मस्यास्य जनस्य धर्मार्थकामरूपत्रिवर्गस्य च भद्रं क्षेममेव परमुत्कृष्टं क्षेत्रं भूमिरिमे गृहाः ॥ ११ ॥ हे ब्रह्मन् । अग्नयोऽतिथयो भृत्या दासा भिक्षवः संन्यासिनो ये चान्ये लिप्सवोऽन्नादिप्राप्तीच्छवस्तत्सर्वं भगवतस्तवानुध्यानात्स्मरणान्न नरिष्यति नष्टं न भविष्यति ॥ १२ ॥ हे भगवन् । यस्या मम भवान्प्रजाध्यक्षः संतानः स्वामी । पतिरिति यावत् । एवमुक्तविधान्धर्मान्प्रभाषते कर्तव्यतया विधत्ते तस्या मम मनसि स्थितः को नु कामः को वा मनोरथो न प्राप्येत प्राप्येतैव ॥ १३ ॥ एवमदितिः पतिसमाधानं कृत्वाऽपि स्वांतःकरणचांचल्यनिमित्तं भगवान्नारायण एव परिहर्ता नान्यस्तथाऽपि तदहं कथयामीत्याह ॥ तवैवेत्यादिना । हे मारीच मरीच पुत्र कश्यप । सत्त्वरजस्तमोगुणसेविन इमाः प्रजा देवमानुषासुररूपा जनास्तव मनः पूर्वकशरीरजा एव । हे प्रभोऽपेक्षितप्रदानसमर्थ कश्यप । महेश्वरो मुख्यस्वामी हरिस्तासु सुरादिषु प्रजासु मनोरथं यथा विभागं तत्तद्योग्यताविभागमनतिक्रम्य भजते ददाति । यथा विभागमित्यस्य यस्य यस्य देहिनो यस्मिन्यस्मिन्काले सुखं दुःखं वा देयमिति स्वसंकल्पस्तथा तत्तत्करोति भगवान् । इदानीं त्वसुराणां मनोरथं

करोतीति भावः ॥ १४ ॥ हे शोभनव्रतसंपन्न पते । यस्मात्त्वद्विधपत्न्या मम सर्वमनोरथः सिद्ध्येत्तस्मात्त्वं तवांशं त्वत्संपादितद्रव्यभागं भजंत्याः सेवमानायास्तद्योग्याया देहार्धं भजंत्या मे श्रेयश्चिंतय। हे प्रभो आपत्परिहारसमर्थ । सपत्नैर्मत्समानस्त्रीपुत्रैः शत्रुभिरपहृतसंपदः स्थाना नोऽस्मान्पाहि रक्षस्व ॥ १५ ॥ अहं परैः शत्रुभिर्विवासिता स्वस्थानात्प्रच्याव्य प्रवासं प्रापिता व्यसनानां क्लेशानां सागरे मग्ना च। ममैश्वर्यं श्रीःकांतिर्यशः कीर्तिः स्थानमाश्रय इत्येतानि प्रबलैः शत्रुभिर्हृतानि ॥ १६ ॥ साधो मंगलकारिणामुत्तम। ममात्मजाः पुत्राः पुनर्यथा येन प्रकारेण तान्यैश्वर्यादीनि प्रपद्येरन् प्राप्ता भवेयुस्तथा तेन प्रकारेण त्वं धिया बुद्धिपूर्वं कल्याणं मंगलं विधेहि कुरु ॥ १७ ॥ एवमुक्तरीत्याऽदित्या प्रार्थितो मुनिः कश्यपः स्मयन्निव तामदितिं प्रत्याह। हे अदिते। विष्णोर्मायाबलमहो आश्चर्यकरं। येन मायाबलेनेदं चेतनरूपं जगत्स्वपुत्रादिषु स्नेहबद्धं भवति ॥ १८ ॥ भौतिक आकाशादिपंचभूतनिर्मितोऽत एवानात्मा जडो देहः क। प्रकृतेर्जडरूपात्पंचमहाभूतादेः परो विलक्षणोऽत्यंतभिन्न आत्मा जीवः क च। नैतयोरैक्यमिति भावः। एवं सति देहापेक्षया पतिपुत्रादिसंबंधिनः कस्य चेतनस्य के पतिपुत्रादयो भविष्यंति। न कस्य केऽपि। ननु गौरोऽहं कृष्णोऽहमिति देहात्मनोरभेदावगमात्कथमेवमुच्यत इत्यत आह ॥ मोह एवेति। गौरोऽहमित्यादि ज्ञानेन मुह्यते भ्रांतो भवत्यनेनेति मोहोऽज्ञानमेव कारणं हि श्रुत्यादि प्रमितं ॥ १९ ॥ हे स्त्रि। त्वं पुरुषं बव्हभीष्टदातारं अभीष्टविरोधिदुष्टजनमर्दकं सर्वप्राणिहृद्गुहावस्थितमत एव वासुदेव शब्दितं जगद्ब्रह्मादेश्चेतनसमूहस्य गुरुं हिताहितोपदेष्टारं भगवंतं नारायणमुपतिष्ठस्व सेवस्व। अनेन क देह इत्याद्युक्तरीत्या यद्यपि पुत्रादिस्नेहेन तदभीष्टसिद्धिर्नापेक्ष्या तथाऽपि तत्स्नेहत्यागाशक्तस्तदर्थं। यो वेद निहितं गुहायां परमे व्योमन्नित्यादि श्रुतिभिरवश्यं मुमुक्षुणाऽपि ज्ञातव्यतयोक्तसाक्षात्परब्रह्मरूपनारायण एवोपास्यो नान्य इत्यसूचि ॥ २० ॥ तद्विशदयति। स इत्यादिना। हे अदिति। दीनेषु दैन्योपेतभक्तिजनेष्वनुकंपनो दयालुः स हरिस्ते कामान्मनोभीष्टान्विधास्यति करिष्यति। यतो भगवति नारायणे भक्तिरमोघाऽव्यर्थेतरदेवताविषयाभक्तिर्मोघेति निश्चयो नास्तीति मे मम मतिः ॥ २१ ॥ एवं कश्यपेन समाहिताऽदितिरुवाच । हे ब्रह्मन् पृष्टोत्तरज्ञानपूर्ण द्विजश्रेष्ठ। अहं केन विधिना प्रकारेण जगत्पतिं हरिमुपस्थास्ये। यथा च सत्यसंकल्पः स हरिर्मे मम मनोरथं विदध्यात् ॥२२॥ यथा च पुत्रैः सह सीदंत्याः कष्टं प्राप्ताया

मे स देव आशु तुष्टो भविष्यति । तथा तदुपासनसाधनं विधिं त्वमादिश ॥२३॥ एवमदित्या पृष्टः कश्यप उवाच । हे अदिते । मया प्रजाकामनया पृष्टो भगवान्पद्मजश्चतुर्मुखः प्रजाकामस्य मे केशवस्य ब्रह्मरुद्रादिनियामकस्य हरेस्तोषणं तुष्टिकरं यद्व्रतमाहत देतद्व्रतं ते प्रवक्ष्यामि ॥ २४ ॥ कथय एवं व्रतं प्रवक्ष्यामीति । प्रतिज्ञातं कालदेवतादि दर्शयन्नाह ॥ फाल्गुनस्येत्यादिना । एतद्व्रतं करिष्यमाणः फाल्गुनस्य मासस्यामले शुक्ले पक्षे द्वादशदिवसपर्यंतं क्षीरव्रतः सन् अरविंदाक्षं कमलवद्विशालनेत्रं हरिं परमयोत्कृष्टया भक्त्या व्रतः समर्चयेत् । पयोव्रत इत्यादि निर्देशेनादितिं प्रति कर्तव्यतयैतद्व्रतविधानेन चास्य व्रतस्य स्त्रीपुरुषोभयाधिकारिकत्वमुक्तं ॥ २५ ॥ यदि स्रोतः प्रवाहोदकं नद्यादि यदि लभ्येत तस्मिन्स्रोतसि तदलाभेऽन्य वाप्यादि शुद्धजले सिनीवाल्यां चतुर्दशीयुक्तायां किंचिच्चंद्रदर्शनोपेतायाममायां । हे भूदेवि त्वं जनानां स्थानमिच्छतादि वराहेण रसातललोकादुद्धृताऽसि तुभ्यं नमोऽस्तु । त्वं मे पाप्मानं पापं प्रणाशय विनाशयेति मंत्रमुदीरयन्नुच्चारयन् । क्रोडेन वराहेण विदीर्णया भेदितया मृदा मृत्तिकया स्वशरीरमालिप्य स्नानं कुर्यात् । सादृष्टेंदुःसिनीवाली । मृन्मृत्तिका । क्रोडो भूदार इति । स्रोतोंऽबुसरणं । पाप्मापापंकिल्बिषमिति चामरः ॥ २७ ॥ एवं निवर्तितात्मस्नानसंध्यादि नियमः सन् समाहितः स्वस्थांतःकरणश्च सन् अर्चायां प्रतिमायां स्थंडिले मार्जित परिलिप्त शुद्धस्थले सूर्ये जले वन्हौ गुरौ वाऽधिष्ठाने देवं नारायणमर्चयेत्पूजयेत् । अर्चा पूजा प्रतिमयोरिति नानार्थरत्नमाला ॥ २८ ॥ पूजासाधनमंत्रानाह ॥ नमस्तुभ्यमित्यादिना प्रसीदतामित्यंतेन । महीयसे पुरुषायोत्तमचेतनाय भगवतेऽव्याहृतैश्वर्यादि षड्गुणवते तुभ्यं नमोऽस्तु । सर्वेषां भूतानां निवासायाश्रयाय सर्वेषु भूतेषु प्रेरकतया स्थितायात एव वासुदेवनाम्ने जगत्साक्षादीक्षिणे तुभ्यं नमोऽस्तु । वासनाद्वासुदेवोसि वासितं ते जगत्त्रयं । सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु त इति स्मृतेः ॥ २९ ॥ अव्यक्ताय स्वप्रसादमंतरेणाधिकारिप्रयत्नेन दृष्ट्याद्यगोचरायात एव सूक्ष्मायाव्यक्ततोपयुक्तस्थूलदृष्ट्यगोचरशक्तिमते । तदव्यक्तमाह हि । सूक्ष्मं तु तदर्हत्वादित्यादेः । प्रधानस्य प्रकृतेश्चेतनायाः पुरि शरीरेऽचेतनाया अप्याकाररूपे शरीरे नियमनार्थं शेत इति पुरुषः । तस्मै । शरीररूपकविन्यस्तगृहीतेः । प्रकृतिं प्रविश्य भगवानित्यादेश्च । रूपादि शब्दांत चतुर्विंशद्गुणज्ञाय चतुर्विंशतितत्त्वरूपस्वापेक्षया प्रधानपदार्थज्ञाय गुणसंख्यानाख्यग्रंथकर्त्रे कपिलरूपाय नमोऽस्तु ॥ ३० ॥ द्वे प्रायणीयो-

दनीयसंज्ञके शीर्षे शिरसि यस्य तस्मै प्रातर्मध्यंदिनसायंसवनाख्यत्रिपादवते । ऋग्यजुः सामाथर्वाख्यचतुःशृंगाय तंतवे कर्मसमुदाय हेतवे संतत्यभिवृद्धिकराय सप्तछंदोलक्षणहस्तवते त्रयीविद्या ऋग्यजुःसामरूपवेदविद्या तत्राग्निमीळ इत्यादिना प्रतिपाद्य आत्मा स्वरूपं यस्य तस्मै तुभ्यं नमः । चत्वारि शृंगा त्रयोऽस्य पादा इत्यादि श्रुतिमुख्यप्रतिपाद्यायाग्न्यंतर्यामिणे तुभ्यं नमः । इत्यर्थः । चत्वारिशृंगा वेदास्तु पादास्त्रिसवनानि च । प्रायणीयं शिरस्त्वेकमन्यच्चौदयनीयकं । हस्तास्तु सप्त छंदांसि तैर्गृह्णाति फलान्यसौ । मंत्रब्राह्मणकल्पैस्तु त्रिधा बद्ध इतीर्यते । शस्त्रोद्गातृस्तुतिरवैरोरवीत्यृत्विजो मुखात् । वृषभो महान्स्वधर्मत्वादेवस्तु फलभावनादित्यादि स्मृतेरुक्त एव स्मृत्यर्थः ॥ ३१ ॥ शिवाय सुखरूपतया मंगलाय रुजं दुःखहेतुभूतरोगादिकं संसाराख्यरोगं च द्रावयतीति रुद्रस्तस्मै तुभ्यं नमः । सर्वप्राण्यंतर्यामिरूपेषु साधारण्याय गुणशक्त्यादिभिः समाय सर्वविद्यानामधिपतये मुख्यस्वामिने भूतानामाकाशादीनां रमाब्रह्मादिचेतनानां च पतये पालकाय स्वामिने च ते नमोऽस्तु । शिवः सुखात्मकत्वेन । रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । सर्वेषां भूतानामंतरपुरुषः । स आत्मेति विद्यात् । ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां । ईशनादेव चेशानेत्यादि ब्रह्मांडपुराणैतरेयतैत्तरैयश्रुतिभ्य उक्त एवार्थः । एतेन पार्वतीपत्यभेदेन हरेरत्र शिवादि शब्दवाच्यतेति निरस्तं । एवमग्रे ज्ञेयं । तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः । न क्वापि किंचिन्नास्ति तमृते पुरुषोत्तमं । शास्त्रमंतर्यामीत्यादेः ॥ ३२ ॥ हिनोति परिहरति दुःखं राति ददाति सुखं सुखमिति हिरं बलज्ञानात्मकत्वाण्ण्यं हिरं च तत् ण्यं च हिरण्यं वीर्यं । ब्रह्मांडोत्पादकं यस्य गर्भे स हिरण्यगर्भः । चतुर्मुखांतर्यामी तस्मै हिरण्यगर्भाय प्रकृष्टचेष्टकत्वात्प्राण शब्दवाच्याय मुख्यप्राणांतर्यामिणे जगतश्चेतनाचेतनात्मकस्यात्मनेंऽतर्यामिणे स्वामिने चाणिमाद्यष्टयोगैश्वर्योपेतशरीराय योगानां च हेतवे दत्तात्रेयादिरूपाय ते नमोऽस्तु । हिरण्यगर्भः समवर्तताग्र इत्यादि श्रुतेः ॥ ३३ ॥ आदौ चतुर्मुखादि चेतनमहदाद्यचेतनोत्पत्तेः प्राक् देवाय क्रीडादि गुणविशिष्टाय देवानां चतुर्मुखादीनां देवाय ते नमः । ऋषये ज्ञानरूपाय नारायणाय ज्ञानानंदादिगुणवते सर्वदा क्षयरहिततया नरशब्दवाच्याय हरयेऽरिष्टपरिहारकायेष्टप्रापकाय ते नमः । एको नारायण आसीत् । न ब्रह्मा न च शंकर इत्यादेः । आनीदवातं स्वधया तदेकमित्यादेः ॥ ३४ ॥ मरकतमाणिवच्छामवर्णवच्छरीराय सर्वाधिकसर्वदाप्राप्तसंपदे तुभ्यं नमः । कश्चेशश्च

केशौ ब्रह्मरुद्रौ वर्तयति प्रेरयतीति केशवस्तस्मै तुभ्यं नमः। पीतांबरवते नमः ॥ ३५ ॥ हे हरे। त्वं पुरुषाणां सर्वाभीप्सितप्रद यतस्त्वं वरदेभ्यो ब्रह्मादिभ्यो वृषभः श्रेष्ठोऽतस्त्वं पुरुषाणां वरेण्यो भजनीयोऽतस्त्वां धीरा ज्ञानिनः श्रेयसे मोक्षादि पुरुषार्थाय ते पादरेणुं भजंति। देवा ब्रह्मादयः श्रिया कांत्यादि संपदा विनिर्जिते पराजिते पद्मे कमले याभ्यां तयोस्ते पादकमलयोरामोदं परिमलं स्पृहयंतोऽभिलषंत एव यमन्वर्ततानुकूलाः सेवितवंतः। स भगवान्नारायणो मे प्रसीदतां प्रसन्नो भूयात् ॥ ३७ ॥ भगवदर्चकः श्रद्धयाऽऽस्तिक्यबुद्ध्या युक्तः सन् चाभिलषितमहाफलाय हृषीकाणां मन आदींद्रियाणामीशं प्रेरकं स्वामिनं चैतैरुक्तैर्मंत्रैः पाद्यमुपस्पर्शनमाचमनादि येषां तां तैरुपचारैरावहनपूर्वकमर्चयेत्। यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवेदित्यादेः ॥ ३८ ॥ आदौ पयसा क्षीरेण विभुं हरिं स्नापयेत्। तदनंतरं वस्त्रोपवीताभरणपाद्योपस्पर्शनैर्गंधपुष्पैस्तुलस्यादिभिरर्चितं कुर्यात्। तुलसीवर्जितैः पुष्पैरिति तुलस्यातिरिक्तपूजायाः शतापराधेषु गणनात् ॥ ३९ ॥ गंधेन परिमलेनोपेतधूपसाधनद्रव्यादिभिश्च तमर्चयेत्। ॐ नमो भगवते वासुदेवायेति द्वादशाक्षरविद्यया स्वस्य विभवे ऐश्वर्ये सति पयसि भृतं पक्वं राजानाख्यशाल्यन्नं गुडगोघृतसहितं नैवेद्यं दत्वा मूलविद्यया नारायणमंत्रेण होमं कुर्यात्। निवेदितं समर्पितमन्नं हरिभक्ताय दद्यात्तदभावे स्वयं वा भुंजीत ॥ ४० ॥ भगवते नैवेद्यसमर्पणानंतरमाचनं दत्वा पुष्पादिभिरर्चयित्वा तांबूलं च समर्पयेत्। अनंतरं नारायणो नर शौरीत्याद्यष्टोत्तरशतं भगवन्नाम जपेत्। स्तोत्रैः स्तुतिं कुर्वीत ॥ ४२ ॥ तदनंतरं प्रदक्षिणं कृत्वा मुदा हर्षेण भूमौ दंडवत्पतित्वा नमस्कुर्यात्। तस्य हरेः शेषं निर्माल्यं शिरसि स्थितं कृत्वा ततो देवं नारायणमुद्वासयेदुपसंहरेत् ॥ ४३ ॥ द्वाववरौ कनिष्ठपक्षप्राप्तौ येषां तान् द्विजान् पायसेन यथोचितं घृतशर्करादि दत्वा भोजयेत्। अनंतरं तांबूलदक्षिणादिभिः सभाजितैर्बहुमानितैस्तैस्तैर्ब्राह्मणैरनुज्ञातःस्वयं हुतशेषं भुंजीत ॥ ४४ ॥ प्रथमदिवसे तद्रात्र्यां ब्रह्मचारी गुप्तेंद्रियनियमवान् शयीत। अथ श्वो भूते परदिने प्रात उक्तेन विधिना प्रातः सुतरां स्वस्थांतःकरणः सन् स्नानादिना शुचिः सन् हरिं पयसा स्नापयित्वाऽर्चयेत्। एवमेव प्रतिदिनं व्रतसमाप्तिपर्यंतं कुर्यात्। एवं विष्णुपूजायामादरवान्पयः पानवदिदं पयोव्रतं चरेत् ॥ ४५ ॥ ॥ ४६ ॥ पूर्ववज्जुहुयादग्निमिति श्लोकः सुगमार्थः ॥ ४७ ॥ हरेराराधनं पूजादिरूपं होममर्हणं ब्राह्मणपूजाऽन्नदानादिना द्विजानां तर्पणं तृप्तिकरणं ब्रह्मचर्यमुक्तं।

अधः शुद्धभूमौ स्वापं निद्रां त्रिषवणस्नानं च । फाल्गुणशुद्धप्रतिपाद्दिवसमारभ्य शुक्लत्रयोदशीपर्यंतमेवं साधारण्येन हरिमर्चयेत् । तथाऽसद्भिरसज्जनैरालापं संभाषणमुच्चावचानुत्कृष्टापकृष्टांश्च भोगान्विषयांश्च वर्जयेत् । ॥ ४८ ॥ ॥ ४९ ॥ समस्तप्राणिहिंसारहितो वासुदेवैकनिष्ठश्च भूयात् । अथो त्रयोदश्यां प्राप्तायां शास्त्रदृष्टेन विधिना विधिकोविदैर्भगवत्पूजाप्रकारकुशलैरुदीरितैः स्नापकैर्महाभिषेकसाधनसूक्ताद्यैर्विष्णुं स्नपयन्विष्णोर्महापूजां वित्तशाठ्यविवर्जितः सन् कुर्यात् ॥ ५० ॥ ५१ ॥ चरुं होतव्यान्नं गरुडारूढाय विष्णवे निरूप्य संस्कारपूर्वकं स्थापयित्वा । समर्प्येति यावत् । सुसमाहितः शृतेन तेन चरुणा पूर्णपड्गुणं हरिमुद्दिश्य यजेज्जुहुयात् । मधुरादि षड्गुणोपेतं पुरुषतुष्टिदं नैवेद्यं गुरवे दद्यात् । तत्त्वज्ञानादिसंपन्नमाचार्यं वस्त्रालंकारगोभिः संतोषयेत् । ऋत्विजश्च । यदाचार्याद्याराधनं तत्तदंतर्यामिहर्याराधनं जानीहि । हे शुचिस्मिते । तानाचार्यादीन् गुणवता निर्दुष्टान्नेन भोजयेत् ॥ ५३ ॥ ये तत्र ब्राह्मणा भोजनादिकाले समागतास्तान्न वारयेत् । ऋत्विग्भ्योऽन्यान् ब्राह्मणांश्च शक्त्यनुसारेण भोजयेत् । तेभ्यो गुरवे आचार्याय ऋत्विग्भ्यश्च तत्तद्योग्यतानुसारेण दक्षिणांश्च दद्यात् ॥५५॥ अन्नादिना तदर्थितया समागतान् श्वपचपर्यंतांश्च प्राणिनः प्रीणयेत् तृप्तान्कुर्यात् । विप्रेषु दीनांधकृपणादिषु च भुक्तेषु तद्विप्रादिप्रीतिकरणं विष्णोः प्रीतिकरं जानन्सन् तैरनुज्ञातः स्वबंधुभिः सह भुंजीत ॥ ५६ ॥ एवमन्वहं प्रतिदिनं नृत्यादिभिर्विष्णोर्महापूजा कारयेत् । पुरुषस्याराधनं साधनं परमुत्तमं पयोव्रतं नाम व्रतं मम पितामहेन चतुर्मुखेनोक्तं तन्मया ते तुभ्यं समुदाहृतं ॥ ९८ ॥ हे महाभागे । त्वं च भजनीयमव्ययं केशवं सम्यक् कृतेनानेन पयोव्रतेन शुद्धस्वभाववतात्मनाऽतःकरणेन भज ॥ ५९ ॥ हे भद्रे मंगलरूपे । इदं पयोव्रतं सर्वयज्ञादिसमफलमीश्वरतृप्तिकरं च ॥ ६० ॥ येन यैः साधनैरधोक्षजः । न चक्षुषा पश्यति न श्रोत्रेण शृणोति न मनसा मनुते इत्यादि श्रुतेरिंद्रियजन्यज्ञानाविषयः श्रीनारायणस्तुष्टो भवति । त एवनियमादयः ॥ ६१ ॥ हे भद्रे । यस्मादेतत्पयोव्रतमुक्तगुणं तस्मादेतदेवमुक्तविधिना प्रयता शुचिर्भूता सति श्रद्धयोपेता च सति समाचर । त्वत्कृतेनानेन व्रतेन भगवान्नारायणस्ते तव संतुष्टः सन् वरानपेक्षितान् पुरुषार्थान्विधास्यति करिष्यति ॥६२॥ इति श्रीभागवतटिप्पण्यां पंचदशोऽध्तायः ॥ ८—१५ ॥

॥ हरिः ॐ ॥ स्वानुग्रहमंतरेणाधिकारिप्रयत्नेनाप्रत्यक्षोऽपि भगवान्नारायणस्तद्योग्यकालेऽधिकारिभक्त्यादिना प्रसन्नो

भूत्वा प्रत्यक्षो भवतीत्यादि हरिमहिमाऽत्राध्यायद्वयेन प्रतिपाद्यते । तत्रादावदितेः पयोव्रताचरणप्रकारमाह ॥ इत्युक्त्वेत्यादिना । हे राजन् । साऽदितिः स्वभर्त्रा कश्यपेनेत्युक्ता सत्यतंद्रिताऽऽलस्यरहिता च सती द्वादशदिनपर्यंतमिदं पयोव्रतमन्वातिष्ठत्कृतवती । वा इत्युक्तार्थे प्रमाणप्रसिद्धिं सूचयति ॥ १ ॥ साऽदितिः श्रोत्रादींद्रियलक्षणदुष्टाश्वान् बुद्धिलक्षणसारथिमती सति मनसा प्रगृह्य दुर्विषयेऽप्रवृत्तान् कृत्वा भगवंतमधोक्षजमेकया सर्वोत्तमत्वविषयिण्या बुद्ध्या चिंतयती बभूव ॥ २ ॥ अनंतरमखिलचेतनात्मक-जगत आत्मन्यंतर्यामिणि स्वामिनी च भगवति नारायणे एको भगवानग्रे विषयतया च यस्यास्तया बुद्ध्या शास्त्रजनितनिश्चयेन मनोंऽतःकरणं वासुदेवे समाधाय स्थापयित्वा पयोव्रतं चचार कृतवती । हेति प्रमाणप्रसिद्धिः ॥ ३ ॥ तावत्तदैवं चिंतयंत्या तस्या अदितेः पीतांबरः शंखचक्रगदाधरश्चतुर्बाहुरादिपुरुषो भगवन्नारायणः प्रत्यक्षोऽभूत् ॥४॥ अदितिर्नेत्रयोर्गोचरं विषयं प्रत्यक्षं तं वीक्ष्य सहसोत्थाय भुवि दंडवत्काये या पातिता सति भगवति प्रीत्या भक्त्यातिशयेत विव्हलश्चलदेहा सति सादरं ननाम ॥५॥ साऽदितिर्भुव उत्थाय बद्धांजली सति भगवंतमीडितुं स्तोतुं स्थिताऽपि तस्य भगवतो दर्शनाख्यात्युत्सवेन गात्रे शरीरे वेपथुः कंपा यस्याः सा सति पुलकै रोमांचैराकुलिता संदाटिताकृतिराकारो यस्याः सा । आनंदजलेनाकुलेऽक्षिणी यस्याः सा च सतीडितुं नोत्सहे शक्ता न बभूव। तूष्णीमेव बभूव ॥६॥ हे कुरूद्वह । साऽदितिर्देवी लक्ष्मीपतिं यज्ञजगत्पतिं हरिं चक्षुषाऽऽदरातिशयेन पिबतीवेक्षती सती प्रीत्या गद्गदयाऽस्पष्टाक्षरया गिरा वाचा शनैर्हरिं तुष्टाव स्तुतवती ॥७॥ स्तुतिप्रकारमाह ॥ यज्ञेशेति । यज्ञानामश्वमेधादीनामीश स्वामिन् । अत एव यज्ञनामन् । पूर्णषड्गुण देशकालगुणैरच्युत । पूर्ण भागीरथ्याख्य तीर्थपादपद्म । तीर्थं शुद्धिकरं श्रवो यशो यस्य तादृ-शात एव श्रवणयोः श्रोत्रेंद्रिययोर्मंगलकरनामन् आपद्युक्तस्वशरणागतजनानां वृजनानि पापान्युपशमयति परिहरतीत्युपशम उदयः प्रादुर्भावो यस्य तादृश । अवसन्नानां ज्ञानादि शून्यतया नष्टानां तद्योग्यानां नाथ । हे भगवन्नारायण । अद्यास्माकं शं सुखं कुरुष्व ॥ ८ ॥ विश्वाय सर्वजगत्पूर्णाय विश्वभुवनस्थितिसंयमाय सर्वजगदुत्पत्तिस्थितिनाशकर्त्रे स्वैरं स्वेच्छया गृहीताः पुरवो बव्हः शक्तयो जगदुत्पादनादि विषया गुणाः सत्त्वादयश्च येन तस्मै भूम्ने सुखादिगुणपूर्णाय पारतंत्र्यादिदोषराहिततया स्वच्छाया-तिशुद्ध्या शश्वदुपबृंहितः स्वपराखिलगोचरतयाऽत्यभिवृद्धोऽतः पूर्णो यो बोधो विज्ञानं तेन व्यापादितं दूरोत्सारितमात्मनस्तमोऽ-

ज्ञानं यस्य तस्मै हरये नमोऽस्तु ॥ ९ ॥ हे अनंत देशकालगुणैरपरिच्छिन्न नृणामधिकारिणां ब्रह्मादीनां तुष्टात्प्रसन्नात्त्वत्तः परं द्विपरार्धादिरूपमायुरभीष्टमपेक्षितवपुर्ब्रह्मणादिशरीरमतुल्यलक्ष्मी असमाना संपदो द्यौरंतरिक्षं भूरसातलादि स्थानं सर्वेऽणिमादयो गुणा धर्मार्थकामलक्षणस्त्रिवर्गः केवलमज्ञानसंशयाविपर्यया समाधिकरणं ज्ञानं चेत्येतानि भवंति । त्वामुपसन्नानां शरणागतानां जनानामाधिनाशो मनोव्यथापरिहारो भवतीति किमु वक्तव्यं । पुंस्याधिर्मानसी व्यथेत्यमरः ॥ १० ॥ हे भरतकुलोत्पन्न राजन् । पुष्करवत्कमलवदीक्षणे नेत्रे यस्य सः सर्वेषां भूतानां प्राणिनां क्षेत्रे शरीरे क्रियमाणं कर्म जानातीति क्षेत्रज्ञो भगवान्नारायणोऽदित्यैवं स्तुतः सन् इति वक्ष्यमाणप्रकारेणोवाच ह ॥११॥हे देवानां मातरदिते । भवत्यास्तव चिरं बहुकालं कांक्षितमपेक्षितं मे मया विज्ञातं । तत्किमित्यत आह । यत्सपत्नैरिति । शत्रुभिरपहृतैश्वर्याणां स्थानात्प्रच्यावितानां देवानां यदैश्वर्यादिप्रत्यावर्तनमिति ॥१२॥ हे आदिते । त्वं दुष्टमदेन गर्वेणयुक्तानसुरश्रेष्ठान्समरे युद्धे विनिर्जित्य पुनः प्राप्तजयसंपाद्भिः पुत्रैः सह मामुपासितुमिच्छासि ॥ १३ ॥ युधींद्र एव ज्येष्ठो येषां तैस्तव पुत्रैर्हतानामतिद्वेषिणामसुराणां स्वपतीनासाद्यातिदुःखिता रुदंतीः स्त्रियो द्रष्टुमिच्छासि ॥१४॥ हे आदिते त्वं प्रत्याहृतयशः श्रियोऽसुरेभ्यः पुनरपहृतकीर्तिसंपदो नाकपृष्टं स्वर्गस्थानमाश्रित्य क्रीडां कुर्वतो बलादिभिरभिवृद्धान्स्वात्मजान् द्रष्टुमिच्छासि ॥ १५ ॥ हे आदिति देवि । अधुनाऽसुरसेनासमूहस्वामिनस्तेऽसुराः प्रायः प्राचुर्येण देवैर्निवारायितुमशक्या यस्मात्तेऽसुरा अनुकूलः स्वकार्यसहाय ईश्वरो नारायणो येषां विप्राणां शुक्रादीनां तैः संरक्षितास्तस्मात्तत्र तद्विषये कृतो विक्रमः पराक्रमो देवानां सुखं न ददाति । न दास्यतीति मे मतिर्निश्चिता ॥ १६ ॥ हे देवि । यद्यपीत्थं अथाऽपि ते व्रताचरणेन संतोषितेन मया तवपुत्रश्रेय उपायश्चिंतितो यतो ममार्चनं तत्तद्भक्तविश्वासानुसारि फलदमतोऽन्यथा व्यर्थं गंतु नार्हति ॥ १७ ॥ हे आदिते । अहं त्वया तेऽपत्यानां पुत्राणां देवानां गुप्तये संरक्षणाय पयोव्रतेनार्चितः स्वज्ञातैर्गुणैः संस्तुतश्चातोऽहं स्वांशेन ते पुत्रत्वमुपेत्य सुतान्संरक्षितास्मि । यतश्च मरीचिपुत्रः कश्यपस्तपोनिमित्तेनापि च पुत्रपालने संस्थितोऽतोऽपि त्वपुत्रपालने तव संशयो माऽभूदिति भावः ॥ १८ ॥ हे भद्रे यतोऽहं त्वत्तः प्रधानकश्यपतपसाऽपि त्वद्वांछितं कर्ताऽतस्त्वं कामादिदोषविधुरं स्वाश्रितप्रजानां पालकं ते पतिं कश्यपमुपधाव सेवय तुष्टं च कुरु । एवं परिदृश्यमानरूपमवस्थितं मां च ते पुत्रत्वेनोपास्व ॥ १९ ॥ हे देवि । एत-

न्मदुक्तं प्रमेयं यस्माद्देवानां गुह्यं गोप्यं स्वानाप्तेभ्यः कथनायोग्यं तस्मात्त्वयाऽपि कथंचन केनापि प्रकारेण परस्मा अनाप्तायान्यस्मै न वक्तव्यं यस्मात्सुतरां संवृतादाच्छादितादुक्ताद्देवगुह्यात्ते कार्यं संपद्येत । प्राप्तं भवेत् ॥ २० ॥ भगवान्नारायणोऽदितिं प्रति एतावत्प्रमेयमुक्त्वा तत्रैवादृश्योऽभूत् । अदितिरयोग्यजनानामप्राप्यमात्मनि प्रभोः सर्वकार्यसमर्थस्य हरेर्जन्म प्रादुर्भावलक्षणं वरं लब्ध्वा कृतकृत्यवत्स्थिता सति स्वपतिं कश्यपमुत्कृष्टया भक्त्या सेवामकरोत् । अवितथमव्यर्थं यथार्थमीक्षणं ज्ञानं यस्य स कश्यपः स्वस्मिन्प्रविष्टं हरेस्तमंशं स्वसमाधिलक्षणोपायेन ज्ञातवान् । स कश्यपः स्वकृतेन तपसा निमित्तेन स्वस्मिन् बहुकालसंपादितं वीर्यं अदित्यां आधत्ते वायुरग्निमथनकाष्ठेऽग्निं यथा तथा स्थापयामास ॥ २३ ॥ हिरण्यगर्भश्चतुर्मुखोऽदित्यां कश्यपेन निहितं वीर्यद्वारा स्थापितं भगवंतमधोक्षजं नारायणं ज्ञात्वा गोप्यनामधेयैर्भगवंतं स्तुतवान् ॥ २४ ॥ स्तुतिप्रकारमाह ॥ जयेत्यादिना । उरुगाय सर्वोत्तमतया श्रुत्यादिप्रतिपाद्योत्कृष्टपादप्रक्षेप हे भगवन् । त्वं जय शत्रूनभिभावय ते नमोऽस्तु । ब्राह्मणादिषु दयालुतया ब्राह्मण्याय क्रीडादिगुणविशिष्टाय त्रयोलोका गुणा अप्रधाना यस्मात्तस्मै त्रिगुणाय ते नमोऽस्तु । पृश्न्याख्याया गर्भाय बालकतया पोषिताय देवाय वेदानां गर्भाय प्रसिद्धगर्भवद्गोप्याय वेधसे ज्ञानरूपाय सत्त्वादि गुणत्रयानियामकाय वैकुंठश्वेतद्वीपानंतासनाख्यत्रिषु स्थलेषु पृष्टमवस्थानं यस्य तस्मै गरुडारूढाय व्याप्ताय ते नमोऽस्तु ॥ २६ ॥ हे ईश । त्वं भुवनस्यादिरुत्पादको मध्यं स्थितिहेतुरंतो नाशक इत्यपरिमितशक्तिं पुरुषं त्वामागमा ज्ञानिनश्चाहुः । गभीरं निम्नभूमिस्थं श्रोतस्तीव्रेण स्रवज्जलं यथा स्वांतः पतितं तृणाद्याक्षिपाति तीव्रं नयाति । तथा विश्वं समस्तजगद्यः काल आक्षिपति सकालनियामकतया कालनामा भवान् ॥ २७ ॥ हे देव । त्वं स्थावरजंगमरूपाणां प्रजानां जीवानां तथा प्रजापतीनामंतःप्रविष्टः सन्पुरुषरूपेण संरक्षिताऽसि यतोऽतो दिवः स्वर्गाच्च्युतानामिंद्रादि देवानां जलेषु मज्जमानजनस्य परायणं मुख्याश्रयः ॥ २८ ॥ इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ८–१६ ॥ ॥

॥ हरिः ॐ ॥ एवं चतुर्मुखस्य स्तुत्या प्रसन्नस्य हरेरदित्यां प्रादुर्भावादिरूपं माहात्म्यं निरूप्यतेऽस्मिन्नध्याये । अमृतं पीयूषं मोक्षोऽमराणां भवश्च भवति प्रसन्नादस्मादित्यश्चतभूरमृतानां मुक्तानां भूराश्रयश्च यश्च भगवान्नारायण इत्थमुक्तरीत्या विरिंचेन

स्तुतान्युत्कृष्टतया कीर्तितानि कर्माणि चरितानि वीर्यं पराक्रमो यस्य स तथा सन् अदित्यां प्रादुर्बभूव । प्रादुर्भूतं विशिनष्टि ॥ चतुर्भुज इत्यादिना । शंखचक्रगदापद्मसहितहस्तचतुष्टयवान् पीतांबरधारी कमलवद्विस्तृतलोचनः ॥ १ ॥ श्यामवर्णेनावदातः शुद्धः । निर्दुष्टश्यामवर्ण इति यावत् । झषराजवन्मीनश्रेष्ठवद्दिप्यमानयोः कर्णाभरणयोस्त्विषा कांत्योल्लसदतिप्रकाशनादिसंपदुपेत-मुखकमलः पुंस्त्वशक्तिमान् श्रीवत्साख्यचिन्हितवक्षस्थलः कटकबाहूभूषणैः प्रकाशमाननिर्दुष्टकिरीटबाव्हाभरणपादाभरणयुक्तः ॥ २ ॥ मधुव्रतानां भ्रमराणां व्रातेन समूहेन विघुष्टया ध्वनिमत्या स्वकीयया वैजयंत्या श्रीवनमालया विराजितः प्रजापतेः कश्यपस्य वेश्मतमो गृहांधकारं स्वरोचिषा स्वाभाविकस्वकीयदेहकांत्या विनाशयन् कंठनिविष्टः संस्थितः कौस्तुभो मणिर्यस्य स तादृशो हरिरदित्यां प्रादुरभूत् ॥ ३ ॥ तदा तत्प्रादुर्भावकाले प्राच्यादिदिशः प्रसेदुः प्रसन्ना बभूवुः । तथा सलिलाशया ह्रदादयः प्रसेदुः प्रजा जनाः प्रहृष्टा ऋतवस्तदृतुस्थवृक्षादयो गुणैः फलपुष्पादिभिरन्विताः । द्यौः स्वर्गोऽतरिक्षं स्थितिर्भूमिस्वर्गा-दिदेवता अग्निर्जिव्हास्थानी येषां ते देवा गावो द्विजा नागाः पर्वतवृक्षादिचेतनाः संतुष्टा बभूवुः ॥ ४ ॥ श्रोणायां श्रावण-मासि श्रवणनक्षत्रयुक्तद्वादश्यामभिजिति मुहूर्ते सूर्येऽतरिक्षमध्यगे काले प्रभुः सर्वजगदीशो वामनः प्रादुरभूत् । तस्य वामनस्य जन्मराशिं सर्वे नक्षत्रताराद्याः प्रदक्षिणीचक्रुः । आश्विन्यादि सप्तविंशति नक्षत्राणीतरास्ताराः ॥ ५ ॥ हे नृप । यस्यां तिथौ हरेर्वामनस्य जन्म प्रादुर्भावं जना विदुर्दृष्टवंतस्तस्यां द्वादश्यां सविता सूर्यो मध्यंदिनगतोऽतिष्ठत् । सा द्वादशी विजयानाम्नी प्रोक्ता ॥ ६ ॥ शंखादय आनकांता नेदुः । मृदंगा मुरजाप्रभेदा आनकाः पटहः पणवश्चित्राणां वादित्राणां तूर्याणां काहलीति भाषितानां ध्वानिः संदटितोऽभवत् ॥ ७ ॥ तस्मिन्नुत्सवे प्रीता उर्वश्यादयोऽप्सरसः स्वर्गवेश्या नर्तनं चक्रुः । हाहा हूहू प्रभृतयो गंधर्वश्रेष्ठा गानं चक्रुः । नारदादयो मुनयो ब्रह्मादयो देवाः स्वायंभुवादयो मनवोऽग्निष्वात्तादयश्च पितर आहवनादयोऽग्नयस्तथा सिद्धादयः पाक्षिः सर्पश्रेष्ठगरुडशेषादयश्च वामनं स्तुवंतः ॥ ९ ॥ विबुधा ज्ञानिनो नरा मनुष्याः केचिद्गायंतः केचित्प्रशंसंतः केचिन्नर्तनं कुर्वंत आसन् । अदितेरपत्यान्यादित्या देवाः कश्यपस्याश्रमस्थानं पुष्पैः संचितवंतः ॥ १० ॥ अदितिः स्वकीयोदरप्रादुर्भूतं परमपुरुषं वामनं द्रष्ट्वा विशिष्टमंदहासा सति मुदं हर्षमाप । प्रजापतिश्च कश्यपोऽपि स्वकीयाघटितघटनोपायभूतयेच्छयैव गृहीतवामन-

रूपं दृष्ट्वा विशेषमंदहासः सन् हे वामन त्वं जयोत्कृष्टो भवेत्याह ॥ ११ ॥ हरिर्नारायणो यत्स्वस्य वपुर्ज्ञानानंदात्मकं शरीरमव्यक्त-मचलमित्यादि श्रुत्या सर्वथा ध्यानादौ कृतेऽप्यव्यक्तवद्दृष्ट्याद्यगोचरवत्प्रतीयते तद्ध्यानादौ स्वविषये कृते सति व्यक्तं प्रकाशश्च कर्मण्यभ्यासादित्याद्युक्तरीत्या भवतीति ज्ञापनायादितेः स्वप्रत्यक्षकाले विभूषणायुधैर्व्यक्तमधारयत् । तदेवं रूपमनुपमर्द्य तेनैव रूपेणादितिकश्यपयोः पश्यतोः सतोः स वामनो बटुर्बभूव । तत्र दृष्टांतमाह । दिव्या लोकविलक्षणा गतिः स्थितिर्यस्य स नटो यथा तथेति । अनेन मूलरूपावताररूपयोर्निर्विशेषाभेदः सूचितः ॥ १२ ॥ भृग्वादयो महर्षयो ब्रह्मचारिणं तं वामनं दृष्ट्वा मोद-मानाः संतः प्रजापतिं कश्यपं पुरस्कृत्य जातकर्मादि कारयामासुः ॥ १३ ॥ सविता सूर्य उपनयनसंस्कारं प्राप्स्यमानस्य तस्य वामनस्य सावित्रिं गायत्रीमुक्तवान् । बृहस्पत्याचार्यो ब्रह्मसूत्रं यज्ञोपवीतं ददौ । कश्यपो मेखलां मौंजीं ददौ ॥ १४ ॥ भूमिः कृष्णाजिनं ददौ । वनस्पतिः सोमश्चंद्रो दंडं ददौ । माताऽदितिराच्छादनं कौपीनं ददौ । द्यौः स्वर्गाभिमानी देवः छत्रं जगत्पते वामनाय ददौ ॥ १५ ॥ वेदगर्भो ब्रह्मा कमंडलुं ददौ । सप्तर्षयः कुशान्ददुः । हे महाराज । सरस्वती चतुर्मुखपत्नी क्षयरहित-देहस्य वामनस्याक्षमालां ददौ ॥ १६ ॥ यक्षराट् कुबेर इत्युक्तप्रकारेणोपनयनसंस्कारवते तस्मै वामनाय पात्रिकां पात्रं भिक्षार्थं ददौ । सती निर्दुष्टा भगवत्यैश्वर्यादिगुणवती उमा वागभिमानितयोत्कृष्टज्ञानप्रदाऽबिका पार्वती भिक्षामदात् ॥ १७ ॥ हे मारिष ज्ञानभक्त्यादिभिः श्रेष्ठ । राजन् । बटुः स वामन उक्तरीत्या ब्रह्मादिभिः संभावितो बहुमानितः सन् देवर्षिगणेन संसेवितां सभां स्वब्रह्मवर्चसेनैवातिप्रकाशितमकरोत् । आर्यस्तु मारिष इत्यमरः ॥ १८ ॥ द्विज उपनयनं प्राप्तो वामन आहितमग्निं समिधं ज्वालयाऽभिवृद्धं कृत्वा परितः समूहनं च कृत्वा दर्भैः परिस्तीर्याक्षतादिभिः समभ्यर्च्य समिद्भिर्देवेभ्योऽवदानमकरोत् । यदा लेलीयतेह्यर्चिः समिद्धे हव्यवाहने तदाज्यभागावंतरेणाहुतीः प्रतिपादयेदिति श्रुत्या समिद्धस्याग्नेर्होमाधिकरणत्वं समिद्धोमो बटुरिति स्मृत्या ब्रह्मचारिणः समिद्द्रव्यावदानं चावगम्यते ॥ १९ ॥ वामनस्ततः स्वोपनयनानंतरं शुक्रादिभिर्भृगुकुलोद्भवैरुपकल्पितैः प्रदर्शितप्रकारैरश्वमेधैरैश्वर्यादुत्कृष्टं बलिं चक्रवर्तिनं यजमानं देवान्पूजयंतं श्रुत्वा स्वयमखिलशब्देभ्यः सारैः ऋगादिवेदैः संभृतः पूर्णस्तत्प्रवचनपटुः । निगमवाक्पटवे बटवे नम इति स्मृतेः । अखिलेभ्यो ब्रह्मचार्यंतरधृतसमस्तकौपीनादि ब्रह्मचारिसाधनेभ्यः

संभृतः पूर्णोऽखिलजगतः सारो ज्ञानानंदादि गुणैः संभृतः पूर्णः सन् स्वगौरवेण गां भूमिं पदे पदे प्रतिपादविक्षेपं नमयन्निव जगाम ॥ २० ॥ भृगुवत्ससंज्ञिके नर्मदाया उत्तरे तीरे क्रतूत्तममश्वमेधं प्रवर्तयंतो बलेर्यज्ञर्त्विजो भृगवश्च तं वामनमारात्समीप उदितं समीप उदयगतं सूर्यं यथा तथा सम्यगपश्यन् । सप्ततंतुर्मखः क्रतुः । आराद्दूरसमीपयोरिति चामरः ॥ २१ ॥ हे नृप । तत्र यज्ञशालायां तस्मिन्काले विद्यमाना ऋत्विजो यजमानो बलिरन्ये च सभास्थिता वामनशरीरकांत्या तिरस्कृतकांतयो बभूवुः । अनंतरं सूर्यः क्रतोरश्वमेधस्य दिदृक्षयाऽऽयाति । विभावसुरग्निः क्रतुदर्शनेच्छयाऽऽयाति । अथवा । सनत्कुमारो मुनिरायाति । चित्रभानुर्विभावसुरित्यमरः ॥ २२ ॥ एवं सशिष्येण बलिना सहितैर्भृगुभिर्बहुप्रकारेणोह्यमानो भगवान्स वामनो दंडेन सहित-छत्रमुदकसहितं कमंडलुं च बिभ्रन्सन् अश्वमेधशालां प्रविवेश । वाटं शाला वाटिका चेति नाममहोदधौ ॥ २३ ॥ भृगवः शिष्येण बलिना सहितास्ते मुंजानिर्मितकटिसूत्रपरिवेष्टितं युक्तमुपवीतकृष्णाजिनाभ्यामुत्कृष्टं जटायुक्तं स्वेच्छया ब्रह्मचारिणं बलिवंचनेच्छया ब्रह्मचारिवेषं ब्राह्मणरूपं वामनं हरिं यज्ञशालायां प्रविष्टं दृष्ट्वा वामनस्य ब्रह्मवर्चसेन तिरस्कृताः संत आहवनीयाद्यग्निभिः सह वामनं प्रत्युत्थानं कृत्वा स्वीकृतवंतः ॥ २५ ॥ यजमानो बलिर्दर्शनीयमतिसुंदरमत एव मनः संतोषजनकं स्वाकारानुगुणकरचरणा-द्यवयवं वामनं दृष्ट्वाऽतिहृष्टः सन् तस्मै वामनायासनं ददौ ॥ २६ ॥ अथ बलिर्वामनं प्रति त्वया सम्यगागतमिति स्वागतवचनेन वामनं संतोषयित्वा स्वयं च संतुष्टः सन् नंतरं भगवतो वामनस्य पादौ शुद्धोदकेन प्रक्षाल्य साधनांतरैः पूजयामास । मुक्तसंगः संगो यस्य तं मनोरमामिति वामनविशेषणद्वयेन विषयवैराग्यब्रह्मवर्चसोः पूज्यताहेतुता सूच्यते । स्पष्टायिष्यते चैतद्वामनेन यदृच्छा-लाभतुष्टस्य तेजो विप्रस्य वर्धते इति ॥ २७ ॥ ब्राह्मणपूजादिधर्मज्ञः स बलिः कलिकालप्रसक्तपापनाशकं तस्य वामनस्य पाद-शौचं प्रक्षालनोदकं यतोऽत्यंतमंगलकरमतः शिरसा दधार। हरिपादोदकस्य कलिकल्मषनिवर्तकत्वे मंगलदत्वे च पुरा भगीरथप्रार्थि-तश्चंद्रः कलारूपो मौलौ शिरसि यस्य स इंद्रादिदेवो गिरिशो देवो रुद्रो यद्धरिपादोदकं परया भक्त्या शिरसा दधारेति हरिपादोदक-स्योक्तफलकत्वे संप्रदायो दर्शितः । स्मर्यते च । यच्छौचानिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत । अथाऽपि यत्पादनखावसृष्टं जगद्विरिंचोपहृतार्हणांभः सेशं पुनातीति । अत्र पर्वते शयानदेवतांतरव्यावृत्त्यर्थं चंद्रमौलिरिति रुद्रविशेषणं ज्ञेयं

॥ २८ ॥ बलिनोक्तस्वागतवचनादि प्रकारमाह शुकः ॥ बलिरुवाचेत्यादिना । हे ब्राह्मण । ते त्वया सुष्ठ्वागतं तुभ्यं नमोऽस्तु । वयं ते किं करवाम । कांत्यादिना श्रेष्ठशरीरधारिणं त्वा त्वां ब्रह्मर्षीणां साक्षात्तपोरूपं मन्ये ॥ २९ ॥ हे ब्रह्मन् । यस्माद्भवान्नद्यास्मद्गृहान्प्रत्यागतस्तस्मादद्य नोऽस्माकं पितरस्तृप्ताः । अस्माभिर्दीयमानकन्ये विषयेऽलं बुद्धिमंतो जाताः । अद्य नः कुलं पवित्रीकृतं । अद्यायमश्वमेधक्रतुः सुष्विष्टः कृतः ॥ ३० ॥ हे ब्राह्मणपुत्र । अद्य त्वत्पादप्रक्षालनोदकैर्विनष्टपापस्य मेऽग्नयो विधिमनतिक्रम्य सम्यगवदानयुक्ता जाताः । त्वत्पादप्रक्षालनवार्भिरुदकैरियं संनिहिता भूमिः पवित्रीकृता । तथा त्वदाश्रममारभ्येतत्स्थानपर्यंतं च भूमिस्तनुभिरल्पैस्तव पादैः पादप्रक्षेपजपादचिन्हैरद्धा प्रत्यक्षं यथार्थेन पुनीता पवित्रीकृता । अंहो दुरितदुष्कृतं । अद्धा प्रत्यक्षसत्ययोरित्यमरः । दभ्रं कृशं तन्विति च ॥ ३१ ॥ अर्हत्तम पूज्यतम हे ब्राह्मणकुमार । त्वं यद्यद्वस्तु वांछस्यपेक्षसे तत्तत्त्वं मे मम सकाशात्प्रतीच्छ स्वीकुरु । हे विप्रसुत । अहं त्वामर्थिनं याचकमूहे । हे ब्रह्मन् । त्वं गां भूमिं तप्तत्वादिगुणवत्कांचनं सुवर्णं वा धनधान्यादि गुणवद्धाम गृहं वा तथा मृष्टं शुद्धं स्वादुतरमन्नं वोत कन्यां वा धनधान्यादि पूर्णान् ग्रामान्वाऽश्वान्वा गजान्वा तथा रथान्वा संप्रतीच्छ सम्यक् स्वीकुरु ॥३२॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥८–१७॥

॥ हरिः ॐ ॥ अत्रापि हरौ भक्त्याभिवृद्धये भगवतो वराहस्य भुवोद्धारेण सर्वप्रजापालनादि माहात्म्यं निरूप्यते । तत्रादौ बलिस्तुस्त्या प्रसन्नवामनवाग्मितोच्यते ॥ इति वैरोचनेरिति । भगवान्वामन इत्युक्तप्रकारं धर्मयुक्तं सुसूनृतमतियथार्थतया श्रोतृमनःप्रीतिजनकं विरोचनपुत्रबलेर्वचनं श्रुत्वा संतुष्टः सन् बलिं संतोषयित्वा वक्ष्यमाणप्रकारं वाक्यमाह ॥ १ ॥ हे जनदेव राजन् बले । तवैतद्वचः सूनृतं त्वत्कुलोचितं पुण्ययुक्तं कीर्तिकरं च यस्य तव सांपराये मोक्षादिश्रेयसां भृगवः प्रमाणं । तथा त्वत्कुलवृद्धः प्रशांतो हरिनिष्ठस्तव पितामहः प्रल्हादश्च प्रमाणं ज्ञापकः । नरहरिचरणारविंदभक्तिमत्प्रल्हादपौत्रत्वात् । शुक्रादिशिष्यत्वाच्च । तव मोक्षादिसर्वपुरुषार्थो निश्चित इति भावः ॥ २ ॥ हे बले । तवैतस्मिन्कुले कोऽपि पुरुषो निःसत्त्वो दुर्बलः कृपणो दातव्यलोभवान्दैन्योपेतश्च तथा द्विजातये ब्राह्मणायाहं ददामीति प्रतिज्ञायादाता दानमकुर्वन्न दास्यामिति प्रतिवक्ता च न हि ॥ ३ ॥ हे नृप बले । युष्मद्वंशे तीर्थे शुद्धिकरे भागीरथ्यादि क्षेत्रे श्रीरंगादौ च दानार्थिना प्रतिग्राहिणाऽर्थिता याचिताः

संतो दाने विमनस्का अत एवार्थिनां पराङ्मुखा विमुखाश्च न संति। तथा युद्धेऽपेक्षावता युद्धमर्थिताः संतो विमनस्का विमुखाश्च न संति। यस्मान्निर्दुष्टकीर्त्या प्रतापवान्पितामहः प्रल्हादः खे आकाशे उडुपश्चंद्र इवोद्भाति विराजते ॥ ४ ॥ यस्मिंस्तव कुले जातो हिरण्याक्ष इमां भूमिमेक एव गदायुद्धश्चरन्सन् दिग्विजयकाले प्रतियोद्धारं नालभत ॥ ५ ॥ क्ष्मोद्धारे भुव उद्धरणकाले प्राप्ते सति भूम्यपहारकं हिरण्याक्षं कृच्छ्रेणातिकाठिण्येन विनिर्जित्य पराभूय तस्य हिरण्याक्षस्य भूरि बहुलं पराक्रममनुस्मरन्सन् स्वं जयवंतं न मेने। कृच्छ्रेण विनिर्जित्येति हिरण्याक्षप्रशंसार्थं तमोयोग्यमोहनार्थं चोक्तमिति ज्ञेयं ॥ ६ ॥ तथा हिरण्याक्षभ्राता सहोदरो हिरण्यकशिपुः पूर्वं तस्य हिरण्याक्षस्य वधं वराहरूपेण हरिणा कृतं श्रुत्वा कुपितः सन् स्वभ्रातृहंतारं नारायणं हंतुं हरेर्निलयमाश्रयं वैकुंठं जगाम ॥ ७ ॥ मायाविनां परमोहनशक्तिवतां ज्ञानवतां च वरः श्रेष्ठो विष्णुर्यस्मिन्यस्मिन्काले यद्यत्कार्यं तत्तज्ज्ञानसंपूर्णो यतो यत इत्यादि वक्ष्यमाणप्रकारेणालोचनमकरोत्। मेधा माया स्रजाविनिरिति माया शब्दस्य मत्वर्थे विनि प्रत्ययः। कृतांतो यमसिद्धांतावित्यमरः ॥ ८ ॥ अहं यतो यतो यत्र यत्र गमिष्यामि तत्र तत्रासौ हिरण्यकशिपुः प्राणिनां मृत्युरिवायास्यत्यतोऽहं पराग्दृशो बहिर्दृष्टेरस्य हिरण्यकशिपोर्हृदयं प्रवेक्ष्यामीति चिंतयामास हरिरित्यन्वयः ॥९॥ हे असुरेंद्र बले। विविक्तचेताः कर्तव्याकर्तव्यविषयज्ञानसंपन्नः स विष्णुरेवमुक्तरीत्या स्वस्मिन्निश्चयं कृत्वा स्वं प्रत्याधावतः शीघ्रमागच्छतः शत्रोर्हिरण्यकशिपोः शरीरं तस्य हिरण्यकशिपोर्घ्राणछिद्रेण निःश्वासवायोः प्रविश्य सूक्ष्मशरीरः सन् हिरण्यकशिपोर्देहमाविवेश। छिद्रं निर्व्यधनं लोको रंध्रमित्यमरः ॥ १० ॥ स हिरण्यकशिपुस्तस्य विष्णोर्निकेतमाश्रयं वैकुंठं परिमृश्य शोधयित्वा विष्णुना शून्यं ज्ञात्वा विष्णुमपश्यन्कुपितो ननाद। वीरो हिरण्यकशिपुः क्ष्मां भूम्यां द्यामंतरिक्षे प्राच्यादि दिक्ष्वाकाशेऽतलवितलादि विवरेषु समुद्रेषु च विष्णुं मृगयन्नपि न ददर्श ॥ ११ ॥ विष्णुमपश्यमानो हिरण्यकशिपुर्मयेदं जगत्तद्विचारार्थं प्रविष्टमथाऽपि मे भ्रातृहंता स विष्णुः पुरुषो यं लोकं प्राप्तः पुनर्नावर्तते तं लोकं गतो नूनं निश्चय इति होवाच ॥ १२ ॥ देहधारिणां शत्रुषु वैरानुबंधो द्वेषानुवृत्तिरेतावान्वैर्यदर्शनपर्यंतो यदा शत्रुर्मृग्यमाणोऽपि न दृश्यते तत्प्रभृति तद्द्वेषो ह्रसतीति भावः। ननु हरेः सर्वज्ञत्वेन स्वतंत्रतया च वैषम्यनैर्घृण्यरहिततया तत्कर्मानुसारेण फलदातृत्वात्कथं हरौ हिरण्यकशिपौ द्वेषापरनाममन्युरित्यत आह ॥ अज्ञानेत्या-

दिना ॥ १३ ॥ वामनो बलिं प्रति यत्प्राक् तद्वंशजस्य युद्धाविमुखत्वमुक्तं तद्यतोजातो हिरण्याक्ष इत्यादिना विचिन्वन्न ददर्शेत्यंतेनोपपाद्य यद्दानाविमुखत्वमुक्तं तदुपपादयति ॥ पितेति । हे बले । प्रल्हादस्य पुत्रस्ते पिता यो विरोचनः स देवा द्विजवेषेण स्वस्यायुषमपहर्तुमागता इति यत्तज्ज्ञानवानपि ब्राह्मणेषु वात्सल्यवान् देवैस्त्वदायुर्देहीति याचितः सन् द्विजलिंगेभ्यो देवेभ्यः स्वमायुर्दत्तवान् । अनेन दानशीलेनापि स्वेष्टायुरभिवृद्धये दातव्यानि वस्तूनि दीयंते न त्वायुरपि । तदप्यनेन दत्तामिति कैमुत्येन दानावैमुख्यं विरोचनस्य सूचितं ॥ १४ ॥ भगवान्वामन एवं बलिपित्रादीन्स्तुत्वा प्रकृतमनुसरन्स्वाभिलषितदानाय बलिमपि स्तौति ॥ भवानिति । हे बले । गृहमेधिभिर्गृहस्थाश्रमैः पूर्वजैर्ब्रह्मण्यैः शूरैः क्षत्रियैरुत्कृष्टयशस्कैरन्यैश्चास्थितानाश्रितान्क्रियमाणान्धर्मान् भवानप्याचरिता कर्तेति ॥ १५ ॥ हे वरदर्षभ । याचकाभिलषितदातृषु श्रेष्ठबले । यस्मात्त्वं पूर्वाचरितधर्मैकरणशीलस्तस्मादहं त्वत्तोऽपीषदल्पां भूमिं वृणे स्वीकर्तुमिच्छामि । ईषदित्युक्तं स्पष्टयति ॥ पदानीति ॥ १६ ॥ हे दैत्येंद्र राजन् बले । जगत्स्वामिनो वदान्याद्दानशूरात्तव सकाशादहं ममाणोः पदा पादेन संमितानि परिमितानि भूमेः त्रीणि पदानि कामये वांच्छामि । अन्यन्न कामये । इत्यनेन यत्पदानीति बहुवचनस्यापर्यवसानात्पदानां च महत्वेऽपि महत्या भूम्या भाव्यमिति बलिमानसशंका त्रीणि मम पादसंमितानीति वदता परिहृता । ननु मम जगदीश्वरत्वाद्दानशूरत्वाच्च बहुपदार्थयाचनं त्वया कर्तुमुचितं । किमल्पं याचितमिति तत्राह ॥ नैनं प्राप्नोतीति । विद्वान्याचकज्ञानिपुरुषो यावतैव स्वशरीरयात्रादिसिद्धिस्तावद्द्रव्यस्य प्रतिग्रहात्स्वीकारादेनं पापं न प्राप्नोति । अत एव चर्मकारं प्रति ब्राह्मणेन स्वप्राणात्ययसमये तच्चर्मस्थकुलित्था याचयित्वा भक्षिताः उदकं गृहाणेति चर्मकृता प्रार्थितेन ब्राह्मणेनोदकस्य स्वयमेव गृहीतुं शक्यत्वेन न प्रतिग्रहीतं । तदेतदजीविष्यन्निमानखादन्कामम्मुदकमित्यादि श्रुतिसिद्धं ॥ १७ ॥ अहो ब्राह्मण दायाद पुत्र । ते वाचो द्रव्यार्जकेषु वृद्धानामसंमताः । यथा यतस्त्वं बालोऽत ईदृश्यो वाचः केषांचिद्बालानामपि स्वार्थे बुद्धिमत्वं दृश्यते । त्वं तु स्वार्थं प्रत्यबुधोऽज्ञानी । अत एव बालिशा मतिः ॥ १८ ॥ ननु मम बालिशत्वं स्वार्थाज्ञत्वं च कथं त्वया बुद्धमित्यत आह ॥ मां चेति । हे द्विज । स्तुतिरूपैर्वचोभिर्लोकानामीश्वरं सप्तद्वीपानामपि दानसमर्थं मां समाराध्य संसेव्य यो भवान् भूमेः पदत्रयं वृणीते स भवानबुद्धिमान् बालिशश्चेति । अनेन यद्वामनेन बलिं प्रति

जगदीश्वर दानशूरेत्यादि स्तुतिकुर्वता तवैतादृशत्वेऽपि यावदर्थप्रतिग्रहो दोषाभावेनैतावदेव मया प्रार्थ्यत इति स्वाभिप्रायं प्रकटनं कृतं । तदज्ञानिना बलिनैवमुच्यत इति ज्ञातव्यं ॥ १९ ॥ बलिरेवं वामनमप्रबुद्धतया विनिंद्य स्वस्य स्वकीर्त्यर्थं तस्य हितोपदेशं करोति ॥ न पुमानिति। हे बटो ब्रह्मचारिन्वामन । कश्चिदपि पुमान्स्वस्य जीवनोपयुक्तद्रव्यार्थीसन्मामनुव्रज्य तद्द्रव्यं याचितुं प्राप्य भूयः पुनस्तद्द्रव्यमन्यं याचितुं नार्हति यस्मात्तस्मात्त्वं तव यावज्जीवद्वृत्तिकरीं जीवनोपायभूतां भूमिं मे सकाशात्कामं यथेच्छं स्वीकुरु ॥ २० ॥ एवं बलिना बोधितो वामनोऽलंबुद्धिरहितस्य स्ववृत्तिकारिभूम्या पूर्तिर्न भवेदिति कैमुत्येनाह ॥ यावंत इति। हे नृप बले । त्रिलोक्यां प्रेष्ठा अतिप्रीतिविषया यावंतो विषया भोगसाधनपदार्थाः संति सर्वेऽपि तेऽजितं मनोलक्षणेंद्रियं येन तं पुरुषं प्रति पूरयितुं विषयांतरापेक्षाराहितं कर्तुं न शक्ता भवंति ॥ २१ ॥ तदेवोपपादयति ॥ त्रिभिरिति । यः पुरुषो भूमेस्त्रिभिः क्रमैः पादविक्षेपपरिमितैः स्थलैरसंतुष्टो नालंबुद्धिः स नवखंडसमेतेन जंब्वाख्येनैकेन द्वीपेन समग्रप्राप्तेनापि न पूर्यतेऽलंबुद्धिमान्न भवति । पुनः सप्तद्वीपानपि धरिष्यामि प्रतिगृहीष्यामीति जातेच्छावत्त्वात् ॥ २२ ॥ तथा सप्तद्वीपानामाधिपतयो वेनजपृथुचक्रवर्ती गदराजादयो नृपा अर्थैर्द्रव्यैः कामैर्विषयभोगैश्च पुनरपि मे भूयादितीच्छारूपायास्तृष्णाया अंतं समाप्तिं न प्राप्ता इति नोऽस्माभिः श्रुतं ॥ २३ ॥ यस्मादेवं तस्मादीश्वरेच्छाप्राप्तद्रव्येण शरीरयात्रादिकं करिष्य इत्यलंबुद्धिरेव सुखहेतुरित्यन्वयव्यतिरेकाभ्यां दर्शयति ॥ यदृच्छयेति । यः पुमान् यदृच्छा हि तदिच्छा स्यादिति स्मृत्युक्तहरीच्छया प्राप्तेनालंबुद्धिमान्स्वस्य सुखं यथा स्यात्तथा वर्तते । अस्य धर्मस्येशावास्यमिदं सर्वं तेन त्यक्तेन भुंजीथा इति श्रुतिविहितत्वेनैहिकपारात्रिकानंदहेतुत्वादित्यन्वयो दर्शितः । व्यतिरेकमपि दर्शयति । अलंबुद्धिरहितोऽत एवाजितांतःकरणस्त्रिभिर्लोकैः स्वस्य प्राप्तैरपि सुखं न वर्तत इति ॥ २४ ॥ इदानीमलंबुद्ध्यनलंबुद्ध्योः क्रमेण मोक्षसंसारहेतुत्त्वाद्यदृच्छया प्राप्तेनालंबुद्धिरेव संपाद्येत्याह ॥ पुंस इति । पुरुषस्य यो यमर्थकामयोर्विषयेऽनलंबुद्धिरूपोऽसंतोषः सः संसृतेः संसारस्य कारणं यच्चायमर्थकामयोर्यदृच्छया प्राप्तेन संतोषः स मोक्षहेतुतया यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सर इत्यादि स्मृत्युक्तः ॥ २५ ॥ इतोऽपि स्वादृष्टप्रेरकेश्वरप्रापितद्रव्यादावलंबुद्धिरेव ब्रह्मवर्चसादिहेतुस्तदभावश्चानर्थकर इत्याह ॥ यदृच्छालाभतुष्टस्येति । यदृच्छालाभेनालंबुद्धिमतो ब्राह्मणस्य तेजो ब्रह्म-

वर्चोऽभिवृद्धं भवति । यदृच्छालाभेप्यनलंबुद्धिकरणादस्य ब्राह्मणस्य तद्ब्रह्मवर्चो ज्ञानभक्त्यादिरूपं सामर्थ्यं चांभसोदकेनाशुशुक्षणिरग्निरिव प्रशाम्यति नष्टं भवति । अलंबुद्धिहेतुवैराग्याभावेन वैराग्यहेतुकभक्त्यादेरसंभवात् । अंभोऽर्णस्तोयमिति । शिखावानाशुशुक्षणिरित्यमरकोशात् ॥ २६ ॥ यस्मादुक्तरीत्या स्वादृष्टप्रेरकेश्वरप्रेरितस्वेच्छा यावद्द्रव्यमात्रविषयिणी स्वप्रयोजनायालं । तावन्मात्रग्रहणेन ब्रह्मवर्चसादिश्रेयः प्राप्तिस्तस्मादहं सर्वाभिलषितदानसमर्थतया वरदश्रेष्ठादपि त्वत्तस्त्रीण्येव पदानि स्वीकरोमि । एतावतैवाहं सिद्धोऽलंबुद्धिमान् । यस्मात्स्वोपजीवनादि प्रयोजनं यावत्तावत्साधनमेव द्रव्यमाकांक्ष्यं नातोऽधिकमिति तेन त्यक्तेन भुंजीथा मा गृधः कस्यचिद्धनमिति श्रुत्या विधीयत इति भावः ॥ २७ ॥ इति वामनेनोक्तो बलिः प्रहासं कुर्वन्सन् । हे बटो । यावदपेक्षितं तावदेव तर्हि त्वया प्रतिग्रह्यतामित्युक्त्वा वामनाय तद्याचितभूमिं दातुं जलपात्रं गृहीतवान् ॥ २८ ॥ विदां कर्तव्याकर्तव्यज्ञानिनां नीतिज्ञानां वरःश्रेष्ठ उशनाः शुक्राचार्यो विष्णोर्वामनस्य स्वचिकीर्षितं कर्तुमपेक्षितं देवकार्यसाधनं जानन्सन् वामनरूपाय विष्णवे क्ष्मां भूमिं प्रदास्यंतं दातुमिच्छंतमसुराणामीश्वरं स्वस्य शिष्यं बलिं प्रति वक्ति ॥ २९ ॥ हे विरोचनपुत्र बले । त्रिपदयाचको बटुः साक्षादनुपचारेण परममुख्यवृत्त्या भगवच्छब्दवाच्योऽव्ययः पूर्णैश्वर्यो विष्णुरेव कश्यपाददित्यां प्रादुर्भूतः सन् देवानां कार्यसाधकः सन्निहायातः ॥ ३० ॥ हे बले। अस्यापरिच्छिन्नस्वरूपतया तत्पादत्रयपरिमितभूमेरपि मम दानाशक्तो बंधनस्वस्थानापहरणमजानता त्वयाऽस्मै वामनायाभिलषितं भूदानं यत्प्रतिज्ञातं तदहं साधु समीचिनं न मन्ये । यस्मादेतत्प्रतिज्ञया दैत्यानां महाननयोऽनीतिरागता ॥ ३१ ॥ मायया तद्वंचनेच्छया माणवको ब्रह्मचारीरूप एष वामनात्मा हरिस्ते तव स्थानं स्वर्गाद्यैश्वर्यं त्रैलोक्याधिपत्यं श्रियं द्रव्यादिसंपदं कीर्तिकरं तेजः पराक्रमं चाच्छिद्य बलाद्गृहीत्वा देवेंद्राय दास्यति ॥ ३२ ॥ हे मूढ भाविकार्यानभिज्ञ बले। एषो वामनो विश्वकायो ब्रह्मांडपर्यंतं पूर्णदेहः सन् त्रिभिः पादविक्षेपैरिमांल्लोकानाक्रमिष्यति । त्वदीयं सर्वं द्रव्यं विष्णवे वामनाय दत्वा कथं वर्तिष्यस्ये प्रवर्तिष्यसे जीविष्यसि । जीवनोपायाभावात् ॥ ३३ ॥ इमांल्लोकानित्युक्तलोकनामग्रहणपूर्वकं प्रतिज्ञातभंगमाह ॥ क्रमत इति । एकेन पादेन गां भूमिमाक्रमिष्यतो द्वितीयेन पदा दिवं स्वर्गमाक्रमिष्यतो महता कायेन स्वदेहेन तदंतरस्थमाकाशमप्याक्रमिष्यतोऽस्य वामनस्य तार्तीयस्य तृतीयस्य पादस्य तत्परिमितिस्थलदानस्य तव

गतिः कुतः क्वास्तीति ॥ ३४ ॥ हे बले । यो भवान् भवता प्रतिज्ञातस्य समर्पयितुमसमर्थस्तस्य ते निष्ठांतं नियतं प्रतिज्ञातदान-पर्यंतं नरकं मन्ये । यतः प्रतिज्ञातमदातुर्नरकं नरकः प्रतिश्रुतः । वाचा दत्तं मनो दत्तं धारा दत्तं न दीयते । षष्ठिवर्षसहस्राणि विष्टायां जायते कृमिरिति श्रुत्या प्रतिज्ञातः ॥ ३५ ॥ ननु दानं यज्ञानां वरूथमिति श्रुत्या दानस्य विहितत्वात् । लोके दातारो गुणसर्वभूतान्युपजीवंति दानेनारातिरपानुदंतो दानेन द्विषंतो मित्रा भवंति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परं वदंतीति प्रशंसित-दानकर्तुर्मे कथमनर्थप्राप्तिरित्यत आह ॥ न तद्दानमिति । हे बले । येन दानेन वृत्तिः स्वजीवनमेव विपद्यते नश्यति तद्दानमुक्त-श्रुत्यादयो न प्रशंसांति । किंतु स्वोपजीवनाविरोधि दानमेव प्रशंसंति । यस्माद्वृत्तिमतः स्वजीवनोपायद्रव्यादिमत एव दानयज्ञ-तप आदिकर्म विधीयते ॥ ३६ ॥ किंच यावज्जीवनसाधनद्रव्यमवशेष्यान्यद्रव्यस्य वक्ष्यमाणरीत्या दातुरैहिकपारत्रिकसुखं भवति नान्यथेत्यतोऽपि स्वजीवनविरोधि दानमनुचितमित्याह ॥ धर्मायेत्यादिना । धनी पुरुषो वित्तं स्वन्यायार्जितं द्रव्यं धर्माय पुण्याय यशसे कीर्त्यै अर्थाय स्वजीवनोपायद्रव्याय कामाय विहितविषयभोगाय स्वशरीरसंबंधिजनाय चेत्येवं पंचधा विभागः कुर्वन्नेवेह लोकेऽमुत्र परलोके च मोदते संतुष्टो भवति ॥ ३७ ॥ स्वोक्तार्थे ऐतरेयवाक्यं प्रमाणमित्याह ॥ अत्रापीति । हे असुरेष्वत्युत्तम बले । त्वमत्रापि स्वजीवनोपयोग्यन्यद्रव्यदानमेव कर्तव्यमित्यत्रापि बह्वृचैर्ऋग्वेदिभिर्गीतमुक्तं वचनं शृणुष्व । तदेकदेशग्रहणेन तदर्थ-विवरणेन च दर्शयति ॥ सत्यमोमितिं । याचकं प्रति त्वद्याचितं सर्वं दास्यामीत्येवमर्थकमोमिति यत्प्रोक्तं तत्सत्यमित्युच्यते । यत्तन्नास्तीति वक्ति तदनृतं ह्यत्र प्रसिद्धं ॥ ३८ ॥ जीवतः प्राणधारिणो देहाख्यवृक्षस्योक्तविधं सत्यं पुष्पफलसाधनं जानीयात् । आत्मलक्षणे वृक्षेऽजीवति जीवनसाधनद्रव्यरहिते तत्सत्यलक्षणतज्जन्यपुष्पं फलं स्वर्गादिलक्षणं न स्यात् । यत आत्मनो जीववृक्ष-स्यानृतं स्वसर्वस्वदानानंगीकारवचनं वृक्षस्य मूलमिव मूलमभिवृद्धिहेतुः । अनेन श्लोकेन पुष्पं हि फलं वाचः सत्यं वदाति । अथैतन्मूलं वाचो यदनृतमित्युपनिषद्भागो वक्ष्यमाणार्थे प्रमाणतया सूचितः ॥ ३९ ॥ उत्खाततिमूलवान्वृक्षो यथाऽऽशु शुष्यति शोषं प्राप्नोत्युद्वर्तते नष्टश्च भवति तथैवेदं नष्टानृत उक्तविधानृतमवदन् आत्मत्वाधिकारी शुष्येन्नश्येच्चात्र संशयो नास्ति । एवं नष्टानृतो यस्मात्तस्मादिति वा अनेन पद्येन तद्यथा वृक्षोऽनिर्मूलः शुष्यति स्वोद्वर्तत एवमेवानृतं वदन्नानिर्मूलमात्मानं करोति । स

शुष्यति स उद्वर्तत इत्युपनिषद्भागः सूचितः ॥ ४० ॥ पराक् परविषये यदोमित्यक्षरं तदपेक्षितं सर्वं दास्यामीति रूपं तद्रिक्तमर्थशून्यं स्वजीवनद्रव्यदानस्योक्तरीत्याऽनर्थहेतुत्वेन बाधितत्वादत एवापूर्णं च स्वायोग्यदानस्यैवापूर्णत्वात् । यस्मादेवं स्वसर्वस्य दानमनुचितं तस्माद्यत्किंचिद्दास्यामीत्येवमर्थकमोमिति वाक्यं यो ब्रूयात् । स पूमान्नरिप्येत नष्टो न भवेत् । वै प्रसिद्धं । अनेन पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति । तद्यत्किंञ्चोमित्याहात्रैवास्मै तद्रिच्यतेत्युपनिषद्भागः प्रमाणीकृतः ॥ ४१ ॥ उक्तार्थे तात्पर्यं सूचितं पुनरुक्तमेव विशदयति ॥ भिक्षव इति । भिक्षवे याचकाय सर्वस्वं दास्यामीत्यंगीकुर्वन्स्वकामेभ्यः । उपलक्षणमेतत् । अर्थादिभ्योऽलं समर्थो नात्मने स्वजीवनाय च पर्याप्तो न भवति । यस्मादथ तस्माद्यत्सर्वस्वं न ददामीत्यनृतं वच एतदभ्यात्ममात्मनोऽभिवृद्धिकरं । स्वजीवनोपायस्यावशेषितत्वात् । स कामेभ्यो नालं स्यादथैतत्पूर्णमभ्यात्मंयन्नोति भागोऽनेन सूचितः ॥ ४२ ॥ यया स यत्सर्वमोंकुर्याद्रिंच्यादात्मानामिति श्रुत्या यः सर्वस्वदानप्रतिज्ञाता स आत्मानं रिंच्याच्छून्यं कुर्यादिति सर्वदानप्रतिज्ञा न युक्ता तथा याचकापेक्षितसर्वं नेत्युक्तिश्चेत्याह ॥ सर्वं नेति । योर्थिनं याचकं प्रति तद्याचितं सर्वं नास्तीति ब्रूयात् स दुष्कीर्तिर्जीवन्मृतश्च भवतीत्यनेन स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात्प्रजायते भूयान्भवति यो वैतां वाचं वेदेति भागः सूचितः । ननु तर्ह्येवमस्य विष्णुत्वमज्ञाय त्रीण्यपि पदानि न दास्यामीत्यनृतवचनेनानृतात्पातकं परमिति स्मार्तं जुगुप्सितमनृतपापं स्यादित्याशंकमानं बलिं प्रति शुक आह ॥ स्त्रीष्वित्यादि । हे बले । स्त्रीषु कामुकासु नर्माणि परिहासवेलायां विवाहे च जीवनोपायप्रयोजने गोब्राह्मणादिहिंसायां यदनृतं तज्जुगुप्सितं नेति । न स्त्रीषु राजन्न विवाहकाले प्राणात्यये सर्वधनापहार इत्यादि प्रमाणप्रसिद्धं यतोऽतस्तेऽत्र शंका मा भूदिति भावः ॥ ४३ ॥ इति श्रीभागवतटिप्पण्यामष्टादशोऽध्यायः ॥ ८—१८ ॥ ॥

॥ हरिः ॐ ॥ अत्रापि हरौ भक्त्यभिवृद्धये तदवतारत्रिविक्रममहिमोच्यते । तत्रादौ शुकबोधितस्यापि बलेर्बुद्धिनिश्चयमाह ॥ बलेरित्यादिना । गृहपतिर्गृहस्थधर्मो बलिरेवमुक्तरीत्या स्वकुलाचार्येण भाषितः क्षणकालं तूष्णीं भूत्वा पुनरवहितः स्वस्थांतःकरणः सन् गुरुं शुक्रमुवाच ॥ हे राजन्निति । शुकेन क्रियमाणं परीक्षित्संबोधनं गृहस्थाश्रमिणैवमेव कार्यमिति द्योतनार्थं ॥ १ ॥

हे शुक्र । यो धर्मो दानादिलक्षणोऽर्थं द्रव्यं कामं विषयेच्छां यशः कीर्तिं वृत्तिं जीवनोपायं च कर्हिचित्कदाऽपि न बाधते । स एव गृहमेधिनां गृहस्थाश्रमिणां धर्म इति भगवतैश्वर्यादि गुणवता त्वया यत्प्रोक्तं तत्सत्यं यथार्थमेव ॥ २ ॥ तथाऽप्यनृतापयशसोबिभ्यते । मम प्रतिज्ञातं न दास्यमीति वचनमशक्यमित्याह ॥ स चाहमित्यादिना । प्रल्हादकुलोत्पन्नः स चोक्तगुणवानहं ब्राह्मणाय ददामीति प्रतिज्ञाय कितवो वंचको यथा तथा द्रव्यलोभेन न दास्यामीति द्विजं कथं प्रतिवक्ष्यामि ॥ ३ ॥ असत्यादयथार्थवचनादथापरोऽन्योऽधर्मो नास्ति । हेत्यनेन नानृतात्पातकं परमिति प्रसिद्धिं सूचयति । अहं सर्वं जगद्वोढुं धर्तुमलं शक्यं मन्ये । अलीकपरमयथार्थवचननिष्ठं नरं विनेतीयं भूरुवाच । इति होवाचेति वेदतुल्यत्वमस्य वाक्यस्य सूचयति । अलीकं त्वप्रियेऽनृतमित्यमरः ॥ ४ ॥ हे शुक्र । अहं विप्रस्य प्रलोभनाद्वंचनाद्यथा बिभेमि भीतोऽस्मि । तथा निरयाद्दुर्गतेर्दारिद्र्याद्रधर्माद्विप्रवंचनानृतभाषणातिरिक्तात्पापादसुखार्णवाद्दुःखसमुद्रात्स्थानच्यवनात्स्थानभ्रंशान्मृत्योर्मरणाच्च न बिभेमि ॥ ५ ॥ संपरेतो मृतोऽस्मिँल्लोके यद्यद्धरादिकं भूम्यादिकं हास्यति त्यजाति चेद्यदि तेन धरादिनाऽपि विप्रो ब्राह्मणस्तुष्येत्तर्हि तस्यात्यागेऽदाने निमित्तं किं न किमपि । भूम्यादेः सदा स्वाधीनत्वाभावात् । तत्र लोभोऽयुक्त इति भावः ॥ ६ ॥ कैमुत्यन्यायेनापि भूम्याद्यदाने कारणाभावं दर्शयति ॥ श्रेय इति । दध्यङ् अथर्वणः शिबिः राजा एतत्प्रमुखाः साधवो दयालुत्वादि समीचीनगुणवंतो भूतानामिंद्रकपोतादीनां स्वकीयैस्त्यक्तुमशक्यैरसुभिः प्राणैरपि श्रेयो हितं कुर्वंति । दध्यङ् देवेंद्राय स्वास्थीनि वज्रनिर्माणाय दत्तवानिति प्रसिद्धेः । शिबिरग्निरूपकपोतरक्षणायेंद्ररूपश्येनपाक्षिणे स्वमांसं ददाविति स्कांदादिप्रसिद्धेः । एवं स्थिते धरादिषु विषये दास्यामि न वेत्येवं रूपो विकल्पः संशयः को न कोऽपीत्यर्थः ॥ ७ ॥ नश्वरस्वत्ववद्भूम्यादौ स्वत्वपरित्यागेन परस्वत्वापादानरूपदानेनानश्वरकीर्तिरेव संपाद्येत्याशयेन तदुपपादयति ॥ यैरिति । हे ब्रह्मन् । यैर्दैत्येंद्रैरियं भूर्बुभुजेऽनुभुक्त्वा तेषां संबंधिनो लोकान् भूरादीन्कालः कालनामकभगवत्प्रेरितः प्रसिद्ध कालोऽग्रसीद्ग्रस्तवान् । कालेन दैत्येंद्राणां भूरादिस्वामित्वं नष्टमिति यावत् । ननु दैत्येंद्राणामशक्ततया तदभूदित्यत आह ॥ अनिवर्तिभिरिति । युद्धापराङ्मुखैरित्यर्थः । तथाऽपि भूव्यधिगतं व्याप्तं तेषां यशः कीर्तिः कालो नाग्रसीदिति ॥ ८ ॥ युद्धेऽनिवृत्ततया देहत्यागादपि सत्पात्रे द्रव्यत्यागः श्रेयानित्याशयेनाह ॥ सुलभा

इति । हे विप्र ऋषे । युध्यनिवृत्ता अपराङ्मुखास्तनुत्यजः शरीरत्यागिनः सुलभाः सर्वत्र बहवो वर्तंत इत्यर्थः । तीर्थे सत्पात्रे आगते सति श्रद्धया धनत्यजो द्रव्यदातारो ये ते तथा न सुलभाः । कुत्रचित्केचन वर्तंत इत्यर्थः । तीर्थं मंत्राद्युपाध्याये शास्त्रेष्वंभसि पावने । पात्रोपायावतारेषु स्त्री पुष्पे योनियज्ञयोरिति यादवः ॥ ९ ॥ नन्वेवं त्वया त्वत्प्रतिज्ञा तदा वामनेनोक्तरीत्या सर्वस्वापहरणे तव दारिद्र्यप्राप्त्याऽशोभनं स्यादित्यत आह ॥ मनस्विन इति। दानशीलमनस्कस्य याचकेषु कृपावतो यदर्थकामोपनयेन द्रव्याकांक्षिणे द्रव्यदानेन पुनस्तद्ग्रहप्रापणेन दुर्गतिर्दारिद्र्यं तदपि शोभनमेव । किं पुनर्भवादृशां परब्रह्मादि ज्ञानिनां द्रव्यदानेन शोभनं भवतीति वक्तव्यं । कीर्तिकामस्यात एव दानशीलस्यापकीर्तेर्दारिद्र्यमेव वरमिति भावः । ततोऽहमस्य बटोर्वामनस्य वांच्छितमपेक्षितं ददामि ॥ १० ॥ हे मुने । आम्नायविधाने वेदविहितकरणे कोविदाः कुशला भवंत आदृताः संतो यं यज्ञक्रतुभिरश्वमेधैः सप्तसंस्थज्योतिष्टोमादिभिश्च यजंति पूज्ययंत्येषो बटुर्वरदः स विष्णुर्वाऽस्त्वन्यो वाऽस्तु । तथाऽप्यहमीप्सितामपेक्षितां क्षितिं भूमिममुष्मै तस्मै दास्यामि ॥ ११ ॥ कर्मदेवो बलिर्बलिनामासुरावेशेनाह ॥ यद्यपीति । यद्यप्यहं प्रतिज्ञातं दास्याम्येव । तथाप्यऽसौ बटुरनागसं निरपराधिनं मामधर्मेण बध्नीयादिति ज्ञायते । तथाऽप्यहं मम भीतमत एव ब्राह्मणशरीरं रिपुं शत्रुमेनं न हिंसिष्ये न हनिष्यामि ॥ १२ ॥ एष उत्तम श्लोको विष्णुरन्यो वाऽस्तु । तथाऽप्यसौ कपटित्वेन मां हत्वैनां भूमिं हरेत् । मया निहतो युद्धे शयीत वा । अहमेतद्बटुपादत्रयपारिमितं तद्याचितं मया प्रतिज्ञातं च दास्यामि। तत्परित्यज्य तेन यदि सर्वं भूम्यपहारोद्योगं क्रियेत तदाऽन्यतरमरणादि स्यात् । तथाऽपि यद्यशः कीर्तिरपेक्षिता सा मां न जिहासति त्यक्तुं नेच्छति । पक्षद्वयेऽपि मम कीर्तिः स्यादेवेति भावः ॥ १३ ॥ गुरुः शुक्राचार्य एवमुक्तरीत्याऽनादेशकरं स्वाज्ञामकुर्वाणमत एव स्वस्मिन्नश्रद्धितं विश्वासरहितं शिष्यं बलिं दृष्ट्वा दैवेनादृष्टप्रेरकेश्वरेण प्रहितः प्रेरितः सन् सत्यप्रतिज्ञं प्रशस्तमनस्कं बलिं शशाप ॥ १४ ॥ हे अज्ञ स्वाहितज्ञानरहित बले । त्वं दृढं पंडितमानी अहमेव विवेकीत्यहंकारवान् स्तब्धः शठश्चासि यत्तस्मादस्मदुपेक्षया मच्छासनातिगो मदाज्ञाऽतिक्रमी स त्वमचिराच्छीघ्रं श्रियः संपदो भ्रंश्यसे भ्रष्टो भविष्यसि ॥ १५ ॥ सत्यवचनादिगुणैर्महान् बलिरेवमुक्तप्रकारेण स्वगुरुणा शुक्रेण शप्तोऽपि सत्याद्यथार्थवाक्यान्न चलितः । तदेव दर्शयति ॥ एवमिति । वामनमर्चित्वा पूजयित्वा

वामनायता भूमिमुदकपूर्वकं ददाविति ॥ १६ ॥ जालकानां कुड्मलानां मालाऽस्यामस्तीति जालकमालिनी नाम्ना विंध्यावलिर्बलेः पत्नी तदाऽऽगत्य हैममवनेजन्यर्पा पादप्रक्षालनयोगजलैर्भृतं पूर्णं कलशमानिन्ये । जालक कोरक कलिकांकुलानितुल्यानीति हलायुधः ॥ १७ ॥ यजमानो बलिः स्वयं तदा तस्य वामनस्य श्रीमत्कांत्यादिसंपदुपेतं पादयुगं पादपद्मद्वयमवनिज्य प्रक्षाल्य विश्वपावनीः सर्वजगत्पावित्र्यकरास्तदपो मूर्ध्न्यवहद्भक्तिश्रद्धापूर्वकं दधार ॥ १८ ॥ तदा दिव्यंतरिक्षे वामनपूजादर्शनार्थं स्थिता देवतागणा गंधर्वविद्याधरचारणाश्च सर्वे तत्पूजारूपं कर्म वीक्ष्य मुदान्विताः संतो विशेषाकारेणार्यं ज्ञानादिवृद्धं बलिं स्तुवंतः संतः पुष्पवृष्टिभिः सेचितवंतः ॥ १९ ॥ तदा सहस्रसंख्याका दुंदुभययो भेर्यो मुहुर्मुहुर्नेदुर्ध्वनियुक्ता बभूवुः । गंधर्वकिन्नरकिंपुरुषा यस्मादयं बलिर्विद्वान् अयं दैत्यारिरिति स्वजातिरिपुत्वेन ज्ञानवानपि रिपवे वामनरूपाय जगत्त्रयमदात् । तस्मादिदं मनस्विना बलिनैव कृतं । अन्यैस्तु दुष्करमिति जगुर्गानं चक्रुः ॥ २० ॥ यद्यस्मिन् भूः खमाकाशो दिशो द्यौः स्वर्गो विवराः पातालादयः पयोदयः समुद्रास्तिर्यङ् पश्वादयो नृदेवा नरा मनुष्या ऋषयश्चासन् सावकाशस्थितास्तद्गुणत्रयस्य सत्त्वादेरात्मा धारणं भवत्यनेनेति गुणत्रयात्मकमद्भुतमाश्चर्यकरमनंतहरेर्वामनरूपमवर्धत । आत्मा जीवे धृतौ देहे स्वभावे परमात्मनीति यादवः ॥ २१ ॥ ऋत्विगाचार्यसभ्यसहितो बलिर्महाविभूतेराणिमादि पूर्णैश्वरस्य वामनस्य देहे गुणत्रयाधारभूते भूतैराकाशाद्यभिमानिभिश्चक्षुरादींद्रियाभिमानिभिः शब्दाद्यभिमानिभिराशय शब्दितमनोभिमानिभिरपि जीवैर्गणेशादिभिर्युक्तं परंपरया गुणत्रयोपादानकं विश्वं समस्तं जगद्ददर्श ॥ २२ ॥ अथेंद्रसेनो बलिर्वामनस्यांघ्रितले रसां रसातलादि पादयोर्महीं भूमिं पुरुषस्य जंघयोर्महीध्रान्पर्वतान् जानुनि पतत्रिणः पक्षिणो विश्वमूर्तेर्जगद्व्याप्तशरीरस्य वामनस्योर्वो मरुतां गणमचष्ट ददर्श ॥ २३ ॥ विभोर्व्याप्तस्य वामनस्य वाससि वस्त्रे संध्यां तदभिमानिनीं सावित्र्यादिनामिकां गुह्ये लिंगे प्रजापतीन् जघने कट्यां स्वात्ममुख्यं स्वप्रभृति जीवजातं नाभ्यां नभोंऽतरिक्षं कुक्षिषु सप्तसमुद्रान् उरुक्रमस्य त्रिविक्रमस्योरासि अक्षमालां नक्षत्रपंक्तिमिंद्रसेन ऐक्षत् ॥ २४ ॥ हे अंग प्रिय परीक्षित् । इंद्रसेनो मुरारेर्वामनस्य हृदि धर्मं तदभिमानिनं स्तनयोर्ऋतं सत्याभिमानिनोरिंदुं चंद्रं वक्षसि कमलहस्तां श्रियं देवीं कंठे सामानि समस्तरेफांश्चैक्षत् ॥ २५ ॥ तथा वामनस्य भुजेषु इंद्रमुख्यान्देवान् तत्कर्णयोः ककुभो दिशस्तदभिमानिश्चंद्र-

मादीन् मूर्ध्नि शिरसि द्यौरंतरिक्षोपरितनदेशं केशेषु मेघान्नासिकायां श्वसनं नासिक्य वायुमक्ष्णोर्नेत्रयोः सूर्यं वदने मुखे वन्हिमग्निं ॥ २६ ॥ तथा परस्य पुंसः पुरुषोत्तमस्य वामनस्य वाण्यां छंदांसि वेदान् रसे जिव्हायां जलेशं वरुणं भ्रुवोर्निषेधं विधिं च पक्ष्मसु नेत्राच्छादकरोमसु अहश्च रात्र्यं च ललाटे मन्युं क्रोधाभिमानीनमधरोष्ठे लोभाभिमानिनं चैक्षत् ॥ २७ ॥ हे नृप। वामनस्य स्पर्शे त्वगिंद्रिये तद्गुणे च कामं रेतस्यंभो जलं पृष्ठभागेऽधर्मं निर्ऋतिं च तदभिमानिनं। क्रमणेषु पादविक्षेपेषु यज्ञं तदभिमानिनमिंद्रं छायासु मृत्युं देवतां हसिते हासे मायां जगन्मोहिकां तनूरुहेषु रोमस्वौषधीनां व्रीहियवादीनां जातयो जातीश्च बलिरैक्षत् ॥ २८ ॥ तथा तस्य क्षणार्धमात्रेणात्याभिवृद्धशरीरस्य त्रिविक्रमस्य नाडीषु नद्यो भागीरथ्याद्या नखेषु शिला बुद्धावजं ब्रह्माणं प्राणेषु श्वासादिषु देवगणान् प्राणादि देवसमूहान् ऋषींश्चैवं गात्रे शरीरे स्थावरजंगमानि ददर्श ॥ २९ ॥ हे अंग सर्वेऽसुरा बलिव्यतिरिक्ताः सर्वात्मनि सर्वजगद्व्याप्तदेहे वामने इदं भुवनं दृष्ट्वा कश्मलं मूर्च्छामापुः। असह्यतेजः सुदर्शनाख्यं चक्रं स्तनयित्नोर्गर्जन्मेघस्य घोष इव घोषो ध्वनिर्यस्य तच्छार्ङ्गाख्यं धनुश्च ॥ ३० ॥ पर्जनस्य गर्जनवन्मेघस्य घोष इव घोषो यस्य स पांचजन्याख्यो जलजः शंखस्तरस्विनी वेगवती कौमोदकी नाम्नी विष्णुगदा शतचंद्राख्यचर्मणायुक्तो विंद्यधरेषुसंबंध्यसिर्नंदकाख्योऽक्षयबाणवंतौ स्थूणोत्तमौ चेषुधी चेत्येते। तदा दृश्यंतेति शेषः ॥ ३१ ॥ इंद्रादिलोकपालसहिताः समीपवर्तिषु प्रधानाः सुनंदादय ईशं सर्वस्वामिनं वामनमुपतस्थुः-सेवितवंतः। हे राजन्। तदा भगवान् ऊरुक्रमास्त्रिविक्रमः प्रकाशमानाशिरोबाहुभूषणमकरकुंडलश्रीवत्सश्रेष्ठमणिखचितकांचीपीतांबरैः पुष्परसलोलुपभ्रमरवद्वैजयंतिमाल्यावृतः सन् रराज। सर्वदा कांतियुक्तोऽपि लौकिकानां तदातिप्रकाशयुक्तवदद्दृश्यत। स उरुक्रमो बलेर्भूमिमेकेन पादेनाक्रांतवान् नभोंऽतरिक्षं शरीरेण दिशो बाहुभिश्चाक्रांतवान् ॥ ३३ ॥ द्वितियपदं निधाय त्रिविष्टपं स्वर्गमाक्रमतो वामनस्य तृतीयस्य पदस्य दातुं तदीयं बलिसंबंध्यणुमात्रमपि नैवाभूत्। एवमुरुक्रमस्यांघ्रिपादो दिवः स्वर्गस्योपर्यधश्च व्याप्तः सन् महर्जनाभ्यां लोकाभ्यां तपोलोकाच्च परमुपरिदेशं गतः ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥ ८—१९ ॥ ॥

॥ हरिः ॐ ॥ अत्रापि हरौ भक्तिजननाय तदवतारत्रिविक्रमस्य ब्रह्मादिदेवपूज्यता महिमोच्यते। तत्रादौ ब्रह्मागमन-

प्रकारः । हे नरदेव परीक्षिद्राज । अब्जभवो हरिनाभिकमलोत्पन्नश्चतुर्मुखस्त्रिविक्रमस्य नखलक्षणचंद्रकांत्याऽपहृतस्वाश्रयभूतसत्यलोककांतिः सन् तं त्रिविक्रमं दृष्ट्वा तत्पूजार्थं स्वसेवकैर्देवैः सहितः सन् त्रिविक्रमपादसमीपमगात् बृहद्व्रतं भगवदुपासनादि येषां ते मरीचिप्रधाना ऋषयः सनंदनाद्या योगिनश्चागुः ॥ १ ॥ तथा ऋगादि वेदाभिमानिन आयुर्वेदधनुर्वेदगांधर्वार्थशास्त्राभिधोपवेदाद्यभिमानिनो यमनियमाभिमानिनः सहिता ब्रह्मतर्कभारतपंचरात्रागममूलरामायणाख्येतिहासशिक्षाकल्पोव्याकरणच्छंदोज्योतिषनिरुक्ताभिधांगाष्टदशपुराणसंहिताद्यभिमानिनश्च येऽपरे ध्यानलक्षणयोगाख्यवायुना प्रज्वलितज्ञानाग्निना भस्मीकृतदुष्कर्मतज्जन्यपापाः केचनाधिकारिणोऽगुः ॥ २ ॥ त इमे यस्य त्रिविक्रमस्य स्मरणसामर्थ्यात्कर्मभिन्नज्ञानप्राप्यं दुष्कर्मरहितं चतुर्मुखाश्रयं सत्यलोकं गताः । तं विक्रमं ववंदिरे । नमस्कृतवंतः स्तुतवंतश्च । अनुभावः प्रभावे स्यान्निश्चये भावसूचक इति यादवः ॥ ३ ॥ अथ पद्मसंभवश्चतुर्मुखः प्रोन्नमितायोर्ध्वमभिवृद्धाय विष्णोरंघ्रये पादायार्हणस्य पूजनस्य साधनमुदकमुपाहरदानीतवान् । स्वयं चतुर्मुखो यस्य नाभिकमलादुत्पन्नो यदनुग्रहाच्छुद्धकीर्तिश्च स तं भगवंतं त्रिविक्रमं भक्त्या समभ्यर्च्याग्रृणदस्तौत् ॥४॥ हे नरेंद्र । धातुश्चतुर्मुखस्य कमंडलुजलमुरुक्रमस्य त्रिविक्रमस्य पादप्रक्षालनेन पवित्रतया स्वर्गनदी बभूव । सा नभस्यंतरिक्षे पतति सति भगवतो निर्मला कीर्तिरिव पवित्रकरतया भूर्भुवःस्वर्लक्षणलोकत्रयजनं शुद्धीकरोति ॥ ५ ॥ सानुगा भृत्यसहिता ब्रह्मादयो लोकपालास्त्रिविक्रमे सम्यगादरवंतः संतोऽसंकुचितस्वरूपभूताणिमाद्यैश्वर्यवते स्वस्वामिने बलिं पूजासाधनमानीतवंतः ॥ ६ ॥ पूजासाधनमेव विशिनष्टि ॥ तोयैरित्यादिना । ब्रह्मादयः समर्हणैः पूजासाधनैस्तोयैर्जलैः स्रग्भिः पुष्पमालाभिरलौकिकपरिमलोपेतचंदनाद्यनुलेपनद्रव्यैः सुरभिः परिमलवद्भिर्धूपैर्लाजाभिर्भर्जितव्रीहायताभिरक्षतफलांकुरैस्तस्य त्रिविक्रमस्य पराक्रममाहात्म्याचिन्हितैः स्तवनैः स्तोत्रैर्जयशब्दैश्च नर्तनवाद्यगानैः शंखभेरीध्वनिभिश्चापूजयन् ॥ ८ ॥ ऋक्षाणां भल्लूकानां राजा श्रेष्ठो जांबवान् मनसो जव एव वेग एव जयवान्सन् भेरी शब्दैः सर्वासु दिक्षु त्रिविक्रमस्य विजयमुत्कर्षं महोत्सवो यथा स्यात्तथा घोषयत्प्रसिद्धमकरोत् ॥ ९ ॥ असुराः स्वेषां भर्तुः पोषकस्य दीक्षितस्य यज्ञनियमवतो बलेः सर्वां भूमिं वामनेन त्रिपादयाच्नः व्याजेनापहृतां दृष्ट्वाऽतिकोपिताः संतो वक्ष्यमाणप्रकारमूचुः ॥ १० ॥ अयं त्रिपादयाचको ब्रह्मबंधर्ब्राह्मणकपाटो नवै नैव किंतु मायाविनां

वंचकानां श्रेष्ठः । मेधा माया स्रजो विनिरिति मतुबर्थे माया शब्दाद्विनिः । विष्णुरेव ब्राह्मणाकारेणाच्छादितस्वरूपः सन् देवकार्यं कर्तुमिच्छति ॥ ११ ॥ बहुरूपिणा ह्रस्वदीर्घाद्याकारवता शत्रुरूपेण त्रिपदं याचमानेनानेन वामनेन बर्हिषि यज्ञे दीक्षितस्यात एव त्यक्तनिग्रहस्य नोऽस्माकं भर्तुर्बलेः सर्वस्वमपहृतं । बर्हिर्दर्भे च यज्ञेति नानार्थमुक्तावली ॥ १२ ॥ ननु बलिना मया त्रिपादं दीयत इत्युक्तेऽप्यत्यभिवर्धमानतत्पददर्शनानंतरं नाहमेतादृक् पदत्रयं दास्यामीति किं नोक्तमित्यत आह ॥ सत्यव्रतस्येति । सततं यथार्थवचनमेव व्रतं मुख्यं यस्य तत्रापि विशेषतो दीक्षितस्य ब्राह्मणेषु वात्सल्यवतो दयावतश्च बलेरयथार्थवचनं वक्तुमशक्यमिति ॥ १३ ॥ यस्मादेवं तस्मादस्य त्रिविक्रमस्य वधो धर्मोऽस्माकं स्वामिसेवा चेत्येवं मत्वा बलेर्भृत्या असुराः स्वायुधानि गृहीतवंतः ॥ १४ ॥ ते सर्वेऽसुराः सस्वामिनो बलेरनिच्छतः स्वतोऽपीच्छाभावऽपीति यावत् । स्वयमेव जातो मन्युः कोपो येषां ते तथा संतः शूलादिहस्ता वामनं हंतुं प्राद्रवन् । मन्युः क्रोधो क्रतौ दैन्य इति नानार्थमुक्तावली ॥ १५ ॥ हे नृप । विष्णोर्भृत्या नंदादयः स्वानाभिमुख्येनाभ्यागच्छतो दैत्यसेनापालकान्दृष्ट्वा प्रहस्योद्यतायुधाः संतस्तान्यवारयन् ॥ १६ ॥ विष्णुभृत्यान्नामतो दर्शयति ॥ नंद इत्यादिना सात्वत इत्यंतेन । पतत्रिराट् गरुडः । ते नंदादयः सर्वे स्वं स्वं प्राति प्राप्तामासुरीसेनां हतवंतो यतो नागायुतत्राणा दशसहस्रगजतुल्यबलाः । गजेऽपि नागमातुंगा इत्यमरः ॥ १८ ॥ बलिः पुरुषस्य वामनस्यानुचरैर्भृत्यैर्नंदादिभिर्हन्यमानान्स्वकीयान् भृत्यान्दृष्ट्वा स्वस्य काव्यस्य शापमैश्वर्यभ्रष्टो भवेत्येवं रूपमनुस्मरन्सन् संरब्धान्पुनर्युद्धाय कोपाटोपयुक्तान्वारयामास ॥ १९ ॥ निवारणप्रकारमेव दर्शयाति ॥ हे विप्रचित्त इति । हे राहो हे हेते मे वक्ष्यमाणं वचं युष्माभिः श्रूयतां यूयं मा युध्यत युद्धान्निवर्तध्वं । अयं कालो नास्माकमर्थकृत् जयादिप्रयोजनसाधनो न भवति ॥ २० ॥ वयं पराक्रमेण तं कालमाभिभवाम इति न मंतव्यं शत्रुजयादेरीश्वरादित्याह ॥ यः प्रभुरिति । हे विप्रचित्त्यादयः । यो हरिः सर्वप्राणिनां सुखदुःखप्रापणाय प्रभुः समर्थः । तं कालशब्दितं पुमान्पुरुषः पौरुषैः स्वपराक्रमादिभिरतिवर्तितुमातिक्रांतुमीश्वरः समर्थो न भवाति । सुखंदुःख भवो भावः कालाख्या रूपिणस्तवेत्यादेः ॥ २१ ॥ तर्हि तदनुगृहेणैव वयं शक्रादीन् जेष्याम इत्यत आह ॥ य इति । यो भगवान्कालशब्दितो नोऽस्माकं भवाय स्वाराज्यादिमंगलाय सहायः पूर्वमभूद्दिवौकसां देवानामभवायामंगलाय हेतुरासीत्सैवे-

दानीं तद्विपरीतो वर्तत इति ॥२२॥ ननु पराक्रमैर्जेतुमशक्येऽपि कालो बलादिभिरनेकोपायैर्जेतुं शक्य एवेत्यत आह ॥ जयाकांक्षी जनो बलेनेति । जयाकांक्षी जनो बलेन शारीरशक्त्या सचिवैर्बुध्यादिसहायभूतैर्जनैर्दुर्गेण मंत्रौषधादिभिः सामाद्युपायैश्च कालं नात्येतीति ॥ २३ ॥ अस्माकं हरिरिदानीं विपरीत इत्युक्तं दर्शयति ॥ भवद्भिरिति। हे विप्रचित्यादयः । एते नंदादयो हरेरनुचरा यदा दैवेनादृष्टप्रेरकेण हरिणा रुद्धाः प्रतिरुद्धास्तदा भवद्भिरेव बहुशो निर्जितास्त एवाद्य युधि युष्मान् जित्वा नंदंतीति ॥ २४ ॥ तर्हि नो जयो दुर्लभ एवेति न मंतव्य इत्याह ॥ एतानिति। यदि दैवमदृष्टप्रेरकेश्वरोऽस्माकं प्रसीदति प्रसन्नो भवेत्तर्हि तदैव वयमेतान्विजेष्यामः तस्माद्यूयं कालोऽस्माकं जयादिप्रयोजनाय सहायो भविष्यति। तं कालं प्रतीक्षध्वमिति ॥ २५ ॥ हे राजन् । दैत्यदानवसमूहरक्षकाः स्वपतेर्बलेरुक्तरूपं वचनं श्रुत्वा विष्णुपार्षदैस्ताडिता अपि रसातलमेव प्रविष्टाः ॥ २६ ॥ अथ तार्क्ष्यसुतो गरुडो विशेषेण राजत इति विराट् तस्य विभोर्व्याप्तस्य वामनस्य कर्तुमपेक्षितं ज्ञात्वा क्रतोः सौत्येऽहनि सोमपानदिने वारुणैः पाशैर्बलिं बबंध ॥ २७ ॥ एवमसुरपतौ बलौ प्रभविष्णुना यथेच्छं भवितुं शक्तेन विष्णुना वामनेन निगृह्यमाणे सति रोदस्योर्द्यावापृथिव्योः सर्वदिक्षु च महान्हाहाकारध्वनिरभूत् ॥ २८ ॥ भगवान्वामनो वारुणैर्बद्धं नष्टसंपदमपि स्थिरप्रज्ञं विष्णूत्कर्षे स्थिरं ज्ञानमत एवोत्कृष्टकीर्तिं तं नृपं बलिचक्रवर्तिनं प्रत्याह ॥ २९ ॥ हे असुर । त्वया मह्यं भूमेस्त्रीणि पदानि दत्तानि दास्यामीति प्रतिज्ञातानि । तत्र द्वाभ्यां सर्वा त्वदीया भूमिर्मयाऽऽक्रांतेति पदद्वयं मया लब्धं । तृतीयस्य त्वदीयमण्वपि नास्तीत्यतस्तृतीयस्य स्थलं परिकल्पय ॥ ३० ॥ ननु बलिना वामनपदत्रयपरिमितभूमिर्देया सा च पंचाशत्कोटिविस्तीर्णाऽतः कथं तृतीयपदमुपकल्पयेति कथं त्वयोच्यत इत्यत आह ॥ यावदिति । हे बले। असौ सूर्यो गोभिः स्वकीयैर्यावद्भूप्रदेशं तपति प्रकाशयति । उडुभिर्नक्षत्रैः सहेंदुश्चंद्रो यावत्प्रकाशयति पर्जन्य इंद्रो यावद्वर्षति तावतीयं तव भूरिति । स्वर्गेषु पशुवाग्वज्रदिङ् नेत्रघृणिभूजले लक्ष्यदृष्ट्योस्त्रियां पुंसि गौरित्यमरः । पर्जन्य गर्जन्मेघे च सुरेंद्रे च प्रकीर्तित इति नानार्थमुक्तावली ॥ ३१ ॥ अस्त्वियत्येव मम भूमिस्तथाऽपि तव तृतीयपादस्य स्थलाभावः कुत इत्यत आह ॥ पदैकेनेति । हे बले । तव पश्यतः सतो मयैकेन पादेन विवरैः पातालादिभिः सह भूर्लोक आक्रांतस्तथाऽऽत्मना व्याप्ते मया द्वितीयेन पादेन स्वर्लोकोऽप्याक्रांतोऽतस्तृतीयस्य स्थलाभाव इति ॥ ३२ ॥ नन्वेवं

तृतीयस्य स्थलाभावे किं मेऽनिष्टमित्यत आह ॥ प्रतिश्रुतमिति । हे बले । प्रतिज्ञातमददतस्तव निरये दुर्गतौ वास इष्यत इति प्रामाणिकैरंगीक्रियते । वाचा दत्तं मनो दत्तं धारा दत्तं न दीयते षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिरित्यादेः । तस्मात्त्वं निरयं प्रविश । एवमेव गुरुणा त्वमनुमोदितश्चासि ॥ ३३ ॥ ननु प्रतिश्रुतस्य समग्रस्यादाने मम· निरयप्राप्तिर्भवेत् । न चैवं । भागत्रये द्विभागस्य दत्तत्वात् । तस्मादहं स्वर्गं गमिष्यामीति चेत् । सत्यं । स्वर्गं गतोऽपि त्वं प्रतिज्ञातसमग्रादानदोषेण स्वर्गात्प्रच्युतो दूरं त्वद्देहपातानंतरमेव स्वर्गायोग्यं पश्वादियोनिं यास्यसीति निदर्शयति । यो गृहस्थो विप्रायैतावद्दास्यामीति प्रतिज्ञाय कचित्प्रतिज्ञातं नार्पयते न ददाति तर्ह्यहं स्वर्गाद्युत्तमलोकानेव यास्यामीति यस्तस्य मनोरथः स वृथा भवति । यतः स्वर्गात्पतितो दूरं यातीति ॥ ३४ ॥ किंच हे बले । न केवलं तव प्रतिश्रुतादानदोषः किंतु वंचकत्वदोषोप्यस्तीत्यतो निरयवास एव तव योग्य इत्याह ॥ विप्रलब्ध इति । मानिनाऽहं सार्वभौमोऽतस्तव सर्वाभिलाषदाने समर्थः । किं त्वयाऽप्रबुध्येन पदत्रयमात्रं याचितमित्याद्यहंकारवता त्वयाऽद्याहं विप्रलब्ध एतावत्सर्वथा दास्यामीति वंचितस्तस्मात्त्वमलीकस्यायतार्थवचनस्य फलं निरयं कतिचित्समाः कांश्चिद्वर्षान् भुंक्ष्वानुभव ॥ ३५ ॥ हे राजन् । असुरो बलिर्भगवता वामनेनैवमुक्तरीत्या विप्रकृतस्तिरस्कृतः । निरयं विशेत्यादिनिष्ठुरैर्भिद्यमानोऽप्यभिन्नो निर्विकार आत्मा मनो यस्य तथा सन् वामनं प्रत्यविक्लवं पारवश्यदैन्यादिरहितं वचः प्राह ॥ ३६ ॥ हे सुरर्षभ रमाब्रह्मादिदेवोत्तम । अत एवोत्तमैर्ब्रह्मादिभिः श्लोकस्तुत्या कीर्तिर्यस्य तादृश वामन । त्वं यदि मयोक्तं वाक्यमनृतं मन्यसे । तर्हि ह्यहं तद्यथाऽनृतं न स्यात् ऋतं च स्यात् । तव वंचकं न भवेत् तथा करोमि । तत्करणप्रकारमेवाह । निजं स्वकीयं तृतीयं पदं पादप्रक्षेपणं मे शिरसि कुर्विति ॥ ३७ ॥ नन्वेवमतिसंकटे न तृतीयपदस्य शिरःप्रदानमयुक्तमित्यत आह ॥ बिभेमीति । अहं यथाऽसाधुवादादनृतभाषणाद्भृशमत्यर्थमुद्विजे बिभेमि न तथा निरयात्पदभ्रंशात्पाशबंधात्त्तुमशक्याद्व्यसनाद्दुःखादर्थकृच्छ्राद्द्रव्यापहरणापदो भवतो निग्रहाच्चेति ॥ ३८ ॥ नन्वेवं मया क्लेशितस्य तवैतद्दानमयुक्तमित्यतः स्वस्य क्लेशाभावं दर्शयति ॥ पुंसामिति । हे अर्हत्तमातिपूज्य वामन । त्वया पुंसामर्पितं दंडं पुंसां श्लाघ्यतमं मन्ये । यद्यं दंडं शिक्षां मातापिताभ्रातासुहृदश्च नादिशंति न कुर्वंति । अनेन स्वस्यायं दंडो भूषणमेव न दूषणमित्युक्तं भवति ॥ ३९ ॥ ननु गुर्वाद्याप्तैः कृताशिक्षो-

त्करीत्या श्लाघ्या न शत्रुभूतमादृशैः कृतेत्यत आह ॥ त्वमिति । हे वामन । त्वमप्यसुरजातीनामप्यस्माकं पारोक्ष्यं परोक्षतः परमो गुरुः साक्षात्कारविषयतया हिताहितोपदेष्टुरेव । गुरुत्वात्कथं तदाविषयस्य हिताद्यकुर्वतः शत्रोर्मम गुरुत्वमित्यतस्त्वाप्यस्माद्धितकारित्वेन परोक्षतो गुरुत्वमस्तीत्युपपादयती ॥ यो न इति । यस्त्वमनेकैरैश्वर्यादिमदैरंधानां द्रष्टव्याद्रष्टॄणां तस्य मदस्य भ्रंशकं वैराग्यलक्षणं चक्षुरादि दत्वा दृष्टव्यदर्शनं विदधासीति ॥ ४० ॥ विबुधेतराः सुरभिन्नासुरजात्युत्पन्ना मोक्षयोग्या बहवो यस्मिंस्त्वयि वैरानुबंधेन द्वेषसमानाधिकरणस्नेहेनारूढेनाभिवृद्धेन सिद्धिं मुक्तिं लेभिरे । यां सिद्धिमिहाधिकारिष्वेकांतयोगिनो भक्ता लभंते ॥ ४१ ॥ तेन तादृशेन भूरिकर्मणाऽपरिमितचरित्रेण त्वयाऽहं निगृहीतोऽस्मि । वारुणैः पाशैर्बद्धश्चास्म्यतोऽहं लज्जां व्यथां च न करोमि । अत्र वैरसमानाधिकरणस्नेहेन मुक्त्युक्तिरसज्जीवसज्जीवद्वयेऽसज्जीवप्रेरितसज्जीवकृतद्वेषपूर्वकस्नेहेनापि भगवदनुग्रहान्मुक्तिर्भवति किमु शुद्धभक्त्येति कैमुत्यार्था । कैमुत्यंचेदं दशमादौ स्पष्टं ॥ ४२ ॥ नन्वेवमसुरजातेः कस्यचिद्धरौ भक्त्या श्रेयो दर्शने त्वयाऽपि स्वीकर्तुमुचितेत्यतस्तत्र प्रल्हादं निदर्शयति ॥ पितामह इत्यादिना । हे वामन । मे पितामहो भवद्भक्तानां संमतः प्रल्हाद आविष्कृत साधुवादो नारायण एव सर्वप्रेरकः सर्वेश्वर इत्यादि स्फुटवादी सन् भवतो विपक्षेण शत्रुणा स्वपित्रा हिरण्यकशिपुना विचित्रवैशसं नानाविधदुःखं संप्रापितोऽपि त्वमेव परमः सर्वोत्तम इति भक्तिमानासीत् ॥ ४३ ॥ स प्रल्हादो मम पितामहो जनाद्दुर्जनात्केवलविष्णुद्वेष्यसुरजनसंगाद्भीतः सन् । योऽधिकारी येन देहेन प्राप्तेन त्यक्तेनाऽपि मुदं संतोषं जहाति त्यजति तेन किं प्रयोजनं । न किमपि । तथा रिक्थं पित्रार्जितं द्रव्यं हरंतीति रिक्थहराः पुत्रादयस्तैः स्वजनाख्यचोरैश्च किं तया संसारहेतुभूतया जायया भार्ययाऽपि मरणशीलस्य किं प्रयोजनं गेहैर्गृहादिभिरपीह साध्यं किमस्ति । प्रत्युतैतदासक्तस्य वृथाऽऽयुष्यक्षय एव । इत्थं निश्चित्य स्वपक्षाणामसुराणां क्षपणस्य संहारकस्यापि भवतः कस्मादपि भयरहितं पादपद्मं ध्रुवं प्राप्तवान् अत एव स प्रल्हादोऽगाधबोधो महान्पूज्यः सत्तमोऽत्युत्तम इति मया ज्ञायते ॥ ४४ ॥ ४५ ॥ हे वामन । अथ तस्मादहमपि ॥
असुरजातित्वमात्रेणात्मनो मम रिपोस्त्वांतिकं दैवेन पूर्वार्जितपुण्येन तव समीपं प्राप्तः । प्रसभं बलात्कारेण त्याजितश्रीः परिमोचितराज्यादिसंपच्च जातः । नन्विदमयुक्तं । यत्पूर्वपुण्येन संपद्धानिर्ममासेति तत्राह ॥ इदमिति । यया श्रिया स्तब्धमतिर्जन इदं

स्वजीवितं कृतांतांतिके मृत्युसमीपे वर्ति विद्यमानं नश्वरमिति ध्रुवं न बुद्ध्यत इति । तस्मात्पुण्येनोक्तसंपद्धानिरिति युक्तमिति भावः ॥ ४६ ॥ हे कुरुश्रेष्ठ । तस्य बलेरित्थं भाषमाणस्य सतो भगवत्प्रियः प्रल्हाद उदितो राकापतिश्चंद्र इवाजगाम ॥४७॥ इंद्रसेनो बलिर्नलिनवत्कमलवदायते विस्तृते ईक्षणे नेत्रे यस्य तं प्रांशुमुन्नतं पीतांबरमंजनकांतिसमकांतिं जानुपर्यंतं लंबमानबाहुं सुभगं सुंदरं श्रिया कांत्यादिसंपदाऽतिप्रकाशमानं स्वपितामहं प्रल्हादं ददर्श ॥ ४८ ॥ वारुणपाशैर्यंत्रितो वशीकृतो निगृहीतो बलिस्तस्मै प्रल्हादाय समर्हणं पूजासाधनं पूर्ववद्यतो नोपजहार नानीतवान् । ततः स लज्जाधोमुखो बभूव । तदकरणप्रयुक्तदुःखजाश्रुचंचलनेत्रश्च तथाऽपि मूर्ध्ना ननाम भक्त्या नमस्कृतवान् । एतच्च हाद्भुतं । हा हा हेत्यद्भुते खेद इत्यमरः ॥ ४९ ॥ एवं स्वपौत्रस्य विपदि प्राप्तायामपि निर्विकारतया हरिप्रणतिस्तुत्यादिपरत्वान्महामनाः स प्रल्हादस्तत्र यज्ञशालायामासीनमुपविष्टं सुनंदादिभृत्यसेवितं स्वभक्त्यादिना निर्दुष्टानां पालकं स्वामिनं च वामनमुद्वीक्ष्य समीपं प्राप्य च । तद्दर्शनसंतोषाद्रोमांचैरानंदबाष्पैर्भक्तिपरवशः सन् भूमौ मूर्ध्ना ननाम ॥ ५० ॥ हे वामन । त्वयैवास्य बलेरुत्कृष्टमिंद्रस्थानं पुरा दत्तमद्येदानीं त्वयैवापहृतं । एतदस्य शुभकरमेव मन्ये । तथाऽऽत्मनस्तस्य बलेर्मोहनात्त्वद्विषयभ्रांतिजनकायाः श्रियः संपदो बलिर्विभ्रंसितः प्रच्यावित इति यदयं महानस्यानुग्रहस्त्वया कृत इति च मन्ये ॥ ५१ ॥ यया श्रिया त्वद्विषये ज्ञानवानपि श्रांतो भवति । तस्मात्त्वज्जिज्ञासुः श्रिया मोहितः को जन आत्मनस्तव यथावद्गतिं विचष्टे ज्ञास्यति । तस्मै तादृशभक्तानुकंपित्वादिगुणवते जगदीश्वरायाखिलजनक्रियमाणकर्मसाक्षाद्द्रष्ट्रे नारायणाय तुभ्यं नमः ॥ ५२ ॥ हे नृप । साध्वी पतिव्रता तस्य बलेः पत्नी विंध्यावलिर्बद्धं पतिं वीक्ष्य भयविव्हला भक्तिपरवशा प्रांजलिरुपेंद्रं वामनं प्रणता सत्यात्मनो नौद्धत्यप्रदर्शनायाधोमुखी सती वक्ष्यमाणं बभाषे ॥ ५३ ॥ हे ईश सर्वस्वामिन्वामन । त्वयेदं जगत्त्रयं तव क्रीडार्थं कृतं । तत्त्रिजगद्विषये कल्याद्यावेशेन कुत्सितबुद्धयः स्वाम्यं वयमस्याधिपतय इत्यभिमानं कुर्युः । ते विचार्यमाणे परित्यक्तलज्जा न्हीर्यतस्तत्तत्काले तत्तदृष्टानुसारेण विविधापदं प्रापयित्वाऽवरोपितः प्रच्यावितो वयमस्य कर्तार इति वादो वचनं येभ्यस्ते तथा भवंति । अतस्ते वस्तुतः सर्वे जगतां वस्तुतः कर्तुः प्रभोः स्वामिन स्तव किमनिष्टमावहंत्यापादयंति । अनेन स्वपतेर्बलेरसुरावेशेन कृतं जगत्स्वामित्वाद्यभिमानापराधं दयासमुद्रस्त्वं क्षंतुमर्हसीत्यभि-

प्रायः सूच्यते ॥ ५४ ॥ हे राजन् कृतांजलेस्तस्यानुशृण्वतः सतो भगवांश्चतुर्मुखो मधुसूदनमुवाच ॥ ५५ ॥ तद्वचनप्रकारमेव दर्शयति ॥ भूतभावनेत्यादिना। भूतानां प्राणिनां आकाशादीनां च भावनोत्पादक जगद्व्याप्त देवानामपि देव सर्वदेवेश वामन त्वमपहृतसर्वस्वमेनं बलिं वारुणपाशेभ्यो मुंच। अयं बालिस्त्वद्भक्तियुक्तस्त्वन्निग्रहं नार्हति ॥ ५६ ॥ तद्भक्तिमेव प्रकटयति ॥ कृत्स्नेत्यादिना। अनेन बलिना ते कृत्स्ना समस्ता भूर्दत्ता स्वकर्मार्जिता ये लोकाः स्वर्गादयस्ते च दत्ता आत्मनस्तव विक्लवयाऽऽधीनया बुद्ध्या सर्वस्वं च निवेदितं ॥ ५७ ॥ त्वद्भक्ततया त्वदनुग्रहपात्रत्वादस्य दुःखमात्रमपि न स्यादिति कैमुत्येनाह ॥ यत्पादयोरिति। अशठा कपटरहिता धीर्यस्य सोऽधिकारी यस्य तव पादयोर्जलं दत्वा पादौ प्रक्षाल्य दूर्वांकुरैरपि सतीं भक्तिं श्रद्धोपेततया निर्दुष्टां सपर्यां विधायाप्युत्तमां गतिं प्राप्नोति। असौ तु बलिर्न विक्लवमपरवशमचंचलं मनो यस्य तथा सन् त्रिलोकीं ते दत्वाऽप्यार्तिं दुःखं कथं गच्छेन्न कथमपि ॥ ५८ ॥ भगवान्वामनो भक्तानुकंपितया ब्राह्मणं निमित्तीकृत्य तदितरस्वभक्तजनं शिक्षयति ॥ ब्रह्मन्निति। हे ब्रह्मन्। अहं यमनुगृण्हामि यस्मिन्ननुग्रहं करोमि तस्य वित्तं द्रव्यं विधुनोमि अपहारादिना नाशयामि। तन्नाशेन कथं तवानुग्रह इत्यतस्तद्द्रव्यस्य दोषापादकत्वमुपपादयति ॥ यन्मदेति। पुरुषो यस्य द्रव्यस्य मदोपेतः सन् स्तब्धः स्वोच्चेष्वनम्रशिरस्कत्वादिः सन् मां मद्भक्तं लोकं जनं चावमन्यतेऽवमानयति। तस्मात्तदपहारेण तद्दोषनिराकरणेनास्मदादिषु तस्य भक्तिरेव मयोत्पाद्यतेति ॥५९॥ नानायोनिषु मानुषयोनिरेव दुर्लभा। तत्रापि यस्तंभाद्यभावः स आराधितमदनुग्रहो मदनुग्रहादेवेति ज्ञातव्यमित्याह ॥ यदा कदाचिदिति। अनीशोऽनाद्यनंतकालेऽपीश्वराद्यत्यंतभिन्नोऽयं जीवात्मा स्वपूर्वार्जितकर्मभिर्नानायोनिषु संचरन् सन्पुण्यवशाद्यदा कदाचिदिति पौरुषीं मानुषीं गतिं स्थितिमाव्रजेद्गच्छेत् ॥ ६० ॥ तत्र मानुषदेहे यद्यस्य जीवस्य जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः सत्कुलप्रसूतत्वस्ववर्णाश्रमविहितकर्मकरणतारुण्यसौंदर्यशास्त्रादिजन्यज्ञानैश्वर्यद्रव्यादिभिः स्तंभो न भवेत्तर्हि तस्य मदनुग्रहोऽस्तीति ज्ञातव्यं ॥ ६१ ॥ स्वभक्तलक्षणवत्त्वेनायमपि स्वभक्त इति तल्लक्षणमाह ॥ मान इत्यादिना। सर्वेषां श्रेयसां प्रतीपानां विरोधिनामहंकारस्तंभहेतूनां पूर्वोक्तजन्मादीनां सकाशाद्यो न मुह्येद्भ्रांतो न भवेत्। स मत्परमो भक्त इति ॥ ६२ ॥ एषो बलिः सीदन्नपि दुःखसाधनपाशबंधादिप्राप्तोऽपि न मुह्यति। मम स्वातंत्र्यस्वोत्कर्षादौ

भ्रांतो न भवति । यतोऽतो मदनुग्रहेण विना जेतुमशक्यां मायां मोहनशक्तिं जडप्रकृत्यादिरूपां च जितवान् । अत एवैषो दानवदैत्यानामग्रेसरः कीर्तिवर्धनश्च ॥ ६३ ॥ वामनो बलौ स्वस्यानुग्रहविशेषं सूचयितुं स्तौति ॥ क्षीण इत्यादिना । एषो बलिर्मयैश्वर्येण क्षीणः स्थानाद्विभ्रंशितः क्षिप्तो निष्ठुरैस्तिरस्कृतः शत्रुभिर्मद्भृत्यैर्गरुडादिभिर्बद्धश्च स्वज्ञातिभिरसुरैः परित्यक्तश्चैवं तीव्रवेदनामनुयापितः प्रापितस्तथा गुरुणा शुक्रेण भर्त्सितः शप्तश्च । तथाऽपि यथार्थभाषणं त्रिपदं दास्याम्येवेति रूपं न जहौ । मयाऽस्मै छलेन व्याजेन धर्म उक्तस्तथाऽप्यसौ सत्यवाक् सत्यं न त्यजति ॥६४॥६५॥ वामन एवं बलिं भक्त्या प्रसन्नस्तं बहुमानयित्वा तस्य फलदानप्रतिज्ञां करोति ॥ एवमिति । अयं बलिरेवं पूर्ववदेवामरैरपि प्राप्तुमशक्यं स्थानं प्रापितः । तदेव स्थानं दर्शयति । अयं मदाश्रयः सन् सावर्णेर्मनोरंतरस्येंद्रो भाविष्यतीति ॥६६॥ तर्हि तावत्कालमनेन कुत्र स्थातव्यमित्यत आह ॥ तावदिति । अयं बलिस्तावत्कालं विश्वकर्मविनिर्मितं सुतलं सुतललोकेऽध्यास्तां । यत्र सुतले आधयो मनोव्यथयो व्याधयो भगंदरादयः क्लमः श्रमस्तंद्र्यालस्यं पराभवोऽपजय इत्यादीन्युपसर्गाण्युपद्रवा ममेच्छया यत्र वसतां न भवंति तं । अधि शीङ् स्थासां कर्मेति कर्मसंज्ञां सुतलमित्यधिकरणे द्वितीया । पुंस्याधीर्मानसीव्यथा तंद्रीप्रमीलेति चामरः ॥ ६७ ॥ हे महाराज चंद्रसेन बले । ते मंगलमस्तु । त्वज्ज्ञातिभिरसुरैः परिवारितः सन् स्वर्गस्थैरप्यपेक्षितं सुतलं पाहि रक्षस्व ॥ ६८ ॥ तत्र तस्यापि भयं नास्तीत्याह ॥ न त्वामिति । लोकेशा इंद्रादयोऽपि स्वर्गिभिः प्रार्थ्ये सुतले स्थितं त्वां न तिरस्कुर्वंति । अपरे न तिरस्कुर्वंतीति किमुवक्तव्यं । गतैश्वर्यादिकस्य ममाज्ञातिक्रमे दैत्यैः क्रियमाणैरेकाकिनैव मया तत्र कथमवस्थेयमित्यत आह ॥ त्वच्छासनातिगानिति । त्वच्छासनातिगान्दैत्यान्मे चक्रं हनिष्यतीति ॥ ६९ ॥ लोकेशादिभ्योऽप्यधिकदेवासुरपीडायां किं कार्यमत आह ॥ रक्षिष्य इति । किं बहुना सर्वतः सर्वापद्भ्योऽहं भृत्यसामग्रीसहितं त्वां रक्षिष्य इति । तव दर्शनाभावे सर्वमिदं व्यर्थमित्यत आह ॥ सदेति । हे वीर । सर्वस्मिन्काले तत्र त्वत्समीपवर्तिनं मां त्वं द्रक्ष्यसे द्रष्टाऽसि ॥ ७० ॥ ननु त्वदाज्ञया तत्र दानवादिभिः सह मया वासे क्रियमाणे दुष्टतत्संगत्या ममासुरभावप्राप्त्या पुनस्त्वय्यभक्त्याद्यनर्थप्रसक्तिः स्यादित्यत आह ॥ तत्रेति । मदनुभावं माहात्म्यं दृष्ट्वा स्थितवतस्तव दानवदैत्यप्रसंगात्प्रसक्तासुरभावः सद्यस्तत्क्षणादवकुंठः स्वकार्यजनने निरुद्धः सन् विशेषतः समूलघातं नष्टो भविष्यति । अतस्ते न काऽपि

शंका तत्र कार्येति भावः ॥ ७१ ॥ इति श्रीभागवतटिप्पण्यां विंशोऽध्यायः ८—२० ॥ ॥

॥ हरिः ॐ ॥ स्वादृष्टेन महाऽऽपदि प्राप्तायामपि हरौ भक्तिः कर्तव्येति निदर्शनाय बलिभक्तिकरणप्रकाराद्याहास्मिन्नध्याये ॥ इत्युक्तवंतमित्यादिना । पूर्वोक्तरीत्या महान् अनुभावः प्राप्तानिष्टसहनादि सामर्थ्यं यस्य स तथा । अत एव साधूनां संमतो भक्तिवशेन बद्धांजलिर्बाष्पकलाभिर्नेत्रोदकाबिंदुचंचललोचनो भक्त्युद्गृहीतकंठस्वरो बलिरित्युक्तवंतं पुरातनं पुरुषं नारायणं प्रति गद्गदयाऽस्पष्टमधुराक्षरया गिराऽब्रवीत् ॥ १ ॥ समुद्यत ऊर्ध्वमभिवर्धमानस्यास्य तत्प्रसादो मयि यः कृतः प्रपन्ना ये शरणागता भक्तास्तेषामर्थविधौ पुरुषार्थप्रदाने समाहितः सम्यक्कर्तुं योग्यो मयि कृतस्त्वहो आश्चर्यकरः । ननु तवापि मद्भक्तत्वात्कुत आश्चर्यकर इत्यतः स्वस्य भक्तत्वेऽप्येतादृशपरमानुग्रहपात्रतासंभावना नाभूदित्यात्मानं निंदयति ॥ यल्लोकपालैरिति । यद्यस्माल्लोकपालैर्मादृशानुग्रहो पूर्वमलब्धः । तादृशोऽसुरेष्वपि अपसदे नीचेऽसुरे मयि समर्पितः कृत इत्याश्चर्यकर इत्यर्थः । अत्र बलियोग्यतानुसारेण बलौ क्रियमाणोऽनुग्रहो न लोकपालेषु क्रियत इति ज्ञातव्यं । अतो लोकपालाधिक्यशंकाविरोधाद्यनवकाशः ॥ २ ॥ बलिर्वारुणपाशैर्मुक्तःसन् हरिं वामनं प्रतीत्युक्त्वा नमस्कृत्य च तदनंतरं रुद्रसहितं चतुर्मुखं च नत्वा स्वैर्भृत्यासुरैः सहितः सुतलं प्रविष्टः ॥ ३ ॥ भगवान्वामन एवमुक्तप्रकारेण प्रीत्या कृपयेंद्राय त्रिविष्टपं स्वर्गं प्रापयित्वाऽदितेः कामं मनोरथं पूरयित्वा सकलं जगच्छिक्षयामास ॥ ४ ॥ भक्त्या प्रवणो नम्रः प्रल्हादो भगवत्प्रसादं लब्ध्वा वरुणपाशान्मोचितं स्वस्य वंशधरं पौत्रं बलिं दृष्ट्वा वामनं प्रतीदमुवाच ॥ ५ ॥ हे वामन । इमं बलौ तद्योग्यं त्वया कृतं प्रसादं श्रीर्नलभते । विरिंचिः शर्वो रुद्रश्च न लभते । अन्ये न लभंत इति किमु वक्तव्यं । यद्यस्मात्सर्वजगन्नतिस्तुतियोग्यैर्ब्रह्मादिभिरपि भक्तिस्तुतिनतियोग्यपादपद्मस्त्वमसुरजातीनामस्माकं दुर्गपालो द्वाररक्षकोऽसि ॥ ६ ॥ हे शरणद शरणागताभयप्रद वामन । ब्रह्मादयो यस्य तव पादपद्मरससेवनया विभूतीः सत्यलोकाधिपत्यादि संपदोऽनुभवंति । खलयोनयोऽसुरजातयोऽत एव त्वद्वेषकारणादि कुत्सितमार्गा वयं ते दाक्षिण्यं दृष्टिमार्गं कस्मात्प्राप्तास्ते परमानुग्रहमंतरेण नान्यदत्र कारणं । यमेवैष वृणुते न लभ्य इति श्रुतेः ॥ ७ ॥ हे वामन । अपरिज्ञातासंख्यातयोगमायया लीलार्थं विसृष्टजगतस्तत्प्रेरणादावतिकुशलस्य तवेहितं चरित्रं चित्रमाश्चर्यकरं । तदेव वर्णयति । सर्वस्वामिनः समदृष्टे-

स्तव स्वभावो विषमो यतोऽतस्तदपि कथमित्यतो यद्यस्मात्त्वं सर्वस्वामित्वादिमानपि यथा कल्पतरुः स्वाराधकानामेव फलं ददाति। तथा त्वमपि भक्तप्रियोऽसि यतोऽतस्तेषामेव फलं ददासीति । ननु बलिप्रल्हादयोरेवं भगवद्भक्तत्वेऽपि बलेर्बंधनादि दुःखं प्रल्हादस्य तदभावः किं निमित्तमिति चेन्न । बलिना बंधनादि दशायामसुरावेशेन कदाचिन्निंदनस्यापि कृतत्वात्प्रल्हादस्य तदभावेन वैषम्यात् ॥ तदुक्तं ॥ बलिरप्यसुरावेशात्स्तुवन्नपि जनार्दनं । आक्षिपत्त्वंतरा क्वापि प्रल्हादो नित्यभक्तिमानिति ॥ ८ ॥ एवं प्रल्हादस्तुत्या प्रसन्नो वामनस्तत्र वात्सल्यादाह । हे वत्स प्रल्हाद । ते भद्रमस्तु । त्वं स्वपौत्रेण बलिना सह सुतलातलं प्रत्याहि। तत्र स्वयं च मोदमानः स्वसगोत्राणामसुराणां सुखं प्रापयेति ॥ ९ ॥ तत्रापि त्वं नित्यं तत्र गदापाणिमवस्थितं मां द्रष्टाऽसि मद्दर्शनजन्यमहाहर्षवान्निरस्तसर्वदुष्कर्मबंधनश्च स्याः ॥ १० ॥ हे राजन् । निर्दुष्टभगवज्ज्ञानः प्रल्हादो बलिना सह भगवतो वामनस्याज्ञामेमित्यंगीकृत्य शिरसा वहित्वा कृतांजालिः सन् आदिपूरुषं वामनं प्रदक्षिणीकृत्य नमस्कारं च कृत्वा वामनेनानुज्ञातः सर्वासुरसेनाधिपतिर्भूत्वा बिलं सुप्राविवेश ॥ १२ ॥ हे राजन् । अथ प्रल्हादादिगमनानंतरं हरिर्भक्तानिष्टपरिहर्तेष्टाहर्ता च नारायणावतारो वामनः परंब्रह्म वेदादिप्रतिपादकानां ऋत्विजां मध्य उपविष्टमुशनसं शुक्रं प्रत्याह ॥ १३ ॥ हे ब्रह्मन् शुक्र । त्वं तव शिष्यस्य यज्ञं वितन्वतः कुर्वतः सतः कर्मछिद्रं कर्मदोषं लोपलक्षणं तत्प्रायश्चित्तकरणेन संतनु सम्यक् फलयोग्यं कुरु। यस्मात्कर्मसु वैषम्यं लोपादिरूपं ब्राह्मणैर्दृष्टं पुनस्तत्प्रायश्चित्तकरणेन समं स्वहितफलयोग्यं भवेत् । तस्मादिति । दोषारछिद्रशब्दानां पर्यायत्वाच्छिद्रशब्दस्य दोषार्थत्वमुक्तं ॥ १४ ॥ एवं भगवतोक्तः शुकस्तं प्रत्याह ॥ कुत इति। हे वामन सर्वयज्ञानामीश यज्ञपुरुषादि साधनगतश्च भवान् यस्य बलेः कर्मेश्वरः सर्वप्रकारेण स्वयोग्यभक्त्या पूजितस्तत्कर्मवैषम्यं कुतो न कुतोऽपीति ॥ १५ ॥ हे वामन । तवानुसंकीर्तनमच्युतानंदगोविंदेत्यादि भक्तिश्रद्धाभ्यां नामोच्चारणं मंत्रतो मंत्रस्य तंत्रतस्तथा देशकालयोग्यवस्तूनां छिद्रं दोषं सर्वं निच्छिद्रं प्रायश्चित्तविनष्टं करोति । मंत्र इत्यादौ सार्वविभक्तिकतसिरिति षष्ठ्यर्थे तसि प्रत्ययः ॥ १६ ॥ हे भूमन् देशकालगुणैः पूर्ण वामन । इति यद्यपि तथाऽपि कर्मपूर्तिं कुर्विंति वदतस्तवानुशासनमाज्ञां करिष्यामि । तवाज्ञानुपालनं यत्तदतेत्पुंसां परमुत्तमं श्रेयःसाधनं ॥ १७ ॥ भगवान् उशनाः शुक्रो हरेर्वामनस्याज्ञामभिनंद्य संतोषादंगीकृत्य ब्रह्मर्षिभिः सह

बलेर्यज्ञच्छिद्रं समतनोत् । प्रायश्चित्तानुष्ठानेनानाशयत् ॥ १८ ॥ हे राजन् । हरिर्वामन एवमुक्तरीत्या बलेः सकाशात्पृथिवीं भिक्षित्वा क्षितिदानव्याजेनापहृत्य स्वभ्रात्रे इंद्राय ददौ । यत्परैः शत्रुभिरसुरैरपहृतं त्रिदिवं स्वर्गं च ददौ ॥१९॥ प्रजापतीनां दक्षादीनां पतिर्ब्रह्मा चतुर्मुखो देवर्षिपितृभूपैर्दक्षभृग्वंगिरप्रभृतिभिः कुमारेण षण्मुखेन सनत्कुमारेण च भवेन रुद्रेण च सह ॥ २० ॥ कश्यपादित्योः प्रीत्यै सर्वप्राणिनामभयाय च वामनं लोकानां लोकपालानां च पतिमकरोत् ॥२१॥ देवादीनां पालने कल्पं समर्थमुपेंद्रं वामनं सर्वेषां तत्तद्योग्यसर्वैश्वर्यप्राप्तये पतिं कल्पयांचक्रे । यदा तदा सर्वप्राणिनोऽत्यंतं तुतुषुः ॥ २३ ॥ तदनंतरमिंद्रस्तु लोकपालैर्ब्रह्मणा चानुमोदितः प्रीत्याऽभ्यनुज्ञातो वामनं पुरस्कृत्य देवयानेन स्वर्गं प्रापयामास ॥ २४ ॥ इंद्रो वामनेन बल्यादीनां पातालवासनाद्गततद्भयः सन् उपेंद्रभुजरक्षितत्रिभुवनं प्राप्यात्युत्कृष्टया संपदा सेवितः सन् सुखमाप ॥ २५ ॥ ब्रह्मादयो वैतानिकांताः सर्वे प्राणिनः सुमहदत्याश्चर्यकरं तद्विष्णोः कर्मचित्रं गायंतः स्वकीयस्थानानि ययुः । वामनमातरमदितिं चेयं वीरसूरिति शशंसिरे स्तुवंतश्च । वैतानिका आवाहनीयगार्हपत्यदक्षिणाग्निषु देवपूजकाः ॥ २७ ॥ हे कुलनंदन स्वकुरुकुलसंतोषक । श्रोतॄणां अघात्पापान्मोचनं मुक्तिर्भवतीत्यद्य मोचनं भगवत उरुक्रमस्यैतन्मया वक्तुं योग्यं सर्वं चरितं तवाख्यातं ॥ २८ ॥ नन्वेवं संकोचेन तच्चरितमुक्त्वा सर्वं मयाऽऽख्यातमिति कथमुच्यते । तथात्वे निःशेषतया तत्त्वया वर्णनीयमिति परीक्षिच्छंकां परिहरति शुकः ॥ पारमिति । हे राजन् । मंत्रदृक् विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमापेत्यादि ऋग्वेदमंत्रद्रष्टा ऋषिर्यस्य पुरुषस्य त्रिविक्रमस्य यो मर्त्योऽधिकारी पार्थिवानि रजांसि पृथिवीपरमाणून् विममे संख्यायुक्तान्करोति । तादृशोऽपि को विष्णोः पराक्रमान्प्रावोचत् । न कोऽपि । उभावपि दुर्लभौ तत्र द्वितीयोऽतितरां । हे विष्णो । तव महिम्नः परमंतं परां काष्ठां । पारमिति यावत् । जातो नाप जायमानो नाप्नोति जनिष्यमाणो नाप्स्यतीत्यादिनोरुक्रमस्य मुरारेर्नारायणस्य यो मर्त्यः कविर्ज्ञान्यपि पार्थिवानि रजांसि विममे किं तादृशोऽपि जातो मर्त्य उरुविक्रमतो मुरारेर्महिम्नः पारमुपयातो जायमान उपैति किं । जनिष्यमाण उपैष्यति किमित्याह । यदा तदा कथं मया निःशेषतया वक्तुं शक्यत इति । बहुलं

रित्रस्य ब्रह्मादि देवदेवस्य हरेर्नारायणस्येदं त्रिविक्रमावतारचरितं शृण्वन्नास्ते स परमां गतिं वैकुंठादिरूपां प्राप्नोति ॥ ३० ॥ इदं चरितं देवर्षिपितृद्देशेन क्रियमाणे यत्र यत्र कर्मण्युच्येत । तेषां तत्कर्मातिपुण्यसाधनमाहुर्ज्ञानिनः ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ८—२१ ॥ ॥

॥ हरिः ॐ ॥ परीक्षिद्वामनावतारकथाश्रवणानुस्मृतमत्स्यावतारमाहात्म्यं तद्विस्तरेण श्रोतुं शुकं प्रार्थयते ॥ भगवन्निति । हे शुक । अहमद्भुतकर्मणो हरेरन्यामवतारकथां श्रोतुमिच्छामि । मायया स्वेच्छया मत्स्याकारस्य विडंबनं मत्स्यानुकरणं यस्यां तामिति । आद्यामिति पाठे दशावतारकथास्वाद्यामित्यर्थः ॥ १ ॥ इदानीं परीक्षित्स्वेतरज्ञोऽत्राज्ञानमात्मन्यारोप्य तदनुजिघृक्षया तदभिप्रायानुसारेण प्रश्नं करोति ॥ यदर्थमित्यादि । ईश्वरः स्वतंत्रो नारायणस्तमोगुणप्रचुरस्वभावं सहितुमशक्यमत एव लोकजुगुप्सितं मत्स्यसंबंधिरूपं कर्मग्रस्तो जीव इव यदर्थमधाद्धृतवान् ॥ २ ॥ हे भगवन् । एतत्सर्वं नोऽस्माकं यथावद्वक्तुमर्हसि । ननु तस्योक्तरीत्या जुगुप्सितत्वे तच्छ्रवणं व्यर्थमित्यत आह । उत्तमश्लोकचरितं सुखावहमिति ॥ ३ ॥ विष्णुरातेन परीक्षिता इत्युक्तो भगवान् बादरायणिः शुको विष्णोर्मत्स्यरूपेण यच्चरितं कृतं तत्परीक्षितमुवाच ॥ ४ ॥ मत्स्यादिरूपधारणप्रयोजनमाह ॥ गोविप्रेति । ईश्वरो नारायणो गोब्राह्मणदेवादिसाधूनां छंदसां वेदानां धर्मार्थयोश्च संरक्षणमिच्छन् तनूर्मत्स्यशरीरादिसद्दशशरीराणि ज्ञानानंदात्मकानि धत्ते । सदेहसुखगंधश्च ज्ञानभागित्यादेः ॥ ५ ॥ मत्स्यस्य हरेस्तमःप्रकृतित्वादिमंदाशंकां परिहराति ॥ उच्चावचेष्विति । उत्तमेषु सुरादिषु नीचेषु तिर्यक्षु मत्स्यादिषु प्रादुर्भावाय तत्तदुदरेषु चरन्नपीश्वरो वायुरिव तत्तद्भूतकृतनीचोच्चत्वं न भजते । ज्ञानानंदाद्यनंतगुणत्वेऽपि भगवता धीयते जगदस्यामिति धीः प्रकृतिस्तस्या गुणैर्वर्जितैर्निर्गुणत्वात् । अत्र वायुदृष्टांतेन मत्स्यादिरूपस्य हरेरुच्चावचभूतचरणोक्त्या न प्राकृतं मत्स्यादिकं रूपं येन तत्प्रकृतित्वादि प्रसज्येत इति परिहार उक्तो भवति ॥ ६ ॥ मत्स्यावतारप्रयोजनं सामान्यतोऽभिधाय विशेषतो वक्तुमादित एव कथामुपक्रमते ॥ आसीदित्यादिना । ब्रह्मणोऽतीत दैनंदिनकल्पांते ब्राम्होनिमित्तकप्रलयोऽभूत । तत्र भूरादयो लोकाः समुद्रेणोपप्लुता आच्छादिताः ॥ ७ ॥ हे अनघ । निद्रा-

कालेनागतनिद्रावतः शयनकर्तुमिच्छोर्ब्रह्मणो मुखतो बहिर्गतान्वेदान् बलिसमीपे तिष्ठन् हयग्रीवाख्योऽसुरोऽपाजहार ॥ ८ ॥ सर्वजगदीश्वरो हरिर्दानवश्रेष्ठस्य हयग्रीवस्य तच्चेष्टितं वेदचौर्यलक्षणं व्यापारं ज्ञात्वा तच्छिक्षणाय मत्स्यरूपं दधार ॥ ९ ॥ तत्र समुद्रजले नाम्ना सत्यव्रतः कश्चिद्राजर्षिर्नारायणे भक्तिमान्सन् तपश्चचार ॥ १० ॥ सत्यव्रतस्याप्रसिद्धत्वात्प्रसिद्धरूपेण ज्ञापयति ॥ योऽसाविति । अस्मिन्महाकल्पे विवस्वततनयः श्राद्धदेव इति ख्यातो मनुत्वे वैवस्वतमनुत्वे हरिणा स्थापितो योऽसौ स एव सत्यव्रत इति ॥ ११ ॥ एकस्मिन्काले कृतमालाख्यनद्यां जलतर्पणं कुर्वतस्तस्यांजलिजले एका काचिच्छफरी मीनस्त्री प्राप्ता ॥ १२ ॥ द्रविडदेशाधिपतिः सत्यव्रतोंऽजलिगतां तां शफरीं नदीतोयेंऽजल्युदकेन सह त्यक्तवान् ॥ १३ ॥ हे राजन् । सा शफर्यतिकृपायुक्तं तं सत्यव्रतं नृपं प्रति । हे राजन् सगोत्रजातिभ्यो मीनेभ्यो यादेभ्यो जलचरेभ्यो भीतामत एव दीनामस्मिन् उदके दीनवत्सलस्त्वं कथं त्यजसीति कृपा यथा स्यात्तथाऽऽह ॥ १४ ॥ सः सत्यव्रत आत्मनः स्वस्यानुग्रहार्थं प्राप्तं मत्स्यशरीरधारिणं हरिमजानन् तद्रक्षणार्थं शफर्या मनो दधे ॥ १५ ॥ दयालुः स महीपतिस्तस्य मत्स्याकारस्यातिदैन्यवाक्यं श्रुत्वा कलशोदकेनैनां शफरीं स्थापयित्वा स्वाश्रमं प्रापयामास ॥ १६ ॥ सा शफरी तत्र कमंडलावेकरात्रेणाभिवृद्धदेहाऽवकाशरहितं वा जलं दृष्ट्वा महीपतिं सत्यव्रतं प्रतीदमाह ॥ १७ ॥ हे सत्यव्रत । अहमस्मिन्कमण्डलौ कष्टं यथास्यात्तथा वासं कर्तुं नेच्छामि । अतोऽहं यत्र सुखं निवसे तत्सुविपुलमितिविस्तृतमोकं स्थानं मम कल्पयेति ॥ १८ ॥ तदुक्त्यनंतरं स सत्यव्रत एनां शफरीमादायोदंचनस्थितोदके स्थापयामास । तत्राक्षिप्ता सा शफरी मुहूर्तेन हस्तत्रयपरिमिता वृद्धाऽभूत ॥ १९ ॥ हे राजन् । ममेदमुदंचनं न सुखेन वस्तुं शक्यं । तस्माद्यस्मात्त्वामहं रक्षकं प्राप्ता तस्माच्चेतोऽपि विस्तृतं स्थानं देहीत्युवाच शफरी ॥ २० ॥ हे राजन् । सा शफरी राज्ञा सत्यव्रतेन तदनंतरं तस्मादुदंचनादादाय सरोवरे क्षिप्ता तदा सा शफरी तत्सरोवरमात्मना स्वदेहेन व्याप्य महामीनोऽवर्धत ॥ २१ ॥ हे राजन् । एतदुदकं मे स्वसनये क्षेमाय नालं जलाश्रयस्य तस्मादुपायेन मां रक्षन् अविदासिनि तलस्पर्शशून्येऽतिविस्तृते ह्रदे निधेहि स्थापय ॥ २२ ॥ स सत्यव्रतो मत्स्यरूपेण हरिणैवमुक्तो तं मत्स्यमविदासिनि तत्र तत्र जलाशये क्रमेणोत्तरोत्तरमतिविस्तरे ह्रदादौ नयन्सन् तं जलाशयादिकं तस्य मत्स्यस्यासंमितं सावकाशं वस्तुमशक्यं दृष्ट्वा तं झषं मत्स्यं समुद्रे

प्राक्षिपत् ॥ २३ ॥ तेनाक्षिप्यमाणो मत्स्यस्तदा तं प्रतीदमाह । हे वीर आरब्धांतगामिन्सत्यव्रत । इहाक्षिप्तं मामतिबला मकरादयोऽदंति भक्षयिष्यंति । तस्मात्त्वं मामिह त्यक्तुं योग्यो नासीति ॥ २४ ॥ एवमुक्तरूपेण वल्गु मनोहरं यथा भवति तथा भारतीं वाचं वदता तन मत्स्यरूपेण हरिणा मोहितः सत्यव्रतः । हे मत्स्यरूपेणास्मान्मोहयन् भवान् क इति तमाह ॥ २५ ॥ हे मत्स्य । एवंविधसामर्थ्योपेतो जलचरो मत्स्योऽस्माभिर्न दृष्टो नापि श्रुतो यो भवान् शतयोजनपरिमितसरोवरमप्यन्हाय शीघ्रं व्यानसे व्याप्तवान् ॥ २६ ॥ एवमलौकिकसामर्थ्यदर्शनेन तदनुग्रहेण च ज्ञातमत्स्यस्वरूपः सत्यव्रतस्तमाह । हे मत्स्य । त्वं साक्षान्मुख्यतो भगवच्छब्दवाच्यो भक्तेष्टाद्याहर्ता चतुर्विधनाशरहितो नारायण एव स्वभक्तानामनुग्रहाय जलाश्रयाणां मत्स्यानामाकारं बिभर्षि नूनं निश्चय इति ॥२७॥ तज्ज्ञानेनोद्रिक्तभक्तिस्तं स्तौति ॥ नम इत्यादिना । हे पुरुषश्रेष्ठ क्षराक्षरोत्तम जगतः स्थित्योत्पत्तिनाशाधिपते विभो देशकालगुणैर्व्याप्त स्वामिन्नारायण ते नमोऽस्तु । त्वं त्वां शरणागतानां भक्तानामस्माकं मुख्य आत्मा स्वामी गतिमदश्च ॥२८॥ हे मत्स्य सर्वे तव लीलावताराः प्राणिनां संपत्करणाय भवंति । भवताऽदस्तन्मत्स्यरूपं यत्प्रयोजनाय धृतं तत्प्रयोजनमहं ज्ञातुमिच्छामि ॥२९॥ सत्यव्रतोऽयोग्यादृश्यभगवद्दर्शनेन स्वस्य सत्वमवधार्य तेनापि महत्प्रयोजनं स्यादिति विज्ञापयते । हे अरविंदाक्ष । सर्वेषां प्राणिनां स्वपुत्रकलत्रादिभ्योऽप्यनिमित्तोपकारित्वादतिप्रियस्वरूपस्य ते पदोपसर्पणं पादपद्मसमीपगमनं भक्तेतरेषां पृथगात्मनां पामराणां मुधा वृथा भवेत् । न तथा सतां तव स्वरूपं स्वस्वयोग्यतानुसारेण यथावज्ज्ञानवतां । यद्यप्यनेवं विन्महत्पुण्यं कर्म करोति तद्धास्यांततः क्षीयते यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीत्यादि श्रुतेः । तत्र वयमपि संत एवेति संभावयामः । यस्मात्त्वमद्भुतमात्स्यं वपुर्नोऽस्माकमदीदृशो दर्शितवान् । भगवतः स्वपुत्रादिभ्योऽतिप्रियत्वं च तदेतत्प्रेयः पुत्रात्प्रेयो मित्रात्प्रेयःसर्वस्मात्प्रेय इत्यादि श्रुतिसिद्धं । व्यर्थकं तु वृथा मुधेत्यमरः ॥३०॥ जगत्पतिर्मत्स्यरूपो हरिर्यतः स्वयमेकांतभक्तजनप्रियस्तदाभिलषितपूर्णः समर्थश्चातः प्रलयार्णवे स्वयं विहर्तुकामः सन् इत्युक्तप्रकारेण ब्रुवाणं सत्यव्रतं नृपतिं प्रति मत्स्यवपुर्हरिर्युगक्षये प्रलयार्णवे स्वेनाग्रे चिकीर्षितं कर्तुमिष्टमब्रवीत् ॥ ३१ ॥ हे अरिंदम शत्रुशिक्षक सत्यव्रत । अद्यतनाद्वर्तमानादन्ह ऊर्ध्वमुपरि सप्तमेऽहन्यप्ययांभोधौ प्रलयसमुद्रे भूर्भुवादिकमेतत्त्रैलोक्यं निमंक्ष्यति मग्नं भविष्यति ॥ ३२ ॥ संहर्ताभसि प्रलयोदके त्रैलोक्यां

लीयमानायां सत्यां मयेरिता प्रेरिता विस्तृता काचिन्नौः प्लवस्त्वामुपस्थास्यति । त्वत्समीपे स्थिता भविष्यति । संवर्तः प्रलयः कल्पोंऽभोर्णस्तोय पानीय । उडुपं तु प्लवः कोलः स्त्रियां नौरिति चामरः ॥ ३३ ॥ तावत्तदा त्वं सर्वा ओषधीर्व्रीहियवादीन् उच्चावचानुत्कृष्टापकृष्टान्यन्यानि बीजानि चादाय सप्तर्षिभिः परिवृतः सन् सर्वैः प्राणिभिः पूर्णः सन् बृहतीं विस्तृतां नावमारुह्यापरवशः स्वस्थांतःकरणः सन् एकार्णवीभूते जले सूर्यचंद्रादि प्रकाशाभावेन निरालोकेंऽधकारेसप्तर्षीणां वर्चसा प्रकाशेनैव संचारं करिष्यासि ॥३५॥ बलीयसा बलिष्ठेन समीरणेन वातेन दोधूयमानां पुनः पुनरतिकंपमानां तां नावं समीपास्थितस्य मे शृंगे महाऽहिना पाशस्थानीयमहासर्पेण विबध्नीहि ॥ ३६ ॥ हे प्रभो राजन् । अहं सह त्वां सनावमुदन्वति समुद्रे विचिकर्षन् चतुर्मुखसंबंधिनी निशा रात्री यावद्वर्तेत तावदेवं विचारिष्यामि ॥ ३७ ॥ तदा त्वं हृदि स्थितैः सम्यक् प्रश्नकृतैर्निमित्तैर्मया विवृतमनुगृहीतं परब्रह्मशब्दितस्य मे महिमानं सम्यग्ज्ञास्यसि ॥ ३८ ॥ मत्स्यरूपी हरिरित्थमुक्तरीत्या राजानं सत्यव्रतं प्रत्युक्त्वाऽदृश्योऽभूत । अथ स सत्यव्रतो हृषीकाणामिंद्रियाणामीशः स्वामी हृष्यानंदरूपकेशो यस्य स मत्स्यरूपी हरिर्यं कालमादिशत्तं कालमन्ववैक्षत प्रतीक्षन् स्थितः ॥३९॥ राजर्षिः सत्यव्रतः प्रागग्रान्दर्भानास्तीर्य पागुदङ्मुख ईशानीमुखः सन् मत्स्यरूपिणो हरेः पादौ चिंतयन्निषसादोपाविवेश ॥४०॥ तदनंतरं वर्षद्भिर्वर्धमानमहामेघैः पूर्यमाणोऽत एवोद्वेलोऽतिक्रांतमर्यादा भूमिः सांवर्तप्रलयकालीनः समुद्रः सर्वतो दिक्षु महीं प्लावयन्नाच्छादयन्समदृश्यत ॥४१॥ ननु यं कंचन गुरुमकृत्वा गुरुतमत्वेन मत्स्तुतिः किं क्रियत इत्यत आह ॥ सचक्षुरिति । यथांऽधस्य पुरुषस्य सचक्षुः पटुतरचक्षुष्मान्नग्रणीरग्रे गच्छन्नायकः कृतो यथा वाऽबुधस्य परापरज्ञानशून्यस्य बुधस्तत्त्वज्ञानी गुरुः कृतः । शास्त्रज्ञानादिविवेकिभिरिति शेषः । तथा सर्वदृशां ज्ञानानामर्थान्विषयान्साक्षात्पश्यतीति दृक् । समीक्षणोऽबाधिततया समीचीनज्ञानिनस्तत्त्वं सुगतिं बोद्धुमिच्छतां नो गुरुः कृतः । ५०॥ इतोऽपि त्वमेव गुरुत्वेन मुख्यतो वरणीयो नान्यो जन इत्याह ॥ जन इति । सोऽज्ञत्वेन प्रसिद्धो जनो जिज्ञासुजनो यया गत्या ज्ञानेन दुरत्ययं तर्तुमशक्यमंधंतमो यथा प्रपद्येत । तस्य जनस्य तथा त्वमसर्वोत्तमोऽस्वतंत्रो जीवाभिन्न इत्याद्ययथार्थामेव गतिमादिशत्युपदिशति । त्वं तु त्वमेव मयः प्रधानो यस्मिंस्तत्ज्ञानमुत्तमः पुरुषस्त्वन्य इत्यादिरूपेणादिशसि । उपदिष्टेन येन ज्ञानेन मोक्षयोग्यो जनो निजं स्वस्वयोग्यं पदं वैकुंठादिस्थानमंजसा प्रपद्यते ।

अंधंतमः प्रविशंति । येऽविद्यामुपासते इत्यादिश्रुतेः । सुखज्ञानादिरूपिणो यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपतां यातीत्यादि स्मृतेश्च ॥ ५१ ॥ कामक्रोधादिदोषपरित्यागमंतरेण स्वहृदि संनिहितपरमात्मज्ञानं दुःशकमित्याशयेनाह ॥ त्वमिति । हे भगवन् । त्वं सर्वस्य जनस्य सुहृत् तत्कर्मानुसारेणोपकार्यत एव प्रिय ईश्वरः स्वामी आत्मांऽतर्नियामको बहिरपि व्यासादिरूपेण गुरुर्ज्ञान-प्रदो ज्ञानमेवोपदिशसि । तेनाभीष्टसिद्धिप्रदश्च । यद्यपि तथाऽपि मंदधीर्लोको जनः स्वस्य हृदि नियामकत्वेन बद्धं स्थिरं संतं विद्यमानं भवंतं न जानाति ॥ ५२ ॥ हे मत्स्य । त्वां ज्ञानोपदेष्टृत्वादिगुणगणशालिनं ब्रह्मादिदेवोत्तममत एवान्यपरित्यागेन वरेण्यं भजनीयमीशमघटितघटनासमर्थं त्वां मां प्रतिबोधनाय प्रपद्ये । हे भगवन् । अर्थदीपैः परापरार्थप्रकाशकैर्वचोभिर्वाक्यैर्मम हृदय्यां ग्रंथिं छिंधि । अनंतरं स्वं स्वकीयमोकं स्वरूपं विवृणु प्रकाशय । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामित्यादि श्रुतौ तवैवं विधमहिम्नोऽवगतत्वादित्याशयः ॥ ५३ ॥ आदिपुरुषो मत्स्यरूपी भगवान् प्रलयसमुद्रे क्रीडन् इत्युक्तवंतं नृपतिं सत्यव्रतं प्रति तत्त्वमब्रवीत् ॥ ५४ ॥ मत्स्यः सांख्ययोगक्रियावतीं ज्ञानभक्तिकर्मयोगयुक्तां पुराणसंहितामब्रवीत् । तथा सत्यव्रतराजर्षेरात्मगुह्यं गोप्यं स्वस्वरूपमपि सत्यव्रतयोग्यतामपेक्ष्याशेषतो निःशेषं यथा तथाऽब्रवीत् ॥ ५५ ॥ नाव्यासीनः प्लव उपविष्टः सत्यव्रतो ऋषिभिः सह भगवता मत्स्येन प्रोक्तं ब्रह्माश्रौषीच्छ्रुतवान् ॥ ५६ ॥ प्रलयलक्षणापत्कालेऽतीते सति उत्थि-ताय निद्रामुक्ताय वेधसे चतुर्मुखाय हयग्रीवमसुरं हरिर्मत्स्यरूपी हत्वा वेदान्प्रत्याहृत्य दत्तवान् ॥ ५७ ॥ स सत्यव्रतो राजा मत्स्यस्य विष्णोः प्रसादात् ज्ञानविज्ञानसंयुतः सन् अस्मिन्वैवस्वतो मनुरासीत् । एतदाख्यानश्रवणफलमाह । सत्यव्रतस्य राजर्षे-र्मायामत्स्यस्य शार्ङ्गिणो नारायणस्य संवादरूपं महदाख्यानं श्रुत्वा किल्बिषान्सुमहान्मुच्येतेति ॥ ५९ ॥ योऽमुं मत्स्यमवतार-मन्वहं प्रतिदिनं कीर्तयेत्तस्य संकल्पा मनोरथाः सिद्ध्यंति सः परमां गतिं याति ॥ ६० ॥ एवमवतारमाहात्म्यं संकलय्य कथयाति ॥ प्रलयेति । यः प्रलयजले सुप्तशक्तेर्विषयोपरतेंद्रियादिशक्तेर्धातुश्चतुर्मुखस्य मुखेभ्यः श्रुतिगणं दितिजं हत्वा प्रत्यानीय दत्तवान् । यश्च सत्यव्रताय स्वं ब्रह्मरूपमकथयच्च तमखिलजगज्जन्मादिकारणं जिम्हमीनं तिर्यङ्मत्स्यरूपं प्रदर्शयंतमहं नतोऽस्मीति सर्वमतिमगलं ॥ ६१ ॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥ ८—२२ ॥ ॥ पदमुक्तावली भयात्प्रीत्यै मत्स्यात्मनो

हरेः ॥ लिंघेरीश्रीनिवासेन कृता मदीपकारिणा ॥ १ ॥ इति श्रीकाविमुक्तामालिनायकरत्नायितश्रीमद्गुरुलक्ष्मणार्यार्यसुत-
लिंघेरीश्रीनिवासकृतायां पदमुक्तावल्यां श्रीमद्भागवतटिप्पण्यामष्टमः स्कंधः समाप्तः ॥ ८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

( श्रीमन्मध्वाचार्याः )

॥ इति श्रीमद्भागवतटिप्पणी लिंघेरी समाप्त ॥

॥ अष्टमः स्कंधः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।

( श्रीमन्मध्वाचार्याः )

।। हरि ॐ ।। श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।। अस्मिन् स्कंधे वैष्णवानां तु चरितं विष्णूद्रेकाय कथ्यत इत्युक्तेः । विष्णूत्कर्षज्ञानार्थं पुण्यश्लोकराजवंशो निरूप्यते । तत्र कतिपयैरध्यायैः सूर्यवंशः कतिपयैरध्यायैः सोमवंशश्चानुवर्ण्यते । प्रथमं तावदुक्तानुवादपूर्वकं वैवस्वतमनुवंशं राजा शुकं पृच्छति ।। मन्वंतराणीत्यादिना ।। उक्तानि । अष्टमस्कंध इति शेषः । तत्र चतुर्दशमन्वंतरेषु । कृतानि हरेर्वीर्याणि च । मे मया श्रुतानीत्यन्वयः ।। १ ।। अत्र यच्छब्दद्वयस्य स वै इत्युत्तरश्लोकेनान्वयः । असौ चाक्षुषमन्वंतरे प्रसिद्धः । तस्यावस्थानमाह ।। द्रविडेश्वर इति । तस्य महिमानमाह ।। ज्ञानमिति । यः सत्यव्रतो नामराजर्षिः । अतीतकल्पांते चाक्षुषकल्पांते । पुरुषसेवया मत्स्यावताररूपभगवत्सेवया । तदुपदेशेनेति यावत् । ज्ञानं तत्त्वज्ञानं लेभे ।। तदुक्तं ।। मत्स्यरूपी महांबोधौ • विहरंस्तत्त्वमब्रवीत् । सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः । अश्रौषीदृषिभिः सार्धमात्मतत्त्वमसंशयं । नव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनमिति । ज्ञानं चेति क्वचित्पाठः ।। २ ।। सः सत्यव्रतो विवस्वतस्तन्नामकसूर्यपुत्रः सन्मनुरासीत् । अस्मिन् वैवस्वतमनुकल्प इति शेषः ।। श्रुतं । स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः । विष्णोः प्रसादात्कल्पेऽस्मिन् आसीद्वैवसतो मनुरित्यष्टमस्कंधांते श्रुतमित्यर्थः । इक्ष्वाकुप्रमुखा दशसुतास्तत्रैव वैवस्वतमन्वंतरनिरूपणसमये प्रोक्ताः ।। ३ ।। वंश्यानुचरितानि च वंशे भवा वंश्यास्तेषां राज्ञां माहात्म्यानि चेत्यर्थः ।। ४ ।। ये भूता इत्यादिकं वैवस्वतमनुवंशोत्पन्नेष्विति ज्ञेयं । भवंतीत्यस्यैव विवरणं ।। अद्यतनाश्चेति ।।५।। प्रश्नप्रतिवचने सामर्थ्यमस्तीति द्योतयितुं भगवान् परमधर्मविदिति विशेषणद्वयं ।। ६ ।। मानवो वैवस्वतमनुसंबंधी ।। ७ ।। वैवस्वतमनुवंशं वक्तुं पीठिकामारचयति ।। परावरेषामिति । परावरेषां ब्रह्मादीनां कल्पादीनां च भूतानामात्मांऽतर्यामी यः परमपुरुषो नारायणः स ब्रह्म एक एव कल्पांते । इदं विश्वं । उदरे । निधायेति शेषः । आसीत् ।। तदुक्तं महाभारततात्पर्यनिर्णये ।। आसीदुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात्म एकः संशांतसंविदखिलं जठरे निधायेति । उदरावस्थितिस्थानविशेषकथनपूर्वकमुक्त्वा ब्रह्मांडपुराणे । धामत्रयस्थिता मुक्ता वटपत्रस्थ शौरिणः । कुक्षिगता ध्यानमुक्ता यावत्सृष्टिर्भवेत्पुनः । तावत्तिष्ठंति चानंदाः सृष्टौ यांति स्वकं स्थलं । तमःप्राप्तास्तामसाश्च स्वरूपेण व्यवस्थिताः । लिंगभंगमनुप्राप्ताः पूर्वद्वेषात्मकाः सदा । नाभेरधस्तिष्ठंति यावत्सर्गः पुनर्भवेत् । नित्यसं-

सारिणः सर्वे सृष्टौ सृष्टौ भवंति च । न तेषां संसृतेर्नाशः क्वचित्क्वापि भविष्यतीति । स एक एवासीदित्येवकारव्यावर्त्यमाह ॥ अन्यत्किंचन चासीदिति । यत्किंचनान्यत्कालादिकमासीत् । तत्तस्मादन्यन्नासीत् । किंतु तदधीनमेवासीदित्यपि योज्यं । काल आसीत्परम आसीत्तद्यदासीत्तदावृतमासीदिति श्रुतेः ॥८॥ ततः सृष्टिकाले प्राप्ते चतुर्विंशतितत्त्वसृष्टिरभूत् । ततो ब्रह्मांडोत्पत्तिरभूदिति द्रष्टव्यं । ततः परं किमभूदिति तत्राह ॥ तस्येति । गर्भोदके शयानस्य हरेरित्यर्थः । नाभेः सकाशात्पद्मकोशः पद्मकुट्मलं । उदस्तादिति छांदसं रूपं । उदभूत्पद्मसृष्टिरभूदित्यर्थः ॥९॥ तस्य ब्रह्मणो मनसः सकाशान्मरीचिर्जज्ञे । तस्य मरीचेः सकाशात्कश्यपो जज्ञे । ततः कश्यपाद्दाक्षायिण्यां दक्षपुत्र्यां विवस्वांस्तन्नामकसूर्यः ॥१०॥ ततो विवस्वतः सकाशात् श्राद्धदेवस्तन्नामा सप्तमो मनुः । अस्यैव वैवस्वतनामांतरं । संज्ञायां विवस्वान्नामकसूर्यभार्यायां । आसीत्स वैवस्वतमनुः श्रद्धायां भार्यायां । आत्मवान् आत्मज्ञानी ॥११॥ ते पुत्राः के इत्यत आह ॥ इक्ष्वाकिति । विभुं वैवस्वतमिक्ष्वाकुप्रभृतीन् दशपुत्रान् जनयामासेत्यन्वयः ॥ १२ ॥ वैवस्वतमनुपुत्रस्य सुद्युम्नस्य केनचिन्निमित्तेन स्त्रीत्वे प्राप्ते सति तस्यां सोमपुत्राद्बुधात्पुरूरवप्रभृतिसोमवंशं वक्तुं समस्तावमिलोपाख्यानमाह ॥ अप्रजस्येत्यादिना । संतानरहितस्येत्यर्थः । इक्ष्वाकुप्रभृतिपुत्रोत्पत्तेः पूर्वं मित्रावरुणयोरिष्टिं मित्रावरुणदैवत्यां । मित्रावरुणयोरित्यत्र देवता द्वंद्वे चेति दीर्घः ॥ १३ ॥ दुहित्रर्थं मम कन्या यथा भवेत्तथा यजेति होतारं समयाचत । पय एव व्रतमाहारो यस्याः सा तथा । व्रतं भोजनं तं निवृत्त्येत्यर्थः ॥ १४ ॥ अध्वर्युणा यजेति प्रेषितो होता तेनाध्वर्युणा हविषि गृहीते सति वषट्कारं गृणन् वौ षडिति वदन् तद्भार्यया प्रार्थितं दध्यावित्यन्वयः ॥ १५ ॥ तस्य पूर्वसंकल्पितस्य । व्यभिचारेण व्यत्यासेन । अन्यथा ध्यानेनेत्यर्थः । नातिहृष्टं मनो यस्य । न समासोऽयं ॥१६॥ वो युष्माकमिदं कर्म किं कस्मिन्निमित्ताद्विपरीतं स्त्रीत्वापादकं जातं । इदं स्त्रीत्वं कष्टं । ब्रह्मविक्रियैवमनिष्टापादनी नैव स्यान्नैव भवति । अतो भवतां कर्मणः स्त्रीत्वापादकत्वं । अहो आश्चर्यं । अतो बलवन्निमित्तं वक्तव्यं । तत्किमिति हृदयं ॥ १७ ॥ मंत्रविदो मैत्रावरुणीमिष्टिं कुर्यात्पुत्रकाम इत्यादि मंत्रहृदयज्ञा युक्ता मनोयोगयुक्ताः । न च दोषादन्यथात्वं मनस इत्याह ॥ तपसेति । यूयमेवं विधास्तेषु युष्मासु संकल्पवैषम्यं चिंतितस्यान्यथात्वं कुतो न कुतोऽपीति संभाव्यते । असंभावितत्वे दृष्टांतः ॥ अनृतमिति । न हि देवेष्वनृतं दृष्टचरं ॥ १८ ॥ देहलीदीपन्यायेन



॥ १ ॥

तस्येत्यस्योभयत्रानुषंगः । तस्य तद्वचो निशम्य । तस्य वैवस्वतमनोः प्रपितामहो वसिष्ठो मरीचिवद्वसिष्ठस्यापि ब्रह्मपुत्रत्वात् । व्यतिक्रमं व्यतिक्रमणजन्यामिति ज्ञात्वा । रविनंदनं वैवस्वतं ॥ १९ ॥ होतुर्व्यभिचारतो विपरीतध्यानेन सुप्रजास्त्वं सत्पुत्रवत्वं तवेति शेषः ॥ २० ॥ इत्युक्त्वा मनसि तथा निश्चयं चकारेत्यपि ज्ञेयं । एवं व्यवसित एवं कृतनिश्चयः ॥ २१ ॥ तेन वरेणेलापुरुषर्षभोऽभवत् तदा तस्य । सुद्युम्ननामाभवदिति योज्यं ॥ २२ ॥ सः सुद्युम्नो मृगयां प्रति । मृगवधार्थमिति यावत् । जगामेत्युत्तरेणान्वयः । सैंधवं सिंधुदेशजातं ॥ २३ ॥ दंशितो वर्मयुक्तः । अनुमृगं धावन्निति शेषः ॥ २४ ॥ मेरोरधस्तात्स्थितं ॥ २५ ॥ स्वात्मानं स्त्रियं स्तनकेशादि स्त्रीचिन्होपेतमपश्यत् । वडवामश्वां ॥ २६ ॥ आत्मानं लिंगविपर्ययं पुरुषचिन्हविपरीतं स्त्रीचिन्हं । विमनसो दुःखितमनसः ॥ २७ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ९—१ ॥ ॥

॥ हरिः ॐ ॥ एवंगुणः पुरुषस्य स्त्रीत्वापादकगुणयुक्त एवं प्रश्नं प्रत्युत्तरं समाचक्ष्वेत्यर्थः ॥१॥ तत्र वने । स्थितामिति शेषः । दिशो वितिमिरा निरस्तांधकाराः कुर्वंतीत्यर्थः । दिशो वितिमिराभासाः कुर्वंत इति पाठे वितिमिराभासा विगतं तिमिरं विगत आभासोऽन्यप्रकाशश्च यासु तथा दिशः कुर्वंतः संत इत्यर्थः ॥२॥ अंकात्समीपात् । समीपोत्संगयोरंक इत्यभिधानं । नीवीं वस्त्रं पर्यधात्परिधानं कृतवती ॥३॥ प्रसंगं रत्यभिनिवेशं वीक्ष्य स्त्रीप्रसंगकलुषितमनसः संतः । तत्प्रसंगशून्यं नरनारायणाश्रमं बदर्याख्यं जग्मुः ॥४॥ भगवान् शंभुः ॥ ५ ॥ तर्ह्रि तदैव । प्रासंगिकमुक्त्वा प्रस्तुतमनुवर्णयाति ॥ स चेति । सुद्युम्नाख्याऽनुचरी संयुक्तेति वक्तव्ये भूतपूर्वगत्या पुंस्त्वित्यादेशः ॥ ६ ॥ आश्रमाभ्याशे आश्रमसमीपे ॥ ७ ॥ सा स्त्रीत्वापन्ना सुद्युम्ना । पुरूरवसं तन्नामानं ॥८॥ मानवो मनुपुत्र इति शुश्रुम इति सूतोक्तिः शुकोक्तिर्वा ॥ ९ ॥ तस्यां सुद्युम्नायां तां स्त्रीत्वलक्षणं । कृपया राजकुमारस्य कथमिदं स्त्रीत्वं प्राप्तमिति दययेत्यर्थः । आशयन्कामयन् । उपधावत असेवत ॥ १० ॥ ऋतां कुर्वन्स्वां च वाचं । सवै योषिद्भवेदिति स्ववाक्यमित्यर्थः ॥ ११ ॥ वसिष्ठभ्रातृमरीचोत्पन्नत्वात्सुद्युम्नस्तव गोत्रज इत्युक्तं ॥ १२ ॥ पुंस्त्वलक्षणं कामं नाभ्यनंदन् स्त्रीत्वे प्राप्ते लज्जया मासं मासं निलीयावस्थानात् । ततः परं सुद्युम्नोऽश्वमेधं कृत्वा पुमानेव बभूवेति ज्ञातव्यं ॥ तदुक्तं संग्रहरामायणे ॥ अश्वमेधात्पुमानेव यज्ञश्रेष्ठो हि स क्रतुरिति ॥ १३ ॥ तस्य सुद्युम्नस्य दाक्षिणापथराजानः पथस्य तन्नामक-

देशस्य राजानः । समासांतविधेरनित्यत्वात् दक्षिणापथराजान इति साधुः ॥ १४ ॥ प्रतिष्ठानपतिः प्रतिष्ठाननामाख्यपुरपतिः प्रभुः सुद्युम्नः परिणतः सन्नद्धः सन् स्वस्य स्त्रीत्वावस्थायां जाताय पुरूरवसे पुत्राय । गां भूमिमुत्सृज्य दत्वा ॥ १५ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥ ९—२ ॥ ॥

॥ हरिः ॐ ॥ सुते सुद्युम्ने वनं प्रति गते सतीत्यन्वयः । समा वर्षाणि ॥ १ ॥ इक्ष्वाकुः पूर्वजो ज्येष्ठो येषां ते तथा । नामानि प्रथमाऽध्याय एवोक्तानि ज्ञेयानि ॥ २ ॥ सूचीकटाहन्यायेन वैवस्वतपुत्राणां वंशं विवक्षुरादौ तावत् । वैवस्वतमनोरष्टमपुत्रस्य वृषध्रस्य वंशो नाभूदिति सहेतुकमाह ॥ वृषध्र इत्यादिना । गुरुणा वसिष्ठेन गोपालकृतो वृषध्रो गाः पालयामासेत्यन्वयः । रात्रौ खड्गपाणिस्तिष्ठतः सतो जागरणं वीरासनं तदेव व्रतं यस्य स तथा । यत्तः सन्नद्धः ॥ ३ ॥ निशि मेघे वर्षति सति शार्दूलो व्याघ्रः बभ्रमुर्भ्रमणं चक्रुः ॥ ४ ॥ बलवान् शार्दूलः । सा गौः ॥ ५ ॥ बभ्रोर्गोः शिरो न्यहनत् । बभ्रुर्गौः सौरभी चेत्यभिधानं । कपिला गौर्बभ्रुरिति कश्चिद्व्याख्यातवान् । प्रलीना उडुगणा यस्मिंस्तस्मिन् । आकाश इति शेषः ॥ ६ ॥ विवृक्णश्रवणः छिन्नकर्णमूलः । निस्त्रिंशस्य खड्गस्याग्रेण हतः । गां कामतो न जघानेति व्याख्यापयितुं विवृक्णश्रवण इत्युक्तं ॥ ७ ॥ परवीरहा शत्रुसंहारकः । निशि व्युष्टायां प्रभातायां ॥ ८ ॥ अकामतो बभ्रुहननेच्छाभावेऽपि कृतागसं कृतापराधं । क्षत्रबंधुः क्षत्रियाभासोऽपि त्वं न भविताऽपि तु शूद्रो भविता ॥ ९ ॥ प्रत्यगृह्णात् । शापमिति शेषः । ऊर्ध्वरेतोव्रतं ऊर्ध्वरेतस्त्वं रूपं व्रतमधारयत् ॥ १० ॥ सर्वात्मनि सर्वस्वामिन्येकांतित्वमेकांतभक्तत्वं । समः सुखदुःखादिषु समः ॥ ११ ॥ शांतात्मा शांतरूपे हरौ निश्चितबुद्धिः संयताक्षो निगृहीतेंद्रियोऽपरिग्रहोऽधिकपरिग्रहशून्यः । यदृच्छया भगवदिच्छयोपपन्नेन प्राप्तेन फलादिना ॥ १२ ॥ आत्मानि परमात्मनि । आत्मानं मन आधाय जडांधबधिरैः सदृशात्माकृतिर्यस्य विचचारेति द्वयोरेकान्वयः ॥ १३ ॥ एवं व्रत एवं वृत्तिमान् । तेन दावाग्निनोपयुक्तकरणः स्वीकृतदेहो दग्धदेह इत्यर्थः । करणं साधकतमे शरीरेंद्रिययोरित्यभिधानं । परं ब्रह्म ॥ १४ ॥ दशमपुत्रस्य कवेरपि वंशो नाभूदित्याह ॥ कविरिति । बंधुभिः सह संगं विसृज्य तेषु ममतां विहायेत्यर्थः । वनं विवेश । ततः स्वरोचिषं पुरुषं चित्ते निवेश्य तं ध्यायन्नित्यर्थः । परब्रह्मेति शेषः ।

गतः प्राप्तः कैशोरवयोऽल्पवयः ॥ १५ ॥ विष्टस्य वंशमाह ॥ करूशानिति । मानवान्मनुपुत्रात्करूशात्करूशा इत्येव प्रसिद्धाः पुत्रा आसन्नित्यन्वयः । क्षत्रजातय इत्यनेन वृषध्रवद्गोपालत्वादिजात्यंतरं न प्राप्ताः । किंतु तज्जातय एवेति सूचयति । उत्तरापथनामकस्य देशस्य गोप्तारः पालकाः ॥ १६ ॥ पंचमस्य वंशमाह ॥ धृष्टादिति । धृष्टान्मनुपुत्रान्नाम्ना धार्ष्टं क्षत्रं क्षत्रियकुलमभूत् । तद्वृत्तमाह ॥ ब्रह्मभूतामिति । ब्रह्मणि स्थितं परब्रह्मनिष्ठितमभूदित्यर्थः । क्षितौ कर्मभूतौ गतमेकाग्रचित्तत्वेन तपसि स्थितमित्यर्थः । द्वितीयस्य वंशमाह ॥ मानवाच्च नृगादिति । मानवान्मनुपुत्रान्नृगराजात् । स्वातिर्नामा पुत्रस्ततः स्वातेर्ज्योतिर्नामा ततो ज्योतिषो नभस्तन्नामा पुत्रोऽभवत् । स्वातिमूलनामा नभस्य पुत्रोऽभवत् । स्वातिमूलस्येति शेषः । वसुनामा पुत्रोऽभवत् ॥१७॥ वसोः प्रतीकः पुत्रोऽभवत् । तत्पुत्रः प्रतीकपुत्र ओघवान् ओघवान्नामा । ओघवतः स्वसा ओघवतीनामकन्याऽभवत् । सुदर्शनो नाम राजा ॥१८॥ सप्तमस्य वंशमाह ॥ चित्रसेनो नरिष्यंतादिति । नरिष्यंतान्मनुपुत्राच्चित्रसेनो नाम सुतोऽभवत् । तस्य चित्रसेनस्य दक्षस्तस्य दक्षस्य । ततो मीढ्वान्नामकात् । तत्सुतः कूर्चसुतः ॥१९॥ तस्य वीतिहोत्रस्य तस्य सत्यश्रवसस्तत उरुश्रवसः ॥२०॥ भगवान्पूज्योऽग्निदेव एव कानीन इति जातूकर्ण्य इति विख्यातः ॥ २१ ॥ ततो जातूकर्ण्याद्ब्रह्मकुलं जातं । अग्निवैश्यानमिति नामांतरेण प्रसिद्धं । चतुर्थवंशं प्रतिजानीते ॥ दिष्टवंशमिति ॥ २२ अन्यो मनुपुत्रनाभागाद्दिष्टपुत्रान्नाभागोऽन्य इत्यर्थः । कर्मणा वाणिज्यादिकर्मणा वैश्यतां गतः । तस्य नाभागस्य ॥ २३ ॥ तत्सुतः प्रांशसुतः । विशुरिति प्रमितेर्विशेषणं । अथ चाक्षुषात् ॥ २४ ॥ अस्य रंभस्य । तस्य खनिनेत्रस्य करंधम आत्मजः ॥ २५ ॥ करंधमस्य यस्यावीक्षितः । मरुत्तं विशिनष्टि ॥ संवर्त इति । आंगिरसः सुतो महायोगी संवर्त्तो यं मरुत्तमयाजयत् ॥ २६ ॥ मरुत्तस्य यज्ञं विशिनष्टि ॥ मरुत्तस्येति । अस्य यत्किंचित्पात्रादिकमस्ति तत्सर्वं हिरण्मयप्रतिशोभनमासीत् ॥ २७ ॥ अमाद्यदहृष्यत् । द्विजातयः । अमाद्यन्निति शेषः । सभासदः सभायां सीदंत्युपविशंतीति सभासदः प्रत्यक्षं सभायामुपविश्य सर्वं विचारयंत इत्यर्थः ॥ २८ ॥ नरः सौधृतेयः सुधृतपुत्र इति श्रुतः प्रसिद्धः ॥ २९ ॥ यस्य बंधोस्तृणबिंदुः सुतोऽभवत् ॥ ३० ॥ अलंबुषानाम वराप्सरा । तं तृणबिंदुं भेजे । यतस्तृणबिंदोर्यस्यां त्रयः पुत्राः । अभवन्निति शेषः । इलिबिलाख्यकन्या च ॥ ३१ ॥ योगेश्वरो विश्ववर्षिः पितुरिलिबिडायाः पितु-

स्तृणबिंदोः परमां विद्यां प्रदाय तामुद्वाह्य । यस्यामिलिबिलायां धनाधिपं वैश्रवणमुत्पादयामासेत्यर्थः ॥ ३२ ॥ तानेव पुत्रानाह ॥ विशाल इति । तत्सुतास्तृणबिंदुसुता ॥ ३३ ॥ तस्य विशालस्य तत्पुत्रो धूम्राक्षपुत्रः ॥ ३४ ॥ यः सोमदत्त इडस्पातिमन्नपतिं वाक्पतिं । पुरुषं हरिं ॥ ३५ ॥ सोमदात्तिः सोमदत्तः सुतो वैशालभूपाला विशालवंशे जाता भूपालाः ॥ ३६ ॥

इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ॥ ९—३ ॥ ॥

॥ हरिः ॐ ॥ तृतीयस्य वंशमाह ॥ शर्यातिरिति । ब्रह्मिष्ठो ब्रह्मनिष्ठो वेदनिष्ठो वा । तत्फलमाह ॥ यो वा इति । अंगिरसां सत्रेंऽगिरो नाम ऋषिकर्तृके सत्रयागे । द्वितीयमहर्द्वितीयेऽन्हि क्रियमाणं कर्म । उवाचेति शेषः । तदन्हि पठ्यमानं मंत्रं चाध्यगादध्यगीष्ठ । यथा सत्रयागेषु षष्ठेऽहनि कर्तव्ये कर्मणि ऋषिषु मोहं प्राप्तेषु मनुपुत्रो नाभागो पित्राज्ञया तत्कर्माणि द्वे सूक्ते च शशंस । तद्वत् शर्यातिरपि शशंसेति भावः । नाभागचरितं चोपरिष्ठात्पंचमेऽध्याये वक्ष्यते । सैनिकानां राजसेवकानां ॥१॥ उत्तानबर्हिरानर्त इत्यादिना तस्य वंशं वक्ष्यन् आदौ तत्कन्यावृत्तांतमाह ॥ सुकन्येत्यादिना । वनं प्रति गतः ॥ २ ॥ अंघ्रिपान्पुष्पफलोपेतवृक्षान् विचिन्वंतीं मृगयंतीं । वल्मीकरंध्रे ज्योतिषी तेजोरूपनयने ॥ ३ ॥ सा सुकन्या मुग्धभावेन मूढत्वेन ज्योतिषी तेजोरूपे नयनेऽविद्धयद्विध्याऽधात्ततो विद्धचक्षुषोऽसृक् रुधिरं ॥४॥ राजर्षिः शर्यातिस्तं विरोधमुपालभ्य दृष्ट्वा ॥५॥ नोऽस्माकं मध्ये केनापि पुरुषेण । भार्गवस्य च्यवनस्याभद्रमपराधः । अपि शब्दः किं शब्दार्थः । न विचेष्टितं किमिति । प्रथमं संदेहात्प्रश्नः । ततः कार्यदर्शनादभद्रकृतमेवेति निर्धारयति ॥ व्यक्तमिति ॥ ६ ॥ द्वे ज्योतिषी नयने निर्भिन्ने विदारिते ॥ ७ ॥ जातसाध्वस उत्पन्नभयः ॥ ८ ॥ मुग्धेयं मम कन्या । अनया कृतमगः क्षम्यतामित्युक्ते । कति वर्षाण्यस्या विवाहो जातो न वेत्यादि वाक्यैस्तदीयाभिप्रायमाज्ञाय मुनेर्मुनये कन्यां प्रादात् । तदनंतरं कृच्छ्रात् शकृन्मूत्रनिरोधलक्षणात् कृच्छ्रान्मुक्तः । सुकन्या मुनिभ्यामिति शेषः ॥ ९ ॥ तत्त्वज्ञा धर्मतत्त्वज्ञा । अनुवृत्तिभिरनुसरणैः सेवाभिरित्यर्थः ॥ १० ॥ कस्यचित्कालस्य गच्छतः सतो गतौ प्राप्तौ हे ईश्वरौ भिषक् श्रेष्ठौ युवां मह्यं वयस्तारुण्यलक्षणं दत्तं ॥ ११ ॥ यच्छतं तव वयोदानेनावयोः किं फलमिति तत्राह ॥ ग्रहमिति । असोमयोः सोमपानशून्ययोर्युवयोर्ग्रहमाहुतिविशेषां गृहीष्ये दास्यामीति यावत् ॥ १२ ॥

भिषक्तमौ वैद्यश्रेष्ठौ । बाढमित्याभिनंद्य । भवान् सिद्धपुरुषविनिर्मितेऽस्मिन्निमज्यतामिति विप्रमूचतुरित्यन्वयः ॥ १३ ॥ धमनीभिः शिरोभिः संततो व्याप्तः । देह इति शेषः । प्रवेशितोऽभूत् । स्वयं चाश्विनौ चामज्जत तं गृहीत्वा निमग्नावित्यर्थः ॥ १४ ॥ आपीच्याः षोडशवर्षप्रायाः । उत्तस्थुः । ह्रदादिति शेषः ॥ १५ ॥ वरारोहा योषित् । सरूपान्समानरूपान् । साध्वीति हेतुगर्भं । आश्विनौ शरणं ययौ । युवामत्र तिष्ठतो नात्र संशयः । तस्माद्युवां पृथक् । स्थितौ मत्पतिं दर्शयंतामिति प्रार्थयामासेत्यर्थः ॥ १६ ॥ ऋषिमामंत्र्य ऋषिणा सह विचारं कृत्वेत्यर्थः ॥ १७ ॥ यक्ष्यमाणो यागं कुर्वन् ॥ १८ ॥ नातिप्रीतमना इव नातिप्रीतियुक्तमत्यंतप्रीतिरहितं मनो यस्य पुरुषस्य स इव स्थितः । न समासोऽयं ॥ १९ ॥ हे असति दुर्वृत्ते त्वयेदं किं चिकीर्षितं । प्रलंभितो वंचितः । कुतः । यद्यस्माज्जरया ग्रस्तत्वात् । स्त्रीणामसंमतं । जारं जरयत्युभयकुलमिति जारमुपपतिं ॥ २० ॥ हे अंब पुत्रिके इयं तव मतिः कथमन्यथा गताऽन्यथा बभूवेत्यर्थः । अन्यथेत्युक्तं विवृणोति ॥ असतामिति । त्वमसतां मार्गं गता । इदं त्वत्कर्म मत्कुलदूषणं । किं तत्कर्मेति तत्राह ॥ बिभर्षीति । अपत्रपा निर्लज्जा । यस्माज्जारं बिभर्षि तस्मात्पितुर्भर्तुश्च कुलं तमोंऽधकारयुक्तमधोऽधोलोकं नरकं नयसि प्रापयसीत्यर्थः ॥ २१ ॥ स्मयमाना मयि दूषणं नास्तीति गर्ववती । भृगुनंदनश्च्यवनः ॥ २२ ॥ वयोरूपयोरभिलंबनं प्राप्तिप्रकारं । परिषस्वजे आलिलिंगे । ततः शर्यातिः संतोषेण स्वगृहं ययौ ॥ २३ ॥ ग्रहं ग्रहीष्ये सोमस्येत्युक्तं तत्राह ॥ सोमेनेति । वीरः समर्थश्च्यवनः । सोमेन हविषा याजयन् । स्वार्थे णिच् । यजन्नित्यर्थः । ग्रहमाहुतिविशेषमग्रहीत् अदात् ॥ २४ ॥ शतमन्युरिंद्रः ॥ २५ ॥ ततः सवज्रेंद्रभुजस्तंभानंतरं सर्वे इंद्रादयोऽन्वजानन् अनुज्ञातवंतः । पूर्वं सोमग्रहाभावः कुत इत्यत आह ॥ भिषजाविति ॥ २६ ॥ सुकन्यास्थितिमुक्त्वा शर्यातिवंशमाह । शर्यातेर्ज्येष्ठपुत्रस्य वंशाभावात् । द्वितीयपुत्रस्य वंशमाह ॥ आनर्तादि ॥ २७ ॥ कुशस्थलीं द्वारकामास्थितस्तत्र स्थित इत्यर्थः । आनर्तादीन्विषयांस्तन्नामकदेशान् अभुंक्त अपालयत् । इयं कुशस्थली कालांतरे समुद्रे मग्नाऽभूत् । अतो द्वारवत्या न कृष्णकृतत्वप्रसिद्धिविरोधः ॥ २८ ॥ तस्य रेवतस्य ककुद्मी ज्येष्ठो यस्मिंस्तत् । रेवतो रेवतीं कन्यामिति क्वचित्पाठः । तत्र रेवतपुत्रो रेवतककुद्मीत्यर्थः ॥ अत एवास्य रेवत इति नामांतरमतो न विरोधः । विभुं ब्रह्माणं ॥ २९ ॥ अपावृतं

रेवतीं कस्मै वराय दास्यामीति स्वाभिप्रायं ॥ ३१ ॥ ते पुरुषाः कालेन निरुद्धा मृता इत्यर्थः । न केवलं त एव न संति किंतु तत्पुत्रादयोऽपि न संतीत्याह ॥ तत्पुत्रेति । गोत्राणि नामानि न शृण्महे न शुश्रुमः ॥ ३२ ॥ प्रतियातस्यागतस्य तवाश्राव्यं नरस्य श्रोतुमयोग्यं गानं मुहूर्तं शृण्वतः कालोऽभियातोऽतिक्रांत इत्यन्वयः कियानिति तत्राह ॥ त्रिनवेति । सप्तविंशन्महायुगैर्विकल्पितो विभक्त इत्यर्थः ॥ ३३ ॥ तर्हि किं करोमि । कन्याऽवश्यं दातव्या । इमां कस्मै दास्यामीति तत्राह ॥ तदिति । देवदेवस्य हरेरंशः शुक्लकेशांशवान् । मत्वर्थीयोऽच् प्रत्ययः ॥ यद्वा ॥ देवदेवस्यांशो यस्मिन्निति विग्रहः । भो राजन् ॥ ३४ ॥ तन्महिमानमाह ॥ भुव इति । अवतीर्णो बलभद्रत्वेनावतीर्णः ॥ अथवा ॥ यः कृष्णत्वेनावतीर्णस्तस्य । अग्रज इति शेषः ॥ ३५ ॥ पुण्यजनत्रासात् राक्षसभयात् । चतुर्दिक्ष्ववस्थितैर्भ्रातृभिस्त्यक्तं स्वपुरं निजपुरीमागतो रेवतस्य तदीयानां च बहुकालावस्थानं तपस्विनां तेषां स्वच्छंदमृत्युत्वाद्युज्यते ॥ तदुक्तं ॥ स्वेच्छया वरुणत्वं सः प्राप्तो नामिच्छया तनुः । तस्मिन्काले त्यज्यते हि बलवद्भिर्वधं विना । अतिसक्तास्तपाहीनाः कथंचिन्मृतिमाप्नुयुरिति ॥ ३६ ॥ अनवद्यांगीं सुंदरावयवां । राजा रेवतः ॥३७॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ ९—४ ॥

॥ हरिः ॐ ॥ उत्तराध्याये नाभागादंबरीषोऽभूदित्यादिना नवमस्य मनुपुत्रस्य नाभागस्य वंशं वक्ष्यंस्तन्माहिमानमाह ॥ नाभाग इति । ततस्तस्मात्पूर्वोक्तादिष्टपुत्रनाभागादन्यो नाभागाख्यमनुपुत्र आसीत् । कथं भूतः प्राज्ञस्त्रिकालदर्शी ब्रह्मचारिणं विवाहानभिमुखं गुरुकुले वसंतं यविष्ठं कनिष्ठं नाभागं कविं । आत्मज्ञानिनं नैष्ठिकोऽसाविति मत्वा विभागसमये विभागमप्रकल्प्यैव ज्येष्ठभ्रातरः सर्वदायं कुलपारंपर्येण प्राप्तं विभागयोगद्रव्यं व्यभजन् । स नाभागो गुरुकुलादागत्य भ्रातॄन्प्रत्याह ॥ १ ॥ नाभागो भ्रातॄन्प्रति किमाहेति तत्राह ॥ भ्रातर इति । हे भ्रातरो यूयं मह्यं किमभांक्त व्यभजत । कं भागं मदर्थं यूयं प्रकल्पितवंतः । नाभानेदिष्टं वै मानवं ब्रह्मचर्यं वसंतं भ्रातरो निरभंजत्सोऽब्रवीदेत्य किं मह्यं मा भांक्तेति ब्राह्मणवाक्यसूचनायाभांक्तेत्यादि पदप्रयोगः । भ्रातर उत्तरमाहुः ॥ भजेति । हे नाभाग तव पितरं वैवस्वतमनुं प्रति । अन गच्छ । अन चेष्टायामिति धातोः । ततः

पितरं भज। यदि तव विभागापेक्षा स्यात्तर्हि गत्वा तं प्रसाद्य विचारय। वयं चागत्य पृच्छाम इत्यर्थः। स नाभागो भ्रातृभिः सह गत्वा पितरमपृच्छन्। पृच्छन्किमिति तत्राह॥ किं म इति। हे तत तात। पितः मे आर्या ज्येष्ठा मयि प्रोषिते सति किं वस्त्वाभां-क्षुर्भागं चक्रुः। पिता प्राह॥ मा पुत्रकेति। हे पुत्रक। तदित्यव्ययं। तस्मिन्दायविभागे। माद्दथा आदरं मा कार्षीरिति॥ २॥ तर्हि मम जीवनोपायः क्व इति नाभागेन पृष्टः पिता तं प्रत्याह॥ इम इति। हे कवे सुमेधसः शोभनप्रज्ञा इमेऽङ्गिरसः सत्रमासते सत्रयागं कुर्वंति। ते ऋषयः षष्ठं षष्ठमहरुपेत्य तस्मिन्नहानि कर्तव्ये वैश्वदेवत्ये कर्माणि पठणीये सूक्ते च मुह्यंति भ्रांता भवंति॥३॥ त्वं माहात्मानस्तान्प्रति ज्ञातव्ये द्वे सूक्ते शंसय ब्रूहि। तेंऽङ्गिरसः स्वर्गं प्रति यंतो गच्छंतः संतः। आत्मनः। जात्यैकवचनं। आत्मनां सत्रपरिशेषितं स्वसत्रेऽवशिष्टं द्रव्यं॥ ४॥ ते तुभ्यं दास्यंति। कालक्षेपमंतरेण त्वं तानृषीन्प्रति गच्छेति। पिता प्राहेति शेषः। स नाभाग आत्मने पित्रा यथोक्तं तथा कृतवानित्यर्थः। तथेत्यादि शुकवाक्यं। सत्रपारिशेषितं सत्रपरिशिष्टं॥ ५॥ कृष्णदर्शनः कृष्णवर्णतया प्रतीयमानः कश्चित् लोकविलक्षणः पुरुषो रुद्रः। यज्ञशालाया उत्तरत उत्तरादिग्भागात्। अभ्येत्य सत्रपरिशेषितं द्रव्यं स्वीकरिष्यंतं तं नाभागं प्रत्युवाच। कथमिदं वास्तवं यज्ञशालालक्षणवास्तुभवं वसु द्रव्यं ममेति। वित्तं वस्तु वसु द्रव्यमित्याभिधानं॥ ६॥ तर्ह्यस्मत्तदैव ममेदं ऋषिभिर्दत्तमिति। मानवो नाभाग उवाच। पुनश्च रुद्र उवाच। हे मानव नौ आवयोरस्मिन्विवादे ते पितरि प्रश्नः स्यात्। त्वात्पितरं पृच्छेति यावत्। गत्वा तं पृष्ट्वा निश्चित्य सत्यं मां ब्रूही-त्युक्तः स नाभागः पितरं गतः। तथा पृष्टवानिति शेषः॥ ७॥ नाभागेन पृष्टः पिता प्राह॥ यज्ञेति। कचिद्दक्षाध्वरे ऋषयो यज्ञवास्तुगतं सर्वमुच्छिष्टमवशिष्टं रुद्राय भागं चक्रुः। हि यस्मात्सो देवो रुद्रः सर्वमवशिष्टं धनमर्हति॥ ८॥ नाभागस्तं रुद्रं प्रणम्याह। हे ईश वास्तुगतं तव किलेति मे पिता प्राह। तस्मादहं शिरसा प्रणम्य त्वां प्रसादये। क्षमस्वेति॥ ९॥ स रुद्रो नाभागं प्रत्याह॥ यत इति। यद्यस्मात्तव पिता सत्यलक्षणं धर्ममवदत्त्वं च सत्यं वदासि। तस्मान्मंत्रदृशो मंत्रद्रष्टुर्वैश्वदेवसूक्तं। दृष्टवत इति यावत्। ते तव सनातनं ब्रह्म तद्विषयज्ञानं। ज्ञायतेऽनेनेति ज्ञानं। शास्त्रं ददाम्युपादिशामि॥ १०॥ किंच मत्सत्र-परिवेषितं द्रव्यं यन्मया दत्तं त्वं गृहाणेत्युक्त्वोऽन्तर्हितस्तिरोभूत् ततस्तत्स्वीकृत्य गृहस्थाश्रमं लेभे इत्यवगंतव्यं। उत्तराध्यायेन

नाभागस्य वंशकथनात् ॥ ११ ॥ अस्याख्यानस्य मरणकाले फलमाह ॥ य एनदिति । संस्मरेद्भक्तिपूर्वकं ध्यायेदित्यर्थः कविस्तत्त्वज्ञानी मंत्रज्ञो ऋग्वेदतात्पर्यज्ञानी । आत्मनः परमात्मनो गतिं ज्ञानं च । आप्नोतीति शेषः ॥ १२ ॥ इति श्रीभागवतटिप्पण्यां पंचमोऽध्यायः ॥ ९—५ ॥ ॥

॥ हरिः ॐ ॥ नवमस्य वंशमाह ॥ नाभागादिति । क्वचिदपि । प्रतिहत इति शेषः । ब्रह्मशापोऽपि ब्राह्मणेन दुर्वाससा निर्मितः कृत्यानलोऽपि चक्रमतिहतश्चक्रेण सुदर्शननाम्ना प्रतिहतो निरस्तः सन्नास्पृशत् । यमिति शेषः । अतोऽसौ महाभागवतोऽत एव कृती । महापुण्यवांश्चेति यावत् । कोपजन्यत्वविशेषाद्ब्रह्मशाप इत्युक्तं ॥ १ ॥ तस्य श्रोतुमिच्छामि । चरितमिति शेषः । ब्रह्मदंडो दुर्वाससा प्रयुक्तः कृत्यानलो न प्राभून्न समर्थो बभूव ॥ २ ॥ प्रथमतस्तस्य विरक्तिमाह ॥ अंबरीष इति । पुंसामपि दुर्लभमपि मह्यादिकं तत्सर्वं स्वप्नसंमितं स्वप्नवदनित्यं मेनेत्यन्वयः । अव्ययां दीर्घकालीनां श्रियं कोशादि संपदं विभवं राजादिविभवं ॥ ३ ॥ एतदेव स्पष्टयति ॥ विद्वानिति । कथंभूतः ॥ विभवनिर्वाणं । हिरण्यादिसंपदां नाशं विद्वान् । जानन् यद्येन विभवेन पुमांस्तमो विशति मोहे मज्जतीत्यर्थः ॥ ४ ॥ पुनः कथंभूतः । परं भावमुत्कृष्टभक्तिं प्राप्तः । येन भावेनेदं विश्वं समस्तं सुवर्णादिकं लोष्ठसदृशं स्मृतं बभूव ॥ ५ ॥ भक्तिमेव सर्वेंद्रियाणां भगवत्परत्वकथनेन प्रपंचयति ॥ स वा इति त्रिभिः । वैकुंठो हरिः । अच्युतस्य सत्कथारूपाभ्युदयश्रवणे । श्रुतिं श्रोत्रं चकारेत्यस्य सर्वत्रानुषंगः ॥ ६ ॥ मुकुंदस्य लिंगानां शंखचक्रादीनामालयाश्चलाचलप्रतिमास्तद्दर्शने यद्वा मुकुंदलिंगानां वेंकटेशप्रतिमादीनामालयाः स्थानानि वेंकटेशादि क्षेत्राणीत्यर्थः । तेषां दृशौ नेत्रे । तद्भृत्यानां गात्रस्पर्शांगमर्दनादौ । अंगसंगमंगानां संगः संबंधो यस्य तत्त्वगिंद्रियं । इंद्रियाणां प्रकृतत्वात् । तत्पादसरोजसौरभश्रीमत्तुलस्यां भगवतः पादसरोजसौरभेण युक्तायां तुलस्यां तदर्पिते तस्मिन्निवेदितान्नादौ चकार ॥ ७ ॥ क्षेत्रपदानुसर्पणे क्षेत्रतीर्थमार्गानुगमने । उत्तमश्लोकस्य हरेर्जनानां श्रयतीति जनाश्रया तां रतिं चकार ॥ ८ ॥ आत्मनः स्वस्य कर्मकलापं कर्मसमूहं । अधियज्ञे यज्ञमधिकृत्य विद्यमानेऽधोक्षजे विदधत्समर्पयत् । भगवति सर्वात्मना सर्वप्रकारेण भावं भक्तिं च विदधत्कुर्वन् सन् तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितः सन् शशास ॥ ९ ॥ सरस्वतीं सरस्वत्या अभिस्रोतम-

भिमुखं । सप्तसु प्रथमा षट्सु द्वितीयेत्युक्तेः । यज्ञनिपुणैर्वसिष्ठादिऋत्विग्भिः कर्तृभिरुपाचिता संवर्धिता यज्ञस्यांगभूता दक्षिणा येषु तैरश्वमेधैः करणैरधियज्ञं यज्ञाधितारमीश्वरमीजे आराधयामासेत्यर्थः ॥ १० ॥ किंच यस्य सदस्यादयो गीर्वाणैः सह । तुल्यरूपा रूपयौवनवस्त्रादिभिः समानवेषा व्यदृश्यंत । न च देवानां निमेषाभावादेतेषां तद्भावाद्वैलक्षण्यमिति वाच्यं । यतोऽनिमिषाश्च व्यदृश्यंत । परमाश्चर्यदर्शनेन तेषां निमेषोपरमादिति भावः । यस्येत्यस्य स इत्थमिति चतुर्थेनान्वयः ॥ ११ ॥ यस्य मनुजैर्यदीयैर्मनुजैरपि स्वर्गोऽपि न प्रार्थितः । तस्य तु का कथा तत्र किं कारणमित्यत आह ॥ शृण्वद्भिरिति । अनेन मुकुंदचरितश्रवणादिभ्योऽधिकं स्वर्गसुखं न भवति । अतः स्वर्गो न प्रार्थित इत्युक्तं भवति ॥ १२ ॥ मुकुंदं हृदि पश्यतो यस्य । यस्येति षष्ठी तृतीयार्थे । येन समृद्धा अपि कामा नो वांछिताः । कथं भूताः । स्वराज्येन स्वरूपसुखेन परिभावितास्तिरस्कृताः । अस्य सुलभत्वेत्यन्येषां दुर्लभा इत्याह ॥ दुर्लभा इति ॥ १३ ॥ एवं भगवदाराधनपरस्य कामादित्यागो नैव चित्रमित्युपसंहरति ॥ स इति । स्वधर्मेण प्रजापालनलक्षणेन सर्वान्संगान्वित्तेषणादीन् ॥ १४ ॥ तदेव विशदयति ॥ गृहेष्विति । द्विपोत्तमा गजोत्तमाः । असन्मतिममंगलान्यनर्थकराणीति मतिं बुद्धिं चकार ॥ १९ ॥ एतादृशेऽबरीषे हरेरनुग्रहविशेषं कथयति ॥ तस्मा इति । भृत्याभिरक्षणं भक्तरक्षणं चक्रं तस्मै । अदादित्यन्वयः । प्रत्यनीकं शत्रुसैन्यं ॥ १६ ॥ तदेवं तस्य वैराग्यादिकं भक्तिं चोक्त्वा ब्रह्मदंडो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह ॥ आरिराधयिषुरित्यादिना । कृष्णमारिराधयिषुराराधनं कर्तुमिच्छुर्वीरो वरिष्ठो महिष्या भार्यया युक्तः सन् प्रतिपक्षं दिनत्रयव्रतं । कुर्वन्नपीति शेषः । सांवत्सरं संवत्सरसंबंधि । प्रतिसंवत्सरमेकस्मिन्मासे महोत्सवेन क्रियमाणमिति यावत् । द्वादशीव्रतं दशम्यादिदिनत्रयव्रतं । कार्तिके मासि शुक्लद्वादश्यां दधार । बहुकालं वक्ष्यमाणरीत्या महाभिषेकाद्युत्सवेन चकार । अयमाशयः । सर्वदा दिनत्रयव्रतं कुर्वन्नप्ययं जनो वर्षमध्ये एकस्मिन्मासि कार्तिके वा श्रावणे वोत्सवं कुर्यात् । तत्र मंटपनिर्माणं क्षेत्रविधानेन हरेः पूजां ब्राह्मणभोजनं स्वयं च पारणं कुर्यादिति विधिरिति । एतत्तु नारायणपंडिताचार्यैर्योगदीपिकायामुक्तमास्ति । नित्यं संप्रीतये विष्णोराचरन्वासरव्रतं । कार्तिके श्रावणे मासे माघे वा पूजयेद्धरिं । इत्यादिना चतुस्सप्टलेषु विस्तरेणाभिहितं । अनेन यावज्जीवं त्रिदिनात्मकैकादशीव्रतं

कुर्वन्नपि प्रतिसंवत्सरमुक्तमासेष्वन्यतरमासेषु संवत्सरव्रतांते एकादश्युद्यापनरूपहरिपूजारूपोत्सवं समाप्य पुनरारंभं कुर्यादित्युक्तं भवति ॥ तदुक्तं स्कांदपुराणे ॥ शृणुष्व नृपशार्दूल एकादश्या व्रतं शुभमित्युपक्रम्य पुरासीद्भगवान्विष्णुर्नारदाय यदुक्तवान्। तत्तेऽहं संप्रवक्ष्याम्युद्यापनविधिं शुभं । मार्गशीर्षादिमासेषु द्वादशीषु नरोत्तम। आदावंते तथा मध्ये व्रतस्योद्यापनं स्मृतं। उद्यापनं न कुर्याद्यः कुष्ठी चांधस्य जायते । तस्माद्युद्यापनं कुर्याद्यथा विभवमादरादिति ॥ १७ ॥ तत्कृतं पूजाविशेषं प्रपंचयति ॥ व्रतांत इति । त्रिरात्रं त्रिदिनात्मकं व्रतं । सर्वदा कुर्वन्निति शेषः । कदाचित्कस्मिंश्चित्संवत्सरे । संवत्सरव्रतांते कार्तिके शुक्लपक्षे प्रबोधिन्यां समुपोषितः । द्वादश्यां कालिंद्यां यमुनायां स्नातः सन्मधुवने हरिमर्चयेत् । अडभावः छांदसः ॥१८॥ महाभिषेकविधिना अथात ऐंद्रो महाभिषेक इति श्रुत्युक्तसाम्राज्याभिषेकविधिनेत्यर्थः । अभिषिच्य सर्वोपस्करसंपदा सर्वसाधनसंपदा । वराकल्पैरुत्तमाभरणैर्गंधमाल्यार्हणादिभिर्माल्यानि पुष्पाणि पुष्पदामानि च । माल्यं पुष्पे पुष्पदामामित्यभिधानं । अर्हण शब्देन धूपदीपनैवेद्यादिसंग्रहः । आदि पदेन गीतवाद्यादिसंग्रहः ॥ १९ ॥ एतैस्तद्व्रतांतरभावेन श्रीहरिनिष्ठमनस्कत्वेन केशवं पूजयामास। सिद्धार्थान्पूजानपेक्षानपि ब्राह्मणान् भक्तितः पूजयामासेत्यन्वयः ॥२०॥ रुग्मविषाणीनां स्वर्णशृंगाणां रूप्यांघ्रीणां रूप्यखुरीणां । पयः शीलादिसंपदो यासां तासां गवां ॥२१॥ षट्न्यर्बुदानि। शतकोसंख्या न्यर्बुदमित्युच्यते। तादृशेषु षट्न्यर्बुदानीत्यर्थः। न्यर्बुदानि षट् । षट् कोटिरिति कश्चिद्व्याख्यातवान्। स्वस्वगृहेषु स्थितेभ्यः प्राहिणोत्प्रेषयामास। षट् रसोपेतं ॥२२॥ तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षोऽभूत् । आनर्च्यार्चितवान् । अर्हणान्यर्घ्यादीनि ॥ २३ ॥ अभ्यवहाराय भोजनाय । पादमूलमुपागतो नमस्कुर्वन् ॥ २४ ॥ तद्याञ्चां तत्प्रार्थनारूपं वचनं श्रुत्वा तत्प्रतिनंद्य । आवश्यकं नित्यकर्म कर्तुं बृहद्गुणपूर्णं ब्रह्म ॥२५॥ धर्मसंकटे धर्महानौ प्राप्तायां सत्यां तत्तादृशं धर्मसूक्ष्मं चिंतयामास ॥ २६ ॥ धर्मसंकटमेवाह ॥ ब्राह्मणेति । आमंत्रितब्राह्मणातिक्रमदोषः श्रीहरिप्रियद्वादशीभोजनाकरणे दोषो व्रतवैगुण्यलक्षणो यत्कृत्वा मे साधु भूयादुभयदोषपरिहारेण श्रेयः स्यात् । उभयोरेकातिक्रमलक्षणोऽधर्मो वा मां न स्पृशेदिति । तद्धर्मसूक्ष्मं चिंतयामासेत्यन्वयः ॥ २७ ॥ एवं द्विजैः सह विचार्य निश्चिनोति ॥ अंभसेति । केवलेनान्नरहितेन व्रतपारणं तत्समाप्तिं । तत्र किं प्रमाणमिति तत्राह ॥ प्राहुरिति । हे विप्राः । अप

भक्षणमंभसां पारणमशितं भुक्तं । पूर्वव्रतपारणार्थं भुक्तं भवतीत्याहुः । वेदा इति शेषः । नाशितमिति नसमासः ॥ २८ ॥ इति विचार्योपः प्राश्याच्युतं चिंतयन् । अथाऽपि ब्राह्मणः कुपितश्चेत्त्वमेव मम शरणमित्यच्युतं ध्यायन्नित्यर्थः । प्रत्याचष्ट प्रत्यैक्षत ॥ २९ ॥ अभिच्छंदितः । उत्थानादिनेति शेषः । धिया ज्ञानदृष्ट्या ॥ ३० ॥ मन्युना क्रोधेन भृकुट्या भ्रूविभ्रमेण कुटिलाननेन बुभुक्षितः क्षुधितः ॥ ३१ ॥ अभक्तस्यातिथौ भक्तिशून्यस्य । विष्णुरहमिष्टेत्याभिमानवतः ॥ ३२ ॥ आतिथ्ये निमंत्र्य । आयांतमित्यनुषंगः । अयं ममातिथ्यं करिष्यतीत्याशयाऽऽगतमित्यर्थः । अदत्वा । अन्नमिति शेषः ॥ ३३ ॥ जटामुत्कृत्य । स्वशिरस इति शेषः । तस्मा अंबरीषाय । तद्धननार्थमित्यर्थः । कृत्यां भूतविशेषं ॥ ३४ ॥ यदा भुवं वेपयंतीं । पदास्त्वस्थानात् ॥ ३५ ॥ पुरुषेण हरिणाऽऽदिष्टं चक्रं । क्रुद्धाहिं पावको दावाग्निरिव ॥ ३६ ॥ कृत्यां दग्ध्वा स्वात्मानमभिद्रवत् । तच्चक्रं । स्वायासं स्वप्रयत्नं च निष्फलमुद्वीक्ष्य प्राणपरीप्सया स्वजीवनरक्षणेच्छया ॥ ३७ ॥ उद्भूताः शिखा ज्वाला यस्य स दावाग्निर्यथाऽहिं प्रतिधावति । तथा तं चक्रं प्रत्यन्वधावदित्यन्वयः । अनुषक्तं पृष्ठतः संलग्नं । मेरोर्गुहां विविक्षुः प्रवेष्टुमिच्छुः प्रससाराधावत् ॥ ३८ ॥ चक्रानुयातो दुर्वासा एतानि स्थानानि बभ्रामेत्याह ॥ दिश इत्यादिना । विवरान्पातालान्गतः सन् । यतो यतो यत्र यत्र धावति । दुःप्रसहं सोढुमशक्यं ॥ ३९ ॥ अलब्धो नाथो रक्षको येन सः कुतश्चित्पुरुषादरणं शरणं । रक्षणमिति यावत् । एषमाण इच्छन्सन् । विरिंचं समगात् । ततस्तं प्रार्थयामासेति शेषः । अजितस्य हरेस्तेजोरूपाच्चक्रात् । यद्वा । केनाप्यजितस्य सुदर्शनचक्रस्य तेजसो दाहात् ॥ ४० ॥ ब्रह्मणा किमवादीदिति तत्राह ॥ स्थानमिति । द्विपरार्धसंज्ञे ममायुःपूर्तिलक्षणे हरिक्रीडावसाने । प्रलय इति यावत् । सह विश्वं चराचरप्रपंचसहितं । एतन्मदीयं स्थानं संदिधक्षोः संदग्धुमिच्छोर्हरेर्भविष्यत्कर्म पश्यति को जानाति ॥४१॥ प्रजेशः कश्यपो भूतेशो यक्षादिः भूतपतिः कुबेरः सर्वे वयं । यन्नियमं यदाज्ञां शिरसा वहामः । तद्भक्तद्रोहिणं त्वां रक्षितुं । न समर्था इत्यध्याहारेण संबंधः । कीदृशा वयं । मूर्ध्ना । पादमूलमिति शेषः । शरणं प्रपन्नाः । कथं भूतं नियमं । लोकहितमर्पितं । सप्तसु प्रथमेति सूत्रात् । लोकहिताय स्वेनैव निरूपितमित्यर्थः ॥ ४२ ॥ प्रत्याख्यातो निराकृतः । विष्णुचक्रेण तापितः संतापितः ॥ ४३ ॥ शंकरोऽपि त्वां शक्तो

वक्तीत्याह ॥ वयमिति । हे तात । वयं न प्रभवाम । सुदर्शनं निवारयितुं न समर्थाः । कुतः । यस्माद्भूम्नो गुणपूर्णाद्धरेरीदृशा वर्तमाना ब्रह्मांडसदृशा अन्येऽपि भूतभविष्यतोऽजजीवकोशा अजस्य चतुर्मुखस्य जीवकोशा जीवाख्यधननिधानस्थानभूतब्रह्मांडाख्यकोशाः सृष्टिकाले भवंति प्रलयकाले नश्यंति । यत्र ब्रह्मांडकोशेषु भ्रमामस्ते ब्रह्मांडकोशा यस्मिन्परे परमात्मनि । संतीति शेषः । परोरिपरमात्मनोरित्यभिधानं । तमेव शरणं याहीति वक्ष्यमाणेनान्वयः ॥ ४४ ॥ भवान्सर्वपूज्योऽजोऽपि ब्रह्माऽपि । अपां तरतमस्तन्नामा मुनिरहमादयः सर्वे यस्य हरेर्मायामिच्छां किं विषयामिति न विदामेत्यर्थः ॥ ४५ ॥ पारदर्शिनो वेदशास्त्रपारंगताः । सर्वज्ञा अपीति यावत् । मायया प्रकृत्याऽऽवृता बद्धाः ॥ ४६ ॥ शस्त्रं चक्रं दुर्विषहं सोढुमशक्यं ॥ ४७ ॥ विकुंठाख्यं वैकुंठाख्यं । यतो यस्मिन्वैकुंठेऽध्यास्ते वसति ॥ ४८ ॥ अजित शस्त्रं चक्रं तस्य वन्हिना । सवेपथुः सकंपः सतामीप्सित इष्टदः । हे विश्वभावन विश्वोत्पादक ॥ ४९ ॥ अपराधं निवेदयन्प्रार्थयते ॥ अजानतेति । अघं पापरूपाय राज्ञेऽघं दुःखं । तद्भक्तद्रोहे प्रायश्चित्तं न पश्यामीति चेत्तत्राह ॥ यन्नाम्नीति । तस्य तव किमशक्यमिति भावः ॥ ५० ॥ अस्वतंत्र इव न त्वस्वतंत्रः । ग्रस्तहृदयो वशीकृतांतःकरणः ॥ ५१ ॥ ग्रस्तहृदयत्वं नाम किमित्यतस्तद्विवृणोति ॥ नाहमिति । नाशासे नेच्छामि । आत्यंतिकीमत्यंतप्रीतिविषयां ॥ ५२ ॥ इमं लोकं परं स्वर्गलोकं च हित्वेत्यर्थः ॥ ५३ ॥ तदत्यागे भक्त्या वशीकरणमेव कारणं नान्यदित्याह ॥ मयीति । निबद्धहृदया एकाग्रचित्ताः ॥ ५४ ॥ इदं चात्यागे कारणमित्याह ॥ मत्सेवयेति । प्रदिष्टं चादिष्टं । मया प्राप्तमपीति यावत् । कालेन विप्लुतं नष्टं । स्वर्गादि नेच्छंतीति कुतः किं वक्तव्यमित्यर्थः ॥ ५५ ॥ इतोऽपि मदन्यापेक्षा तेषां नास्तीत्याशयेनाह ॥ साधव इति । साधवो ज्ञानिनो मह्यं मम हृदयं प्रियाः । तु शब्दो हेतौ । साधवो मम हृदयं । अहं साधूनां हृदयमिति यस्मात्तस्मात्ते मदन्यं प्रियं न जानंति । अहमपि तेभ्यः साधुभ्यो मनागप्यल्पमपि प्रियमन्यं न जानामीत्यन्वयः ॥ ५६ ॥ प्रकृते किमायातमित्यत आह ॥ उपायमिति । आत्मनस्तवैवाभिचारो हिंसा यतोऽभूत्तमेव शरणं यातु । अथवा आत्मना त्वया कृतोऽभिचारः कृत्याप्रयोगो यतो यस्मै कृतस्तं ॥ ५७ ॥ तस्मै प्रयुक्तं स्वात्मानं कथं बाधत इति तत्राह ॥ साधुष्विति । प्रहितं प्रत्युक्तं । क्षुद्रोपलक्षणं तेजः प्रहर्तुः प्रयोक्तुः । तपोविद्यासंपन्नस्य मम

कथमनर्थः समजनीति मा स्म विस्मयं मा कार्षीरित्याह ॥ तप इति ॥ ५८ ॥ दुर्विनीतस्याविनीतस्य परेषामन्यथा कर्तुः पुरुषस्यान्यथा कल्प्यते । इत्यनुषंगः नाभागतनयमंबरीषं ॥ ५९ ॥ शांतिस्तापशांतिः ॥ ६० ॥ अंबरीषं प्रत्युपावृत्य प्रत्यावृत्य ॥ ६१ ॥ अस्तावीत्स्तुतिं चकार । अस्त्रं चक्रायुधं ॥ ६२ ॥ चक्रं चक्रांतर्यामिणं भगवंतं भक्त्युद्रेकात्संकलय्य स्तौति ॥ त्वमग्निरित्यादिना । अग्न्यादयः सर्वे त्वदधीनसत्तादिमंत इत्यर्थः। यदधीना यस्य सत्ता तत्तदित्येव भण्यत इत्युक्तेः । त्वच्छक्त्यैव त्वमग्न्यादयः स्व स्वकार्यं कुर्वंतीति भावः । तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः । ज्योतिषां नक्षत्राणां पतिः सोमस्त्वं । मात्राः शब्दादय इंद्रियाणि श्रोत्रादीनि ॥ ६३ ॥ सहस्राण्यराणि दलानि यस्य हे सहस्रार । विप्राय दुर्वाससे । इडस्पते पृथ्वीपते ॥ ६४ ॥ ब्राह्मणरक्षणं तव युक्तमेवेत्याह ॥ त्वं धर्म इति । सर्वात्मा सर्वस्वामी । पौरुषं पुरुषस्य हरेः संबंधि परं तेजः परमं बलं त्वमेव । भगवत्सामर्थ्याभिव्यंजकमित्यर्थः । तेजो बले प्रभावेचेत्यभिधानं ॥ ६५ ॥ सुनाभ सुदर्शन । अखिलधर्माणां सेतुस्थानीयाय धर्मरक्षकायेत्यर्थः । अधर्मशीलानामसुराणां धूमकेतवे दाहकायेत्यर्थः । त्रैलोक्यं गोपायतीति तथा तस्मै । गुप रक्षण इति धातोः । विशुद्धमत्युज्वलं वर्चस्तेजो यस्य तस्मै ॥ ६६ ॥ अनंजनेन निरंजनेन हरिणा यदा विसृष्टः प्रेषितस्तदोर्जिता दैत्यदानवा यस्मिंस्तद्बलं प्रविश्य प्रधने युद्धे तेषां बाव्हादीन्वृश्चणन् छिंदान्विराजसे । शिरोधरं कंठः ॥ ६७ ॥ त्वं तेजसा तमः संहृतं । महात्मनां सूर्यादीनां प्रकाशो दृशश्च संहृतः स्तंभितः । कथं भूतेन । अधर्ममयेन दैदीप्यमानेनेत्यर्थः । धृ क्षरणदीप्त्योरिति धातोः । गिरां पते ऋगादि वेदप्रतिपाद्य । परं चापरंचेति द्वंद्वः । ज्ञानवत्त्वेन । परं चेतनं तद्राहितत्वेनावरमचेतनं । चेतनाचेतनात्मकमित्यर्थः । सदसत्स्थूलसूक्ष्मरूपं । एतदिदं जगत्त्वद्रूपं त्वत्प्रातिमा ॥ ६८ ॥ किंच भगवन्नियुक्तेन त्वया खलानामेव दंडः कार्यः साधवस्तु रक्षणीया अतो विप्ररक्षणेनास्माननुग्रहाणेत्याह ॥ सत्त्वामिति । हे जगत्त्राण । गदाभृता निरूपितो नियुक्तः सर्वसहो भक्तापराधसहनशीलो अस्मत्कुलदैवहेतवे । भाग्यलाभाय विप्राय । भद्रं विधेहि तदेव ममानुग्रहः ॥ ६० ॥ सर्वसुकृतार्पणेन विप्ररक्षां प्रार्थयते ॥ यद्यस्तीति द्वाभ्यां । विप्रो दैवं दैवता यस्मिन् । विज्वरः संतापरहितः ॥ ७० ॥ सर्वभूतात्मभावेन सर्वभूतानामयमात्मा स्वामी । सर्वोत्कृष्ट इति भावेन भक्त्या । यद्येकः प्रधानो

भगवान् प्रीतः ॥ ७१ ॥ संस्तुवतः सतः प्रार्थयतः सत इत्यपि ज्ञेयं । राजयाञ्चया राजस्तुत्या चेत्यपि ज्ञेयं । अशाम्यदित्यन्वयः । सर्वतो दिक्षु विप्रं प्रदहत् ॥ ७२ ॥ अस्त्राग्निः सुदर्शनाग्निः ॥ ७३ ॥ समीहसे इच्छसि ॥ ७४ ॥ ममानिष्टकरणं तवासाध्यं न भवति समर्थत्वादित्याह ॥ दुष्करमिति । साधूनां क्षमया साधूनां स्वतः समर्थानामित्यर्थः । मदागमनपर्यंतमन्यैर्दुस्त्यजाहारस्य त्यागस्य कृतत्वात्त्वन्माहात्म्यं किं वर्णनीयमित्याशयेनाह ॥ दुस्त्यजं वेति । महात्मानां महानात्मा मनो येषां ते मनोजयवतामित्यर्थः । संग्रहीतो वशीकृतः ॥ ७५ ॥ पुमान्भक्तिरहितोऽपि । तीर्थपदस्तीर्थपादस्य । दासानां भक्तानां किं पापमवशिष्यते । न किमपीत्यर्थः ॥ ७६ ॥ अतिकरुणात्मनाऽतिकरुणवता । अघमपराधं ॥ ७७ ॥ राजेत्यादि श्लोकद्वयं शुकोक्तिः ॥ ७८ ॥ अशित्वा भुक्त्वा । आतिथ्यमातिथिप्रियमन्नं । सार्वकामिकं सर्वेषां कामिकमपेक्षाविषयं । जनस्य राजयोगित्वादिति भावः । तृप्तात्मा संतुष्टमना दुर्वासाः ७९ ॥ संतोषोद्रेकात्पुनरपि वदति ॥ प्रीतोऽस्मीति श्लोकद्वयेन । आत्ममेधसा परमात्मज्ञानेन त्वमग्निरित्यादिना सुदर्शनस्तुतिकरणेन तज्ज्ञानस्याभिव्यक्तत्वादिति भावः ॥ ८० ॥ स्वर्गस्त्रियः । अवदातं शुभ्रं । शुद्धं गायंति । भूरियं तत्रस्थोजनः ॥ ८१ ॥ विहायसाऽऽकाशमार्गेण । अहैतुकं हेतुकादि दुर्जनैरप्राप्यं ॥ ८२ ॥ तस्य धैर्यातिशयमाह ॥ संवत्सर इति । इतो गतो मुनिर्यावत्तं नृपं नागतस्तावत्संवत्सरोऽत्यगादतिक्रांतोऽभूत् । मुनिदर्शनाकांक्षो राजा च तावदब्भक्षोऽभूत् ॥ ८३ ॥ उपभोगं भोजनं तेनातिपवित्रं । अग्निमिति शेषः । आहरन् भुंजानो बुद्ध्या स्ववीर्यं च धैर्यादिलक्षणं । परानुभावं भगवतः प्रभावं मेने ॥ ८४ ॥ एवमंबरीषमुपकर्ण्य तत्कीर्तिं विष्णुं ब्रह्मादयो व्यंजयामासुरित्याह ॥ एवं विधानेकगुण इति । एवं विधा अनेका गुणा यस्य सः राजांऽबरीषः । परमात्मनि परश्चासावात्मा चेति कर्मधारयस्तास्मिन्सर्वोत्तमे चेतनं । अथवा । सर्वेषां ब्रह्मादीनामात्मनि नियामके ब्रह्मणि पूर्णगुणे वासुदेवे श्रीकृष्णे । यद्वा । मुक्तिप्रदे वासुदेवनामके ब्रह्मणि परब्रह्मणि ॥ तदुक्तं तात्पर्यनिर्णये ॥ इत्थं विचिंत्य परमः स तु वासुदेवनामा बभूव निजमुक्तिप्रदातेति । समर्पितैरिति शेषः। ब्रह्मार्पणं ब्रह्महविरित्याद्युक्तप्रकारेण समर्पितैः क्रियाकलापैरश्वमेधादिक्रियासंदर्भैर्निमित्तैस्तां भक्तिं समुवाह सम्यक् प्राप । यया भक्त्या विरिंचादिं विरिंचरुद्रेंद्रादिमधश्चकार ब्रह्माद्यपेक्षयाऽधिकभक्तिमान् । इत्यंबरीषराजकीर्तिं विष्णुब्रह्मादयश्च ।

व्यंजयामासुरिति शेषः । स शरणागतदुर्वाससो रक्षणाधिकरणेन ब्रह्माद्यपेक्षयांऽबरीषादीनां भक्तिरधिकेति कीर्तिं प्रख्यापयामासुरिति भावः । अत्र प्रमेयविशेषस्तु ब्रह्मादि भक्तिकोव्यंशादित्यादितात्पर्येणावगंतव्यः ॥ ८५ ॥ दधद्दधान । ध्वस्तः सत्त्वादिगुणजन्यो रागादिः प्रवाहो यस्य ॥ ८६ ॥ आख्यानफलमाह ॥ इतीति । आख्यानं माहात्म्यं ॥ ८७ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ९—६ ॥ ॥

॥ हरिः ॐ ॥ मनुपौत्रस्यांबरीषस्य वंशमाह ॥ विरूप इति । इति शब्दोऽध्याहारार्थः । तंतवे संतानाय । अंगिरो नामा मुनी रथीतरेणार्थितः सन् । श्रीतरभार्यायां जनयामासेति ज्ञेयं । येंऽगिरसा जनितास्ते रथीतरस्य क्षेत्रप्रसूतत्वेन रथीतरगोत्राः संतोंऽगिरसो वीर्येण प्रसूतत्वादंगिरसश्च स्मृताः ॥ १ ॥ २ ॥ रथीतराणां रथीतरसंततिजातानां प्रवराः प्रमुखा अतः क्षत्रोपेताः क्षत्रियत्वोपेता ब्राह्मणा इत्यर्थः । उभयधर्मोपेता इति यावत् ॥ ३ ॥ तदेवं मनोर्दशपुत्रादिषु वृषध्रः कविश्च विरक्तत्वान्न वंशप्रवर्तकौ । करूशादीनां सप्तानां वंशास्तारतम्यक्रमेणोक्ताः । इदानीमतिविततमिक्ष्वाकोर्वंशमाह ॥ क्षुवतास्त्वित्यादिना । यावत्सोमवंशप्रस्तावः क्षुतं कुर्वतो मनोर्घ्राणत इक्ष्वाकुर्जज्ञे । यद्यपि मनोः सकाशाच्छ्रद्धायां नवैव पुत्रा जाताः । तथाऽपि श्रद्धायां जनयामास दशपुत्रान् स आत्मवानिति पूर्वोक्तं छत्रिन्यायेनेति द्रष्टव्यं । बहुत्वाभिप्रायेणेत्यप्याहुः । तस्येक्ष्वाकोः पुत्रशतमभूत् । तत्र विकुक्ष्यादयस्त्रयो ज्येष्ठाः ॥ ४ ॥ आर्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोरित्युक्तार्यावर्तदेशे पुरस्तान्मंडलविभागे पंचविंशतिनृपा अभूवन् । हे नृप तथैव पश्चाच्च । पंचविंशतिनृपा अभूवन् । मध्ये तु ज्येष्ठास्त्रयोऽपरांऽवशिष्टाः सप्तचत्वारिंशन्नृपाः । अन्यतोऽन्यत्र दक्षिणोत्तरादिषु नृपा अभूवन् ॥ ५ ॥ विकुक्षिरेव शशासेति विश्रुत इति वक्ष्यति । तत्र हेतुमाह ॥ स एकदेत्यादिना । अष्टकाश्राद्धो षण्णवतीश्राद्धांतर्भूत इत्यर्थः । मेध्यं पवित्रं ॥ ६ ॥ बुभुक्षितः क्षुधितः क्रियार्हकान् । आददभक्षयत् । अद्र भक्षण इति धातोः । अपस्मृतिर्विवेकरहितः ॥ ७ ॥ तद्गुरुर्वसिष्ठः प्रोक्षणाय श्राद्धोपचितसंस्काराय । अकर्मकं कर्मायोग्यं ॥ ८ ॥ तत्कर्म मांसभक्षणरूपं कर्म । त्यक्तविधिमाचारशून्यं ॥ ९ ॥ तत इक्ष्वाकुणा किमकारीत्यत आह ॥ स इति । इक्ष्वाकुर्नाम्ना जापकेण विप्रेण ऋषिणा । यद्वा । जापकेन वसिष्ठेन संवादं तत्त्वविषयं समाचरन् । तेन संवादजनित-

ज्ञानेन यत्परं ब्रह्म तदवापेत्यन्वयः ॥ १० ॥ पुनर्विकुक्षिणा किमकारीति तत्राह ॥ पितरीति । पितरीक्ष्वाकुनृपौ मृते सति । अभ्येत्य। देशांतरादिति शेषः ॥ ११ ॥ तस्य विकुक्षसुतोऽभूत् । स च पुरंजय इत्युक्त इंद्रवाह इतीरितः । ककुत्स्थ इति चाप्युक्तः । यैः कर्मभिः पुरंजय इंद्रवाहः ककुत्स्थ इति नामानि प्राप्तानि । तानि कर्माणि शृणु ॥ १२ ॥ तान्येवाह ॥ कृतांत इत्यादिना । कृतयुगस्य अंत इत्यर्थः । वीरः पुरंजयः पार्ष्णिग्राहः सहायो वृत्तो देवैः सहाय्यत्वेन स्वीकृत इत्यर्थः ॥ १३ ॥ इंद्रो विष्णोर्वचनान्महावृषो बभूवेत्यन्वयः । इंद्रो यदि मम वाहनं स्यात्तर्हि दैत्यान्हनिष्यामीति राज्ञा वाहनत्वेन प्रार्थितः सन् लज्जया तदनंगीकुर्वन्विष्णोर्वचनात्पुरंजनस्य वाहनत्वाय महावृषो बभूवेति भावः ॥ १४ ॥ सः पुरंजयः शितान्निशितान्विशिखान् शरान् । तं पृथं ककुदि स्थितो वृषभस्योर्ध्वभूतो भुजः ककुदित्युच्यते । तत्रोपविष्ट इत्यर्थः ॥ १५ ॥ परमात्मनः पुरुषस्य परमपुरुषस्य विष्णोस्तेजसा व्यापितो हरिस्तस्य बलपूर्त्यर्थं व्यंजयामासेत्यर्थः। न्यरुणद्रुरोध ॥१६॥ भल्लैर्बाणविशेषैः। यमस्य लोकामिति शेषः। तान्। अनयादित्यन्वयः ॥१७॥ तस्य पुरंजयस्येषूणां पातः संपातो धारास्तस्य पातस्याभिमुखं प्रत्यवस्थानं विसृज्य । युगांताग्निं प्रलयाग्निं ॥१८॥ पुरं जित्वा । सश्रीकं गजतुरगादिश्रीसहितं सर्वधनं प्रत्ययच्छद्दत्तवान् । स राजर्षिर्दैत्यपुरं जयात्पुरंजय इति नाम्नाऽऽहूतः । वृषरूपेंद्रस्य वाहनत्वादिंद्रवाह इति नाम्नाहूतः। वृषभककुदिस्थितत्वात्ककुत्स्थ इति नाम्नाहूतः ॥ १९ ॥ अनेन तन्नामकस्ततः पृथोर्विश्वगंधिस्ततो विश्वगंधेश्चंडः । तत्सुतश्चंडसुतो युवनाश्वः ॥ २० ॥ शावस्तिस्तत्सुतो युवनाश्वसुतो येन शावस्तिना ॥२१॥ सः कुवलयाश्वक एव धुंधुर्धुंधुनामेत्यर्थः । असुरं हतवान् ॥ २२ ॥ तत्सुताः कुवलयाश्वकसुता धुंधोर्मुखाग्निना प्रज्वलिता दग्धा इत्यर्थः । इतीत्यस्य त्रय एवावशेषिता इत्यन्वयः ॥ २३ ॥ अथ तस्माद्बर्हिणाश्वात्कृशाश्वः । अस्य कृशाश्वस्य ॥२५॥ भार्याशतेन निर्विण्णः सन् । वनं गत इति पूर्वेण संबंधः । अस्य पुत्रोत्पत्त्यर्थमिति शेषः । ऐंद्रीमिंद्रदैवत्यामिष्टिं वर्तयांचक्रुः प्रवर्तयामासुः ॥ २६ ॥ राजा युवनाश्वो तर्षित उदन्या युतः । पत्न्ये देयं मंत्रपूतं जलं स्वयं पपौ ॥ २७ ॥ निशाम्य दृष्ट्वा । व्युदकं जलरहितं । पुंसवनं पुत्रदं ॥ २८ ॥ ईश्वरप्रहितेन दैव प्रेरितेन । दैवबलमेव मुख्यं बलं पुरुषबलं तु न किंचन न किंचिदिति वदंत ईश्वराय नमश्चक्रुरित्यन्वयः ॥ २९ ॥ जजानाजनि ॥ ३० ॥ स्तन्यः स्तनपानेच्छुरयं बालो भृशं रोरूयते पुनः पुनरत्यंतं

रोदनं करोति । कं धास्यति कस्य स्त्रीजनस्य स्तनं धास्यति पास्यति । धेट् पान इति धातोः । इति दुःखितैर्ऋषिभिरुक्ते सति तस्यामिष्टयामाराधित इंद्रः । हे वत्स मा रोदी रोदनं मा कार्षीरित्युक्त्वा । मां धावत पाताभावे पानं कुर्विति ब्रुवन् । देशिनीं तर्जनीमदात् । अतो मांधातेति नामाभूत् ॥ ३१ ॥ तस्य मांधातुः पिता युवनाश्वो भिन्नकुक्षिरपि न ममार । किं त्वथ कालांतरे । तत्र यज्ञसदने तपसा सिद्धिमन्वगान्ममारेत्यर्थः ॥ ३२ ॥ मांधातुर्महिमानमाह ॥ त्रसदस्युरित्यादिना । हे अंग राजन् ॥ ३३ ॥ अच्युततेजसाऽच्युतस्य प्रतिष्ठाविभूतिरूपस्य तेजसा प्रकाशेनाच्युतं च तत्तेजश्च तेनेति वा ॥ ३४ ॥ यज्ञं यज्ञनामकं श्रीहरिं । सर्वदेवमयं सर्वदेवप्रधानं । सर्वात्मकं मंत्रतंत्रद्रव्यादिसर्वपदार्थव्यापिनं ॥ ३५ ॥ तस्यानुसंधानप्रकारमाह ॥ द्रव्यमिति । विधिर्विधानं । यज्ञो यज्ञपुरुषो यदात्मकं यदधीनसत्तात्मकं । इत्यनुसंधानं कृतवानिति शेषः ॥ ३६ ॥ यावत्सूर्य उदेति यावति प्रदेशे सूर्यप्रकाशो भवति । चंद्रः प्रतितिष्ठति । प्रकाशेनेति शेषः ॥ ३७ ॥ बिंदुमत्यां भार्यायां नृपो मांधाताऽधाज्जनयामास ॥ ३८ ॥ तेषां स्वसारे मांधातुः कन्याः ॥ ३९ ॥ ननु महातापसस्य सौभरेः कुतो विवाहप्रसंगः । कथं वा जराझर्झरं राजकन्या वव्रिर इति तत्राह ॥ यमुनांतर्जल इत्यादिना । निर्वृतिं परमानंदं ॥ ४० ॥ नृपं मांधातारं । सोऽपि मांधाता स्वयंवरे कामं कन्यां गृह्यतामित्याह ॥ सोऽपीति ॥ ४१ ॥ सः सौभरिरयं मुनिः स्त्रीणामसंमतो जरठं वृद्धमेजत्कं एजत्कंपमानं कं शिरो यस्य स तथा । वलीपलितो वलीभिर्लंबमानचर्मभिर्युक्तः पलितः शुक्लकेशयुक्तश्चात एव स्त्रीणामप्रियः । इति विचिंत्यानेनाहं प्रत्युदाहृतो निराकृतः स्वयंवरे गृह्यतामिति प्रोक्तोऽतस्तथाऽऽत्मानं साधयिष्य इत्युत्तरेणान्वयः ॥ ४२ ॥ यथेत्यस्य प्रपंचः । सुरस्त्रीणामपीप्सितामितीति व्यवसितः । तथा कृतवांश्चेत्यपि ग्राह्यं ॥ ४३ ॥ क्षत्त्रा द्वारपालकेन कन्यांऽतःपुरं प्रवेशितः । पंचाशता पंचाशत्संख्याकाभिः राजकन्याभिः स एक एव वरो वृतः। स्वीकृतोऽभूदिति शेषः ॥४४॥ भूयान् बहुलः कलिः कलहोऽभूत् । सौहृदं सुहृद्भावमपोह्य परित्यज्य ॥ ४५ ॥ तस्य गार्हस्थ्यं वर्णयति ॥ स बव्हृच इत्यादिना । बव्हृच इति मंत्रसामर्थ्यमुक्तं । ऋग्मंत्रद्रष्टा सः सौभरिस्ताभिः सह रेमे इत्युत्तरेणान्वयः । क्व रेमे । आवरणीयं यत्तपस्तस्य श्रिया संपदा । तपःसामर्थ्येनेति यावत् । अनर्घ्याः परिच्छदा येषु तेषु गृहेषु । तथा नानाविधेषूपवनेषु चामलान्यंभसि येषु तेषु सरःसु च ।

सौगंधिकानां कल्हारपुष्पाणां काननेषु च रेमे ॥ ४६ ॥ कथं भूतषु गृहादिषु । स्वलंकृताः स्त्रियः पुरुषाश्च येषु । पुनः कथं भूतेषु । अनुगायंतो द्विजः पक्षिणश्च भृंगाश्च बंदिनश्च येषु । कथं भूतः सौभरिः । महार्हशय्यादिभिः । उपलक्षित इति शेषः । रेमे इत्युपलक्षणं । गार्हस्थ्योचितयावद्धर्मांश्चकारेत्यपि बोध्यं । उत्तरत्र यद्गार्हस्थ्यं चेत्यनुवादात् ॥ ४७ ॥ यद्गार्हस्थ्यं यस्य सौभरेर्गार्हस्थ्यं पंचाशद्भार्याभिः सह गृहस्थधर्मानुष्ठानं महार्हशय्यादिमहाभोगसाधनं महाभोगं चेत्यर्थः । सप्तद्वीपवतीपतिर्मांधातः श्वशुरः । स्तंभं गर्वं । अहमेव गार्हस्थ्ययावद्धर्मानुष्ठानवान् अहमेव महार्हशय्यादिमहाभोगसाधनवान् अहमेव महाभोगवांश्च मत्समः कोऽपि नास्तीत्यहंकारमित्यर्थः । सार्वभौमश्रिया साम्राज्यलक्ष्म्याऽन्वितः समन्वितः ॥ ४८ ॥ गृहेषु । बहुवचनमाद्यर्थे ॥ गृहादिषु सुखैः सुखसाधनैर्न चातुष्यदलंबुद्धिं न प्राप । आज्यस्तोकैर्घृतबिंदुभिः ॥ ४० ॥ इदानीं तस्यानुतापप्रकारमाह ॥ स कदाचिदित्यादिना । बव्हृचानामाचार्यो ऋग्मंत्रव्याख्याकृदित्यर्थः । आत्मनो मनसः । मनोदोषादिति यावत् । आत्मापन्हवमात्मनो नाशं । तपोहानिमिति यावत् । ददर्श ॥ ५० ॥ सच्चरितं सदाचारः । तस्मिन्नियमयुक्तस्येत्यर्थः । अथवा । संश्चासौ व्रतश्चेति विग्रहः । तस्य । यद्वा । चरितानि सत्कर्माणि वैष्णवव्रतानि च यस्य । यच्चिरं ब्रह्मतपस्तत्प्रस्रावितं च्युतं नष्टमित्यर्थः । ब्रह्मवेदतपस्त्वित्यभिधानं ॥ ५१ ॥ मिथुनव्रजिनात्स्त्रीपुरुषसंगोद्भूतात्पापान्मुमुक्षुः संगं त्यजेत । बहिः शब्दादिषु । एक एव तपश्चरन् । एकस्तपो द्विरध्यायीत्युक्तेः । प्रसंगश्चेद्यदि प्रसंगोऽपेक्षितस्तर्हि तास्मिन्हरौ रतिर्येषां ते तद्व्रतयस्तेषु साधुषु प्रसंगः स्यादित्यर्थः ॥ ५२ ॥ वारिचरप्रसंगादित्युक्तदोषं प्रपंचयति ॥ एक इति । अहमेक एव तपस्वी । अंभसि मत्स्यसंगान्मत्स्यानां मिथः संगं दृष्ट्वा । अथानंतरं । पंचाशत्स्त्रीभिः सह सुरतप्रसंगेन सुतपंचसहस्रसंगः । अर्श आदिभ्योऽच् । पंचसहस्रसुतसंगवानित्यर्थः । आसं । अथवा । मम सुतपंचसहस्रसंगः । आसीदिति शेषः । प्रत्येकं तासु पुत्रशतं बभूवेति भावः । अथोभयकृत्यं पुत्राणां विवाहादिः कन्यानां प्रदानादिरित्युभयकृत्यानि । तत्र ये मनोरथास्तेषामंतमवसानं न जानामि । तत्रेदं निमित्तमित्याह ॥ मायेति । मायागुणैः प्रकृतिगुणैः सत्त्वादिकार्यैः रागादिभिरित्यर्थः । विषयेऽर्थभावः शब्दादौ पुरुषार्थबुद्धिः ॥ ५३ ॥ एवं विरज्य किमकार्षीदिति तत्राह ॥ एवमिति । कालं बहुकालं । कालाध्वनोरत्यंतसंयोगे द्वितीया । न्यासं

वित्तगृहादिसंगत्यागलक्षणं ॥ ५४ ॥ आत्मकर्शनं देहस्य कृशत्वापादकं । सहैवेत्यत्र सः ह एवेति पदच्छेदः । आत्मानमित्यस्यावृत्तिः । सः सौभरिरात्मानमंतःकरणं परमात्मनि युयोज । आत्मानं देहं श्रौताग्निभिर्युयोज । ददाहेति यावत् । इत्येतद्ध प्रसिद्धं ॥ ५५ ॥ अधिकश्चासावात्मा च अध्यात्मा हरिस्तत्संबंधिनीं गतिं ज्ञानं । ज्ञानपूर्वकरमणामिति यावत् ॥ ५६ ॥ एवं मांधातृराजकन्यास्थितिमुक्त्वा तत्सुतेषु पुरुकुत्सांबरीषमुचकुंदेषु पुरुकुत्सस्य ज्येष्ठत्वेऽपि सूचीकटाहन्यायेनांबरीषस्य वंशमाह ॥ मांधात्रिति । मातामहेन शशबिंदुना । युवनाश्वस्तत्सुतस्तस्यांबरीषस्य सुतः ॥ ५७ ॥ तस्य युवनाश्वस्य मांधाता प्रवरो येषां ते तथा । पुरुकुत्सवंशं कथयिष्यन् आदौ तावत्तस्य विवाहप्रभवं चाह ॥ नर्मदेति । भ्रातृभिरुरगैः । पुरुकुत्साय मांधातृज्येष्ठपुत्राय । नर्मदा तन्नामिका नागकन्या ॥ ५८ ॥ भुजगेंद्रैर्भ्रातृभिः प्रयुक्तया तया नर्मदया रसातलं नीतः । सः पुरुकुत्सस्तत्र रसातले । वध्न्यश्वान् वध्न्यश्वनामकगंधर्वान्दुष्टान् । गंधर्वजातत्वाद्गंधर्वनामकान् । अवधीत् । विष्णुशक्त्याख्यायुधधृक् । अथवा । विष्णुसामर्थ्यधृक् । विष्णुस्तत्र विशेषेण संनिहित इत्यर्थः ॥ ५९ ॥ स च पुरुकुत्सो नागाद्भुजगेंद्राल्लब्धवरोऽभूत् वरमाह ॥ इमं स्मरतां सर्पादयं भूयादिति । इमं गंधर्ववधलक्षणं पुरुकुत्सविक्रमं । पुरुकुत्सवंशमाह ॥ त्रसद्दस्युरिति । पुरुकुत्सस्यापत्यं पौरुकुत्सः । यस्त्रसद्दस्युः । अनरण्यस्य देहकृत्पिता । अनरण्यस्त्रसद्दस्युपुत्र इत्यर्थः ॥ ६० ॥ अथारुणात् । तस्य त्रिबंधुरस्य सुतः सत्यव्रतः स एव त्रिशंकुरिति विश्रुतः ॥ ६१ ॥ त्रिशंकुर्गुरोः शापात्परिणीयमानाविप्रकन्याप्रहरणात्क्रुद्धस्य मुनेर्वसिष्ठस्य शापादित्यर्थः ॥ ६१ ॥ कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेन सशरीरो मानुषशरीरः स्वर्गं गतः । अद्यापि दिवि व्योम्नि दृश्यते । मनुष्यैरीति शेषः ॥ ६१ ॥ स्वर्गं गतः कथं मानवैर्दृश्यते तत्राह ॥ पातित इति । अर्वाक् शिरा अधः कृताशिराः ॥ ६२ ॥ तेन विश्वामित्रेण बलात्स्तंभितः स्तंभनं प्राप्तः । तथैव स्थित इति यावत् । त्रिशंकोर्वंशमाह ॥ त्रैशंकव इति । हरिश्चंद्रस्त्रैशंकवस्त्रिशंकोरपत्यं ॥ ६३ ॥ पक्षिणोः पक्षस्थयोः सहायिनोर्वसिष्ठविश्वामित्रयोः । हरिश्चंद्रं निमित्तीकृत्य यदर्थं युद्धमभूत् । तद्ग्रंथांतरादेव ज्ञेयं । यो हरिश्चंद्रं निमित्तं यस्य यद्यन्निमित्तामिति विग्रहः । श्रुतिप्रसिद्धं हरिश्चंद्रचरितमाह ॥ सोऽनपत्य इत्यादिना । नापुत्रस्य लोकोऽस्तीति वाक्यार्थज्ञानात् । विषण्णमना अनपत्यः सः हरिश्चंद्रो नारदोपदेशात् । हे प्रभो मम पुत्रो जायतामिति निवेद्य ।

वरुणं शरणं यात इत्यन्वयः ॥ ६४ ॥ तदेव विवृणोति ॥ यदीति । हे महाराज यदि वीरः । पुत्रो जायेतेति शेषः । तेन पुत्रेण त्वां यजे ॥ ६५ ॥ पुरुषपशुना त्वां यक्ष्य इति हरिश्चंद्रेणोक्ते वरुणेनापि तथाऽस्त्वित्युक्ते । नाम्ना रोहितः पुत्रो जात इत्यन्वयः । अथ वरुण आगत्य हरिश्चंद्रमवादीदित्याह ॥ जात इति । हे अंग ते सुतो जातोऽनेन पुत्रेण मां यजस्वेति हरिश्चंद्रोक्तः सोऽब्रवीदिति ॥ ६६ ॥ निर्दशो निर्गतो दशदिवसः । मेध्यः शुद्धः । पशोर्निर्दशे सतीत्याह । वरुण इति शेषः ॥ ६७ ॥ यद्यपि पशोर्दंता जायेरन् । अथ तदा पशुः शुचिः स्यात् । अनंतरं त्वां यक्ष्य इत्यब्रवीत् ॥ ६८ ॥ यदा पतंति । बालानामष्टवर्षानंतरं सुप्रसिद्धमिति भावः । पशोः पुरुषपशोः ॥ ६९ ॥ पुनर्जाता दंताः ॥ ७० ॥ राजन् हे वरुण । यदा राजन्यः क्षत्रियः सन्नाहुकः सन्नाहस्य योग्यः शस्त्रास्त्रग्रहणयोग्यः । ननु हरिश्चंद्रः किमर्थं कालमाक्षिपदिति तत्राह ॥ इतीति । स्नेहयंत्रितचेतसा । जातेनेति शेषः । पुत्रानुरागेण युक्तेन दशाहादिलक्षणं तं कालं वंचायिता हरिश्चंद्रेणोक्तो वरुणदेवस्तं कालमैक्षत प्रत्यैक्षत ॥ ७१ ॥ पितुः पित्रा चिकीर्षितमात्मना पशुना वरुणयजनरूपं कर्माभिज्ञाय प्राणप्रेप्सुरात्मजीवनेच्छुः रोहितो धनुरादाय वनं प्राप ॥ ७२ ॥ स्वगमनेन वरुणग्रस्तमत एव जातमहोदराख्यरोगं श्रुत्वा । एयाय ग्रामं प्रति जगाम । इंद्रो वृद्धविप्रो भूत्वा तं रोहितमेत्य प्रत्यषेधत ग्रामं प्रति गंतव्यमित्युक्तवानित्यर्थः ॥ ७३ ॥ तीर्थक्षेत्रनिवेषणादिभिर्भूमेः पर्यटनं पुण्यमिति रोहितायादिशदित्यन्वयः । इंद्रेणोपदिष्टो रोहितः किं चकारेति तत्राह ॥ सोऽपीति । समाः कतिचिद्वत्सरान् अरण्येऽचरत् ॥७४॥ एवं द्वितीयादौ वर्षे संग्रामं गच्छंतं । रोहितामिति शेषः । वृत्रहेंद्र आह । प्रत्यषेधत । स्थविरो भूत्वा वृद्धो भूत्वा ॥ ७५ ॥ एवं शिक्षितस्तत्रारण्ये षष्ठं संवत्सरं चरित्वा पुरीं प्रत्युपव्रजन् आगच्छन् । रोहितोऽजीगर्तात्तन्नामकर्षेः सकाशान्मध्यमं सुतं शुनःशेपं । अक्रीणाद्गवां शतं दत्वा स्वीकृतवानित्यर्थः । स्वीकृत्य च शुनःशेपाख्यं पशुं । हरिश्चंद्राय पित्राय प्रदाय पितरं समवंदतेत्यन्वयः ॥ ७६ ॥ ततः पुरुषपशुप्राप्त्यनंतरं हरिश्चंद्रः पुरुषमेधेन पुरुषपशुहिंसालक्षणयज्ञेन वरुणादीन्देवान् अयजत् । ततो मुक्तोदररोगोऽभवदित्यर्थः ॥ ७७ ॥ तस्मिन्यज्ञे आत्मवानात्मज्ञानी जमदग्निरध्वर्युरभूत । वसिष्ठो ब्रह्माभूदित्यनुषंगः । आयास्य सामग इत्यत्र विसर्गलोपांश्छांदसः । आयास्यो मुनिः सामग इत्यर्थः । कर्मधारयो वा । सामं गायतीति सामग उद्गातेत्यर्थः

॥ ७८ ॥ तस्मिन्यज्ञे शुनःशेपनामकपुरुषपश्वालंभनसमये शुनःशेपेन क्रियमाणं स्तोत्रं श्रुत्वा तन्माहात्म्यं दृष्ट्वा संतुष्टो देवेंद्रस्तस्मै शुनःशेपाय सुवर्णमयं रथं ददावित्यर्थः । उपरिष्टात्प्रचक्षते पंचदशेऽध्याये ॥ ७९ ॥ हरिश्चंद्रे गुणान्दृष्ट्वा विश्वामित्रो ज्ञानोपदेशं चकारेत्याह ॥ सत्यसारमिति । सत्यसारं सत्ये सिद्धिते सारं सारत्वं दार्ढ्यमित्यर्थः । वसतां हितमत्यंतं तत्सत्यमिति कीर्तितमिति वचनात् । धृतिमलौकिकमार्गादचलनं रूपं धैर्यं । अविहतां कुतकैरप्रतिहतां ॥ ८० ॥ ज्ञानिभिरुत्क्रांतिकाले पृथिव्यादितत्त्वानां जडानां स्वस्वकारणेषु जडेषु तत्त्वेषु लयस्तदभिमानिदेवानां भिन्नानां भिन्नेषु देवेषु प्रवेशलक्षणो विलयः। तत्तदंतर्गतभगवद्रूपाणां तत्तदंतर्गतभगवद्रूपेष्वेकीभावलक्षणो विलयश्चिंतनीय इति सज्जनानां शिक्षयितुं विश्वामित्रोपदेशेन प्राप्ततत्त्वज्ञानस्य हरिश्चंद्रस्योत्क्रांतिकाले तत्त्वलयप्रकारं वदन्मुक्तिमाह ॥ मनः पृथिव्यामिति। अन्नमयं हि सौम्य मन इति श्रुतेः । अन्नं पृथिवी पृथिव्युपचितं मनः पृथिव्या विलीयत इति मनो धारयन्ध्यानं कुर्वन्नित्यर्थः । तां पृथिवीमप्सु लीनामिति । अंभो जलं तेजसि लीनमिति । तत्तेजोऽनिले वायौ लीनामिति । तं वायुं खे आकाशे लीनमिति । धारयन्नित्यस्य सर्वत्रानुषंगः । तच्च खं शब्दादावाकाशोपादानभूतशब्दकारणेऽहंकारतत्त्वे लीनमिति । तन्महात्मनीत्यस्यावृत्तिः । तदहंकारतत्त्वं महात्मनि महत्तत्त्वे लीनमिति । तन्महत्तत्त्वं महात्मनि तत्त्वप्रधानेऽव्यक्ततत्त्वे लीनमिति ध्यायन् । उत्क्रांतोऽभूत् । तच्च शब्दादावित्यनेन पृथिव्याः सोपादानभूतगंधतन्मात्रद्वाराऽप्सु लयश्चिंतनीयः । एवमेवापां रसतन्मात्रद्वारा तेजसि । तेजसो रूपतन्मात्रद्वाराऽनिले । अनिलस्य स्पर्शतन्मात्रद्वाराऽऽकाशे । आकाशस्य शब्दतन्मात्रद्वाराऽहंकारतत्त्वे लयश्चिंतनीय इत्ययं विशेषः सूचित इत्यवगंतव्यं । शब्दादिभ्य आकाशादिसृष्टिः । द्वितीयस्कंधादौ स्पष्टा । भूतादाविति क्वचित्पाठः । तस्मिन्पक्षे भूतादावित्यस्याहंकारतत्त्व इत्यर्थः ॥ ८१ ॥ ततः किं चकारेत्यतोऽपि प्राप्तं । तन्महात्मनीति तेषां तत्त्वानां मुख्यतो नियामके तस्मिन्हरौ । ज्ञानकलां ज्ञानांशं । ज्ञानपदं गुणांतरोपलक्षकं । ज्ञानानंदादि गुणानिति यावत् । ध्यात्वा स्वयोग्यगुणोपसंहारपूर्वकं ध्यात्वेत्यर्थः । ततस्तमपरोक्षतो दृष्ट्वेति शेषः तयाऽपरोक्षदृशाऽज्ञानमज्ञाननिमित्तां संसृतिं विनिर्दहंस्तां लिंगशरीरलक्षणां संसृतिं हित्वा विध्वस्तबंधनो मुक्ताविद्यादि बंधनःसन् । निर्बाणे । बवयोरभेदात् । निर्वाणे प्राकृतशरीराजन्ये । स्वरूपभूत इति यावत् । सुखसंविदौ यस्य स तथा । तेनानिर्दिश्येनेदं

मुक्तस्वरूपमतादृशामात निदेष्टुमशक्यन लोकावलक्षणन स्वभावन स्वरूपण सातानकलाकषु जीवन्मुक्तःसन् तस्थौ । मुक्ततुल्योऽभूदित्यर्थः । एतद्वाणमवष्टभ्य धारयामीति श्रुतेर्बाणं शरीरं ॥ ८२ ॥ इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ॥ ९–७ ॥

॥ हरिः ॥ ॐ हरिश्चंद्रस्य वंशं कथयति ॥ हरित इति । रोहिताद्धरिश्चंद्रपुत्रात् । तस्माद्धरितात् । चंप आसीत् । तस्माच्चंपात् । चंपापुरी निर्मिता । अतश्चंपात्सुदेवः । यस्य सुदेवस्य ॥ १ ॥ तत्सुतो विजयसुतः स बाहुकः ॥ २ ॥ अनु मरिष्यती सहगमनकर्तुमिच्छती । प्रजावंतं पुत्रवंतं तस्या आत्मानं देहं जानता । ज्ञानिनौर्वेण ऋषिणा निवारिता ॥ ३ ॥ आज्ञाय गर्भे पुत्रं सम्यक् ज्ञात्वाऽस्यैव बाहुकभार्यायै सहसा हंतीति साहसस्तेन विशेषेण सह संजातोऽत एव सगराख्यः ॥ ४ ॥ सागरः समुद्रः पूर्वं सूक्ष्मो यत्सुतः स्थूलः कृतः । सगरस्य प्रभावमाह ॥ य इति । तालजंघादयो दुष्टा यवनाः । म्लेंछविशेषाः ॥ ५ ॥ गुरुवाक्येनौर्ववचनेन । कांश्चिदहत्वैव विकृतवेषिणश्चक्रे । तदेवाह । मुंडान् श्मश्रुधरानिति । अर्धप्रदेशे युक्तकेशान् अर्धमुंडितांश्चेति ॥ ६ ॥ अनंतर्वाससोऽतः परिधानवस्त्रशून्यान् । नग्नानिति यावत् । अबहिर्वासस आवरणवस्त्ररहितान् । सः सगरो सर्ववेदसुरात्मकं सर्वे वेदाः सर्वे सुराश्चात्मा देहः प्रतिमा यस्य तमात्मानं सर्वस्वामिनं ॥ ७ ॥ और्वोपदिष्टज्ञानेनायजत् । उत्सृष्टं भूप्रदक्षिणार्थं प्रेषितं ॥ ८ ॥ सगरस्य सुमतिः केशिनीति द्वे भार्ये । तत्र ज्येष्ठपत्न्याः षष्ठिसहस्रपुत्राणां प्रभावमाह ॥ सुमत्या इति । दृप्ता उच्छृंखलाः ॥ ९ ॥ प्रागुदीच्यामीशान्यां ॥ १० ॥ षष्ठिसहस्रसंख्या येषामस्तीति षष्ठिसहस्रिणः सुमत्यास्तनयाः । इति ब्रुवंत इति शेषः । उन्मिमेष नेत्रं विकासं कृतवान् ॥ ११ ॥ स्वशरीराग्निना क्षणाद्भस्मसादभवन्नित्यन्वयः । तावत्तत्काल एव । महेंद्रेण हृतं चेतो येषां ते तथा मुग्धा इत्यर्थः । महदत्यतिक्रमेण हन्यतामित्यादिवचनलक्षणस्वापराधेनैव हता न तु मुनिकोपदग्धा इत्यर्थः । केचित्तु कपिलस्य कोपाग्निना दग्धा इति वदंति ॥ १२ ॥ तन्निराकरोति ॥ नेति । कुत इत्यत आह ॥ सत्त्वधामनीति । सत्त्वं निर्दोषत्वं तस्य धामन्याश्रये । सत्त्वादिगुणशून्ये भगवति । रोषमयं क्रोधमयं तमस्तमोगुणकार्यं कथं विभाव्यते संभाव्यते । असंभावनायां दृष्टांतो भुवो रजः कथं खे संभाव्यत इति । ननु तमो रोषमयमिति क्रोधस्य तमोगुणजन्यमित्युच्यते । तदयुक्तं । काम एषः क्रोध एषः क्रोध एव रजोगुणसमुद्भव इति गीतायां रजोगुणजन्यत्वोक्तेस्तद्विरोधादिति

चेन्न । क्रोधस्य रजोगुणप्रविष्टतमोगुणजन्यत्वांगीकारात् ॥ १३ ॥ इतोऽपि तमोगुणकार्यस्य कोपस्य हरावनवसर इत्याशयेनाह ॥ यस्येति । येन कपिलेन हरिणा सांख्यमयी ज्ञानमयी । नौस्तरीरीरिता ग्रंथरूपेण कथिता सांख्यशास्त्रं कृतामित्यर्थः । दृढाऽपेक्षितफलदानाय समर्था । अन्यत्र नूतनत्वेन बलिष्ठा । यया ज्ञाननावा मुमुक्षुर्मृत्युपंथा मृत्योर्मार्गं दुरत्ययं ज्ञाननावमंतरेणात्येतुमशक्यं भवार्णवं तरते तस्य परमात्मभूतस्य साक्षान्नारायणावतारस्य विपश्चितः शुद्धज्ञानवतः श्रीकपिलस्य पृथङ्मती रोषरूषितामतिः कथं संभाव्यत इत्यन्वयः ॥ १४ ॥ तदेव सुमत्याः पुत्रेषु मृतेषु सुकेशिन्याः पौत्रेणांशुमताश्वः समानीतः पितृव्योद्धरणयत्नश्च कृत इति दर्शयितुमुपोद्घातमाह ॥ योऽसमंजस इति । यः केवलमज्ञैरसमंजस इत्युक्तः । वस्तुतस्तु समंजस एवेति ज्ञापयितुमित्युक्त इत्युक्तं । स तु सगरभार्यायाः सुकेशिन्या आत्मजो नृपः पितामहः सगरः ॥ १५ ॥ पुरा पूर्वजन्मनि योगाभ्यासनिपुणोऽसमंजसः संगाद्धेतोः । योगादीश्वरोपासनालक्षणाद्विचालितो हि यस्मात्तस्माज्जातिस्मर इदानीं पूर्वजातिस्मृतिमान्सन् आत्मानमसमंजसं । असमीचीनं । नृशंसमिति यावत् । दर्शन् । संगं जहाविति शेषः ॥ १६ ॥ असमंजसत्वं दर्शयाति ॥ आचरन्निति । ज्ञातीनां विप्रियमप्रियं लोकैर्गर्हितं कर्माचरन् जनमुद्वेजयन्भीषयन् बालान् सरय्वां प्रास्यत् ॥ १७ ॥ ततः किमभूदिति तत्राह ॥ एवमिति । एवं विधं वृत्तं कर्म यस्य सः । योगैश्वर्येण युष्मद्बाला एत इति तान्नदीजलमग्नान्दर्शयित्वा । ततः स्थानाद्ययावित्यर्थः ॥ १८ ॥ विसस्मिरे विस्मयं चक्रुः । अथासमंजसे गते । राजा सगरोऽन्वतप्यत पश्चात्तापं प्राप्त इत्यन्वयः ॥ १९ ॥ पितरि गतेंऽशुमता किमकारीति तत्राह ॥ अंशुमानिति । पितृव्या असमंजसभ्रातरस्तेषां खातानुपथं तमनुययौ । पितृव्याणां शरीरभस्महयमपि ददर्शेत्यन्वयः ॥ २० ॥ तत्र हयसमीपे । महान्महान्बुद्धिमान् अंशुमान् ॥ २१ ॥ अजनोऽजो विरिंचः । यस्य परमात्मनः । अंश इति शेषः । त्वां न पश्यति साकल्येनापरोक्षीकर्तुं न शक्नोति । अथवा । परं आत्मन इति पदद्वयं । आत्मनः स्वात्मनः परमुत्तमं । त्वामित्यन्वयः । तर्हि परोक्षतो जानाति किं नेत्याह ॥ नेति । समाधियुक्तिभिर्ध्यानयोगैरद्यापि त्वां न बुद्धयते न जानातीत्यन्वयः । पश्यंतोऽपि न पश्यंति मेरो रूपं विपश्चित इतिवत् । अपरेऽर्वाचीनास्तु कुतस्त्वां पश्येयुः । अर्वाचीनत्वे हेतुः ॥ तस्य मनः शारीरं विसर्गसृष्टा इति । तस्य विरिंचस्य मनसः शरीराच्च विसर्गो विसृष्टा सृष्टिर्येषां मरीच्यादीनां ते तथोक्तास्तै-

स्तत्रापि वयमप्रकाशा अज्ञाः । कुतस्त्वामपश्याम इत्यर्थः ॥ २२ ॥ तर्हि केऽपि न पश्यंति किमित्यतः केचिदेव पश्यंतीत्याह ॥ ये देहभाज इति । ये देहभाजः शरीरिणस्ते त्रिगुणप्रधानाः सत्त्वप्रधाना रजःप्रधानास्तमःप्रधाना इति त्रिविधाः । तत्र रजः-प्रधाना राजसा मानुषा गुणान्स्वर्गादीनेव पश्यंत्यनुभवंति । न मोक्षं । अन्यथाज्ञानपूर्णबुद्धयस्तमःप्रधानास्तामसा असुरा यस्य हरेर्मायया बंधकशक्त्या मोहितचेतसस्तम एवांधंतम एव विपश्यंत्यनुभवंति । अत्र निमित्तमाह ॥ त इति । ते स्वसंस्थं हृदिस्थं विष्णुं न विदुरिति । यस्मात्तस्मादिति शेषः । तर्ह्यचेतनाः किं ते नेत्याह ॥ बहिरिति । बहिर्देहादावेव प्रकाशो येषां ते तथा । अनात्मज्ञानिनइत्यर्थः । ज्ञानाश्रयत्वेन चेतनत्वेऽपि न परतत्त्वज्ञानिन इति भावः । ये सत्त्वप्रधानाः सात्त्विका देवादयस्ते त्वामेव विपश्यंतीति योज्यं ॥ २३ ॥ तर्हि तवापि सात्त्विकत्वात् । ध्यानेन त्वं मां ज्ञास्यसीति तत्राह ॥ तं त्वामिति । सनंदनाद्यैर्मुनिभि-र्विभाव्यमुपास्यं ज्ञानघनस्वभावं ज्ञानादिगुणस्वरूपं तं तत्तद्योग्येभ्यस्तत्तत्फलदातारं त्वामहं कथं परिभावयामि चिंतयामि । चिंतने काऽनुपपत्तिरिति तत्राह ॥ विमूढ इति । सामान्यतो ज्ञाते वस्तुनि विशेषजिज्ञासा संजाघटीति । मम तु तदेव नास्ति । अतस्ताद्विषयज्ञानाभाव एवानुपपत्तिरित्यर्थः । सनंदनादीनामपि देहभात्क्वाविशेषात्परिभावना कथं स्यादिति तत्राह ॥ प्रध्वस्तेति । प्रध्वस्तो मायामयः प्रकृतिहेतुको भेदमोहोऽनात्मन्यात्ममोहो यैस्ते तथा तैर्निरस्तामिथ्याज्ञानैरित्यर्थः । कार्यते ह्यवशः कर्म सर्वप्रकृति-जैर्गुणैरिति स्मृतिः ॥ २४ ॥ मूढत्वान्न मनोमात्रं करिष्यामीत्याह ॥ प्रशांतेति । हे स्वामिन् । त्वां केवलं नमामह इत्यन्वयः । सदसद्भ्यां पुण्यपापाभ्यां विमुक्तं । कर्मबंधाभावेऽपि शिक्षार्थं तपः कुर्वाणमिति भावः । अनामरूपं प्राकृतनामरूपरहितं । तत्कुत इति तत्राह ॥ प्रशांतेति । प्रशांतान्युपरतानि मायागुणाः सत्त्वादयः कर्माणि तन्निमित्तव्यापारा लिंगशरीरं यस्य स तथा । शरीरत्वेन नामरूपदर्शनात्तदभावकथनं कथमिति तत्राह ॥ ज्ञानेति । लोकानुग्रहार्थं शरीरग्रहणं न तु कर्मनिमित्तं ॥ २५ ॥ 
त्रिविधानां जीवानां स्वभावाभिभवो नास्तीति दर्शनाय मानुषस्वभावमाह ॥ यन्माययेति । यस्य हरेर्मायया प्रकृत्येच्छया रचिते निर्मिते लोके भूम्यादौ रचितगृहादिषु वस्तुबुद्ध्याऽनश्वराणीति बुद्ध्या भ्रमंति परिवर्तंते । प्राणिन इति शेषः । अत्र निमित्तमाह ॥ कामेति । कामादिभिर्विभ्रांतं चेतो येषां ते तथा ॥ २६ ॥ उपसंहरति ॥ अद्येति । अद्य नोऽस्माकं पुत्रादिषु दृढो मोहपाशोऽ-

ज्ञानहैतुकः स्नेहपाशः छिन्न इत्यर्थः । कामकर्मेंद्रियाण्येवाशयः आशयो यस्य तन्निमित्तक इत्यर्थः । कामादीनामाश्रय इति वा । त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थः ।।२७।। अनुगृह्यानुग्रहं कृत्वा ।धियांऽतःकरणपूर्वकमित्यर्थः ।।२८।। कथं भूतोऽश्वः । पितामहस्य सगरस्य याज्ञीयपशुभूतः । अश्वं लब्ध्वाऽपि पितृविषये साकांक्षं प्रत्याह ।। इमे चेति । अर्हत्यपेक्षंते ।।२९।। तं परिक्रम्य तस्य प्रदक्षणीकृत्वेत्यर्थः । शिरसा प्रणम्येति शेषः ।।३०।। लेभे । सगर इति शेषः ।।३१।। महांतं कालं तपस्तेप इत्यन्वयः । नाशक्नोत् । गंगामानेतुमिति शेषः । ततः कालेन संस्थितः कालमृत्युना संस्थितो ग्रस्तो मृतोऽभूदित्यर्थः ।।३२।। तद्ध तपस्तेप इति शेषः । अशक्तः । गंगामानेतुमिति शेषः । कालमेयिवान्मरणं प्राप्तः । तेपे कृतवान् ।। ३३ ।। तं प्रत्यात्मानं दर्शयामास । वरदाऽस्मीति गंगोक्तः सन् स्वाभिप्रायं पूर्वजोद्धारणे शशंस ।। ३४ ।। पतंत्या । गगनादिति शेषः । मे वेगं धारयिता धारयिष्यति । अन्यथा धारकाभावे ।। ३५ ।। किंचन केवलं रसातलप्रवेशलक्षणानर्थ एवान्योऽप्यस्तीत्याशयेनाह ।। किंचेति । कुतो नरकप्राप्तिरिति तत्राह ।। नरा इति । पापिनो जनाः स्नानादिना मय्यघमामृजंति शोधयंति । पापं निक्षिप्य स्वयं शुद्धा भवंति । हे राजन् तदर्थे मृजामि शोधयामि । केति शेषः । क निक्षिप्य शुद्धा भवाम्यत्रास्मिन्नर्थे विविच्यतां । नराणामघहाऽहं मदघसंहर्ता क इति विवेकः क्रियतामित्यन्वयः । तत्रोपायो विचिंत्यतां ।। ३६ ।। उत्तरमाह ।। साधव इति । शमदमादिसंपन्नाः साधवोऽत एव निराशिषः स्वर्गादिसुखलक्षणाशारहिताः । कुत इति तत्राह ।। ब्रह्मिष्ठा इति । एवं विधा ये स्वहृदा हरिं प्राप्तास्ते ज्ञानिनोंऽगसंगात्पादप्रक्षालनादिना जातादंगसंबंधात्पापिनामघं हरंति तेषां स्वहृदिस्थितहरिसान्निध्यात्पापं नास्त्येव । तत्र किं वक्तव्यं । अनवरतं । नलिननाभपादसरोजनिवासाया इत्यर्थः । अथवा । साधवोंऽगसंगात्स्नानादिना स्वशरीरसंबद्धात्ते तवाघं पापं हरंति हरिष्यंति ।। ३७ ।। द्वितीयं प्रश्नं परिहृत्य प्रथमं परिहरति ।। धारयिष्यतीति । आत्मा स्वामी । शाठी कंथापटलस्तंतुष्विव यथा तथोक्तः प्रोतस्तथेदं विश्वं यस्मिन्नोतं प्रोतमित्यर्थः ।। ३८ ।। अल्पीयसाऽल्पीयेन ।। ३९ ।। राज्ञा भगीरथेनाभिहितं । तथेत्यंगीकृत्येति शेषः ।। ४० ।। शेरते संतीत्यर्थः ।। ४१ ।। प्रयांतं भगीरथमनुधावती पृष्ठत आयाती । आसिंचत्प्लावयामास ।।४२।। ब्रह्मदंडेन कपिलरूपभगवदपराधरूपदंडेन हताऽपि । यस्या जलस्पर्शमात्रेण दिवं जग्मुः । यज्जलस्पर्शनं तच्च केवलं देहभस्माभिरेव

न साक्षात् । अतस्तन्माहात्म्यं किं वर्णनीयमित्यध्याहृत्य योजनीयं । यद्वा । देहभस्माभिरित्यस्य विभक्तिविपरिणामेन भस्माना-मित्यर्थः ॥ ४३ ॥ एतत्प्रपंचयति ॥ भस्मीभूतेति । भस्मीभूतेनांगेनांगसंबंधास्थिजातेन यो गंगाजलसंगस्तेनेति ॥ ४४ ॥ श्रीनारायणचरणसंगलब्धमेवास्या माहात्म्यं नान्यतोऽतो नैतच्चित्रमित्याह ॥ नहीति । इह सगरात्मजकथाप्रसंगेन गंगामाहात्म्य-मुदितं । अत एव भवच्छिदः संसारछेत्र्याः । जन्मछेत्र्या वा । अनंतस्य त्रिविक्रमस्य वामपादेन जाताया इत्यर्थः ॥ ४५ ॥ संसारछेदनमाहात्म्यं श्रीहरिनिष्ठगंगाया उपचार इत्याशयवानाह ॥ सन्निवेश्येति । त्रैगुण्यं त्रिगुणसंबंधिसंसारं । तदात्मतां तत्सा-युज्यलक्षणां मुक्तिं ॥ ४६ ॥ एवं भगीरथस्य गंगाऽऽनयनादिमाहात्म्यमुक्त्वा तत्संततिं कथयति ॥ श्रुत इति । नभो नाभागः। मनुपुत्रनाभागादपरस्तस्मात्सिंधुद्वीपात्ततोऽयुतायोः सकाशात् । नलराजसखो ऋतुपर्णः अभवदित्यनुषंगः ॥ ४७ ॥ यो ऋतुपर्ण-स्तस्मै नलायाक्षहृदयं द्यूतविद्यां दत्वाऽश्वविद्यामयात् । तत्सुतो ऋतुपर्णसुतः ॥ ४८ ॥ तत्पुत्रः सौदास इति शेषः । यं सुदास-पुत्रं । कल्माषांघ्रिमुत कल्माषपादं चाहुः क्वचित्कदाचित् ॥ ४९ ॥ न रहो न रहस्यं ॥ ५१ ॥ कंचिद्रक्षः कंचिद्राक्षसं जघान । तस्य भ्रातरं मुमोच सः । भ्राता पलाय्य गतः । प्रतिचिकीर्षया भ्रातृहननप्रतिकरणेच्छया ॥ ५२ ॥ राज्ञः सौदस्याघमनिष्टं। पक्त्वा पाकं कृत्वाऽनिन्ये । परिवेषणार्थमिति शेषः ॥ ५३ ॥ एवं विधो रक्षो राक्षसः भविष्यसि ॥ ५४ ॥ वसिष्ठो रक्षःकृतं राक्षसकृतं । स्वशापमिति शेषः । द्वादशवार्षिकं चक्रे ॥ ५५ ॥ रुशतीः क्रूरा आपोमंत्रितत्वात्स्वपादयोरेव जहौ नान्यत्र । तत्र हेतुः ॥ दिश इति । दिशो जीवमयाः खं जीवमयं सर्वामवनिं जीवमयीमिति योज्यं ॥ ५६ ॥ कल्माषतां कल्माषसमान-वर्णतां । तदेवं राक्षसत्वे कल्माषांघ्रित्वे च कारणमुक्त्वा स्वकर्मणाऽनपत्य इति यदुक्तं तत्प्रपंचयति ॥ व्यवायकाल इति । व्यवा-यकाले सुरतसमये वनमोको निवासो ययोस्तौ वनोकौ ॥ ५७ ॥ अकृतार्थवत् । यद्यपि लज्जा स्त्रीणां स्वभावतस्तथाऽपि तत्पत्नी लज्जां त्यक्त्वा लज्जारहिताऽकृतार्थपुरुषवद्राजानं प्रत्याहेत्यर्थः । यद्वा । अकृतार्थवदकृतार्थवती पत्या सुरतस्यासमा-प्तत्वादकृतार्थेत्यर्थः । अकृतार्थ शब्दान्मन् प्रत्यये ङीप् प्रत्ययस्य छांदसे लोपेऽकृतार्थवदिति रूपनिष्पात्तिः । राक्षसस्य कृपाजन-नायावध्यत्वे कारणान्याह ॥ न भवानित्यादिना । इक्ष्वाकूणामिक्ष्वाकुवंशोत्पन्नानां मध्ये ॥ ५८ ॥ अकृतार्थमसमाप्तरतिं ॥५९॥

अस्य मानुषदेहस्य ॥ ६० ॥ सर्वभूतानामात्मा स्वामीति भावेन भावनया आरिराधयिषुः ॥ यद्वा । कथं भूतं ब्रह्म । सर्वभूतानात्मभावेनात्मत्वेनांतर्नियामकत्वेन । भूतेष्वंतर्हितमदृश्यत्वेन स्थितं गुणैः । पूर्णमिति शेषः ॥ ६१ ॥ ६२ ॥ सवितुः सकाशादात्मज इव भ्रूणस्य स्वयमेव पुत्रस्य बभ्रोर्वधं । यथाऽयोग्यवधमिवेत्यर्थः । सतां संमतो भवान्वधं ब्रह्मवधं कथं साधु मन्यत इत्यर्थः। क्षणमपि येन विना न जीविष्ये। सोऽयं यदि भक्ष्यः क्रियते तर्हि मृतकं यथा मृतप्रायं मां पूर्वं भक्षय यद्वा। मृतकं प्राणरहितं शरीरं। प्राणमंतरेण यथा न जीवति तथा पत्या विना न जीविष्य इत्यन्वयः। विलपंत्या ब्राह्मण्या। एवं प्रार्थितेऽपीति शेषः ॥६३॥६४॥६५॥ आत्मानं देहं। ताडयंती सतीति शेषः ॥ ६६ ॥ ६७ ॥ हे अकृतप्रज्ञ अशिक्षित बुद्धे । तवाधानाद्गर्भाधानात् । मृत्युः प्रदर्शितो भवेत् । मैथुनसमये तवाऽपि मृत्युर्भूयादिति यावत् । मित्रसहं कल्माषपादं ॥ ६८ ॥ प्रास्य निक्षिप्य । सहगमनं कृत्वा भर्तुर्गतिं गतेत्यर्थः । द्वादशाब्दांते विशापः सन् । तेनैव शरीरेण स्वगृहं गतः ॥ ६९ ॥ महिष्या निवारितः । तदेवं कर्मणाऽप्रजा ॥७०॥ तेन सौदासेनानुज्ञातो मद्भार्यायां पुत्रमुत्पादयेति । सप्तसमाः सप्तसंवत्सरान् गर्भमबिभ्रद्दधाना न व्यजायत नाप्रासूत ॥ ७१ ॥ अतो वशिष्ट एव तस्या उदरमश्मना पाषाणेन जघान । स उत्पन्नः सुतोऽश्मकः । स्त्रीभिः संवेष्ट्य परशुरामात्परिरक्षितोऽतो नारीकवच इत्युक्तः । परशुरामेण निःक्षत्रिये सति क्षत्रियवंशस्य मूलमभवदतो मूलक इति चाप्युक्तः ॥ ७२ ॥ ७३ ॥ यस्येलिबिलिनामकस्य । खट्वांगो राजाऽभूत् । तं विशिनष्टि ॥ विश्वसह इति । अत्यंतक्षमवानित्यर्थः । प्रसंनैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वांगेनोक्तं तावन्ममायुः कथ्यतामिति । देवैश्चोक्तं मुहूर्तमात्रमिति । तज्ज्ञात्वा देवैर्दत्तविमानेन पुरमेत्य मनः संदधे । इदानीं खट्वांगस्य स्वसाधुवृत्तानुस्मरणपूर्वकं भगवच्छरणागतिप्रकारं दर्शयति ॥ नम इत्यादिना तमहं प्रपद्य इत्यंतेन । कुलदैवतात् । ब्रह्मकुलाद्ब्राह्मणकुलात् । ते प्राणा नातिवल्लभा नातिप्रिया इति प्रत्येकं संबंधः । मह्यं मम ॥७४॥७५॥७६॥ किंचन वस्तूत्तमश्लोकादन्यद्भगवदनधीनं नापश्यं । किंतु भगवदधीनमेवापश्यमित्यर्थः ॥ ७७ ॥ अहं भूतभावनभावाद्भूतोत्पादकभगवद्ध्यानादिकामादवममन्यकामं न वृणे न स्वीकरोमीति । विषयेष्वविक्षिप्तानींद्रियाणि धियश्च येषां ते देवा अप्यात्मनं श्रीहरिं न जानंति किमुतापरे मादृशाः ॥ ७८ ॥ ७९ ॥ किमनेन बहूक्तेनार्थैवं मम सिद्धांत इति भगवति मनः संदधाति ॥ अथेति । अथ

तस्मात्त्वं श्रीहरिं शरणं प्रपद्य इत्यन्वयः । किं कृत्वा । ईशस्य हरेर्माययेच्छया विकृतैः पृथिव्यादिपंचमहाभूतैः रचितेषु गंधर्वपुरोपमेषु नश्वरेषु गुणेषु देहेंद्रियादिषु । आत्मनि मनसि प्रकृत्या स्वत एवं रूढं संगं स्नेहपाशलक्षणं हित्वा । त्यागे साधनमाह ॥ विश्वभर्तुरिति । भावेन भक्त्या ॥ ८० ॥ खट्वांगो नारायणदत्तया बुद्ध्या । इति पूर्वोक्तप्रकारेण व्यवसितो व्यवसायं प्राप्तः सन् । अज्ञानमज्ञानादिनिमित्तकमन्यस्मिन् शरीरादौ भावं विद्यमानं ममतादिरूपं संगं हित्वा तं स्वं स्वतंत्रं भावं नारायणाख्यं पदार्थमाश्रितः ॥ ८१ ॥ स्वं भावमेवाह ॥ यत्तदिति । उत्तरलिंगविवक्षया यत्तदिति यद्वस्तु तत्सर्वं प्रमाणप्रसिद्धं परं सर्वोत्तमं सूक्ष्ममतींद्रिमशून्यं गुणैः शून्यं न भवति । पूर्णमिति यावत् । शून्यकल्पितं शून्यनामकमूलरूपादभिव्यक्तं । वासुदेवेति शब्दवाच्यमिति । सात्वताः पंचरात्रिका गृणंति यं च ब्रह्मेति भगवानिति च गृणंति । हि शब्देनोक्तार्थस्य शमूनं कुरुते यस्माच्छून्यस्तस्माज्जनार्दन इत्यादि प्रमाणप्रसिद्धं दर्शयतीति द्वयोरेकान्वयः ॥ ८२ ॥ पृथुश्रवा इति रघोर्विशेषणं ॥ ८३ ॥ ब्रह्ममयो वेदमुख्यार्थभूतः साक्षाद्धरिर्ब्रह्मांडाद्बहिर्वासुदेवादिनानावताराणां बीजभूतो मूलरूपी नारायणोंऽशांशेनांशः स्वस्यांशो ब्रह्मांडांतो नानावतारणां बीजभूतः पुरुषापरनामा पद्मनाभः स्वस्यांशेन वासुदेवादिरूपांशेन तस्य दशरथस्य रामादिसंज्ञया चतुर्धा पुत्रत्वमगादित्यन्वयः । इत्थं विचिंत्य स तु वासुदेवनामा बभूवेत्युक्तेः । अंडाद्बहिर्वासुदेवादिसर्वावताराणां मूलरूपाद्विश्लेष एतन्नानावताराणां निधानं बीजमव्ययमित्युक्तेः । अंडांतर्वासुदेवादिरूपाणां पद्मनाभाद्विश्लेषस्तस्मिन्नेव संश्लेष इत्यवधेयं । यथांऽडाद्बहिर्नारायण आदौ वासुदेवादिरूपो बभूव । एवमंडांतः पद्मनाभोऽपि वासुदेवादिरूपेण चतुर्धा बभूव । स वासुदेवः प्रथमं रामा बभूव । सः संकर्षणः शेषावतारे लक्ष्मणे प्राविशत् । स प्रद्युम्नश्चक्राभिमानिनि कामावतारे भरते प्राविशत् । सोऽनिरुद्धः शंखाभिमानिनि कामपुत्रेऽनिरुद्धावतारे शत्रुघ्ने प्राविशत् । चतुर्मूर्तेर्मुकुंदस्य मूर्तिरेवाग्रतोऽभवत् । अन्येषु त्रिषु तिस्रोऽन्याः प्राविशन्निति सन्मतमिति । ननु पद्मनाभो वासुदेवादिरूपेण बभूवेत्यत्र किं प्रमाणमिति चेन्न । चतुर्मूर्तेर्मुकुंदस्येति च नान्यथाऽनुपपत्तेरेव प्रमाणत्वादिति ॥ ८४ ॥ ऋषिभिर्वाल्मीकमुख्यैर्भूरि वर्णनं त्वया मुहुः श्रुतं । तथाऽपि संक्षेपेण कथ्यमानं शृणु ॥ ८५ ॥ इदानीं संक्षेपविस्तराभ्यां च कथयंति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणादित्युक्तेर्विस्तरतो रामकथां विवक्षुः

प्रथमं तावत्संक्षेपतस्तां वर्णयन् स्वसंरक्षणं प्रार्थयते ।। गुर्वर्थ इति । सः कोसलेंद्रो रामो नोऽस्मान् अवतात् । सः कः । यो गुर्वर्थे पितुः सत्यपालनार्थं त्यक्तराज्यः सन् पद्मवत्सुकुमाराभ्यां पद्भ्यां । तदेवाह । प्रियायाः पाणिस्पर्शेऽक्षमाभ्यामसमर्थाभ्यां। अतिकोमलाभ्यामिति यावत् । प्रतिवनं व्यचरत् । हरिरिंद्रो हनुमान्सुग्रीवो वा । अनुजो लक्ष्मणस्ताभ्यां युक्तः । मृजितपथिरुजो मार्जितमार्गक्लेशः शूर्पनख्या वैरूपाद्धेतोस्तया प्रलोभितेन रावणेन । भार्याया अपहारात्प्रियाया जातो यो विरहस्तेन जातया रुषाऽऽरोपितभ्रूविजृंभणेव त्रस्तोऽब्धिर्यस्मात्सः । ततस्तद्विज्ञापनेन बद्धसेतुर्येन सः । खल एव दवो वनं तस्य दहनोऽग्निस्थानीयः। दवादावौ वनारण्यवन्ह्योरिति यादवः ।।८६।। एकपद्येनानेन सूत्रवत्संक्षिप्य कथितं रामचरितमादित एव किंचित्प्रपंचयति ।। विश्वामित्रेति । पश्यत एव लक्ष्मणस्य पश्यतोऽस्यानपेक्ष्यैव हता इत्यर्थः । नैर्ऋतपुंगवा राक्षसश्रेष्ठाः ।। ८७ ।। लोके ये वीरास्तेषां समितौ सभायां । ऐशं रुद्रसंबंधित्रिशतैः पुरुषैरुपनीतं बालगजस्य लीलेव लीला यस्य स तथा । हे नृप ।। ८८ ।। उरसि वक्षस्यभिलब्धमानां प्राप्तमानां । तत्र स्थितामित्यर्थः । आत्मनः स्वस्य रूपादिभिरनुरूपां सीताऽभिधां लक्ष्मीं जित्वा प्राप्य श्रीरामकृतधनुर्भंगमहानादश्रवणक्षुभितस्य भृगुपतेः प्ररूढदर्पमपनीतवान् । कथं भूतस्य । हतराजबीजां निर्मूलितक्षत्रसंततिं महीं कृतवतः ।। ८९ ।। इदानीं गुर्वर्थ इति श्लोकं विवृण्वन्नाह ।। य इति । कदाचित्कैकेय्या रक्षितेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतं । ततः श्रीरामस्य यौवराज्याभिषेकसमये भरतस्य राज्यं रामस्य वने वासः प्रार्थितस्तदा सत्यपाशेन परिवीतस्य परिवेष्टितस्य पितुर्निर्देशमाज्ञां शिरसा जगृहे । ततो राज्यश्रियं प्रणयिनः प्रीतिविषयान्सुहृदश्च त्यक्त्वा अधिवासमयोध्यां च त्यक्त्वा सभार्यो वनं ययौ । दुस्त्यजस्यापि हर्षेण त्यागे दृष्टांतः । मुक्तसंगो योग्यासून्प्राणानिवेति ।। ९० ।। रक्षस्वसुः शूर्पनख्या रूपं व्यकृतं कर्णनासिच्छेदनलक्षणविकारं कारितवान् । अन्यैरवारणीयं कोदंडपाणौ यस्येति हेतुगर्भं । अटमानो वने संचरन्सन् । आतपादिना क्षुधादिना च पीडितः सन् । कृच्छ्रमुवास । असुरजनमोहार्थं तथा दर्शयामासेति भावः ।।९१।। शूर्पनखीमुखात्सीतायाः सौंदर्यादिविषयकथाः श्रवणेन दीपितः प्रज्वालितो हृच्छयः कामो यस्य स तथा । तेन दशकंधरेण रावणेन सृष्टं । प्रेषितमिति यावत् । अद्भुतैणवपुषा । स्वर्णरत्नविरचितत्वेनाद्भुतहरिणदेहेन । उपलक्षितमिति शेषः । एतादृशं

मारीचं विलोक्य सीतया प्रेरितः सन् । आश्रमतोऽपकृष्टो दूरं नीतो रामो विशिखेन बाणेन मारीचमाशु जघ्न इत्यन्वयः । उग्रो नृसिंहो हिरण्यकशिपुनामानमरिं यथा । यद्वा । उग्रो रुद्रोंऽधकाख्यं रिपुं यथा ॥ ९२ ॥ रक्षोऽधमेन रावणेन रामस्यासमक्षमप्रत्यक्षमपि यापितायामपनीतायां । अवने पालने नियुक्तेन भ्रात्रा लक्ष्मणेन । रहितायामिति शेषः । प्रियया वियुक्तः । लोकदृष्ट्येति शेषः । भ्रात्रा लक्ष्मणेन सह । कृपणवद्वने चचार । किमभिप्रायः सन् इत्यनेन प्रकारेण स्त्रीसंगिनां विटानां गतिं प्रख्यापयन् । कथंभूतेन रक्षोधमेन । वृकवत्स्थितेन ॥९३॥ ततः किं चकारेत्यत आह ॥ दग्ध्वेति । आत्मकृत्यं हतकृत्यं सीतालक्ष्मणरूपं यदात्मकृत्यं तदर्थं हतकृत्यं रावणेन नष्टांशो यस्य व्यापारं मृतं जटायुषमित्यर्थः । दग्ध्वा दहनादिसंस्कारं कृत्वेत्यर्थः । कबंधं तन्नामकं स्वग्रहणाय विस्तृतबाहुं राक्षसमहन् जघान । अथ सुग्रीवेण सख्यं विधाय । अथ वालिनि हते सति कपिभिर्हनुमदादिभिर्दयितागतिं बुद्ध्वेत्यन्वयः । मनुजो मनुजाकारः स रामः प्लवगेंद्रसैन्यैः सह । वेलां समुद्रतीरमगादिति । अजभवाभ्यामर्चितांघ्री यस्य स तथा । तत्र त्रिरात्रिवासेन प्रतीक्षितः सिंधुर्यदा नोपस्थितः । तदा यस्य रोषतीव्रेण तीक्ष्णकोपेन परिवृतस्तिर्यग्भावं प्राप्तो यः कटाक्षस्तस्य पातेन संभ्रांता नक्रा मकराश्च यस्मिन्सः भयेन गीर्णो ग्रस्तः स्तंभितो घोषो यस्मिन्सः । अर्हणं पूजासाधनं । रूपी मूर्तिमान् ॥ ९४ ॥ एतावत्पर्यंतं त्वां न विदामो जडधियो मूर्खबुद्धयो न जानीम इत्यर्थः । इदानीं जानासीत्याह ॥ त्वामिति । यस्त्वं सुरगणान्सात्विकान् । असृजत इति शेषः । प्रजेशान् राजसान् रजसाऽस्राक्षीः । मन्योः क्रोधकारणात्तमोगुणाद्भूतपतयः । विभक्तिविपरिणामः । तामसानुत्पादयासि । गुणैः प्रवर्तमानस्य गुणनिर्मिताभावो नाशंकनीयः । गुणानां तदधीनत्वादित्याशयेनाह ॥ स भवान् गुणेश इति ॥ ९५ ॥ विश्रवसोऽवमेहं पुरीषतुल्यं । त्रैलोक्यं रावयत्याक्रंदयतीति तथा तं जहि । यद्यपि जलं तव न प्रतिबंधकं । तथाऽपीह जले सेतुं बध्नीहि । किमर्थं । ते यशसो वितत्यै । तदेवाह ॥ यमिति । यं सेतुमुपेत्य दुष्करं कर्मावेक्ष्य त्वद्यशो गायंति भूपास्तं सेतुमिति संबंधः ॥ ९६ ॥ तद्वाक्यमभिनंद्य यत्कृतं तदाह ॥ बध्वेति । विविधैरद्रीणां कूटैः श्रृंगैः सेतुं बध्वा सीताऽन्वेषणे हनुमतैव दग्धां लंकां विभीषणदृशा बुद्ध्याऽऽविशत् । कथं भूतैः श्रृंगैः । कपींद्राणां करैः कंपितानि भूरुहाणां अंगानि शाखादीनि येषां तैः । सुग्रीवादयः प्रमुखा येषां तैरनीकैः ॥ ९७ ॥ यदा सा लंका रामेणाविष्टा । तदा

गजकुलैर्हृदिनीव घूर्णा प्रचलिता बभूव। कथं भूता। गृहाच्छदनांतर्नाली दारुभिः परितो निर्मिता वानरेंद्राणां बलैः सैन्यै रुद्धा आवरिता विहारादयो यस्याः सा तथा। निर्भज्यमानधिषणादयो यस्याः सा तथा विहारा नानाविधक्रीडास्थानानि। कोष्ठं धान्यागारादि सद्द्वारं गृहादीनां प्रशस्तद्वारं गोपुरं पुरद्वारं सदः सभा वलीभिः प्रासादादिपुरोभागाच्छदनादीनि विटंका कपोतपेटिका। धिषणं धिष्ण्यं गृहवेदिकादि ध्वजस्तंभो हैमकुंभा गृहालंकारहेमकलशाः शृंगाटकं चतुष्पथं गोपानसी तु वलभीछादने वक्रदारुणि कपोतपालिकायां च विटंकं पुंनपुंसकमित्यमरः ॥ ९८ ॥ रक्षःपतिः रावणः कुंभनिकुंभौ कुंभकर्णसुतौ। धूम्राक्षादयो रावणसुताः। सुरांतो देवांतकः। आदि पदेन मेघनादः। अत्र क्रमो न विवक्षितः। समहिनोत्प्रेषयामास ॥ ९९ ॥ असिशूलादिभिर्दुर्गमां तां यातुधानपृतनां राक्षससेनां सुग्रीवादिभिरन्वितो श्रीरामोऽभ्यगात्। मरुत्सुतो हनुमान् ऋक्षो जांबवान् ॥ १०० ॥ ते रघुपतेरनीकपाः सेनानायका अंगदाद्याः सर्वे द्वंद्वं यथा भवति तथाऽभिपत्य शत्रुभिः संगम्य। द्वंद्वयुद्धं कृत्वेति यावत्। वरूथं सैन्यं गिरिभिः शत्रुभ्यो बलादाकृष्टैर्गदाद्यायुधैश्च जघ्नुः। यद्यपि वरूथिनी शब्दः सैन्यवाचकस्तथाऽपि वरूथ शब्दो लक्षणया सैन्यवाचक इति ज्ञातव्यं। कीदृशं। इभाश्च पत्तयश्च रथाश्चाश्वाश्च तैः सहिताः। योद्धा सहायो। योद्धारो यस्मिंस्तत्तथोक्तं। पुनः कीदृशं। सीताया अभिमर्शेन हतं मंगलं यस्य सः रावणः स एव ईशो यस्य तत्तथोक्तं ॥१०१॥ रक्षःपती रावणः स्वबलनष्टं स्वबलनाशनमवेक्ष्य यानकं पुष्पकविमानमारुह्य श्रीराममभिससार। स रामो द्युमति तेजोमति। स्वः स्वर्गादवतीर्णे स्यंदने रथे मातलिनेंद्रसारथिनाऽऽनीते। विभ्राजमानं रामं क्षुरप्रैरर्धचंद्रैः। अर्धचंद्रः क्षुरप्रः स्यादित्यभिधानं। अहनत् ॥ १०२ ॥ हे पुरुषाद पुरीष राक्षसाधम। अपकृष्टं पुरीषं स्यादित्यभिधानं। यद्यस्मादसता दुष्टेन त्वया कांता सीताऽस्माकमसमक्षमप्रत्यक्षं यथा तथाऽपहृता। तत्तस्माज्जुगुप्सितस्य कर्मणः कर्तुस्तेऽद्य काल इवांतक इव फलं यच्छामि प्रयच्छामि ॥ १०३ ॥ एवं क्षिपन्निंदन्सबाणः। सुकृती जनो रिक्तः क्षीणपुण्यःसन् स्वर्गादिव विमानात्पुष्पकान्न्यपतादिति ॥ १०४ ॥ तस्मिन् रणांगणे मंडलवत्पिपीलिकामध्यवदुदरं यस्याः सा तया रावणभार्यया सह ।। मंडं पिपीलिकामध्यमित्यभिधानं ॥ १०५ ॥ लक्ष्मणेषुभिः। उपलक्षणमेतत्। रामेषुभिश्च। आर्दितान्हिंसितान्। अर्द हिंसायामिति धातोः। आत्मानं

दहमात्मना दहन । हस्तेनेति यावत् ॥ १०६ ॥ लंका लंकास्थो जनाः परैः शत्रुभिरर्दिताः ॥ १०७ ॥ तेजोनुभावं तेजः-सामर्थ्यं येन सीतासामर्थ्याज्ञानेन ॥ १०८ ॥ लंका विधवा पतिरहिता वयं च विधवा भर्तृरहिताः । कृता इत्यनुषंगः । अयं देहो गृध्राणां प्राणरक्षाय कृतः । आत्मा जीवो नरकहेतवे नरकभोगाय ॥ १०९ ॥ पितृमेधविधानेन शवदाहादिविधिना सांपरायिकं परलोकसुखसाधनमौर्ध्वदेहिकं । आत्मा जीवे तथा देहे स्वभावे परमात्मनीति यादवः ॥११॥ अशोकवनिकामशोकवनं तत्र गतश्चासावाश्रमश्चेति मध्यमपदलोपी समासः । तत्र स्थितं । स्वविरहलक्षणव्याधः क्षामं कृशं ॥ १११ ॥ अन्वकंपतानुकंपामकरोत् ॥ ११२ ॥ यानं पुष्पकमारोप्य । सीतामिति शेषः । भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्यां । लक्ष्मणविभीषणाभ्यां वा । छत्रिणो गच्छंतीति वत् । सहित इति शेषः ॥ ११३ ॥ तीर्णवनवासव्रतः । दिनकल्पांतमायुश्च दत्वा । तेनापि सहैव ययौ ॥ ११४ ॥ कथं भूतः । शतधृत्यादिभिर्ब्रह्मादिभिरुपगीयमानचरितः । गोमूत्रयावकं गोमूत्रेण सह पक्कव्यान्नभोजनं । भ्रातरं वल्कलांबरं चीरवस्त्रं ॥ ११५ ॥ अतप्यदंतःकरणद्रवीभावं प्राप्तः । स पौरामात्यपुरोहितैः सह ॥ ११६ ॥ स्वाशिबिरात्स्वावासभूतान्नंदिग्रामाद्रामं प्रति गंतुमुद्यतः सन् । अभियायाविति शेषः । कथं भूतो । गीतादिभिर्घोषेणोच्चध्वानिना ॥ ११७ ॥ ब्रह्मवेदपठद्भिर्वेदपारायणं कुर्वद्भिर्ब्राह्मणैश्च । युक्त इति शेषः । ब्रह्म वेद तपस्तत्त्वमित्याभिधानं । पुनः कथं भूतः । स्वर्णकक्ष्यैः सुवर्णमयीकक्ष्या उदरं बंधं येषां ते तथा । तैर्गजैः । हेमैरित्यादीनि चत्वारिरथविशेषणानि । हेमैर्हेमालंकृतैश्चित्रा नानावर्णा ध्वजा येषां तैः ॥ ११८ ॥ सदश्वैरुत्तमाश्वै रुक्मसन्नाहैः स्वर्णनिर्मिताः सन्नाहाः कवचादीनि येषां तैः पुरटवर्मभिः सुवर्णकवचैर्भटैः श्रेणीभिरंगरक्षकैरुपायनोद्वहैर्भृत्यैश्च युक्त इति पूर्वेणान्वयः ॥ ११९ ॥ पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि । उच्चावचान्यनेकविधानि पण्यानि नारिकेलादीनि फलानीत्यर्थः । पुरतोऽन्यस्येति शेषः । प्रेम्णा प्रक्लिन्नं हृदयं । प्रक्लिन्ने ईक्षणे नेत्रे च यस्य स तथा न्यपतदित्यन्वयः । रिक्तहस्तेन नोपेयाद्राजानं दैवतां गुरुमित्युक्तेः ॥ १२० ॥ ततः पादुके पुरतो न्यस्य । तस्थाविति शेषः । रामो नेत्रजैर्जलैः स्नापयन् आश्लिष्य । शुशुभ इति शेषः ॥ १२१ ॥ ततो रामः सीतालक्ष्मणाभ्यां सह । विप्रेभ्यो वसिष्ठादिभ्यो नमश्चक्रे । तत्र ये कुलवृद्धा अभवन् तेभ्योऽपि नमश्चक्रे ॥ १२२ ॥ उत्तरासंगमुत्तरीयवस्त्रं धुन्वंतश्चा-

लयंत उत्तरा उत्तमाः कोसला अयोध्यापुरवासिनो माल्यैः पुष्पैः । माल्यं पुष्पे पुष्पदाम्नीत्यभिधानं ॥ १२३ ॥ अयोध्या-प्रवेशप्रकारमाह ॥ पादुकेति सार्धत्रिभिः ॥ १२४ ॥ धनुर्निषंगाद्धनुश्च निषंगौ च तान् । ऋक्षराट् जांबवान् । हैमं सुवर्णालंकृतं चर्म ॥ १२५ ॥ पुष्पकविमानस्थैरेभिर्वृतः सेवितः ॥ १२६ ॥ भ्रात्रा भरतेन । मातरं मातृसमूहं ॥ १२७ ॥ गुरूंन्वसिष्ठादी-न्ववंदे । वयस्यावरजान्स्वावरजांश्च तैः पूजितः प्रत्यपूजयत् ॥ १२८ ॥ गतान्प्राणान्प्राप्य । तन्वस्तनवो यथोत्थिता भवंति तथा । शुचो विरहशोकान् ॥ १२९ ॥ गुरुबृहस्पतिरिंद्रं यथेंद्रमिव । गुरुर्वसिष्ठो राममभ्यषिंचत् । आदि पदेन गंगादितीर्थजलं ग्राह्यं ॥ १३० ॥ कृतशिरःस्नानः कृताभ्यंगस्नानः ॥ १३१ ॥ भ्रात्रा भरतेन प्रणिपत्य नमस्कृत्वा प्रसादितः प्रार्थितः ॥ १३१ ॥ आसनं सिंहासनमग्रहीत् । गुणो धर्मः ॥ १३२ ॥ वर्तमानायां ॥ १३३ ॥ रामे राजनि भूपतौ च सति । वर्षाणि नवखंडाः ॥ १३४ ॥ शोकः प्रलापः ॥ १३५ ॥ एकपत्नीव्रतधरः परनारीसहोदर इति यावत् । राजर्षिचरितमिव चरितं यस्य स तथा ॥ १३६ ॥ अनुवृत्त्या शुश्रूषया शीलेनानुकूलस्वभावेन प्रश्रयेण विनयेनावनता ॥ १३७ ॥ इति श्रीभागवतटिप्पण्या-मष्टमोऽध्यायः ॥ ९—८ ॥ ॥

॥ हरिः ॐ ॥ आत्मना मनसाऽऽत्मानं स्वस्वरूपं परमात्मानं । ध्यायन्निति शेषः । उत्तमकल्पैर्बहुदक्षिणोपेतैः सर्वदेव-प्रधानं । आचार्यवानित्यनेन शिक्षितत्वं गुरुकुलवासित्वं च सूचयति । आचार्यवान्पुरुषो वेदेति श्रुतेः ॥ १ ॥ प्राचीं दिशं तत्र विद्यमानां भूमिं ॥ २ ॥ तदंतरा तासां दिशां मध्ये । कोणेष्विति यावत् । इदं कृत्स्नं । प्रतिगृहीतुमिति शेषः । निस्पृहो यदृ-च्छालाभसंतुष्ट इत्यर्थः । सीताऽपि स्वमलंकारं स्त्रीभ्यः । अददादित्यनुषंगः । कथं भूता । सौमांगल्यं मंगलसूत्रमेवावशेषित यस्याः सा तथा ॥ ४ ॥ ब्राह्मणा देवाः पूज्या यस्य भक्त्या क्लिन्नधियो द्रवच्चित्ताः ॥ ५ ॥ स्वरोचिषा स्वाविषयकज्ञानं दत्वे-त्यर्थः । तमो हंस्यज्ञाननिवृत्तिद्वारा मोक्षं प्रदासीत्यर्थः । तव सर्वपुरुषार्थोत्तममोक्षप्रदातृत्वात्त्वया सर्वाभीष्टमपि दत्तमेवेति भावः ॥ ६ ॥ ब्रह्मण्यश्चासौ देवश्चाकुंठमेधसेऽप्रतिहतज्ञानाय । उत्तमश्लोकानां ब्रह्मादीनां धुरं भारं वहतीति तथा न्यस्तदंडैर्मुनिभिरर्पित-चित्ते न्यस्तावंघ्री यस्य तेष्वर्पितावंघ्री येनेति वा ॥ ७ ॥ लोकवृत्तांतं जिज्ञासुः कस्यचित्पुंसो वचसः परवेश्मगां स्वैरिणीं ॥८॥

॥ ९ ॥ मुख शब्देन तत्कार्यं भाषणं ग्राह्यं । तथा च बहुमुखादित्यस्य बहुभाषणादित्यर्थः । दुराराध्याद्दुष्टानां श्लाघ्यान्न विद्यते संविद्यस्य स तथा । अज्ञाल्लोकाल्लोकापवादभीतेन रामेण त्यक्ता सीता । प्रचेतसो वरुणस्यापत्यं वाल्मीकिस्तस्याश्रमं प्राप्ता ॥१०॥ अंतर्वत्नीं गर्भिणी । यमौ यमलौ । क्रियायाः क्षत्रयोग्या जातकर्मादिक्रियाः । मुनिर्वाल्मीकिः ॥ ११ ॥ भरतस्यात्मजावास्तां । शत्रुघ्नस्यात्मजौ ॥ १२ ॥ कोटिशः कोटिसंख्याकान्गंधर्वान्गंधर्वजन्मनोऽसुरान् ॥ तदुक्तं ॥ कोटित्रयं स निजघान तयाऽसुराणां गंधर्वजन्म भरतेन सतां च धर्ममिति ॥ १३ ॥ राज्ञे रामभूपाय । मधुरां तन्नामपुरीं च ॥ १४ ॥ मुनौ वाल्मीकिमुनौ । भर्त्रा रामेण विवसिता प्रवासिता । त्यक्तेति यावत् । विवरं भूबिलं ॥ १५ ॥ ततो रामः किं कृतवानित्यत आह ॥ तच्छ्रुत्वेति । सर्वेश्वरो भगवान् रामः । तत्सीताभूविवरं प्रविवेशेत्येतच्छ्रुत्वाऽदुःखोऽपि भार्यायामत्यंतासक्तिर्न कार्येति लोकशिक्षार्थमसुरजनमोहनार्थं च धिया मनसा शुचः शोकान् रुंधन्निरोधं कुर्वन्नपि सीतायास्तांस्तान्पातिव्रत्यादिसीतागुणान्स्मरन्निव दृश्यमानः शुचः शोकान्निरोद्धुं नाशक्नोदिति दर्शयामास । यदि रामस्याल्पदुःखमपि स्यात्तर्हि तस्य भगवत्त्वं न स्यात् । रामत्वं न स्यात् । सर्वेश्वरत्वं न स्यादिति बाधकतर्कत्रयप्रदर्शनार्थं भगवन्नित्यादिविशेषणत्रयं प्रायुयोजि । नित्यसुखपूर्णज्ञप्तिः स्वरूपोऽसौ यतो विभुरतोऽस्य राम इत्याख्या स्यान्न दुःखं कुत एवमपीत्यादाविति । स्त्रीपुरुषयोरत्यंतासक्तिर्महतामप्युक्तरीत्या क्लेशकरा किमन्येषामतस्तत्रात्यंतासक्तिर्न कार्येत्याशयेनाह ॥ स्त्रीपुंप्रसंग इति । स्त्रीपुंसोः प्रसंगः । अत्यंतासक्तिःसर्वत्रैव । इह लोके यक्ष्मादिभयावहः परलोके नरकादिभयावहः किमुत ग्राम्यस्य कर्मरतस्य गृहमेधिनो गृहस्थस्येत्यर्थः ॥ १६ ॥ रामः सीतया सह कियंतं कालमखंडितमग्निहोत्रं चकारेत्यत आह ॥ तत ऊर्ध्वमिति । प्रभू रामः । देव्या सहेति शेषः । नक्षत्रमानेन त्रयोदशाब्दसहस्रं राज्यं । कुर्वन्निति शेषः । अखंडितमग्निहोत्रमजुहोत् ॥ तदुक्तमेतत्तात्पर्ये ॥ नक्षत्रमासगणितं त्रयोदशसहस्रकं । ब्रह्मलोकसमं चक्रे समस्तं क्षितिमंडलमिति । अतो द्वादशसाहस्रं रामो राज्यं चकारेति विष्णुपुराणविरोधो नास्ति । तस्य सौरमासाभिप्रायेण प्रवृत्तत्वादिति द्रष्टव्यं । कथं भूतः । तत ऊर्ध्वं सीताया भूमिप्रवेशानंतरं । सप्तशतवर्षाण्यज्ञानिनां ब्रह्मचर्यमूर्ध्वरेतस्त्वरूपं व्रतं धारयन्निव दृश्यमानः ॥ तदुक्तं ॥ भूमिप्रदेशादूर्ध्वं सा रेमे सप्तशतं समा इति । रामेण दृश्या त्वन्येषामदृश्या जनकात्मजेति च ॥१७॥ समः स्मरतां भक्ति-

पूर्वकं स्मरणं कुर्वतां सतां हृदि स्वपादपल्लवं विन्यस्य तेषां सर्वदा स्वपादपल्लवध्यानं दत्वेत्यर्थः । आत्मा ज्योतिः प्रकाशं निजं धाम वैकुंठाख्यमगात् । रामस्य परंधामगमनानंतरं सर्वे ध्यानासक्ता बभुवुरिति भावः । कथं भूतं स्वपादपल्लवं । अंशुकैः किरणैः । सूर्यस्येति शेषः । बुद्धिविकसितं पद्ममिव शोभमानं ॥१८॥ सदा रामनामामृतपानतृप्तः शुकाचार्यो रामकथाकथनेन संजातभक्त्युद्रेकः पुनरिदानीं संक्षेपेण तत्कथाप्रशंसां कुर्वन् शरणं प्रार्थयते ॥ नेदं यश इति द्वाभ्यां । अस्त्रपाणेर्धनुष्पाणेः । अस्त्रं प्रहरणं चापमित्यभिधानं । रघुपतेर्जलधिबंधनं रक्षसां वध इतीदृशं यशः कविभिर्बहुधा वर्णितमप्यद्भुतं न भवति । तत्रहेतुः । विश्वास्मिन्प्रपंचे मूर्तिर्यस्येति । तत्सृष्ट्वा तदेवानु प्राविशदिति श्रुतेः । सृष्ट्यादिकर्तुरित्यर्थः । विश्वं मूर्तौ यस्येति वा । स्वोदरस्थाशेषप्रपंच इत्यर्थः । तस्य लीलार्था तनुर्यस्य तस्य । सर्वस्मादधिकं शांतमानंदपूर्णं नित्यमुक्तं धाम स्वरूपं यस्य तस्य रघुपतेः कपयः शत्रुहनने सहाया बलभूताः किं नेत्यर्थः ॥ १९ ॥ दिगिभेंद्राणां दिग्गजेंद्राणां दिग्गजेंद्रसदृशरावणकुंभकर्णादीनां पाते सति । श्रीरामेन रावणादि राक्षससंहारानंतरमिति यावत् । नृपाणां युधिष्ठिरादीनां सदःसु ऋषयो मार्कंडेयादयो यस्य गायंति । तदित्यव्ययं । तस्य रघुपतेः पादांबुजं शरणं प्रपद्य इत्यन्वयः । यद्वा । न केवलं नृपसभासु गायंत्यपि दिगिभेंद्रपाते दिग्गजानां पातः संचारो यस्मिन्देशे स तथा तस्मिन् । लोकालोकप्रदेशेऽपीत्यनेन सर्वत्रेत्याह । कथं भूताः । नाकपाला इंद्रादयो देवा वसुपाला वसुधापालाः । यद्वा । वसुपालाः कुबेरादयस्तेषां किरीटैर्जुष्टं ॥ २० ॥ रामो यैः । भक्तिपूर्वकमिति शेषः । स्पृष्टो नमनादिना । दृष्टो वा चक्षुरादिना । उपलक्षणमेतत् । श्रुतो वा श्रोत्रादिना संवित्तः सम्यग्ज्ञातो वाऽनुगतः पृष्ठतो याता वा कोसला अयोध्यावासिनः । इत्युपलक्षणं । सर्वेऽपीति ग्राह्यं । यत्र योगिनो भक्तिज्ञानयोगवतो गच्छंति तत्स्थानं ययुरित्यन्वयः ॥ २१ ॥ भक्त्या चरितं श्रोतुः फलमाह ॥ पुरुष इति । श्रवणैः । बहुवचनमाद्यर्थे । श्रोत्रादिभिरित्यर्थः । उपधारयन् श्रोत्रेण श्रवणं मनसा ध्यानं वागिंद्रियेण कथनमित्यादिरूपेण भक्तिपूर्वकं धारणं कुर्वन्नित्यर्थः । आनृशंस्यपरः प्रमादेनायोग्यकर्मकरोऽपि कर्मबंधैर्दुष्कर्मलक्षणप्रतिबंधैः । अथवा । कर्मजन्यनानायोनिबंधैरित्यर्थः । तस्मात्तच्छ्रवणादिकमवश्यं कार्यमिति रामकथायां विशेषजिज्ञासया राजा पृच्छति ॥ कथमिति । सः रामः स्वयं सीतया सह स्वगृहे कथं वर्ततेति प्रथमः प्रश्नः । स राम आत्मनः स्वस्य भ्रातॄन्प्रति कथं वर्ततेति

द्वितीयप्रश्नः । ते भ्रातरः पौराः प्रजाश्चेश्वरे रामे कथं प्रवर्तंतेति तृतीयप्रश्नः। यद्यपि पौराः प्रजा शब्दवाच्यास्तथाऽपि ब्राह्मणपरिव्राजकन्यायेन भेदोऽवगंतव्यः। क्रयविक्रयं कृष्यादिकं कृत्वा वैश्यवृत्त्योपजीविनः पौराः । तदन्ये पुरस्थाः प्रजा इति विवेकः ॥ २३ ॥ तत्र प्रथमं तावत्स रामो भ्रातृन्प्रति कथं प्रवर्तंतेति द्वितीयप्रश्नस्योत्तरमाह॥ अथेति । अथ राज्याभिषेकानंतरं त्रिभुवनेश्वरो रामो दिग्विजयार्थं भ्रातृन् आदिशत् । तेऽपि तदाज्ञया । दिग्विजयं चक्रुरिति शेषः । तृतीयप्रश्नस्योत्तरं वक्तुं किंचिदाह ॥ आत्मानमिति । स्वानां स्वभक्तानामात्मानं दर्शयन्वृंदावनादागत्य श्रीकृष्ण इव रामोपि वनादागत्य भक्तजनानुकंपया पुरीमैक्षत । पुरीं निरीक्षणार्थं राजमार्गेण प्रतिवीथिं चचारेति भावः॥ २४ ॥ पुरीं वर्णयति ॥ आसिक्तेति त्रिभिः । वा शब्दः समुच्चये । गंधोदैर्गजानां मंदसीकरैश्च मदचलबिंदुभिश्चासिक्तमार्गा । कथं भूता । रावणादीन्निहत्य प्राप्तं स्वामिनमालोक्य सुतरां हर्षेण मत्तां कामिनीमिवास्थितं ॥ २५ ॥ चैत्यं पाषाणादिभिर्बद्धं वृक्षमूलस्थानं देवगृहो देवालयः ॥२६॥ संवृतैः फलस्तबकसहितैः पूगैः क्रमुकैः । कौशेयादिसुवाससां पताकाभिः । आदर्शैर्दर्पणैरंशुकैर्वस्त्रैः कृतानि विरचितानि कौतुकानि येषु तानि तोरणानि बहिर्द्वाराणि यस्यां सा तथा । तां पुरीं । ऐक्षतेत्यनुषंगः ॥ २७ ॥ पौराणां तस्मिन्प्रवृत्तिमाह ॥ तमुपेयुरिति । प्राक् वराहवतारे त्वया पातालादुद्धृतां । भूमिमिति शेषः । पाहीति शेषः । मंगलवचनानि युयुजुः ॥ २८ ॥ प्रजानां तस्मिन्प्रवृत्तिमाह ॥ तमिति । अनेन श्लोकद्वयेन पौराः प्रजाश्च कथं वर्ततेति तृतीयप्रश्नस्योत्तरमुक्तं भवति । न तृप्तनेत्रा नसमासोऽयं ॥ २९ ॥ रामः स्वयं सीतया सह कथं वर्ततेति प्रथमप्रश्नस्योत्तरमाह ॥ अथेति । स्वगृहं प्रविष्टः सन् तस्मिन्सीतया सह रेमे इति पंचमेनान्वयः। गृहं वर्णयति ॥ जुष्टमित्यादिना भूषणैरित्यंतेन । पूर्वराजभी रघ्वादिभिः । समासांतविधेरनित्यत्वात् । पूर्वराजभिरिति साधु । अनंता अपरिमिता गृहा अंतर्गृहा नवरत्नानां कोशाश्च तैराढ्यं ॥ ३० ॥ विद्रुममया उदुंबरा देहल्यो येषु द्वारेषु तैर्द्वारैः स्वच्छैर्मारकतैरिंद्रनीलमणिमयैः स्थलैः स्फटिकभित्तिभिश्च भातं ॥ ३१ ॥ वाससां दैदीप्यमानसुवर्णवाससां मणिगणानां चांशुभिर्दीप्तिभिश्चिच्छुद्धचैतन्यं तद्वदुल्लासैरुज्ज्वलैर्मुक्ताफलैर्मुक्तामणिभिर्मंडितं । यद्वा । चिदिति व्यस्तं पदं । चित्कचिद्वैदूर्यस्तंभादिषु यथा शोभमुज्ज्वलैर्मुक्ताफलैर्मंडितामित्यर्थः । कांताः कमनीयाः कामोत्पत्तय उपभोगसाधनानि ताभिः ॥ ३२ ॥ पुष्पसमूहैर्मंडितैः स्त्रीपुंभिर्जुष्टं ।

पुनः कथं भूतैः । भूषणानां भूषणभूतैः ॥ ३३ ॥ स्निग्धया स्वस्मिन्भक्तियुक्तया प्रियया भार्येच्छया इच्छानुसारिण्या सीतया सह रेमे । कथं भूताः । स्वारामाः शोभनोद्यानानि तत्र चारः संचारो येषां देवादीनां तेषां ऋषभः ॥ ३४ ॥ निरंतरमप्यनुरोधेषु संचरतामीश्वर इत्यनेनातीवसौख्यं सूचयति । यथाकालं विहितकालमनतिक्रम्य कामान् बुभुजे । अन्यांस्त्रिवर्गान् । यद्वा । स्वभोगार्थमन्यान् जनान्नृणां नृभिरभिध्येयमंघ्रिपल्लवं यस्य ॥ ३५ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ९—९ ॥ ॥

॥ हरिः ॐ ॥ द्वौ पुत्रे कुशलवश्चेति तत्र कुशस्य वंशमाह ॥ कुशस्येति । अतिथिः पुत्रोऽभवत् । अथ तस्मान्नभात् । पुंडरीकस्ततः क्षेमधन्वानः सकाशात् । देवानीक इत्युत्तरेणान्वयः ॥१॥ वज्रनाभ इत्यनंतरं तस्मादिति शेषः । तस्माद्वज्रनाभादर्कसंभवाख्यः ॥२॥ स्वगणस्तत्सुतोऽर्कसंभवसुतः । तस्मात्स्वगणात् । विधृतः सुतोऽभवत् । ततो विधृतस्य सकाशात् । हिरण्यनाभोऽभूत् । कथं भूतः । जैमिनेः शिष्यो योगस्याध्यात्मयोगस्याचार्य उपदेशकर्ता । योगशास्त्रप्रवर्तक इत्यर्थः ॥ ३ ॥ यतो हिरण्यनाभाद्याज्ञवल्क्यो ऋषिः । सकलमध्यात्मं परमात्मविषयं योगं । अध्यगादित्यनुषंगः ।महांत उदयाः सिद्धयो यस्मात्तं । हृददग्रंथेरज्ञानस्य भेदकं ॥५॥ ततो हिरण्यानाभात् । अथेत्यस्य च पूर्वत्रोत्तरत्र च संबंधः । अथ ध्रुवसंधेः सुदर्शनः । अथ सुदर्शनादग्निवर्णः । अथाग्निवर्णाच्छीघ्रः । तस्य शीघ्रस्य मरुत्तन्नाम्ना सुतोऽभवत् ॥ ५ ॥ मरुतं विशिनष्टि ॥ योऽसाविति । योगेन सिद्धो योगीत्यर्थः । कलापग्राममास्थितः सन् सूर्यवंशं भावयिता भविष्यति ॥ ६ ॥ तस्मान्मरुतः शुश्रुताख्यः । तस्य सांधिः संधिनामकः ॥ ७ ॥ समरे । बृहद्बलो । ते तव पित्राऽभिमन्युना हतः । ईक्ष्वाकुभूपालास्तद्वंशजन्यभूपा इत्यर्थः । अनागतानुत्पत्स्यमानान् ॥ ८ ॥ तस्येत्यनुवर्तते । तस्योरुक्षयस्य वत्सप्रीतः ॥ ९ ॥ तस्येत्यनुवर्तते । तस्य प्रतिव्योमस्ततो भानुस्ततो दिवार्कस्ततो वाहिनीपतिस्ततः सहदेवः । भावीत्येतत्सर्वत्रानुवर्तते । ततो बृहदश्वो मरुदेवस्तत्सुतः सुप्रतीकसुतः ॥१०॥११॥ तत्तस्मादमित्रजित् । तस्माद्बर्हिः । तस्मात्कृतंजयः ॥ १२ ॥ अथ शाक्यात् ॥ १३ ॥ तनयस्तनयनामकः । ततः सुमित्रः सुमित्रो नाम राजा । निष्ठाया वंशावलेरंतोऽवधिभूतः । तत्र वंशः समाप्त इत्यर्थः । एतेन नृपा बार्हद्बला बृहद्बलोऽनागतानां मूलपुरुषस्तत्संबंधिन इत्यर्थः ॥ १४ ॥ एतदेव

विशदयाति । इक्ष्वाकुसंबंधिनामयं वंशः सुमित्रांतः सुमित्र एवांतो यस्य स तथा भविष्याति ।.कुतः । यतस्तं सुमित्रनामकं प्राप्य संस्था नाशं प्राप्स्याति । वंश इत्यनुवर्तते ॥ १५ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ९—१० ॥ ॥

॥ हरिः ॐ ॥ इक्ष्वाकोर्ज्येष्ठपुत्रविकुक्षेर्वंशपरिकरं निरूप्य द्वितीयपुत्रस्य निमेरौरसपुत्रो नाभूदिति दर्शयन् आख्यायिकामाह ॥ निमिरित्यादिना । निमिः सत्रमारभ्य वसिष्ठं ऋत्विजमवृत वव्रे । सोऽपि वसिष्ठोऽपि वृतोऽस्मि ऋत्विक्त्वेन स्वीकृतोऽस्मि ॥ १ ॥ तत्र शक्रयागं निवृत्य समाप्य तावत्पर्यंतं मां प्रतिपालय प्रतीक्षस्व । गृहपतिर्निमिः ॥ २ ॥ संतस्त्रायंत इति सत्त्रं परं ब्रह्म तद्विदां मध्ये विद्वांस्तेषां संशयच्छेत्तेत्यर्थः । आत्मवान्मनोजयवान् । अपरैर्वसिष्ठव्यतिरिक्तैः । यावता कालेन गुरुर्वसिष्ठः ॥ ३ ॥ निवर्त्येंद्रयागं समाप्य । आगतो गुरुः शिष्यस्य निमेर्व्यतिक्रमं सत्रारंभणरूपमपराधमित्यर्थः । पूर्वमेव गुरुप्रार्थनायाः कृतत्वात् ॥ ४ ॥ निर्निमित्तं शापदानमधर्म इत्याशयेनाधर्मवर्तिन इत्युक्तं । लोभात्पौरोहित्यविषयात् ॥ ५ ॥ इत्युक्त्वा स्वदेहं विससर्ज । अध्यात्मकोविदस्तत्त्वज्ञानी वशिष्ठो निमिशापाद्देहं । विससर्जेति शेषः । वसिष्ठो निमिशापेन देहोत्सर्जनानंतरं कुत्रोत्पन्न इति तत्राह ॥ मित्रावरुणयोरिति । देवताद्वंद्वेचेति दीर्घः । अयं भावः । मित्रावरुणयोरुर्वशीदर्शनाद्रेतःस्कन्ने सति ताभ्यां कुंभे विषिक्तं तस्माद्वशिष्ठो जज्ञ इति । तथा च श्रुतिः । कुंभे रेचः सिषितुः समानमिति । प्रपितामहो मम वसिष्ठो वृद्धप्रपितामह इत्यर्थः । वेदव्यासस्य पितृत्वात्पराशरस्य पितामहत्वाच्छक्तेः प्रपितामहत्वाच्छुकस्य वासिष्ठो वृद्धप्रपितामह इति ज्ञातव्यं । तद्देहं निमिदेहं गंधवस्तुषु गंधवासिततैलेषु ऋषिसत्तमाः ॥ ६ ॥ ऊचुः । हे प्रभवः । यूयं यदि प्रसन्नास्तर्हि जीवत्विति । मुनिभिरुक्तेति शेषः ॥ ७ ॥ तथेत्युक्ते देहो निमिर्देहबंधनं देहसंबंधः ॥ ८ ॥ यस्य देहस्य वियोगभयेन कातरा उद्विग्नाश्चंचलाश्चरणांभोजं । हरेरेति शेषः । हरिमेधसस्तत्त्वज्ञानिनो तं देहं नावरुरुत्से न स्वीकर्तुमिच्छामि ॥ ९ ॥ अस्य देहस्य सर्वत्र मनुष्यादिदेहेषु ॥ उदके समुद्राद्युदके । ॥ १० ॥ निमिर्विदेहः सन् लोचनेषूच्यतां वसतु । एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यतीति भावः । कथं । ज्ञायत इति तत्राह ॥ उन्मेषणेति । उन्मेषणनिमेषणाभ्यां प्रवर्तकत्वेन लक्षितो ज्ञायमानः । किमस्य कर्मेति तत्राह ॥ अध्यात्मेति । अधिकश्चासावात्मा च हरिस्तत्र संस्थितः परमात्मोपासनायुक्त इत्यर्थः ॥ ११ ॥ तं देवं मृतादपि

निमेर्देहाद्वंशप्रवृत्तिं दर्शयति ॥ अराजकभयमिति ॥ १२ ॥ अस्यान्वर्थानि त्रीणि नामान्याह ॥ जननादिति । सः कुमारोऽसाधारण्येन जननाज्जनको विदेहो निमिस्तद्देहजन्यत्वाद्विदेहो वैदेहः । मिथिला येन निर्मितेत्यनेन व्युत्पत्त्यनंतरमर्थादुक्तं ॥ १३ ॥ तस्मात्कुमारादुदावसुः । देवरातस्तन्नामा ॥ १४ ॥ कथं भूतः । महावीर्यः । सुधृत्पिता सुधृतो जनको महावीर्यात्सुधृन्नामकाज्जात इत्यर्थः । ततो धृष्टकेतोर्हर्यश्वः ॥ २५ ॥ यतः कृतरथाद्देवमीढो जातस्तस्य देवमीढस्य । अथ विधृतात् ॥ १६ ॥ ततो महाधृतेः कृतिरातोऽथानंतरं तत्सुतः स्वर्णरोमाः । ऱ्हस्वरोमाख्यः सुतः ॥ १७ ॥ ततो ऱ्हस्वरोम्णः सीरध्वजो जज्ञे । सीरध्वजस्य जनकेति सांकेतिकं नाम । मिथिलांधिपतित्वान्मिथिलेति नाम । विदेहदेशाधिपतित्वाद्विदेह इति नामेति नामत्रयं प्रसिद्धिबलाज्ज्ञेयं । कर्षतः । सीरध्वजापरपर्यायस्य । जनकस्येति शेषः । तस्माद्धेतोर्जनकः सीरध्वजः । सीताजन्महेतुत्वेन सीरध्वजं गमकं ज्ञापकं यस्य स तथा सीरध्वज इति स्मृतः । ध्वज गताविति धातोः ॥ १८ ॥ तस्य सीरध्वजस्य ॥ १९ ॥ कृतध्वजसुतः केशिध्वजः ॥ २० ॥ ततः केशिध्वजस्य । पंडितत्वाद्देशांतरं गतः । तस्य केशिध्वजस्य ॥ २१ ॥ तत इत्यस्योत्तरत्र संबंधः । तत ऊर्जकेतोरजः सुतः । अथाजस्य कुरुजिन्नामसुतः ॥ २२ ॥ तस्य कुरुजितः । तस्येत्यस्योत्तरत्रापि संबंधः । तस्यारिष्टनेमेः श्रुतायुः । तस्य सुपार्श्वकृत्तस्मादुपगुरोरुपगुप्तः । अस्योपगुप्तस्याग्निसंभवः । तन्नामा सुतः ॥ २४ ॥ अथाग्निसंभवाद्वैवस्वतः । युयुधानस्तत्पुत्रो वैवस्वतपुत्रः सुभाषणः । तत्पुत्र इत्यनुवर्तते । युयुधानपुत्रस्ततः सुभाषणादस्माद्विजयादृतनामा सुतः ॥ २५ ॥ शुनकस्तत्सुतो हतसुतो वीरहव्यस्तत्सुतः शुनकसुतः सन् जज्ञे । ततो वीरहव्याद्धृतः । महावशी तन्नामा सुतः ॥ २६ ॥ एते निमिदेहोत्पन्ना जनकादयो मिथिलाधिपतित्वेन तन्नामका आत्मविद्याविशारदा ब्रह्मविद्याविशारदा गृहेषुस्थिता अपि योगेश्वरा योगेश्वरो याज्ञवल्क्यस्तत्प्रसादेन द्वंद्वैः शीतोष्णादिभावैर्मुक्ताः । द्वंद्वैर्मुक्ता इत्यनेनैतत्कीर्तनादिकमत्यंतसफलमिति सूचयाति ॥ २७ ॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ९—११ ॥

॥ हरिः ॐ ॥ एवं सूर्यवंशपरिकरं निरूप्यासमाप्ति सोमवंशमाह ॥ अथात इति । अथ सूर्यवंशकथनानंतरं पुण्यश्लोकराजवंशज्ञानं पुरुषार्थसाधनमतस्तस्मात्सोमवंशः श्रूयताम् । ऐलादयः । बुधादिलायां जातः पुरूरवा ऐलः स एवादिर्येषां ते ॥ १ ॥

पुंसोऽडांतर्गर्भोदके शयानस्य पुरुषनामकस्य हरेरित्यर्थः । नाभिन्हदसरोरुहाज्जातस्य धातुः ॥ २ ॥ तस्यात्रेर्दृग्भ्य आनंदाश्रुभ्योऽत एवामृतमयः । किलेत्याश्चर्ये । अस्य वक्ष्यमाणदर्पकारणमाह । विप्रेति । यः सोमः विप्राणामोषधीनामंबुगर्भादीनां कुमुदादीनां पतिः पतित्वेन कल्पितः ॥ ३ ॥ सोमस्य पुत्रो बुध इति वक्तुमुपोद्घातमाह । पत्नीमित्यादिना । तारां नामपत्नीमहरत् ॥ ३ ॥ अभीक्ष्णशो बहुवारं तत्कृते तारार्थं ॥ ५ ॥ सुराणां दानवानां च विग्रहे कारणमाह ॥ शुक्र इति । बृहस्पतेर्द्वेषाद्बृहस्पतिविषयकद्वेषात् । उडुपमग्रहीत् । शरणागतं गुरुपत्नीसहितं सोमं शुक्रः सासुरं सन् जगृहेत्यर्थः । संधिरार्षः । गुरोरंगिरसः सुतं बृहस्पतिमग्रहीत् । अंगिरसः सकाशात्प्राप्तविद्याधर इति प्रसिद्धिः ॥ ६ ॥ सुरासुराणां नाशो यस्मिन्स तथा । तारकामयो गुरुर्भार्या तारा तारैव तारका । स्वार्थे क प्रत्ययः । ताराप्रधानसमर इत्यर्थः ॥ ७ ॥ अंगिरसा बृहस्पतिपित्रा निवेदितो विज्ञापितोऽजो ब्रह्मा पतिर्बृहस्पतिस्तामंतर्वत्नीं गर्भिणीमवैदबुध्यत ॥ ८ ॥ बृहस्पतिराह ॥ त्यजेति । मत्क्षेत्रादित्यव्ययं । मद्भार्यायां त्वयि निहितं गर्भमित्यर्थः । त्यज त्यजेत्याक्रोशाद्द्विरुक्तिः । गर्भिणीं न हन्यादित्युक्तेः । गर्भे सति न हन्यात् । गर्भे त्यक्ते मां हनिष्यतीति बिभ्यतीं प्रत्याह ॥ नाहमिति । कुत इत्यत आह ॥ स्त्रियमिति । हेतुगर्भमिदं । हे सांतानिके । दुष्टसंतानयुक्ते । हे असति दुष्टे ॥ ९ ॥ तत्याज सुषुवे । अंगिरसो बृहस्पतेः । सोम एवं सोमोऽपि ॥ १० ॥ तस्मिन्कुमारे विवदमानयोः सतोः ॥ ११ ॥ पपृच्छुः । तारामिति शेषः । अलोकं लज्जयाऽनृतनिमित्तलज्जया ॥ १२ ॥ असद्वृत्ते दुराचारे । न वोचसि न कथयसि । न वोचसीति छांदसं । आत्मावद्यस्य स्वदोषस्य निगूहिनीमाच्छादनकरीं । आत्मावद्यनिगूहिनीमित्यनेन भस्मीकरणयोग्यत्वे सूचितेऽपि मातृ शब्दवाच्यत्वात्त्वां न भस्मीकरोमीति सूचिता ॥ १३ ॥ मातुःक्षेप्तारं निंदकं समप्राक्षीत्प्रश्नं चकार । रह एकांते सांत्वया समाधानवाचा ॥ १४ ॥ तं कुमारं । आत्मयोनिर्ब्रह्मा ॥ १५ ॥ बुध इति नामकरणनिमित्तमाह ॥ बुद्ध्येति । येन पुत्रेण । ततो बुधात् । उदाहृतो द्वितीयाध्याये ॥ १६ ॥ पुरूरवसः सकाशादुर्वश्यां प्रमुखाः षट् पुत्रा जाता इति वक्तुमुपोद्घातमाह ॥ तस्येत्यादिना ॥ १७ ॥ ननु देवी कुतो मनुष्यांतिकमागतेति तत्राह ॥ मित्रावरुणयोरिति ॥ १८ ॥ उपतस्थे तस्थौ ॥ १९ ॥ श्लक्ष्णया मधुरया ॥ २० ॥ नावावयोः शाश्वतीर्बह्वीः समाः संवत्सरान् । रतिस्तु ॥ २१ ॥ अतो

मम मनोदृष्टिश्च । यस्य तवांगांतरं वृक्षमासाद्य रिरंसया रंतुमिच्छया । स्फुटं नेत्यनुवर्तते । न च्यवते नापयाति । तस्मादहं त्वया सह रंस इत्युत्तरेणान्वयः ॥ २२ ॥ केनचिद्व्याजेन जिगिमिषोस्तस्य समयबंधप्रकारमाह ॥ एताविति द्वाभ्यां । उरणकौ मेषौ न्यस्तौ निक्षेपकल्पनया स्थापितौ । संरस्ये त्वया सह रतिं करिष्ये । अस्माकमिवमेव व्रतक्लृप्तिरित्याह ॥ श्लाघ्य इति । यः श्लाघ्यः कमनीयः स एव स्त्रीणां वरः पतिः स्मृतः । अतो विजातीयत्वं न दोष इति भावः ॥ २३ ॥ मैथुनादन्यत्र सुरतसमयमंतरेण विवासं नग्नं त्वां नेक्षे न पश्यामि । अन्यथेतः । गमिष्यामीति शेषः । पुरूरवा उत्तरमाह ॥ तत्तथेति । प्रतिपेदेंऽगीकृतवान् ॥२४॥ ॥ पाठांतरं ॥ ॥ यदंगान्न रामा याति सदृष्टो हरिराश्रयः ॥ मनोहरत्वे निमित्तमाह ॥ यदंगादिति । रमा यस्य हरेरंगान्न याति नान्यत्र वर्तते । नित्याश्रितवक्षस्थलत्वात् । स हरिस्तवाश्रयो दृष्ट इत्यन्वयः । लक्ष्मी तत्सान्निधिपात्रत्वादित्यर्थः ॥२२॥ तस्येंगितं हर्षोल्लासं दर्शयति ॥ अहो इति । अहो आश्चर्यकरं तव रूपं । अहो आश्चर्यकरं तव भावं शृंगारादिभावं च । दृष्टेति शेषः । को न सेवेतेत्यन्वयः ॥२५॥ यथार्हतो राजयोग्यभोगसाधनद्रव्येण सुराणां विहारो येषु तथा तेषु चैत्ररथादिषूद्यानादिवनेषु ॥ २६ ॥ पद्मकिंजल्कगंध इव गंधो यस्यास्तन्मुखामोदमुषितः प्रलोभितः सन् ॥ २७ ॥ मह्यं ममास्थानं सभा नैव शोभते । अतस्तां विचार्यानयेति समचोदयत् ॥ २८ ॥ महारात्रौ मध्यरात्रौ । राजनि राज्ञि । जाययोर्वश्या ॥ २९ ॥ पुत्रयोः पुत्रवत्पालितयोर्जिगमिषयोः । तस्याः पुरुषोक्तिमाह ॥ हताऽस्मीति । नपुंसा नपुंसकेन ॥ ३० ॥ विश्रंभाद्यस्मिन्विश्वासाद्यथा नारी निशि संत्रस्था सती शेते । तथा त्वमपि रात्रौ संत्रस्तः सन् शेषे । अथ त्वं दिवैव पुमान् रात्रौ षंढतुल्य इत्यर्थः ॥३१॥ प्रतोदैरंकुशैः । निस्त्रिंशं खड्गं ॥ ३२ ॥ स्वविद्युता स्वप्रकाशेन । प्रद्योतयंत दीप्तिमकुर्वत ॥ ३३ ॥ ऐल इलापुत्रः पुरूरवा बभ्राम । भ्रम अनवस्थान इति धातुः । पर्यटनं कृतवान् । विव्हल उद्विग्नः ॥ ३४ ॥ पुरूरवाः सरस्वत्यां तन्नामिकायां नद्यामुर्वशीं वीक्ष्य पंच तत्सखींश्च पश्यन्सूक्तं प्राह ॥ अहो जायेति । सूत्रोक्तप्रकारेणेत्यर्थः ॥ ३५ ॥ किं तत्सूक्तमित्यतोऽर्थतस्तत्प्रातिगृण्हाति ॥ अहो जाये तिष्ठेति । अहो जाये तिष्ठ मनःपूर्वकं पूर्ववत्तिष्ठ मां त्यक्तुं नार्हसि । तिष्ठ तिष्ठेत्यादराद्द्विरुक्तिः । हे घोरे सुरतशौंडे । नौ मंत्राः सुरतमंत्रा अनिवृत्ता अथाऽपि अपरिसमाप्ता इत्यर्थः । वचांसि कृणवावहै करवावहै ॥ ३६ ॥ सारसंग्रहेण मध्ये काश्चन

ऋषा । विहाय सुदवा य पतत्यत्रेत्येनां ऋचमर्थेत उदाहरति ॥ सुदेव इति । हे देवि । सुदेवः क्रीडादिसाधनो मम देहः । अत्र कुरुक्षेत्रे पतति पतेत् । हे देवि । त्वयाऽयं देहो दूरं हृतो दूरेऽपहृतस्त्वत्प्रसादस्य नास्पदमनास्पदं । एनं देहं वृकाः खादंति ॥३७॥ हे पुरूरवाः । त्वं मां मृथा म्रियस्व पुरुषोऽसि । अतो धैर्यमावहेति भावः । इमे वृकाः प्रसिद्धास्त्वां मास्माद्युः । इदानीमुर्वशी पुरूरवसं प्रति हितमुपदिशति ॥ क्वापीति । वृकाणां सालवृकाणां यथा हृदयं यथा कुटिलं तथा स्त्रीणामपि हृदयं कुटिलं । अतः क्वापि सख्यं स्त्रीभिर्न कार्यमित्यर्थः ॥ ३८ ॥ एतदेव विवृणोऽति ॥ स्त्रिय इति । दुर्मर्षा अमर्षणयुक्ताः प्रिये प्रेष्ठा अपि महासाहसो यासां तांस्तथा । एतदेव विविच्य दर्शयति ॥ घ्नंतीति । विस्रब्धं विश्वस्तं ॥ ३९ ॥ अलीकविस्रंभं कपटविश्वासं विधायाज्ञेष्वत्यंत-सौख्यदा इव प्रतीयमाना नवं नवपुरुषमभीप्संत्य इच्छंत्यः । पुंश्चल्य इत्यस्य विवरणं स्वैरवृत्तय इति । घ्नंतीति पूर्वेणान्वयः ॥४०॥ तं सांत्वयति ॥ वत्सरांत इति । भो ईश्वरपते । भवान्मया सहैकरात्रं वत्स्यति वासं करिष्यति । सुरतलीला मंजु भविष्यतीत्यर्थः । तथाऽपराण्यपत्यानि भविष्यंति । अपराणीति वचनादंतर्वत्नीं गर्भिणीमुपालक्ष्य ज्ञात्वा ॥ ४१ ॥ तत्र कुरुक्षेत्रे वीरं मातरं वक्ष्य-माणानामायुः श्रुतायुरित्यादि षट् पुत्राणां मातरमित्यर्थः । समुवास संभोगलक्षणसुरतमनुभूतवान् ॥ ४२ ॥ उपधाव शरणं गच्छ । धावुगति शुध्योरिति धातोः । त्रिकरणशुद्ध्या स्तुतिं कुर्वित्यर्थः । मां दास्यंति मत्सालोक्यं दास्यंतीत्यभिप्रायः । अत एवोर्वशीलोकमिति वक्ष्यति ॥ ४३ ॥ अग्निस्थालीमग्निस्थापनयोग्यपात्रं । अनेनाग्निना यज्ञं कृत्वोर्वशीं प्राप्स्यसीत्याभिप्रायेणाग्नि-युक्तस्थालीं ददुः । स तु तां स्थालीमेवोर्वशीं मन्यमानः स्थाल्या युक्तो वने चरन् । नेयमुर्वशी किंत्वग्निस्थालीमित्यबुध्यत ॥ ४४ ॥ सः पुरूरवाः । अग्निस्थालीं वने न्यस्य क्षिप्य निशि गृहान्गत्वा तां निशामध्युषितोऽभूत् । अथ परस्मिन्दिवसे । त्रेतायां संप्रवृत्तायां त्रेतायुगारंभसमये जाते सति । उर्वशीं चिंतयतस्तस्य राज्ञो मनस्यग्न्याधानादिसांगयज्ञप्रकाशकवेदत्रयं प्रकाशितमभूदित्यर्थः ॥ ४५ ॥ तदर्थं विचार्याग्निस्थालीप्रदा मेऽभिप्रायं ज्ञात्वाऽग्निस्थालीस्थानं गतः । तत्र सः पुरूरवाः शमीगर्भं शमीवृक्षेणाधिष्ठितमश्वत्थं विलक्ष्य विशेषतो दृष्ट्वा स्थाली शमी जाताऽग्निस्त्वश्वत्थो जात इति विज्ञाय शमीगर्भमश्वत्थं छित्त्वा तेन शमीगर्भाश्वत्थेन द्वेऽरणी कृत्वोत्तराधरारणिभेदेन निधाय । अरणिं ममंथेति शेषः ॥ ४६ ॥ मथनेऽनुसंधानप्रकारमाह ॥ उर्वशी-

मिति । उर्वशीमधरारणिमात्मानं पुरूरवनामकं स्वात्मानमुत्तरारणिं च चिंतयन् । उभयोररण्योर्मध्ये यत्प्रजननं प्रजननसाधनं संबंधविशेषं तत्र मनसा ध्यायन् अरणिं ममंथेति पूर्वेणान्वयः । प्रभुरित्यनेन सर्वध्यानादिसामर्थ्यं दर्शयति ॥ ४७ ॥ तस्य राज्ञो निर्मथनाज्जातवेदा अग्निर्जातः । स विभावसुरग्निस्त्रय्या विद्यया वेदत्रयसंज्ञया प्रतिपाद्य त्रिवृत् त्रिभिराहवनीयादिरूपैर्वर्तत इति त्रिवृत् । त्रिरूपः सन् । राज्ञा पुरूरवसा । पुत्रत्वे कल्पित इत्यन्वयः । पुण्यलोकप्रापकत्वात् ॥ ४८ ॥ तेनाग्निनोर्वशी सालोक्यं सर्वदेवमयं सर्वदेवप्रधानं ॥ ४९ ॥ त्रेतायुगे पुरूरवसः प्रकाशाद्वेदत्रयाभिव्यक्तिं वक्तुं कृतस्थितिं तावद्दर्शयति ॥ एक एवेति । पुरा कृतयुगे एक एव वेदो मिश्रीभूत आसीत् । तस्य मूलवेद इत्याख्या । न ऋगादिनामानि । स वेदहेतास्तुखे त्रिधाऽभवत् । ततश्चतुर्धाऽभवत् । ते च वेदा ऋङ्निगदादिनामान उपवेदनामानश्च । द्वापरे तु भारतेन सह पंचधाऽभवन् । ते च ऋग्वेदयजुर्वेद इत्यादिनामानोऽवांतरवेदनामानश्चेति । कलौ प्रायेणोत्सन्नाः । अत्राथर्वणभाष्यं प्रमाणं । एको वेदः कृते ह्यासी-त्त्रेतायां स त्रिधाऽभवत् । स एव पंचधा जातो द्वापरं प्राप्य वै युगं । उत्सन्नः स कलिं प्राप्य वेदप्रायेण सर्वशः । नैव कृते सामादिनामानि तदा वेदस्य चाभवन्निति । वेदस्य मूलवेदादि नामकत्वे मूलवेदादुद्धृता उपवेदा उच्यंते । ततश्चावांतरवेदा उद्धृता इति । ऋचः सऋच उद्धृत्येति ऋग्भाष्यटीकावाक्यं प्रमाणं । ततश्च चतुर्धाऽभवदित्यत्र प्रागेव चतुर्धा विभक्तं वेदं ऋङ्निगदादिरूपं वेदं व्यक्तीकृत्वेति तत्त्वप्रकाशिकावाक्यं प्रमाणमिति । सर्ववाङ्मयः सर्वासां वेदवाचां प्रधानभूतस्त्रिमात्रात्मप्रणवोऽपि ह्येक एव । न तु चतुर्मात्रप्रणवादिभेदभिन्नः । उक्तं चैकादशस्कंधतात्पर्ये । प्रणवस्थानेकविधत्वं त्रिमात्रादितः कृत्वा यावच्चानंतमातृकाः । प्रणवास्ते विभेदेनानंताः परिकीर्तिताः । एकमात्रोत्तराः सर्वे परं ब्रह्माभिधायका इति । एको नारायण एव देवतात्वेन पूज्यः । अन्ये ब्रह्माद्या मनुनामका न देवतया पूज्याः किंतु विद्यात्वादिनैव पूज्याः । इदमप्युक्तमाथर्वणभाष्ये । ब्रह्मरुद्रेंद्रपूर्वस्तु नामभिः प्रोच्यते हरिः । देवतात्वेन चेज्यः स ब्रह्माद्या मनुनामकाः । वक्तृत्वेन पितृत्वेन कारित्वेनैव चादरात् । इज्यंते देवताः सर्वा न तु देवतया क्वचित् । अनन्ययाजिनस्ते तु तस्मात्कार्तयुगा जना इति । अग्निरप्येक एव । अग्निरिति प्रथमा सप्तम्यर्थे । सप्तसु प्रथमेति सूत्रात् । तथा च तस्मिन्काले एको हरिरेवाग्निः । अग्नौ । अग्निष्टोमादि यज्ञेष्विति यावत् । ब्रह्मरुद्रेंद्रादिनामभिरीज्य

इति शेषः । न ब्रह्मादयः । न च कृतयुगे सर्वेषां ध्याननिष्ठत्वात्तत्र यज्ञादिकर्मसद्भावे प्रमाणाभाव इति वाच्यं । अग्निष्टोमादिभिर्यज्ञैः सर्वदेवास्थितं हरिं । यजंति तांश्च कारित्वाद्वसुस्तस्मात्तथाऽयजत् । पृथक् पृथक् च त्रेतायां यजंते देवतागणान् । यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा तत इति । तथा पूज्यो यज्ञैः सोपचारैर्ध्येयो वेद्यश्च सर्वदेति । तथा । एवं वायोः पितरं विष्णुमेव यजंति देवैः सह ये कृते जनाः । तथा विष्णुं यजंते न तु कंचिदन्यमित्याथर्वणभाष्यादिस्थवर्णानामेव यज्ञादिकर्मसद्भावे प्रमाणत्वादिति । वर्णश्च समुदायैकवचनमेतत् । ब्राह्मणादिसमूहोऽपि । ब्राह्मणादिसर्वजन इति यावत् । एक एव भगवन्निष्ठ एवाभूत् । कृते भागवताः सर्वे वेदाश्च पुरुषास्तथेत्युक्तेः । जनोऽखिले विष्णुपरे बभूवेत्युक्तेश्च । न चेदं वचनं त्रेतायुगस्थजनपरमिति वाच्यं । त्रेतायां वर्तमानायां कालः कृतसमोऽभवदित्युक्तेरित्युक्तं ॥ ५० ॥ एवं कृतयुगस्थितिमुक्त्वा त्रेतायुगस्थितिं दर्शयति ॥ पुरूरवस इति । मुखे त्रेतायुगोपक्रमकाले एकवेदस्त्रयी त्रित्वावच्छिन्नः । त्रिविध इत्यर्थः । पुरूरवसः सकाशात्ततश्चतुर्धाऽभवदित्यादि पूर्वोक्तरीत्या ज्ञातव्यं । गंधर्वप्रसादेन लब्धं लोकमुर्वशीलोकमग्निं प्रजया पुत्रत्वेन कल्पिताऽग्निना । एयिवान्प्राप्तः ॥५१॥

इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ९—१२ ॥ ॥

॥ हरिः ॐ ॥ ब्रह्मणोऽत्रिः । अत्रेः सोमः । सोमाद्बुधः । बुधात्पुरूरवाः । तस्य पुत्रानाह ॥ ऐलस्य चेति । पुरूरवस इत्यर्थः । सत्यायुरय इत्यत्र द्रलोप इति दीर्घः । जय इत्यनंतरमिति शब्दोऽध्याहार्यः ॥ १ ॥ आयोर्वंशमुत्तरत्र वक्ष्यन् क्रमेण श्रुतायुप्रभृतीनां पंचानां वंशमाह ॥ श्रुतायोरित्यादिना । जयस्यामितोऽमितसंज्ञः ॥ २ ॥ अथ भीमस्य । ततः कांचनात् । या जन्हुर्भागीरथीप्रार्थनेन गंगाया भूमिं प्रत्यागमनकाले गंगां गंडूषीकृत्याचम्यापिबत् ॥ ३ ॥ तस्येत्यस्यानुकर्षः । तस्य बलाकस्याजक आत्मजः । कुशस्यापि कुशांबुरित्यादिचत्वारः सुताः । कुशांबुजो गाधिरित्येकस्य नामद्वयं । कुशपुत्रात् । कुशनाभादिति शेषः । गाधिरासीत् । तदुक्तं संग्रहरामायणे बालकांडपंचमसर्गे । कुशनाभसुताद्भूयात्कुशपौत्रान्महाबलात् । गाधिनाम्नो निजं जन्म रामायाह स्म कौशिक इति ॥ ४ ॥ गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिरभवदित्युत्तराध्याये वक्ष्यति ॥ गाधेरभून्महातेजा इत्यादिना । तत्र तावत्परशुरामावतारचरितं वक्तुं गाधेः कन्यावंशमाह ॥ तस्य सत्यवतीमित्यादिना । तस्य गाधेर्विसदृशमननुरूपं भार्गवं ऋचीकं ।

दक्षिणवामयोरेकतः शामकर्णौ येषां ते । सर्वस्मिन्नंगे, चंद्रस्येव वर्णो येषां ते। शुल्कं मौल्यं । न चेदपि पर्याप्तमस्मत्कन्यकायाः। यतः कुशिकाः कौशिका वयं इति। कुशिकान्वय इति पाठे यतः कुशिकान्वय इति प्रसिद्ध इति योजना ।।७।। तांस्तादृशान् । श्वश्र्वा भार्यामात्रा। उभयैर्मंत्रैः पत्न्यैर्ब्राह्मैर्मंत्रैश्चरुं श्रपयित्वा प्रपच्याभिमंत्र्य तवेदं तव मातुरिदमिति निगद्य संस्थाप्य। स्नातुं गतः ।।८।। तावत्तदा भार्यायां भर्तुः स्नेहात्पुत्रीयं चरुं श्रेष्ठं मत्वाऽनया मात्रा स्वमात्रा याचिता सत्यवती स्वचरुं मात्रे ददौ। मातुश्चरुं स्वयमादृद्भक्षितवती । आडभावः छांदसः ।।९।।कष्टं जुगुप्सितं। तदेवाह । ते पुत्रो घोरो दंडधरः सर्वसंहारको भविष्यति भ्राता ब्रह्मवित्तमो भविष्यतीति ।।१०।। घोरो दंडधरः पुत्रो मा भूदिति प्रसादितो भार्गव आह ।। अथ तर्हीति । ते पौत्रो घोरो भविष्यतीति । पुत्रस्तु ब्रह्मज्ञानी भविष्यतीत्यर्थः । न चैतावता वरवैयर्थ्यं । परंपरया जनकत्वादिति हृदयं । ततो भार्गवात्सत्यवत्यां जमदग्निः पुत्रोऽभवादित्यर्थः ।। ११ ।। सा च सत्यवती कौशिकी नामिका नद्यभूत् । यामुवाह ।। १२ ।। तस्यां भार्गवर्षेर्जमदग्नेर्वसुमदादयः । अभवन्निति शेषः। एतेषां निर्धारणे षष्ठी ।। १३ ।। यं रामं वासुदेवांशं वासुदेवः पद्मनाभो यस्यांशमाहुः। एतन्नानावताराणां निधानं बीजमव्ययमित्युक्तेः । त्रिसप्तिकृत्व एकविंशतिवारमित्यर्थः ।। १४ ।। क्षत्रवधे मुख्यकारणमाह ।। दृप्तमिति । भुवो भारभूतं क्षत्रं दुष्टक्षत्रियसमूहं रजस्तमोभ्यां रागद्वेषाभ्यां वृतमहन्हतवान् । फलान्यल्पेंऽहासि अपराधे ।। १५ ।। राजन्यैः क्षत्रियैराजितात्माभिरजितमनस्कैः । येनापराधेनाभीक्ष्णशो बहुवारं ।। १६ ।। कार्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य दर्पहेतुमैश्वर्यादिकमाह।। हैहयानामित्यादिना। दत्तं दत्तात्रयनामकं । हरिपारिकर्मभिर्हरिपारिचर्यारूपकर्मभिः ।। १७ ।। अरातिषु शत्रुषु दुर्धर्षत्वं वरं च लेभे । अव्याहतान्युभयविधेंद्रियाणि च । ओजोऽवष्टंभशक्तिश्च । श्रीः शरीरकांतिश्च । तेजो वीर्यादिकं च। लेभ इत्यनुषंगः। द्वंद्वैकवद्भावोऽयं ।। १८ ।। योगेश्वरत्वं योगसामर्थ्यं रूपमैश्वर्यं यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणा अंतर्भूतास्तादृशमैश्वर्यं लेभ इत्यर्थः ।। १९ ।। रेवाया नर्मदाया अंभसि क्रीडन् जलक्रीडां कुर्वन्सरितं नर्मदां रुरोध प्रवाहस्तंभनं कृतवान् ।। २० ।। रावणो दिग्विजये माहिष्मतीपुर्याः समीपे नर्मदायां देवपूजां कुर्वन् कार्तवीर्यार्जुनेन प्रवाहस्यावरोधात्प्रतिस्रोतः सरिज्जलैः । प्रतिस्रोतः प्रतिगमनं येषां सरिज्जलानां तथा तैर्विप्लावितं स्वशिबिरमालक्ष्य तद्वीर्यं नामृष्यत न सेहे ।। २१ ।। कृतकिल्बिषः क्रीडंतमभिभावितुं

महत्ताऽत एवापराधात्कार्तवीर्यार्जुनेन गृहीतो रावणो माहिष्मत्यां पुर्यां कपियेथा कपिरिव सन्निरुद्धश्च येनावज्ञया मुक्तश्च ॥ २२ ॥
॥ २४ ॥ इदानीं श्रीरामस्य कार्तवीर्यार्जुनकृतमपराधं दर्शयन्नाह ॥ स एकदेत्यादिना । नरवीराय कार्तवीर्यार्जुनभूपाय हविर्धान्या कामधेन्वा । अर्हणं आतिथ्यादि ॥ २४ ॥ आत्मैश्वर्यातिशायिनमतीत्य वर्तमानं । तस्य जामदग्नेस्तदैश्वर्यं दृष्ट्वा तत्तेन कृतमर्हणं नाद्रियदनादरं कुर्वन् अग्निहोत्रीयकामधेनुं प्रति साभिलाषोऽभूत् । स हैहयो हैहयदेशस्थैः सहितः ॥ २५ ॥ हविर्धानीं कामधेनुं नरान् भृत्यान्हर्तुं नेतुं माहिष्मतीं स्वपुरीं ॥ २६ ॥ राजनि कार्तवीर्यार्जुननामके राज्ञि । आहतः । दंडेनेति शेषः ॥ २७ ॥ योजयामासोत्तेजितं कृतवान् । वैकुंठे योजयामासेति वा । कार्मुकं गृहीत्वेति शेषः । मृगेंद्रः सिंहो यूथपं गजयूथपं ॥ २८ ॥ कृष्णाजिनं तदेवमंबरं यस्य स तथा। अर्कवद्धालार्कवद्धाम तेजो यासां ताभिर्ददृशे ॥२९॥ अर्जुनो या अक्षौहिणीरचोदयद्रामस्ता असूदयद्धतवानित्यन्वयः। कथं भूताः । अक्षौहिणीर्हस्त्यादिभिः सहिता मदादिभिश्च सहिताः ॥३०॥ परेषां चक्रं सैन्यं सूदयतीति तथा । चक्रं सैन्यरथांगयोरित्यभिधानं । मनोवदनिलवदोजो वेगो यस्य स तथा । मनोवद्वेगोऽनिलवदवष्टंभ इति वा । ओजोऽवष्टंभबलयोरिति यादवः । असौ रामो यतो यतो यत्र यत्र प्रहरन् शत्रुशिरः संहरन् परश्वधो यस्य स तथा । तादृशः सन् गतः । तत्र तत्र परेषां वीरा निपेतुरित्यन्वयः । कथं भूताः । छिन्ना भुजा उरवः कंधराश्च येषां । हताः सूता वाहनानि च येषां ॥ ३१ ॥ हैहयः कार्तवीर्यार्जुनो रुधिरोघो रक्तप्रवाहस्तेन युक्तकर्दमे निपतितं स्वसैन्यं दृष्ट्वा । अपतत् । कुठारसायकैर्विवृक्णचर्मादयो यस्य तद्विग्रहो देहः ॥ ३२ ॥ स कार्तवीर्यार्जुनो बाहुभिर्गृहीतेषु पंचदशेषु धनुःसु तावद्भिर्बाहुभिस्तावतो बाणान् रामाय संदधे । एकधन्वा एकमेव धनुर्यस्य स तथा रामस्तानि धनूंषि समं सह तत्क्षणमेवाच्छिनत् ॥ ३३ ॥ पुनः स्वहस्तैर्मृधे साधनभूतान् अचलान् अंघ्रिपान्वृक्षान् उत्क्षिप्य वेगादभिधावतोऽर्जुनस्य भुजान्कठोरनेमिना शितधारेण कुठारेण हसन्निवाच्छिनदित्यन्वयः ॥ ३४ ॥ कृत्ताः छिन्ना बाहवो यस्य स तथा । तस्य पितरि कार्तवीर्यार्जुने ॥ ३५ ॥ उपावर्त्य परावृत्य । इततस्तत आकर्षणादिना परिक्लिष्टं । क्लेशोपेतां समर्पयत् । अडभावश्छांदसः ॥ ३६ ॥ तत्कृतमर्जुनकृतं च ॥ ३७ ॥ सर्वदेवमयं सर्वदेवप्रचुरं नरदेवं कार्तवीर्यार्जुनरूपं ॥ ३८ ॥ अर्हणतां पूज्यतां । यया क्षमया । लोकगुरुर्ब्रह्मा पारमेष्ठ्यं पदं । सत्यलोकाधिपत्यमिति यावत् ॥ ३९ ॥

यथा सौरी सूर्यसंबंधिनी प्रभा रोचते । तथा ब्राह्मी ब्राह्मणसंबंधिनी लक्ष्मीः सद्विद्योपदेशादिजन्या शोभा ॥ ४० ॥ मूर्धावसिक्तस्य मूर्धाभिषिक्तस्य चक्रवर्तिन इत्यर्थः । तीर्थसेवया । चकाराद्यमनियमादिभिश्च । अच्युते नारायणे चेतना बुद्धिर्यस्य स तथा ॥ ४१ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ९.—१३ ॥ ॥

॥ हरिः ॐ ॥ पित्रा रामस्य महात्म्यमजानता जमदग्निनोपशिक्षितः पूर्वोक्तरीत्या शिक्षितः । पापरहितोऽपि हर्यवतारो भार्गवरामः । तथेत्युक्त्वा । अयोग्यजनं मोहयन्नेवेति शेषः । स्वेच्छयैव तीर्थयात्रारूपं प्रायश्चित्तं चरित्वा स्वाश्रममाव्रजादिति ॥ तदुक्तं अपापमपि देवेशं पितरः संन्यवारयन् । अजानंतोऽस्य माहात्म्यं मोहितास्तस्य मायया । मोहयन्मायया लोकं चक्रे चापचितिं वधे । पुण्यपापादि निर्मातुः कुतः पापादि संगतिरिति चेति ॥ १ ॥ रेणुका तत्पत्नी याता । गंगां प्रतीति शेषः । गंगायां क्रीडंतं क्रीडां कुर्वंतमित्यन्वयः ॥ २ ॥ किंचिदीषच्चित्ररथे गंधर्वराजे स्पृहा यस्याः सा ॥ ३ ॥ कालात्ययं होमकालातिक्रमं । कलशं पुरोधाय भर्तुरग्रे निधाय ॥ ४ ॥ घ्नत हतां कुरुत । व्यभिचारमानसां तां । मातृहत्यं ॥ ५ ॥ आज्ञातिलंघिनां भ्रातॄणां मातुश्च वधे संचोदितः सन्मुनेः समाधेस्तपसश्च प्रभवाज्ञः । यदि न हन्यां तर्हि मामपि शपेत् । यदि तु हन्यां तर्हि मयि संतुष्टः संस्तानपि जीवितुं समर्थ इति जानन्नित्यर्थः ॥ ६ ॥ सत्यवतीसुतः सत्यवत्या गाधिराजपुत्र्याः सुतो जमदग्निः स्ववचनकारिणं स्वपुत्रं रामं वरेणाच्छादयामास ॥ वरं वरयेति रामं प्रत्युवाच । प्रभू रामोऽपि पितुर्मान्यत्वसिद्ध्यर्थं स्वेन महतां मात्रादीनां जीवितं जीवनरूपवरं । वधेऽस्मृतिरूपवरं च वयं रामेण हता इति स्मरणशून्यत्वलक्षणं वरं च वव्रे प्रार्थयामासेति ॥ तदुक्तं ॥ जामदग्नेर्वरं वव्रेऽनंतशक्तिरपि स्वयं । पितुर्मान्यत्वसिद्ध्यर्थं लोके लोकेश्वरः प्रभुरिति ॥ ७ ॥ ते वसुमदादयो निद्रापाये निद्रापगमे यथा तिष्ठंति तथोत्तस्थुः । ननु रामोऽत्यंतनिंदितं मात्रादिवधं कथं चकारेत्यत आह ॥ पितुर्विद्वान् इति ॥ ८ ॥ सर्वक्षत्रियवधे कारणं वक्तुमाह ॥ येऽर्जुनस्य सुता इत्यादिना । शर्म सुखं न लेभिरे ॥ ९ ॥ वैरं पितृहंतृ राम पितृहननं कारयित्येवं रूपं द्वेषं सिसाधयिषवः साधयितुमिच्छवो लब्धछिद्रा लब्धावसराः ॥ १० ॥ अग्न्यागारेऽग्निहोत्रगृहे । भगवत्येवावेशिता धीर्यस्य तं ॥ ११ ॥ क्षत्रबांधवाः क्षत्रियाभासाः । उत्कृत्य छित्वा निन्युः । जमदग्नेः शिर इति शेषः ॥ १२ ॥ शोकः प्रलापः ।

छ० ७

[illegible]कदेशेन । हस्तनात यावत् । आत्मान दहवक्षसात्यथः ॥ १३ ॥ दूरस्थाः । सुता इति शेषः । तस्या मातुः स्वर-
२५ ॥ मित्यन्वयः ॥ १४ ॥ कंठादीनां शोषणमार्तिराधिर्दुःखादीनां वेगेनातिशयेन विमोहिताः ॥ १५ ॥ क्षत्रांताय क्षत्रकुलनाशाय मनो दधे जगाम च ॥ १६ ॥ ब्रह्मघ्नैरर्जुनसुतैर्विहिता श्रीर्यस्यास्तां माहिष्मतीं पुरीं गत्वाऽऽह । राजन् । स रामस्तेषां शीर्षभिर्माहिष्मतीं मध्ये महांतं गिरिं चक्रे ॥ १७ ॥ अब्रह्मण्यानां द्वेषिणां भयकारिणां नदीं चक्र इति पूर्वेणान्वयः । तथाऽपि सर्वक्षत्रियवधे किं कारणं तदाह ॥ हेतुं कृत्वेति । क्षत्रियसमूहेऽमंगलकारिण्यन्यायवर्तिनी सती ॥ १८ ॥ स्यमंतपंचके कुरुक्षेत्रे । नव नवसंख्याकान् शोणितान्येवोदान्युदकानि येषु तथा तान्ह्रदान् चक्रे ॥ १९ ॥ पितुः शिरः । आनीयेति शेषः । कायेन संधाय संधितं देहं बर्हिषि वेदिकामध्ये दर्भसमूहे आधाय मखैर्मखसाधनैः स्रुक्स्रुवादिभिराज्यादिभिश्चायजदंत्येष्टिं चकारेति भावः ॥ २२ ॥ उद्गात्रे सामगाय ॥ २१ ॥ उपद्रष्ट्रे न्यूनातिरिक्तकर्मसाक्षिणे । आर्यावर्तं तन्नामकदेशविशेषं । परमवशिष्टं ॥ २२ ॥ ब्रह्मनद्यां ब्रह्माधिष्ठितत्वेन ब्रह्मनदीति प्रसिद्धायां सरस्वत्यामवभृथस्नानेन जनस्याशेषतः किल्बिषं यस्य स तथा । व्यभ्रो मेघच्छाययाऽशुमानिवादित्य इव रेजे इत्यन्वयः । अनेनावभृथस्नानेन जनस्याशेषतः किल्बिषं विध्वस्तं भवतीति निदर्शनाय निर्दोषेण रामेणावभृथस्नानमकारीति सूचितं भवति ॥ २३ ॥ जमदग्निस्तु संज्ञानलक्षणं ज्योतिर्मयलक्षणं स्वयोग्यदेहं लब्ध्वा सप्तर्षीणां मंडले सप्तमऋषिरभवत् ॥ २४ ॥ आगामिन्यंतरे भविष्यन्मन्वंतरेऽष्टमे सावर्णिमन्वंतरे बृहद्ब्रह्म वेदलक्षणं वर्तयिष्यति । वेदप्रवर्तकेषु सप्तर्षिकेष्वेकतमो भविष्यतीत्यर्थः ॥ २५ ॥ महेंद्रादौ देवसमूहे न्यस्तदंडस्त्यक्तदंडः प्रशांतधीः । शांतकोप इति यावत् ॥२६॥ भृगुषु भृगुवंशेऽवतीर्यावतारं कृत्वा भुवो भारं केवलं भारभूतान्नृपान् अहन्संहृतवान् ॥ २७ ॥ तदेव गाधेः कन्यावंशं निरूप्य प्रकृतमाह ॥ गाधेरभूदिति । महातेजो विश्वामित्रः क्षात्रं क्षत्रियत्वं ब्रह्मवर्चसं ब्राह्मणत्वं ॥ २८ ॥ तस्य विश्वामित्रस्यैकशतं पुत्रा आसन् । तेषामेकोत्तरशतानां पुत्राणां मध्ये मध्यमः स तु मधुच्छंदो नाम । स तु मधुच्छंदसा युक्ताः ये पंचाशत्पुत्रास्ते मधुच्छं- ॥ २५ ॥
दसः सकाशात्कनिष्ठा मधुच्छंदस नामानो भवंति नान्ये । तस्य विश्वामित्रस्यैकशतपुत्रार्थमासुरित्यादि ब्राह्मणं चेममेवार्थं वक्ति ॥ २९ ॥ शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रचक्षत इत्युक्तं प्रपंचयितुमाह ॥ पुत्रं कृत्वेति । अत्र किं वदंति । मम पुत्रो भवेति

विश्वामित्रेणोक्तः शुनःशेपो विश्वामित्रं प्रत्याह । अहमजीगर्तस्य मुनेर्मध्यमः पुत्रः । अतोऽहं पितृभ्यां ममतां विहाय विक्रीतः । हे विश्वामित्र । त्वत्पुत्राणामहं श्रेष्ठश्चेत्तव पुत्रः स्यामित्युक्तो विश्वामित्रस्तस्मिन्कृपया शुनःशेपं ज्येष्ठपुत्रं कृत्वा सुतानाह ॥ ज्येष्ठ एषः प्रकल्प्यतामिति । देवैर्विश्वामित्राय दत्तवान् । देवरातशब्दवाच्यं भार्गवं भृगुवंशोत्पन्नमजीगर्तमजीगर्तापत्यमेषः शुनःशेपो युष्माकं ज्येष्ठः प्रकल्प्यतां । भवद्भिरिति शेषः ॥३०॥ अनेन विशेषणत्रयेण ज्येष्ठत्वकल्पनायां वैशेष्यांतरमाह ॥ य इति द्वाभ्यां । यः शुनःशेपो हरिश्चंद्रयज्ञेऽजीगर्तेन पित्रा रोहिताय विक्रीतः पुरुषाख्यः पशुरभूत् । पश्चात्प्रजेशादीन् ब्रह्मादिदेवान्स्तुत्वा तत्प्रसादात्पाशबंधनान्मुमुचे मोचयामास ॥ ३१ ॥ देवानां यजनं यस्मिंस्तस्मिन्यज्ञे । यो देवै रातस्त्रातस्तैरेव विश्वामित्राय रातो दत्तः । यो भार्गवोऽपि गाधिवंशे देवरात इति ख्यातः ॥ ३२ ॥ शुनःशेपो ज्येष्ठत्वेन कल्प्यतामिति विश्वामित्रेणोक्ता ये पंचाशत्पुत्रा मधुच्छंदसो ज्येष्ठास्ते शुनःशेपज्येष्ठत्वं । स्वात्मानं कनिष्ठमिति यावत् । तत्कुशलं साधु । न मेनिरे । मध्यमत्वस्यानर्थावहत्वं दृष्ट्वा तं न कृतवंत इत्यर्थः । ततः किमभूदिति तत्राह ॥ अशपादिति । मुनिर्विश्वामित्रः ॥ ३३ ॥ पंचाशता पंचाशत्संख्याकैः कनिष्ठैः साकं सह मधुच्छंदा उवाच । नोऽस्माकं ज्येष्ठत्वं कनिष्ठत्वं वा भवान्पिता संजानीते आज्ञापयति । तस्मिन्विषये तिष्ठामह इति ॥३४॥ एवमुक्त्वेति शेषः । ये पुत्रा मंत्रदृशं कस्य न्यूनमित्यादि ऋग्वेदद्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः । कथं चक्रुरिति तत्राह ॥ त्वामन्वंच इति ॥ भो देवरात । वयं त्वामन्वंचोऽनुवर्तमानाः कनिष्ठाः स्म हि भवाम हि प्रसिद्धं । प्रसन्नो विश्वामित्रः । कं वरं प्रायच्छादिति तत्राह ॥ विश्वामित्र इति । वीरवंतः पुत्रवंतः ॥ ३५ ॥ कुतोऽयं वरो दत्त इति तत्राह ॥ य इति । ये भवंतो मे मानमनुगृण्हंतः परिपालनलक्षणमनुग्रहं कृतवंतो मा मां वीरवंतं पुत्रवंतमकर्त कृतवंतः । हि यस्मात्तस्माद्यूयमपि वीरवंतो भविष्यथेति । वीरवंतमकर्तेति ब्राह्मणवाक्यानुसारेण वेदतुल्यमिति प्रकाशयति । हे कौशिकाः । एषो देवरातो वो युष्मदीयः कौशिक एव यत एषो वीरो मम पुत्रस्तमेनमन्विताऽनुवर्तध्वं ॥ ३६ ॥ अन्ये चाष्टकादयस्तस्य सुता आसन् । उपसंहरति ॥ एवमिति । एके शप्ता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृतः । इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातं तच्च प्रवरांतरमापन्नं प्राप्तं हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितं । अत्र प्रवरो नाम तस्मिन्नेव वंशेऽवांतरभेदः । न तु वंशांतरं । तथा च

स्मृतः । एक एव ऋषियोवत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वं विना भृग्वंगिरो गणादिति । अत एवाश्वलायनबोद्धायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तमित्यवगंतव्यं ॥ ३७ ॥ श्रीकृष्णावतारप्रस्तावाय यस्य वंशे कृष्णावतारस्तद्वंशस्यातिविततत्वात्सूचीकटाहन्यायेन पुरूरवसः पुत्राणां श्रुतायुप्रभृतीनां पंचानां कनिष्ठानां वंशानुक्त्वेदानीं प्रथमस्यायोर्वंशमाह ॥ यः पुरूरवसः पुत्र इति । रजीरंभ इत्यत्र रजिः राभः इति पदच्छदोऽनेना इति । तस्य सुता अभवान्नित्यन्वयः । नहुषान्वयस्य राज्यार्हत्वात्क्षत्रवृद्धान्वयस्य तदनर्हत्वात्सूचीकटाहन्यायमनुसंदधानः क्षत्रवृद्धान्वयं वक्ति ॥ क्षत्रवृद्धान्वयमिति ॥३८॥३९॥ क्षत्रवृद्धसुतस्य सुहोत्रस्य काश्यः कुशो गृत्समद इति त्रय आत्मजाः सुता आसन्नित्यन्वयः । गृत्समदाच्छुनकः । अभूदिति संबंधः । यस्य शुनकस्य बव्हृचप्रवरो वेदवेतृणां श्रेष्ठः । शौनको मुनिः सुतोऽभूत् काश्यस्य काशिनामा पुत्रोऽभूत् सुराष्ट्रस्तत्पुत्रोऽभूत् । कथं भूतः । दीर्घतमसः पुत्रः पिता सुराष्ट्रस्य दीर्घतमाः सुत इति यावत् ॥ ४० ॥ ४१ ॥ दीर्घतमसः सुत आयुर्वेदप्रवर्तको वैद्यशास्त्रप्रवर्तकः ॥ ४२ ॥ ततः प्रतर्दनादिशब्दवाच्यात् द्युमतः सकाशादलर्कादयः सुताः जाताः ॥ ४३ ॥ द्युमतोऽनेकानि नामानि अभूवन्नित्याह ॥ प्रतर्दन इति स्मृत इति ॥ ४४ ॥ अलर्कं स्तौति ॥ षष्ठिरिति । षट्सहस्रोत्तरषष्ठिसहस्रवर्षाणीत्यर्थः । तथेत्यध्याहारः । अलर्कादपरो राजा युवा तथा न बुभुजे ॥ ४५ ॥ सन्नतिसंज्ञः । तस्मादित्यत्र पूर्वत्रोत्तरत्र च संबंधः ॥ ४६ ॥ ततः सत्यकेतोर्धृष्टकेतुः । तस्मादित्यस्योत्तरत्रापि संबंधः । तस्मात्सुकुमाराद्वीतिहोत्रः ॥ ४७ ॥ काश्यजा काश्यस्य संतानजा भूपाः क्षत्रवृद्धस्यान्ववायो वंश एषामस्ति तथा । वंशोऽन्ववायः संतान इत्यभिधानं । अल्पत्वात्क्षत्रवृद्धानुजस्य राभस्य वंशमाह ॥ राभस्येति । ततो गंभीरस्ततश्चक्रकः ॥ ४८ ॥ क्षेत्रे भार्यायां ब्रह्म ब्राह्मणकुलमायोः कनिष्ठपुत्रस्य । अनेनसो वंशमाह ॥ शृणु वंशामिति । ततोऽनेनसस्तस्मात्त्रिककुप् तस्माद्धर्मः सारथिर्यस्य स कृतकृत्यो यत आत्मवान् आत्मज्ञानी । अतः पुत्रोत्पादनं न कृतवानित्यर्थः ॥ ४९ ॥ आयोस्तृतीयपुत्रस्य रजेर्वंशमाह ॥ रजेरिति । तस्मै रजिनामकाय पुनर्दिवं दत्वाऽऽत्मानं स्वात्मानं स्वाधिपत्यं ददावित्यर्थः । प्रह्लादोऽसुरो बलवांश्च । अतस्तस्मात्परिशंकितो भीतः ॥ ५० ॥ ५१ ॥ पितरि रजिनामके मृते सति याचमानायेंद्राय स्वर्गं नो ददुरित्यन्वयः । स्वयं यज्ञभागान्समाददुश्च ॥५२॥ तेषां मतिभ्रंशाय गुरूणा बृहस्पतिनाऽभिचारकवि-

धानेनाग्नौ हूयमाने सति बलभिद्वलारातिरिंद्रो रजेस्तनयानवधीत् ॥ ५३ ॥ सिंहावलोकनन्यायेनाह ॥ प्रतिक्षत्रः क्षत्रवृद्धादिति। अनेन क्षत्रवृद्धस्य द्वौ पुत्रौ सहोत्रः प्रतिक्षेत्रश्चेति। तत्र सुहोत्रवंशः प्राक् प्रतिपादितः। इदानीं प्रतिक्षत्रस्य वंश उच्यत इत्युक्तं भवति। तत्सुत इत्यस्योभयत्र संबंधः। संजयस्तत्सुतः ॥ ५४ ॥ सहदेवस्तत इत्यत्र तत इत्यस्यावृत्तिः। ततः सहदेवादहीनस्तस्य जयत्सेनस्य संकृतिस्तस्य च संकृतेर्जयः। तं विशिनष्टि ॥ क्षत्रधर्मा महारथ इति ॥ ५५ ॥ नाहुषान् भूयान् ॥ ५६ ॥

इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥ ९—१४ ॥ ॥

॥ हरिः ॐ ॥ नहुषस्य संततिमनुक्रमति ॥ यतिरित्यादिना। षडितींद्रियाणीत्यत्रापि संबंधः ॥ १ ॥ तस्य राज्यस्य परिणाममनर्थहेतुत्वं वेत्तीति तथा। तत्र हेतुः ॥ यत्रेति। आत्मानं स्वात्मानं परमात्मानं वा ॥ २ ॥ इंद्राण्या धर्षणाच्छच्याः संस्पर्शनिमित्तात्पितरि नहुषे द्विजैरगस्त्यादिभिः स्वर्गस्थानाद्भ्रंशिते सति अजगरत्वं महासर्पत्वं प्रापिते सति। केनाचिन्निमित्तेन नहुषस्य स्वर्गाधिपत्ये प्राप्ते शचीसंभोगेच्छायामगस्त्यादिभिरजगरो भवेति शापे दत्ते सत्यजगरो बभूवेति भावः ॥ ३ ॥ चतुसृषु दिक्षु यवीयसः कनिष्ठान्संयाति। पूर्वान् भ्रातॄन् आदिशत्। काव्यस्य शुक्रस्य वृषपर्वणो राज्ञः। कन्याभ्यामिति शेषः। कृतदारो ययातिः ॥ ४ ॥ प्रातिलोम्येन विवाहः कथं घटत इति पृच्छति ॥ ब्रह्मर्षिरिति। नाहुषो नहुषसुतो ययातिः प्रतिलोमतो व्युत्क्रमाद्व्यत्यासतो विवाहः कस्मादासीत् ॥ ५ ॥ न प्रातिलोमतादोषो दैववशादिदं पाणिग्रहणं प्राप्तं न तु मानुषवादिति प्रकाशयितुमाख्यां कथयति ॥ एकदेति। गुरुपुत्र्या देवयान्या संयुक्ता व्यचरेदिति द्वयोरन्वयः। भामिनी तेजस्विनी ॥ ६ ॥ कलगीता अलयो यस्मिंस्तथोक्तं। तादृशं नलिनीपुलिनं यस्मिन्पुरोद्याने तत्तथोक्तं तस्मिन्। अबलेति शर्मिष्ठाविशेषणं ॥ ७ ॥ सिंचतीः सिंचंत्यो विजन्हुर्जलक्रीडां चक्रुः ॥ ८ ॥ देव्या पार्वत्या। पर्यधुः परिधानं चक्रुः स्त्रियः कन्याः ॥ ९ ॥ अजानती शर्मिष्ठा गुरुपुत्र्या देवयान्या वासः स्वयं भक्तसमव्यत्पर्यधात्। व्येञ् संवरण इति धातुः ॥ १० ॥ मह्यं मम दास्याः शर्मिष्ठाया असांप्रतमन्याय्यं हविरिव पुरोडाशमिव ॥ ११ ॥ स्वकुलप्रशंसार्थं ब्राह्मणानां माहात्म्यं कथयति ॥ यैरित्यादिना। इदं विश्वं यैर्ब्राह्मणैस्तपसा सृष्टं ये परमस्य पुंसो मुखं मुखादुत्पन्नत्वेन श्रेष्ठा इत्यर्थः। यैरिदं परंज्योतिर्ब्रह्माख्यं धार्यते यैश्च शिवः

पंथा वेदमार्गः ॥१२॥ ये लोकनाथाः सुरेश्वरास्तेपीदं ब्राह्मणकुलमुपतिष्ठंतेऽग्निमुखेन हविरादातुं प्रतीक्षंते विश्वात्मा भगवानपि यत्र संनिहितः ॥ १३ ॥ तत्रापि ब्राह्मणेष्वपि भृगवो भृगुकुलोत्पन्नाः । अत एव श्रेष्ठा इति शेषः । जस्याः पिता वृषपर्वाणः शिष्यः । असती दुष्टा ॥ १४ ॥ धर्षिता भर्त्सिता तुच्छीकृतेत्यर्थः । दष्टच्छदा दष्टोष्ठा ॥ १५ ॥ हे भिक्षुकि । आत्मवृत्तिमात्मस्थितिं बहु कत्थसे निष्ठुरवचनं वदसि न प्रतीक्षसे किं बलिभुजः श्वानः काको वा ॥ १६ ॥ वास आदाय नग्नं कृत्वेत्यर्थः ॥ १७ ॥ तां देवयानीं ॥ १८ ॥ उत्तरमुत्तरीयं पाणिं । तस्या इति शेषः । उज्जहार । कूपादिति शेषः । प्रेमनिर्भरया स्नेहपूर्णया हस्तं गृण्हातीति हस्तग्रहः पाणिग्रहणकर्ताऽपरोऽन्यो न स्यात् । परं पुरंजयशत्रुसंहारकं ॥ १९ ॥ २० ॥ निषिद्धोऽयं प्रातिलोमसंबंध इति चेत्तत्राह ॥ एष इति । कूपमग्नाया मम भवतो यदिदं दर्शनमेषः संबंध ईशकृतः श्रीनारायणविहितः । न पौरुषः पुरुषयत्नसाध्यो न भवति ॥ २१ ॥ ब्राह्मणपुत्र्यास्तव ब्राह्मण एव भर्ता । न तु क्षत्रियो युक्तः । प्रतिलोमाप्रवेशादित्याशंकां परिहरति ॥ न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसंजीवनीविद्यामध्यगीष्ट । तदा च देवयानी तं पतिं चकमे । सः कचो गुरुपुत्रिणा मम पूज्येति न तामुदवहत् । ततश्च सा कुपिता सती तवेयं विद्या न फलत्विति शशाप । तदनंतरं कचस्तव ब्राह्मणः पतिर्न भवत्वित्यशपदितीयमाख्यायिकाऽनेनोच्यते । अहं पुरा पूर्वं यं कचं प्रत्यशपं शप्तवती बार्हस्पत्यस्य बृहस्पतेरपत्यस्य तस्य कचस्य शापान्मे ब्राह्मणो हस्तग्राहो न भवतीत्यतस्त्वमेव मम पाणिग्रहणं कुरु ॥ २२ ॥ अनेन ययातिः किं कृतवानिति तत्राह ॥ ययातिरिति । अशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा नह्यधर्मे मदीयं मनो गच्छेन्मम मनश्च तस्यां गतमतो न मे दोष इति बुद्ध्वा तस्या वचः प्रतिजग्राह तां भार्यात्वेनांगीचकार । प्रायः सतां न मनः पापमार्गे गच्छेदिति ह्यात्मनश्च सत्यमित्युक्तेः सतां मनः पापमार्गे न गच्छेदिति द्रष्टव्यं ॥ २३ ॥ स्ववृत्तांतं श्रुत्वा तत्रागतस्य पितुः पुरतो रुदती सती भिक्षुकीत्याद्युक्तं कृतं कूपप्रक्षेपादि सर्वं न्यवेदयत् ॥ २४ ॥ काव्यः शुक्रः कापोतीमुंछवृत्तिं ॥ २५ ॥ तं गुरुं प्रत्यनीका देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेतं यस्य तथा भूतं ज्ञात्वा ॥ २६ ॥ शिष्यमुत्थाप्येति शेषः । अस्या देवयान्याः कामोऽपेक्षाविशेषः । एनां देवयानीं ॥ २७ ॥ यदभीष्टं तत्तथा करिष्य इत्युक्त्वा वृषपर्वण्यवस्थिते सति वृषपर्वणा तव किं कर्तव्यमिति

पृष्टा देवयानी मनोगतं स्वमनसि स्थितं कार्यं प्राह । अहं पित्रा कस्मैचिद्वराय दत्ता सती यतो यत्र यास्ये तत्रानुयातु ॥ २८॥ शर्मिष्ठा तत्सर्वं श्रुत्वा यद्यहं नानुगमिष्यामि तदा गुरुद्रोहान्मत्कुलं सर्वं नष्टं भविष्यतीति यत्स्वानां संकटं वीक्ष्य तदर्थस्य तदनुगमनप्रयोजनलक्षणस्य गौरवं गुरुप्रसादेन स्वकुलाभिवृद्धिलक्षणमस्तीति मनसा निश्चित्य स्त्रीसहस्रेण परिवृता तत्तथा करिष्यामीति पितरमुक्त्वा देवयानीं दासीव पर्यचरत् ॥ २९ ॥ उशनाः शुक्रो नाहुषाय नहुषपुत्राय ययातये शर्मिष्ठया सह सुतां देवयानीं दत्वा शर्मिष्ठां तल्पे माधास्तां नोपगच्छेरित्यर्थः ॥ ३० ॥ औशनसीं देवयानीं तमेव ययातिमेव सख्या देवयान्याः पतिं तस्य तत्पतित्वे तस्या दासीतुल्यत्वमुक्तं ऋतौ ऋतुकाले ॥ ३१ ॥ अपत्ये तादर्थ्ये सप्तमी । अपत्यार्थं धर्मं च न कांचन स्वीयं परिहरेत्तद्व्रतमिति श्रुतेः। स्वयमागतां परिहर्तुमशक्यं चेति धर्ममवेक्ष्य शुक्रवचः स्मरन्नपि दिष्टमेव दैवमेवात्र कारणमिति निश्चित्य । काले ऋतुकालेऽभ्यपद्यत । तामिति शेषः ॥ ३२ ॥ व्यजायताजीजनत् ॥ ३३ ॥ आसुर्याः शर्मिष्ठाया भर्तुः सकाशाद्गर्भसंभवं गर्भोत्पत्तिं ॥ ३४ ॥ अभिगतोऽभिमुखं गतः । वचोभिः सांत्ववचनैरुपमंत्रयन्प्रसादयन् संवाहनं स्पर्शः ॥ ३५ ॥ विकृतं रूपं करोतीति तथा ॥ ३६ ॥ कामानां भोगैरिति शेषः । अत एव ममानुग्रहः कर्तव्य इत्याह ॥ व्यत्यस्येति । यो मह्यं स्वयं यस्तारुण्यमभिधास्यति तस्मिन्नेतां जरां व्यत्यस्य संक्रमय्य तद्वयसा यथा कामं भुंजे । इति प्रार्थयामासेति शेषः । तर्हि तथाऽस्त्विति लब्धव्यवस्थितिरभूदिति ज्ञेयं ॥३७॥ इति लब्धव्यवस्थानो जराया व्यवस्थितिर्येन सः। प्रतीच्छ गृहाण ॥ ३८ ॥ मातामहकृतां शुक्रकृतां । जरामिति पूर्वेणान्वयः ॥३९॥ अंतरा प्राप्तया मध्ये प्राप्तया । कुतो नोत्सह इति तत्राह ॥ अविदित्वेति । अविदित्वाऽननुभूय । वैतृष्ण्यं वैराग्यं ॥ ४० ॥ प्रत्याचख्युर्निराकृतवंतः ॥ ४१ ॥ अनित्ये यौवने वयसोनं कनिष्ठं मां मदाज्ञामित्यर्थः । प्रत्याख्यातुं निराकर्तुं ॥ ४२ ॥ आत्मकृतः शरीरकर्तुः प्रतिकर्तुं निराकर्तुं परं ब्रह्म विंदते जानाति परलोकं विंदते प्राप्नोतीति वा ॥ ४३ ॥ चिंतितं । पितुरिति संबंधः । उच्चरितुं पुरीषप्रायः ॥ ४४ ॥ इत्युक्त्वा सोऽपि ययातिरपि जुजुषे बुभुजे ॥ ४५ ॥ पितृवन्नहुषवत् । अप्रतिहतेंद्रियपाटवशक्तिर्ययातिर्यथोपजोषं यथा सुखं ॥ ४६ ॥ प्रेयसः पत्युः प्रेयसी परमप्रिया ॥ ४७ ॥ मयट् प्राधान्यार्थः ॥ ४८ ॥ तस्य यजनकालेऽनुसंधानप्रकारमाह ॥ यस्मिन्निति । अस्य तमेवेत्युत्तरेणान्वयः ।

इदं सर्वं जगद्यस्मिन्हरौ विरचितं संबद्धं । यदाश्रयतया तिष्ठतीत्यर्थः । तत्र दृष्टांतः ॥ व्योम्नीवेति । यथा मेघावलिराकाशश्च यथा तिष्ठति तथेत्यर्थः । ननु जगतो मिथ्यात्वात्कथं तदाश्रयतयाऽवस्थानमित्यत आह ॥ नानेवेति । इवेत्यस्योत्तरत्रानुषंगः । नाना नानाविधं जगज्जीवानां सृष्टिकाले भाति प्रलयकाले न भाति । तत्र दृष्टांतः ॥ स्वप्नमायामनोरथ इति । स्वाप्नपदार्थः स्वप्नावस्थायां प्रतीयते सुप्तौ न प्रतीयते तद्वदित्यर्थः । एवमेव मायामनोरथ इवेति व्याख्येयं । तदुभयं जगद्भगवान् । ईक्षत इति शेषः । तथा च जगतः सर्वदेश्वरेण दृश्यमानत्वान्न मिथ्यात्वमिति भावः ॥ तदुक्तं ॥ क्वचिद्विभातं क्व च तत्तिरोहितमविद्धदृक् साक्ष्युभयं तदीक्षत इति । अन्यत्रापि ॥ न च मायाविना माया दृश्यते विश्वमीश्वरः सदा पश्यति तेनेदं न माययेत्यवधार्यतामिति । यद्वा । स्वप्नमायामनोरथ इवेदं जगदनित्यं । अस्वतंत्रं चेति शेषः । कुतः । अनित्यत्वविकारित्वपारतंत्र्यादिरूपतः स्वाप्नादिसाम्यं जायतो न तु बोधनिवर्तत इत्युक्तेः ॥ ४९ ॥ गुहाशयं हृदयगुहास्थितं । निराशीः फलेच्छारहितः ॥ ५० ॥ मनः षष्ठैः मनसा सह षट् संख्याकैः कर्मेंद्रियैर्दुष्टेंद्रियैः । मनःसुखं मनः प्रीतिं । विदधानः कुर्वन् ॥ ५१ ॥ इति श्रीभागवतटिप्पण्यां पंचदशोऽध्यायः ॥ ९—१५ ॥ ॥

॥ हरिः ॐ ॥ ययातेर्वैराग्यप्रकारं दर्शयति । स इत्थमिति । स्त्रीजितः कामान्विषयान् आचरन् उपभुंजान आत्मनोऽपन्हवं नित्यसुखहानिलक्षणं नाशं विज्ञाय निर्विण्णो विरक्त एतां वक्ष्यमाणत्वेन बुद्धिसंनिहितां गाथां स्वकीयवृत्तांतरूपामितिहासमगायदन्यापदेशेन स्ववृत्तांतमकथयदित्यर्थः । हे भार्गव । वने स्थिता धीरा यस्य ग्रामनिवासिनः कामिनो गृहस्थस्य मद्विधस्य स्त्रीजितस्य मादृशस्याचरितं । दृष्ट्वेति शेषः । अनुशोचति । तस्य गाथां शृणु ॥ १ ॥ २ ॥ आत्मानं लक्षीकृत्याह ॥ बस्त इति ॥ ३ ॥ तीर्थे कूपजले विवृत्य किंचिदवतीर्य विषाणाग्रेणोद्धृत्य रोधसि तटे । न्यधत्तेति शेषः ॥ ४ ॥ सोऽजो तया वृत्तं समावृतं युक्तमित्यर्थः । शर्मिष्ठाप्रमुखा लक्षीकृत्याह ॥ बस्तोजा इति । कांतकामिनीः पतिकामितवत्यस्तमेव भेजुः । पीवानं पुष्टं श्मश्रुलं बहुलश्मश्रुयुक्तं मीढ्वांसं रेतः सिक्तारं रतिसमर्थमित्यर्थः । यावकोविदं यावान्नभक्षणपाटवोपेतं ॥ ५ ॥ अजवृषोऽजश्रेष्ठो नावबुद्ध्यत । अडभावश्छांदसः ॥ ६ ॥ शर्मिष्ठां लक्षीकृत्याह ॥ अन्ययाऽजया रममाणामिति । कथं भूता । अजा-

रूपसंलग्ना रूपगुणसंपन्ना तत्कर्मान्यासक्तिलक्षणं कर्म नामृष्यत् ॥ ७ ॥ दुर्हृदं दुष्टहृदयं । सुहृदः सुजनस्य रूपमिव रूपं यस्य तमिंद्रियाराममिंद्रियप्रीतिकरं । स्वामिनमिति शुक्राभिप्रायेणाह ॥ ८ ॥ विलिबिलाकारं रमणार्थं बस्तजातिस्वरमन्यत्र सीत्कारादि शब्दं च कुर्वन् संधितुं प्रसादयितुं । तामित्यनुषंगः ॥ ९ ॥ लंबंतं वृषणमच्छिनदन्याजायासंभोगासमर्थमकरोत् । अर्थाय स्वपुत्र्याः कामभोगलक्षणप्रयोजनाय योगविदुपायज्ञोऽजया । रममाणमिति शेषः ॥ ११ ॥ कृपणस्त्वद्वियोगासहिष्णुरात्मानं परमात्मानं स्वस्वरूपं च मायया विभ्रमलक्षणया ॥ १२ ॥ ननु तर्हि पुनरपि विषयाः सेव्यतां ततो मनसि प्रीते सति कामोपशांत्या मोहो निवर्तेत इति चेत्तत्राह ॥ यदिति द्वाभ्यां । व्रीहियवमित्येकवद्भावः । व्रीह्यादयो मनःप्रीतिं न दुह्यंति न पूरयंति । दुह प्रपूरण इति धातुः ॥ १३ ॥ कामस्तृष्णा कामानां विषयाणां हविषा घृतेन । हविर्गव्ये घृते तोये इति यादवः । कृष्णवर्त्माऽग्निः कृष्णवर्त्मा ॥ १४ ॥ नन्वेवं चेत्साधनाभावेन कदापि मुक्तिर्न स्यादिति तत्राह ॥ यदेति । यदा सर्वभूतेष्वमंगलं भावं रागद्वेषादिलक्षणं भावं न कुरुते तस्य समदृष्टेः सर्वस्य ब्रह्माधीनत्वेन तत्तद्योग्यताविशिष्टवस्तुदर्शिनः पुंसः सर्वा दिशः सुखमयंते प्रापयंतीति सुखमयाः सुखप्रधाना वा ॥ १५ ॥ ननु स्थानवीर्ये निराहारत्वेन विषयतृष्णात्यागेन मुक्तिः किं न स्यादिति तत्राह ॥ येति । सत्यं तृष्णात्यागेन मुक्तिः स्यात् । स एव नास्ति । तस्माज्ज्ञानेन तत्त्यागस्तदेवापाद्यमित्यर्थः । जीर्यता वयसाऽनशनेन वा जरां प्राप्नुवतो दुःखनिर्वाहं दुःखानि नितरां वहतीति तथा ॥ १६ ॥ स्त्रीसंनिधानं तु सर्वथा त्याज्यमित्याह ॥ मात्रेति । अविविक्तासन एकशय्यासनः ॥ १७ ॥ स्वतो विषयतृष्णा न शाम्यतीत्यत्र स्वानुभवमाह ॥ पूर्णमिति । अनुवसनं प्रतिदिनं ॥ १८ ॥ स्वयमित्थं विचार्य फलितमाह ॥ तस्मादिति । मृगयंते तत्त्वमिति मृगा ज्ञानिनस्तैः सह तपश्चरिष्यामीत्यन्वयः ॥ १९ ॥ दृष्टश्रुतसुखत्यागेनादृष्टाश्रुतसुखाय कः कुशलः प्रयतेतारण्ये कायक्लेशं विद्वानिति तत्राह ॥ दृष्टमिति । दृष्टं राज्यादि विभवं श्रुतं स्वर्गादि विभवमित्युभयमसत्क्षणभंगुरं । विद्वांस्तन्नानुध्यायेन्न संविशेत् । भोगलक्षणप्रवेशो न कर्तव्येत्यर्थः । कुत इति तत्राह ॥ संसृतिमिति । तत्रानुध्यानसंवेशनयोः सतोः संसारमात्मनाशं स्वरूपनाशं विद्वान्यः स आत्मदृगात्मज्ञानीत्युच्यत इत्यर्थः । ध्यायतो विषयान्पुंसः संगस्तेषूपजायत इत्यादिः ॥ २० ॥ तदीयं पुरुषसंबंधिपुरूरवे स्वस्य कनिष्ठपुत्राय जरसंजरां

॥ २१ ॥ दक्षिणपूर्वस्यामाग्नेय्यामीश्वरं राजानं चक्र इति सर्वत्रानुषंगः ॥ २२ ॥ विशां प्रजानामर्हत्तमं पुरुमभिषिच्य तस्याग्रजांस्तस्य वशे स्थाप्येत्यन्वयः ॥ २३ ॥ शब्दादिविषयेषु वर्षपूगान् आम्रेडितमभ्यस्तं षडिंद्रियवर्गं मुमुचे विषयादाहृत्य भगवद्विषयं चकारेत्यर्थः । द्विजः पक्षी ॥ २४ ॥ तत्र वने स्थित इति शेषः । आत्मानुभूत्या परमात्मापरोक्षज्ञानेन विधुतं त्रिभिः सत्त्वादिगुणैर्निर्मितमभिमानलक्षणं यस्य स तथा ब्रह्मणि तदाराधने प्रतीतः कोविदो भागवतीं भगवद्धर्मलभ्यां गतिं जीवन्मुक्त्यवस्थां लेभ इत्यन्वयः ॥ २५ ॥ प्रस्तोभं वंचनं स्नेहवैक्लव्यात् । स्नेहभंगभयादिति यावत् । प्राप्तप्रस्तोभमाह ॥ परिहासमिवेति । ॥ २६ ॥ प्रपयां गच्छतामागच्छतां सहवासमिव सुहृदां संनिवासं विज्ञाय लिंगशरीरमधुनोदमुंचदित्युरेणान्वयः । कथं भूतं सुहृदां संनिवासं । प्रभोर्हरेरिच्छानिर्मितं ॥ २७ ॥ उक्तमेव विवृणोति ॥ सर्वत्रेति । स्वप्नौपम्येनानित्यत्वं विज्ञाय सर्वत्र संगमुत्सृज्येत्यन्वयः ॥ २८ ॥ नमस्तुभ्यमिति । जप्त्वेति शेषः । शुको वा नमस्करोति ॥ नम इति । बृहते पूर्णाय ॥ २९ ॥ इति श्रीभागवताटिप्पण्यां षोडशोऽध्यायः ॥ ९—१६ ॥ ॥

॥ हरिः ॐ ॥ एवं ययातिराजवृत्तांतं सपरिकरं निरूप्य ययातिराजपुत्रस्य पुरोर्वंशं निरूपयितुं प्रतिजानीते ॥ पुरोर्वंशमिति । यत्र पुरोर्वंशे जातोऽसि यत्र यस्मिन्पुरोर्वंशे ये जज्ञिरे तेषु केचन राजर्षयः केचन ब्रह्मवंश्या ब्रह्मर्षयश्चाभवन् । कथं भूता वंश्याः । राजवंशे भवाः ॥ १ ॥ अथ प्रवीरात् । वै इत्यव्ययं तस्मादित्यर्थे । तस्मान्नमस्तोः ॥ २ ॥ अभूत्पुत्र इत्यस्योत्तरत्राप्यनुषंगः । तत्सुतो हयांतिसुतः ॥ ३ ॥ धर्मेयुश्च व्रतेयुश्च सत्येयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ वनेयुश्चावमोऽतिमः । एवं ऋतेयुप्रमुखा दशपुत्रास्तस्य रौद्राश्वसकाशाद्घृताच्यामप्सरसि जाताः । अप्सरस्यामिति षष्ठी सप्तम्यर्थे । वंशवर्तित्वे दृष्टांतमाह ॥ मुख्यस्येति । जगदात्मनो जगद्व्याप्य तिष्ठतो मुख्यप्राणस्य वशे इंद्रियाणि यथा वर्तंते तद्वदिति भावः ॥ ५ ॥ ऋतेयो दशसु प्रथमात् । कण्वोऽप्रातिरथात्मजोऽप्रतिरथपुत्रः ॥ ६ ॥ तस्य कण्वस्य सुमतेस्त्रिषु पुत्रेषु प्रथमात् ॥ ७ ॥ दुष्यंतस्य शकुंतलायां भरतः पुत्रोऽभवदिति वक्तुं कथामाह ॥ दुष्यंत इत्यादिना । कण्वाश्रमं रमामिव मंडयंतीं देवमायामिव रमामिव स्थितां स्त्रियं विलोक्य मुमुहे । वरारोहां सुंदरजघनां ॥ ८ ॥ ९ ॥ तस्या दर्शनेन प्रमुदितोऽत एव संन्निवृत्तः संचारश्रमो यस्य श्लक्ष्णया मधुरया ॥ १० ॥

कमलगर्भाभे पद्मोदरप्रभे । कस्यासि कस्यात्मजासि । हृदयंगमे सुंदरि ॥ ११ ॥ पुरोर्वंशोत्पन्नानां चेतो न ह्यधर्मे रमते । मच्चेतस्त्वयि रमते । अतस्त्वां राजपुत्रीं जानामि ॥ १२ ॥ विश्वामित्रस्यात्मजाऽहं मेनकायां जाता तया स्वर्गं प्रति गच्छंत्याऽत्र वने त्यक्ताऽतो राजकन्यैवाहमित्यर्थः ॥ १३ ॥ आस्यतामुपविश्यतां । अर्हणमर्घ्यादि पूजां । नीवारा देवव्रीहयः । तैरापादितमन्नमिति शेषः ॥ १४ ॥ किं करवामेत्यादि वाक्यात्तदभिप्रायं ज्ञात्वाऽऽह ॥ उपपन्नमिति । इदं वचनं युक्तमित्यर्थः ॥ १५ ॥ त्वमेव मम सदृशो वरोऽतस्तव पतित्वविषयेऽगीकार एवेत्याशयेन तया ॐ इत्युक्त इत्यर्थः । ब्राह्मो राक्षसो गांधर्व इत्यादयो बहवो विवाहविधयः संति । तेषु गांधर्वविधिना स्वयंवरलक्षणेनोपयेमे ॥ १६ ॥ महिष्यां शकुंतलायां श्वो भूते परिदिने ॥१७॥ समुचिता ज्ञातकर्मादिक्रिया मृगेंद्रान्सिंहान् ॥ १८ ॥ दुरत्ययमत्येतुमशक्यं । विक्रांतं विक्रमणं यस्य तं कुमारं प्रमदोत्तमा शकुंतला हरेरंशांशेनांशः पद्मनाभस्तस्यांशेन संभूतं ॥ १९ ॥ न जगृहे । कदाचिन्मृगयां गतो दुष्यंतो वने शकुंतलां दृष्ट्वा गांधर्वविधिना विवाहं कृत्वा स्वपुरं ययौ । ततः कालविलंबेन स्मरणाभावात्तां शकुंतलां नेयं भार्या तज्जन्यं पुत्रं नायं पुत्र इति बुद्ध्या न जगृहेत्यर्थः ॥ २० ॥ यथा कारुशाला चुल्लीस्थिताग्निशक्त्युद्दीपकत्वेनाग्नेराधारमात्रं भस्त्रा । भस भक्षण दीप्त्योरिति धातोः । तथा माता भर्त्राहितं वीर्यमादाय करचरणाद्यवयवविशिष्टदेहाकारेण परिणममानस्य वीर्यस्य प्रथमाधारभूतत्वान्मातुः पुत्रत्वमौपचारिकं । तर्हि कस्य मुख्यपुत्रत्वमिति तत्राह ॥ पितुरिति । मुख्यपुत्रत्वं पितुरेव । कुत इत्यत आह ॥ यस्मादिति । स पितैव पुत्रो जात इति यस्मात्तस्मात्सः पुत्रः पितुरेवेत्यर्थः । आत्मा वै पुत्रनामासीदिति श्रुतेः । तज्जाया जाया भवति यदस्यां जायते पुनरिति च । तर्हि किं कर्तव्यमिति तत्राह ॥ दौष्यंतिमिति । दुष्यंतस्य तव पुत्रत्वादेव दौष्यंति शब्दवाच्यं पुत्रं भरस्व पोषय । अनेन भरतनाम निरुक्तं । अतः शकुंतलां स्वैरिणीमिति मा मंस्था अवज्ञां न कुरु ॥ २१ ॥ ननु मम पुत्रेण किं प्रयोजनं स्याद्येन भार्या स्यादिति तत्राह ॥ रेतोधा इति । पुत्रं । पुत्र इति व्यत्ययः कार्यः । सुप् तिङुपग्रहलिंगनराणामिति महाव्याकरणसूत्रात् । रेतोधा रेतो धातारं पितरं । सप्तसु प्रथमेति सूत्रात् । यमक्षयं । अत्रापि व्यत्ययः । अक्षयोऽनंतो लोकस्तं वैकुंठादिकं नयति प्रापयति । भो नरदेव दुष्यंत । पुत्रं स्वीकुर्विति शेषः । मयाऽनाहितं गर्भं कथं पुत्रं

वदसीति तत्राह ॥ त्वं चेति । च शब्द एवार्थे । त्वमेवास्य गर्भस्य धाताऽऽधानकर्ता । क आहेति तत्राह ॥ सत्यमिति । शकुंतला सत्यं यथार्थमेवाह नानृतं । अथवा । अस्वीकारेऽनर्थमाह ॥ रेतोधा इति । रेतोधाः पिता भवान् पुत्रं यमक्षयं मृत्युलोकं नयति मृतप्रायं करोति । त्वया पुत्रत्वेनास्वीकाराात्तेन पुत्रहत्याख्यदोषप्राप्तिस्तव स्यादतस्तद्भयादपि स्वीकुर्वित्यर्थः । रेतोधाः पुत्रो नयति नरदेव यमक्षयमिति पाठे । पुत्रो रेतोधा यमक्षयाद्यमलोकाद्रेतोधातरि पितरं नयति तारयतीत्यर्थः ॥ तथा च श्रुतिः ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवेति । ततश्च दुष्यंतो राजा भार्यापुत्रौ स्वीकृतवानिति ज्ञेयं ॥ २२ ॥ पितरि दुष्यंते उपरते मृते सति स दुष्यंतपुत्रो भरस्वेत्युक्तत्वाद्भरतो भरेण हरिणा ततत्वाद्वा । चक्रवर्ती बभूवेति शेषः । तस्य महिमा तदप्येते श्लोका अभिगीता इत्यादि । बव्हृचश्रुत्या हरेरंशेन सह भवतीत्यंशभुवस्तस्य ॥ २३ ॥ तत्र लिंगमाह ॥ चक्रमिति । चक्रं चक्ररेखः पद्मकोशस्तस्य रेखा महाभिषेकेण महाभिषेकविधिनाऽभिषिक्तोऽधिराट् प्रभुर्येऽधिराजा राजाधिराजास्तेषां प्रभुरित्यर्थः ॥ २४ ॥ गंगायामनु गंगातीरे पंचपंचशतैः पंचभिः पंचशता च पंचोत्तरपंचाशत्संख्याकैरित्यर्थः । वाजिभिरश्वैरीजे । दीर्घतमसं पुरोधाय पुरोहितं कृत्वा । पुनर्यमुनायामनु यमुनातीरेऽष्टसप्ततिसंख्याकान् अश्वान् बबंध । पशुबंधं कृतवानित्यर्थः । किं कुर्वन् । वसु धनं प्रकर्षेण प्रददे प्राददत् । भरतस्येदं सामर्थ्यमाह ॥ भरतस्येति । कैकयीपुत्रव्यावृत्त्यर्थं दौष्यंतेरिति । भरतस्य यज्ञेऽग्निः साचीगुणेचितः साचिव्यगुणे कृतः साचिव्यं कृतवानित्यर्थः । अग्निमथने कृते सति शीघ्रं प्रकटीबभूवेति भावः ॥ २५ ॥ २६ ॥ यस्मिन्यज्ञे ब्राह्मणा द्वंद्वशः सहस्रं द्विसहस्रं गा विभेजिरे विभज्य स्वीकृतवंतः । दौष्यंतिर्भरतस्तस्मिन्यज्ञे त्रयस्त्रिंशच्छतमश्वान् बद्ध्वा नृपान्विस्मापयन्विस्मितवंतः कुर्वन् पुरुमायया महता महिम्ना देवानां मायां निजभोगेच्छान् अत्यगात्कांक्षितादप्यधिकं ददावित्यर्थः । यद्वा । देवानामपि मायां वैभवं स्वमहिम्नाऽत्यगादशेत ॥२७॥ शुक्लदतः शुक्लदंतान्हिरण्येन परिष्कृतान् अलंकृतान् कृष्णान्मृगान् गजान्वा । भद्रो मृगो गजश्चेति हलः । अदात् । मष्णारे तन्नामके कर्मणि कस्मिंश्चित्कर्मविशेषे तीर्थविशेषे वा । नियुतानि लक्षाणि ॥ २८ ॥ पूर्वे नृपा महत्कर्म बव्हश्वमहीदानादिरूपं महत्कर्म नोदायुर्न प्रापुः । अपरे पश्चात्तना नृपाश्च न प्राप्स्यंतीदानींतना न प्राप्नुवंतीति किमु वक्तव्यं । तत्र दृष्टांतमाह ॥ बाहुभ्यामिति । अग्निष्टोमादि

साधनमंतरेण केवलबाहुभ्यां स्वर्गं यथा न गच्छंति तद्वदित्यर्थः ॥ २९ ॥ किरातादयो नीचजातिविशेषाः । तान् अब्रह्मण्यान् ब्राह्मणविरोधिनो नृपांश्चाहनद्धतवान् ॥ ३० ॥ विक्रमांतरं दर्शयति ॥ जित्वेति । पुरा दिग्विजयकाले येन सहायभूतेन भरतेनासुरान्स्वयं जित्वा स्वौकांसि स्वस्वस्थानानि प्रापुः । असुरजयो न भरतकर्तृकः । समानकर्तृकयोः पूर्वकाले क्त्वेत्युक्तत्वात् । स भरतो नाम्ना पणिभिरसुरैः रसातलं नीता देवस्त्रियः पुनराहरदानीतवान् ॥ ३१ ॥ त्रिनवसाहस्रीः समाः सप्तविंशत्सहस्रवत्सरान् रोदसी द्यावाभूमी तस्य राज्ये दुदुहतुर्दोहनं चक्रतुः । स भरतश्चक्रमाज्ञां सर्वदिक्ष्ववर्तयत्प्रवर्तयामास । चक्रमाज्ञारथांगयोरित्यभिधानं ॥ ३२ ॥ भरतस्य वैराग्यप्रकारमाह ॥ स इति । सम्राट् चक्रवर्ती लोकपालानामिंद्रादीनामैश्वर्यं स्वर्गाद्याधिपत्यमधिराट् श्रियं साम्राज्यलक्ष्मीमस्खलितं केनाप्यप्रतिहतं चक्रं गजतुरगादि सैन्यं । चक्रं सैन्ये जलावर्त इत्यादेः । प्राणाः । बहुवचनमाद्यर्थे । इंद्रियादीन्मृषा नाशशिरस्कामिति मत्वोपररामोपरतव्यापारोऽभूत् । हेत्यनेन आब्रह्मस्तंबपर्यंतमसारं चाप्यनित्यकमित्यादिवाक्यप्रसिद्धिं सूचयति ॥ ३३ ॥ इदानीं तस्य संतानप्रकारमाह ॥ तस्येति । वैदर्भ्यो विदर्भराजपुत्र्याः । नानुरूपा इतीरिते एते मत्सदृशा न भवंतीति राज्ञेरिते सति व्यभिचारशंकया भयात्पुत्रान्जघ्नुरित्यन्वयः ॥ ३४ ॥ नन्वेवं चेद्भरतस्य पुत्राभावेन परलोकाभावः प्रसक्त इत्यत आह ॥ तस्येति । भरतस्य वंशे एवं वितथे उत्सन्ने सति तदर्थं पुत्रार्थं मरुत्सोमनामकयागेन यजतस्तस्य प्रसन्नाः संतो मरुतो भरद्वाजनामकं पुत्रं उपाददुः पुत्रत्वेन समर्पयामासुः ॥ ३५ ॥ मरुतां तदागमनप्रकारः कथं कस्मादस्य भरद्वाजाख्यं येन तन्नामयुक्तः स्यादतस्तज्ज्ञापनाय तदुक्तिप्रकारमाह ॥ अंतर्वत्न्यामिति । अंतर्वत्न्यां गर्भिण्यां भ्रातुरुचथ्यस्य पत्न्या चौर्येण मैथुनाय प्रवृत्तो बृहस्पतिरुतथ्याहितगर्भच्छेदनं दीर्घतमसा निवारितः सन् क्रोधेनांधो भवेति गर्भस्थं शप्त्वा तस्यां वीर्यं बलान्न्यषिंचत् । तच्छापाद्गर्भस्थो दीर्घतमा अंधो बभूव । तेन च तद्वीर्यं पादप्रहरेण योनेर्बहिर्भूमौ पतितं । ततः सद्य एव कुमारोऽभवत् ॥ ३६ ॥ ततः किमभूदिति तत्राह ॥ तामिति । तं परवीर्यजं कुमारं त्यक्तुकामाममुचथ्याख्यभर्तृत्यागविशंकितां ममतां प्रति सुरा एनं श्लोकं जगुः । एतच्छ्लोकाभिधेयमकथयन्नित्यर्थः । किमर्थं जगुरित्यत आह । तस्य सुतस्य नामनिर्वचनमिति नाम निरुच्यते येनेति स तथा तं । तन्नामनिर्वचनेनैव भर्तुस्त्यागशंकामपां कर्तुमित्यर्थः ॥ ३७ ॥ जगुः सुरा

इत्युक्तमेव विवृणोति ॥ मूढ इति । हे मूढे । द्वाजं द्वाभ्यामुचथ्यबृहस्पतिभ्यां जातमिमं कुमारं भर पोषय । भृञ् भरण इति धातोः । कथं भूतं । बृहस्पतेर्वाजं संततिं भरद्धरंतं वंशकारकमित्यर्थः । प्रजा वै वाज इति श्रुतेः । वाज शब्दः संतानवाचकः । द्वाजं भरेत्यस्माभिरुक्तत्वाद्बृहस्पतिसंततिभरत्वाच्च भरद्वाजः । एवं निमित्तद्वयेन भरद्वाज शब्दवाच्य इत्यर्थः । अयं कुमारः पितरावुचथ्यबृहस्पतिनामकौ दुःखात्त्राता भविष्यतीत्येवं निर्वचनरूपमेनं श्लोकं जगुरिति पूर्वेणान्वयः । अत्र विशेषस्तु तात्पर्यानुसारेणावगंतव्यः ॥ ३८ ॥ सा ममता सुरैरेवं चोद्यमानाऽपि भरेति प्रेर्यमाणाऽपि देवं द्योतमानं कुमारमात्मजं । बृहस्पतेरिति शेषः । मत्वा भर्तृत्यागशंकया तं व्यसृजत् । ततो मरुतस्तद्द्वाजं गर्भमबिभ्रद्धृतवंतोऽपोषयन्नित्यर्थः । अनेन मरुद्भिर्भृतत्वाद्भरो द्वाभ्यां जातत्वाद्द्वाजो भरश्चासौ द्वाजश्चेति भारद्वाज इति भारद्वाज शब्दस्य निर्वचनांतरं सूचितं भवति । भृत्वा किं कृतं तैरिति तत्राह ॥ दत्त इति । भरतस्यान्वये वितथे सतीति मरुद्भिरयं भरताय दत्तः । पुत्रत्वेनेति शेषः । अस्य भरतपुत्रत्वानंतरं वितथेति नामांतरमपि ज्ञातव्यं । वितथस्य सुतात्मयोरित्युत्तरवचनाच्चेति ॥ ३९ ॥ इति श्रीमद्भागवतटिप्पण्यां सप्तदशोऽध्यायः ॥ ९—१७ ॥ ॥

॥ हरिः ॐ ॥ इदानीं दौष्यंतिभरतस्यान्वये वितथे सति दत्तत्वाद्वितथसंज्ञो भरद्वाजो ब्राह्मणोऽपि भरतस्य दत्तपुत्रो जात इति तद्वंशोऽनुक्रम्यते ॥ वितथस्येति । ततो मरुद्भ्यः सुहृदानंतरं तस्य वितथस्य सुतो मन्युस्तस्माद्बृहत्क्षेत्रो जयो महावीर्यो नरो गर्गश्चेति पंचपुत्रा बभूवुः ॥ १ ॥ इति संस्कृतेर्द्वौ पुत्रौ भरतात्पंचमो रंतिदेवस्तस्य माहात्म्यं भगवन्महिमोपचितत्वात्कथयति ॥ रंतिदेवस्येत्यादिना ॥ २ ॥ कीदृशं यशः । शत्रुजयाल्लब्धमुतान्यस्मादिति तत्राह ॥ वीतवित्तस्येति । दरिद्रस्य ददतो दानं कुर्वतो धनाभावे दानं कथं घटत इति तत्राह ॥ लब्धमिति । स्वस्य बुभुक्षाभावाद्ददाति न तु कर्तव्यत्वेनेति तत्राह ॥ बुभुक्षत इति । स्वयमकृपणस्य कथं दानं घटत इति तत्राह ॥ निष्किंचनस्येति । अकृपणत्वं कथमवगतमिति तत्राह ॥ धीरस्येति । धिया हरौ रमते न तु स्त्रियेति धीरः । तस्यैकाकिनः का चिंतेति तत्राह ॥ सकुटुंबस्येति । सीदत आहाराभावेन सीदतः शीर्णस्येत्यर्थः ॥ ३ ॥ शीर्णत्वे निमित्तमाह ॥ अपिबत इति । जलपानमकुर्वत इत्यर्थः । घृतपायसंयावमिति द्वंद्वैकवद्भावः । संयाव इत्यस्य

गोधूमविकारभक्षस्येत्यर्थः । प्रातरुपस्थितं केनचित्पुरुषेण दययाऽऽनीतमित्यर्थः ॥४॥ एतद्भोक्तुकामस्य काले भोजनसमये ॥५॥ स रंतिदेव आहृत्यादरं कृत्वा सर्वत्रातिथिषु हरिं संपश्यन् हरिरेवातिथिरूपेण समागत इति जानन्सन् संव्यभजद्विभज्य दत्तवान् ॥ ६ ॥ ब्राह्मणाय विभक्तस्यान्नस्य शेषं भोक्ष्यमाणस्य भोक्तुकामस्य महीपतेरन्यो वृषलोऽतिथिरागमत् । वृषलाय शूद्राय ॥७॥ अन्यः शूद्रोऽतिथिः श्वभिः सारमेयैः सगणाय स्वयूथगणसहिताय बुभुक्षते ॥८॥ नमश्चक्रे । तदंतर्गताय हरय इति शेषः । श्वपतये । वृषलाय इति शेषः ॥ ९ ॥ पानाय मात्रं जलमात्रमुच्छेषमुर्वरितं तदप्येकपरितर्पणमेकस्य तृप्तिकरं न बहूनां तज्जलं पास्यतः पातुकामस्य पुल्कसः कश्चन नीचजाती बुरुडो देहीति । ब्रुवन्निति शेषः ॥१०॥ विपुलश्रमां पिपासयाऽतिश्रमोपेतां । आह । पुल्कसं प्रतीति शेषः । अमृतं कर्णामृतं ॥११॥ परदुःखासहिष्णुतया सर्वेषां दुःखं स्वयमाशास्ते नैवोचे महर्धियुक्तामगणितसमृद्धिसंपन्नां योगेश्वराणां गतिं महरादि लोकमपुनर्भवं मोक्षं वा न कामये । तर्हि किं कामयस इति तत्राह ॥ अखिलदेहभाजामिति । येन जलार्पणेन देहभाजोऽदुःखा भवंति तत्तेभ्यो दत्वा तेषां देहभाजामंतःस्थितामार्त्तिमहं प्रपद्ये इत्यन्वयः ॥ १२ ॥ ननु दुःखं किमर्थं प्रार्थयसे परदुःखनिवृत्त्यैव मम सर्वदुःखनिवृत्तेरिति तत्राह ॥ क्षुत्तृडिति । कृपणस्य जंतोर्जीवजलार्पणेन जीवनप्रदजलदानेन सर्वेषां सुखं स्यात् । तदार्त्तिर्ममास्त्विवति जिजीविषोर्जीवितुमिच्छतः पुंसः क्षुत्तृडादयो निवृत्ता भवंतीत्यन्वयः । क्षुत्तृट्श्रम इत्येकं पदं । गात्रपरिभ्रमो देहपरिभ्रमणं क्लमो ग्लानिर्विषादो विषण्णता मोहो मूर्छा । अनेन क्षुधादिमतः पुंसो जलादिदानेन दातुरपि तन्निवृत्तिस्तददाने न तन्निवृत्तिरित्यन्वयव्यतिरेकौ द्रष्टव्यौ ॥ १३ ॥ पिपासया म्रियमाणोऽत्यंतं पीडितोऽपि ॥१४॥ त्रिभुवनाधीशा ब्रह्मादयो वैष्णवीं मायां । आश्रिता इति शेषः । ईश्वरेच्छया तद्धैर्यपरीक्षार्थं ब्राह्मणादिरूपेण समागता इत्यर्थः ॥ १५ ॥ परं केवलं वासुदेवे भक्त्या नमश्चक्रे । न तु तान् किमपि ययाचे । कथं भूतः । निःसंगोऽत्यंतं कुटुंबासक्तिशून्योऽत एव निस्पृहस्तत्पोषणायात्यंतवित्तादि स्पृहारहितः ॥ १६ ॥ ईश्वरालंबनं श्रीहरिविषयमनन्यराधसो भगवत्सिद्धिमंतरेणान्यसिद्धिशून्यस्य तदेकनिष्ठस्येत्यर्थः । माया संसाराख्या प्रत्यलीयत नष्टाऽभूत् ॥ १७ ॥ तत्प्रसंगानुभावेन तत्संगतिप्रभवेन योगिनो योगितुल्याः ॥ १८ ॥ भरतपौत्रेषु मन्युसुतेषु वंश्यस्य वंशमुक्त्वा पंचमस्य गर्गस्य वंशमाह ॥ गर्गादिति । गर्ग्याद्गर्गसुतात्क्षत्रात्क्षत्रिया-

ततः शुनेर्ब्रह्मावर्तत । मन्युसुतस्य महावीर्यस्य वंशमाह ॥ वीर्याद्दुरितक्षय इति । तस्य दुरितक्षयस्य त्र्य्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्राः । अत्र क्षत्रवंशे त्रैय्यारुणादयो ब्राह्मणगतिं ब्राह्मणरूपतां गताः ॥ १९ ॥ मन्योर्ज्येष्ठसुतस्य वंशमाह ॥ बृहत्क्षेत्रस्येति । होत्रः पुत्रोऽभूत् । अस्माद्धोत्राद्धस्ती हस्तिनाम यत् । येन हस्तिनापुरं कृतमिति शेषः । अजमीढादयस्त्रयो हस्तिनः पुत्राः । अजमीढस्य वंशे याः प्रियमेधादयः केचन द्विजाः स्युः ॥२०॥ अजमीढस्य वंशप्रवर्तकोऽन्यः पुत्रो बभूवेत्याह ॥ अजमीढादिति ॥ २१ ॥ रुचिराश्वादयश्चत्वारस्तत्सुताः श्येनजित्सुताः ॥ २३ ॥ तस्येत्यस्यावृत्तिः । तस्य परस्य तनयो नीपः । तस्य नीपस्य पुत्रशतमभूत् ॥ २४ ॥ तेषु पुत्राणां मध्ये योऽणुहो ज्येष्ठः स ब्रह्मदत्तमजीजनदित्यन्वयः । कथंभूतोऽणुहः । सत्यात्मकः सत्ये पूर्णानंदज्ञानात्मके हरावात्मा मनो यस्य सः सत्यात्मकः ॥ २५ ॥ योगेशो ब्रह्मदत्तो योगशास्त्रवित् गविनामिकायां । अधात् अजीजनत् । जैगीषव्यो रुद्रावतारस्तस्योपदेशेन योगतंत्रं योगशास्त्रं ॥ २६ ॥ इमे बार्हदीषवोऽजमीढपुत्रस्य बृहदिषोर्वंश्याः । अजमीढानुजस्य द्विमीढस्य वंशमाह ॥ यवीनर इति ॥ २७ ॥ ततः सत्यधृतिः सुपार्श्वकृत्सुपार्श्वजनकस्तस्य संततिमान्पुनः ॥ २८ ॥ ततः कृतिर्यो हिरण्यनाभादृषेर्योगं प्राप्य योगशास्त्रं प्राप्य प्राच्यसाम्नादि द्विषट्सु संहितां विभज्य जगावध्यापितवान् । तस्य कृतेरुग्रायुधः सुतोऽभूत् ॥ २९ ॥ अथ तस्मात् द्विमीढानुजस्य वंशो नाभूदित्याह ॥ पुरुमीढ इति । ॥ ३० ॥ अजमीढस्य वंश्योः प्रियमेधादयः केचिद्ब्राह्मणा बभूवुः । बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तं । तस्यैव वंशांतरमाह ॥ नलिन्यामिति यावत्समाप्तिः । ततः पुराजातादर्काख्यः ॥ ३१ ॥ मद्गुल एको यवीनरादयश्चत्वार इत्येवं पंच सुताः ॥ ३२ ॥ इमे च पुत्राः पंचानां विषयाणां शब्दादिपंचविषयेभ्यो वैराग्यजननाय समर्थाः पंचालसंज्ञावंतो भवंतीति नाम चकारेत्यर्थः ॥ ३३ ॥ ब्रह्मनिर्वृत्तं ब्राह्मणकुलमभवत् । गोत्रं कुलं मौद्गलं संज्ञितं । हर्म्याश्वसुतान्मुद्गलान्मिथुनमभूत्तदेवाह ॥ दिवोदासः पुमान् अहल्या कन्यकेति । गौतमाज्जात इति शेषः ॥ ३४ ॥ धनुर्वेदोऽस्त्रविद्या ॥ ३५ ॥ यस्माच्छ्बदतः । शुभं सुंदरं ॥ ३६ ॥ अत एव कुमारः कृपः कन्या च कृपी ॥ ३७ ॥ इति श्रीभागवतटिप्पण्यामष्टादशोऽध्यायः ॥ ९—१८ ॥

॥ हरिः ॐ ॥ अहल्यासंततिं प्रोच्य दिवोदाससंततिं कथयाति ॥ मित्रायुरिति । अथेत्यस्यावृत्तिः । तस्मात्सुदासस्तस्मा-

स्सहदेवस्तस्मात्सोमक इति विवेकः । जंतुजन्मकृत्सोमकस्य जंतुर्ज्येष्ठपुत्रः ॥ १ ॥ सोमकस्य बहवः पुत्रा बभूवुरित्याह ॥ तस्येति । पृषतो यवीयान्कनिष्ठः ॥ २ ॥ ततः पृषतादिमे हर्म्या हर्म्याश्ववंश्यः पंचालवंशोत्पन्नत्वात्पंचालका इत्युच्यंते । अजमीढस्य वंशांतरमाह ॥ य इति । अन्यः । बृहदिषोरिति शेषः । अन्यस्यां भार्यायां जातः स ऋक्षो नाम ततः संवरणः ॥ ३ ॥ तत इत्यस्यावृत्तिः । ततः संवरणात्तत्पत्न्यां तपतीनामिकायां सूर्यकन्यायां कुरुरभूत् परीक्षिदादश्चत्वारः कुरोः सुताः ॥ ४ ॥ सुहोत्रसुतश्च्यवनः । तत्सुत इत्यस्यानुकर्षः । कृती तत्सुतश्च्यवनसुतः । तस्य कृतिन उपरिचर इति सोमपादो वसुर्जात एतद्वीर्यादेव सत्यवती विराटश्च मत्स्यादुत्पन्ना वेति ज्ञेयं । ततो वसोर्भार्याभेदेन बृहद्रथमुखाः कुशांब्वाद्याश्च जाताः ॥ ५ ॥ कथंभूताः । चेदिपाश्चेदिदेशपालाः । तस्य ऋषभः ॥ ६ ॥ जज्ञे । सत्यहितस्तत्सुतः सन् जज्ञे । तस्य पुष्पवानपत्यं पुत्रः । बृहद्रथस्यैकभार्यासंततिमुक्त्वाऽन्यभार्यासंततिमाह ॥ अन्यस्यामिति । द्वे शकले एककर्णाद्यवयवयुक्तार्धशरीररूपशकले ॥ ७ ॥ बृहद्रथादुत्पन्ने जीवजीवेति वदत्यशेषजरया रक्षस्य नाभ्यां शकलाभ्यां जरासंधोऽभवत् ॥ ८ ॥ यदित्यस्योभयत्रानुषंगः । यतो यस्मात्सहदेवात्सोमापिर्यस्मात्सोमापेः श्रुतश्रवाः कुरोश्चतुर्षु पुत्रेषु ज्येष्ठः पुत्रः । परीक्षिदनपत्योऽभूत् । कुरुपुत्रस्य जन्होर्वंशमाह ॥ सुरथ इति ॥ ९ ॥ सार्वभौमस्तन्नामकस्ततो जयत्सेनादभवद्राचीकस्तत्तनयः । ततो ऋचीकात् ॥ १० ॥ ऋक्षो ऋक्षनामा ॥ ११ ॥ तस्य प्रतीपस्य देवापिशंतनुवाल्हीकाख्यास्त्रयः पुत्राः । स च शंतनुः पूर्वं वरुणो बाल्हीकः पूर्वं प्रल्हादो देवापिस्त्वग्दोषयुक्तत्वात्तपसे वनं गतः ॥ १२ ॥ प्राक् पूर्वजन्मानि महाभिषङ्नामकः । जीर्णं जराद्युपेतं ॥ १३ ॥ शांतिं सुखं । यदा देवो न ववर्ष तदा शंतनुस्तत्र । ब्राह्मणानपृच्छदिति शेषः ॥ १४ ॥ ततो ब्राह्मणैरेवमुक्तो दाराग्निहोत्रसंयोगं कुरुते चाग्रजे स्थिते परिवेत्ता संविज्ञेयो । परिवित्तिस्तु पूर्वज इति स्मृतेः । अग्रभुक् अग्रतो राज्यभोक्ता त्वं परिवेत्ताऽग्रवित्तोऽयं शंतनुरग्रभुक् अग्रजस्य देवापेरग्रतो राज्यं देहीत्युक्तः । अतस्तद्दोषपरिहारायाग्रजाय देहि ततो वृष्टिर्भविष्यतीति ॥ १५ ॥ शंतनोर्ज्येष्ठं प्रतिगमनात्प्रागेव शंतनुं मत्यमुं त्यक्त्वा स्वेच्छयैव दुष्टेन केनचिन्मंत्रिणा देवापिं पाषंडीकृत्वा राज्यानर्हं कुरुत इत्युक्त्वा प्रेषितैर्विप्रैर्वनं । पाषंडिमताश्रयो गिरा वेदोक्तसन्मार्गाद्विभ्रंशितः सन् वेदवादस्य वेदार्थस्यातिवादान्निंदावचनान्यब्रवीत् । शंतनुस्त्विदमज्ञात्वा

वनं प्रति गत्वा ज्येष्ठं छंदयामास प्रसादयामास । प्रजापालनादिधर्मः परो धर्मोऽवश्यं त्वयाऽनुष्ठेयः । इत्युक्त्वा देवापिर्वेदेन प्रमाणं तदुक्तं न कर्तव्यं किंतु प्रजापीडा कर्तव्या । सर्वे ब्राह्मणा अयं दोषी राज्यानर्हः शंतनुरेव गुणी राज्यार्ह इत्युक्त्वा तस्यैव भूपतित्वमंगीचक्रुस्तदेत्यर्थः ॥ १५ ॥ १६ ॥ कृतादौ कृतयुगस्यादिभागे विष्णोः प्रसादाद्राजा भूत्वा स्वस्य सोमवंशोत्पन्नत्वात्पुत्रपौत्रादिरूपेण संततिं कृत्वा सोमवंशं स्थापयिष्यतीत्यर्थः ॥ तदुक्तं ॥ विष्णोः प्रसादात्स युगे कृते राजा भविष्यतीति ॥ १७ ॥ वाल्हीकात्प्रतीपपुत्रात्ततः सोमदत्ताद्भूरिश्रवाः शूलश्चेति त्रयः पुत्राः । तत्र रुद्रेषु सोमदत्तः पूर्वं पत्रतापाख्यो भूरिः पूर्वमजैकपान्नामको भूरिश्रवाः पूर्वमहिर्बुध्नानामकः शिवादिसर्वरुद्रैराविष्टः शलः पूर्वं विरूपाक्षः ॥ १८ ॥ भीष्मः पूर्वं द्युनामा वसुरात्मवान् जितेंद्रियो येन भीष्मेण तोषितो मम पाणिं गृण्हात्वित्यंबया प्रार्थितोऽपि परशुरामस्तेन युद्धं कृत्वा स्थैर्यं दृष्ट्वा संतुष्टोऽभूदित्यर्थः ॥ १९ ॥ दाशकन्यायां दाशैः कैवर्तैः पालितत्वादेव दाशकन्यायां सत्यवत्यां नाम्नाऽतिप्रसिद्धं समाननाम्ना निमित्तेन चित्रांगदेन गंधर्वेण युद्धे हतः ॥ २० ॥ यस्यां शंतनुपरिग्रहात्पूर्वमेवावतीर्णः साक्षात्कलास्वरूपांशभूतः ॥ २१ ॥ अवतारप्रयोजनमाह ॥ वेदेति । वेदविभागार्थं कृष्णो व्यासो यतो व्यासाच्छुकनामकोऽहं जातः ॥२२॥ इदं भागवतं पुराणमध्यगामाधिगतवानस्मि । श्रीभागवतं स्तौति ॥ हित्वेति ॥ २३ ॥ विचित्रवीर्यः सत्यवत्यां कनिष्ठपुत्रः । स्वयंवराद्भीष्मेण बलादुपनीते । यक्ष्मणा क्षयेन ॥ २४ ॥ अप्रजस्य संतानराहितस्य भ्रातुर्विचित्रवीर्यस्य प्रथमक्षेत्रे धृतराष्ट्रं द्वितीयक्षेत्रे पांडुमिति विवेकः। भुजिष्यां विदुरमिति विवेकः । तत्र धृतराष्ट्रः पूर्वं धृतराष्ट्रनामकगंधर्वः पांडुः पूर्वं परावहो नामकमरुद्विदुरः पूर्वं यमधर्मः ॥ २५ ॥ दुर्योधनः पूर्वं कलिः । दुःशला नामकन्यां जज्ञे ॥ २६ ॥ शापान्मुनिशापात् । कुंती पूर्वदेहेऽपि पांडुभार्या ॥२८॥ नासत्यदस्रयोराश्विभ्यां जातौ । पंचभ्यो युधिष्ठिरादिभ्यः पंचपुत्रास्ते पूर्वजन्मनि पितरः ॥ २८ ॥ विविच्याह ॥ युधिष्ठिरादिति । नाकुलिर्नकुलपुत्रो भार्यांतरेषु युधिष्ठिरादिभ्योऽपरे च सुता बभूवुः ॥ २९ ॥ अपरे भार्यांतरेष्वित्युक्तं विवृणोति ॥ युधिष्ठिरादिति। पौरव्यां पौरवीनामिकायां देवकः सुतो युधिष्ठिरस्य देवकी नामिका शिशुपालसुताऽन्यभार्या तस्यां सुहोत्रो नामपुत्रो बभूवेति ज्ञेयं। तात्पर्यनिर्णये तथोक्तेः । हिडिंबायां घटोत्कच इति ज्ञेयं काली च काशिराजपुत्री अन्या । भीमसेनस्य भार्या भारती । तस्यां

ततो भीमसेनादभूत । शर्वत्राताच्छर्वत्रातः पूर्वं समानवायुः । विजयानामिकायाः पार्वतीति नामांतरं ॥ ३० ॥ ३१ ॥ निरमित्रं । अजीजनदिति शेषः । अर्जुन उलूप्यां नागकन्यकायामिरावतं ॥ ३२ ॥ अर्जुन एवं मणिपूरपतेः पांड्यस्य सुतायां चित्रांगदायां पुत्रिकापुत्रधर्मेण दत्तायां बभ्रुवाहनमजीजनत् । सोऽपि बभ्रुवाहनोऽपि तत्पुत्रो मणिपूरपतेः पुत्रः । अभूदिति शेषः । तव तातोऽभिमन्युः सुभद्रायामजायत । अर्जुनादिति शेषः । पूर्वं सुभद्रा त्रिजटाऽभिमन्युः पूर्वं बुधः ॥ ३३ ॥ कथं भूतोऽभिमन्युः । सर्वातिरथजित्सर्वान् अतिरथान् जयतीति तथा । ततोऽभिमन्योः सकाशादुत्तरायां विराटपुत्र्यां भवान् जातः । ब्रह्मास्त्रतेजसा कुरुषु पौरवेषु परिक्षीणेषु सत्सु नष्टेषु सत्सु ॥ ३४ ॥ अंतकान्मृत्योः सकाशात्सजीवो जीवसहितः सन्मोचितः ॥ ३५ ॥ जनमेजयपूर्वकान्पुत्रानाह ॥ श्रुतसेन इत्यादिना वीर्यवानित्यंतेन । जनमेजयस्य महिमानमाह ॥ जनमेजय इति । तक्षकात्तन्नामकसर्पान्निधनं मरणं । परीक्षितस्तक्षकान्मरणं तु प्रथमस्कंधे स्पष्टं ॥ ३६ ॥ स जनमेजयः सर्पान्होष्यति । कावषेयं तन्नामकं ऋषिं गुरुं पुरोधाय पुरतः कृत्वा तुरगमेधयाऽश्वमेधयागेन ॥ ३७ ॥ सर्वां पृथ्वीं जित्वाऽश्वमेधेन तदतिरिक्तैरध्वरैश्च यक्ष्यतीत्यन्वयः । भविष्यानाह ॥ तस्य पुत्र इति । मन्समाप्तिजनमेजयस्येत्यर्थः ॥ ३८ ॥ याज्ञवल्क्यात्क्रियाज्ञानं शौनकात्परं चात्मसदृशादस्य ज्ञानं प्राप्स्यति । कृपादस्त्राण्यवाप्स्येति वैष्णवपुराणोक्तेः । क्वचित्ज्ञानं कृपाचार्यादित्येव पाठः ॥ ३९ ॥ नेमिचक्रस्तत्सुतो विश्रंभकृष्णसुतः । नेमिचक्र इति शेषः । गजाव्हये पुरे नदीप्रवाहेण हृते सति कौशांब्यां पुर्यां वत्स्यति वासं करिष्यति । कौशांब्यां तन्नामकपुर्यां ॥ ४० ॥ ततो नेमिचक्राच्चित्ररथ उक्तश्चित्ररथेत्युक्तः सुतः । अथ सुषेणात्सुवीथो महीपतिस्तन्नामकः ॥ ४१ ॥ भविता भविष्यति । तस्येत्यनुवर्तते । तस्य नृचक्षुर्यद्यस्मान्नलो नलनामकः सुतः । तस्मादित्युभयत्र संबंधः । तस्मात्सुखीनलात्पारिप्लवस्तस्मात्पारिप्लवात्सुनयस्तस्मान्मेधावीत्यध्याहार्यं । मेधावी सुनयात्मज इत्यनुवादात् ॥ ४२ ॥ तत इत्युभयत्रानुषज्जते । ततो नृपंजयस्ततो दुर्व इति तस्माद्दुर्वात्तिमिः । तस्माद्बृहद्रथात्सुदासः ॥ ४३ ॥ सुदासाच्छतानीक इत्यध्याहार्यं । शतानीकः सुदासज इत्यनुवादात् । शतानीकः सुदासपुत्र इत्यर्थः । तस्य दुर्मनस्य । तस्येत्युत्तरत्रापि संबंधः । तस्य महीनस्य दंडपाणिर्निमिस्तस्य क्षेमकनृपः ॥ ४४ ॥ ब्रह्मक्षत्रियस्य ब्राह्मणक्षत्रियात्मकस्य राजसमूहस्य देवर्षिसत्कृतः पूजितः संस्थामवसानं नाशं ॥ ४५ ॥

पूर्वं कुरोश्चत्वारः कुमारा इत्युक्तं । तत्र कुरुपुत्रस्य जन्होर्वंशं क्षेमकपर्यंतमुक्त्वा कुरुपुत्रस्य सुधनुष उक्तावशिष्टवंशमाह ॥ अथेति । बृहद्रथस्य जरासंधस्तस्य सहदेवस्य सोमापिर्यद्यस्मात्सोमापिः सुतश्रवा यद्यपि सोमापि सुतश्रवसौ पूर्वोक्तौ तथाऽपि तयोर्भविता-त्पुनर्ग्रहणं ॥ ४६ ॥ ४७ ॥ ततः सुतश्रवसोऽथानंतरं सुनक्षत्रस्तत्सुतो बृहत्सेनात् । तत इत्यनुवर्तते । ततः श्रुतंजयो विप्रो विप्रनामाऽथ तस्माच्छुचेः ॥ ४८ ॥ क्षेमस्तस्मात्सुव्रतः । तस्मादित्यस्योत्तरत्रापि संबंधः । तस्माद्धर्मसत्रः । अथेत्यस्योभयत्र संबंधः । अथ दृढसेनोऽथ सुमतिस्ततः सबलो जनिता भविता ॥ ४९ ॥ तत इत्यस्योत्तरत्रापि संबंधः । ततः सुनीथस्ततः सत्यजित् । यद्यस्माद्भूपालाः सहस्रवत्सरं भाव्यास्तदनंतरभाव्यान् द्वादशस्कंधे वक्ष्यति ॥ ५० ॥ इति श्रीभागवतटिप्पण्या-मेकोनविंशोऽध्यायः ॥ ९—१९ ॥ ॥

॥ हरिः ॐ ॥ तदेवं ययातेः पुत्राणां पंचमस्य पुरोर्वंशो निरूपितः । इदानीं चतुर्थस्यानोर्वंशमनुक्रामति ॥ अनोरिति । त्रयस्ततो जनमेजयः ॥ १ ॥ तस्य जनमेजनस्य महाशालस्तस्य महामनाः ॥२॥ चत्वारोशीनर आत्मजाः । संधिरार्षः । वृषदर्भा-दयश्चत्वारः शिबेरात्मजा इत्यन्वयः ॥ ३ ॥ तितिक्षोरुशीनरानुजस्य ॥ ४ ॥ दीर्घतपसः सकाशादंगवंगकलिंगाद्या अंगवंगक-लिंग एवाद्याः प्रधाना येषांते तथोक्ताः सुह्मपुंडादि नामानो महीक्षितो राजानो बलेः क्षेत्रे जज्ञिर इत्यन्वयः ॥ ५ ॥ तेंऽगाद्या षट् राजानः प्राच्यकान् पूर्वादि दिशि विद्यमानान् षट् विषयान् स्वनाम्ना ख्यातिं चक्रुः । अंगतोंऽगदेशाधिपतेरंगराजात्खनपानो नामा ॥ ६ ॥ ततो धर्मरथाख्यः सुतोऽप्रजः प्रजारहितः । स मित्ररथो रोमपाद इति ख्यातः । दशरथो रामपिता ॥ ७ ॥ तस्मै तस्य सखा प्रायच्छत् । ऋष्यशृंगे । उवास इति शेषः । देवे देवेंद्रे यं ऋष्यशृंगं । रामा वरांगनाः ॥ ८ ॥ वाद्यानि ख-वाद्यानि वीणादिभिर्वादित्राणि मृदंगादीनि विभ्रमो विलासोऽर्हणानि पुष्पादीनि । तैरानिन्युरिति संबंधः । ततो वृष्टिं लब्ध्वा स्वकन्यां प्रायच्छदिति विज्ञातव्यं । अनावृष्टिभयोद्विग्नो लोमपादो वनस्थे हरिणीसुते ऋष्यशृंगमुनावत्रानीते सुवृष्टिर्भविष्यतीति ॥ ३४ ॥ ब्राह्मणैरुक्ते सति । नानाप्रयत्नैस्तस्मिन्नानीते सति तस्मादृष्यशृंगमुनेर्वृष्टिं लब्ध्वा संतुष्टः सन् स्वकन्यां शांताख्यां प्रायच्छदिति ज्ञातव्यं ॥ तदुक्तं ॥ अनावृष्टिभयोद्विग्नो वृष्टिं लब्ध्वा ततो नृपः । दास्यत्ययं मौल्यमिव शांतां नामनिजात्मजामिति । अत्र पुत्रस्य

लोमपादस्य पुत्रोत्पत्तिप्रकारं निरूपयति । अप्रजस्य संतानरहितस्य लोमपादस्य इति । ऋष्यशृंगो मरुत्वत इंद्रस्येष्टिमिंद्रदेवताकामिष्टिमित्यर्थः ॥ ९ ॥ स इष्टिः कीदृशः । अप्रजो दशरथो येन ऋष्यशृंगेनेष्टिविशेषेण प्रजाः रामादीन् लेभे ॥ १० ॥ बृहद्रथादयस्त्रयस्तत्सुताः पृथुलाक्षसुताः । ततो बृहद्भानोः ॥ ११ ॥ ततो विजयात्संभूतिनामिकायां धृतिनामकस्ततः सत्कर्माख्यादधिरथः ॥ १२ ॥ अपविद्धं गंगायां विसृष्टां कानीनं कन्यावस्थायां जातं ॥ १३ ॥ तस्य कर्णस्य सुद्युम्नसुतः । कुंत्याऽपविद्धं क्षिप्तं कानीनं कन्यावस्थायां जातं शिशुं सुतमकरोदित्यर्थः । ययातिपुत्रस्यानोर्वंशं निरूप्य द्रुह्योर्वंशं निरूपयति ॥ द्रुह्योश्चेति । आत्मज इत्यस्योत्तरत्राप्यनुषंगः ॥ १४ ॥ आरब्ध आरब्धनामकः शतं पुत्रशतं प्राचेतसं प्रचेतससंबंधिप्राचेतसः शतसंख्याकाः पुत्राः बभूवुरित्यर्थः। तेनेति शेषः ॥ १५ ॥ केनाचिन्निमित्तेन म्लेंछाधिपतयोऽभुवन् । ययातिपुत्रस्य तुर्वसोर्वंशं कथयति ॥ तुर्वसोरिति । वन्हिनामः । अथ तस्मात्सुतो भानुमत्सुतः ॥ १६ ॥ तत्सुतः करंधमसुतः पौरवं पुरुवंशोत्पन्नं दुष्यंतं पुत्रं । अस्य मरुतस्यौरसपुत्राभावादेनं दत्तपुत्रं चकारेत्यर्थः । स दुष्यंतः किंचित्कालं मरुत्तस्य वंशे स्थित्वा नाव्यधिपत्यापेक्षयाऽयं दुष्यंतभरतत्वात्पितुर्दुष्यंतादन्य इति ज्ञातव्यं । सूचीकटाहन्यायेन द्रुह्याद्रीनां पुत्राणां वंशं कथयित्वा बहुलपुण्यहेतुत्वाच्च ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं कथयति ॥ ययातेरित्ति ॥ १७ ॥ महापुण्यं तद्वंशे भगवतोऽवतीर्णत्वादिति हृदयं । तदेव विशदमाह ॥ यदोर्वंशामिति । नरवदाकृतिर्यस्य ॥ १९ ॥ यदोश्चत्वारः सूनवः श्रुताः विख्याताः । प्रथमात्मजः प्रथमस्य सहस्रजित आत्मजः ॥२०॥ तत्सुताः शताजित्सुतास्त्रयः ॥ २१ ॥ ततो धर्मात् । नेत्यनुषंगः । स च कुंतेस्तन्नामकस्य पिता कुंतिनामको नेत्रस्य पुत्र इत्यर्थः । कुंतेः सोहंजिः सोहंजेर्महिष्मान्महिष्मतो भद्रसेनः । भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ । धनकः कृतवीर्यकः सुतकृतवीर्यजनकः । धनकस्यान्येऽपि पुत्रास्तानाह ॥ कृताग्निरित्यादिना । अर्जुनः कार्तवीर्यार्जुनः । प्राप्ता अणिमादयो योगाः शौर्यादयश्च महागुणा यस्य स तथोक्तः ॥ २३ ॥ २४ ॥ तानेव महागुणानाह ॥ न नूनमिति । गतिं स्थितिं । सामर्थ्यमिति यावत् । ते पार्थिवाः । योगोऽणिमादिर्ज्ञानादिश्च जयः शत्रुजयः ॥ २५ ॥ पंचोत्तराशीतिसहस्रसंख्याकाः समा अव्याहतमप्रतिहतं शरीरबलं यस्य स तथा ॥ २६ ॥ भोगकालेऽपि विष्णुस्मरणं न परित्यक्तवानित्याह ॥ अनिष्टेति । अक्षय्यं षट्सु षडिंद्रियविषयं षष्ठांशं वसु षड्वसु

वा बुभुजे । तस्य कार्तवीर्यार्जुनस्य मृधे युद्धे ॥ २७ ॥ तानेवाह ॥ जयध्वज इति । यत्पुत्रशतं यत्तालजंघपुत्रशतत्वादेव तदाख्यं क्षत्रं क्षत्रकुलं तदौर्वस्य मुनेस्तेजो यस्य स तथा तेन सगणं संहृतमित्यर्थः । यद्वा । सगरेणौर्वतेजसा युद्धे संहृतं । तेषां तालजंघपुत्राणां वीतिहोत्रो ज्येष्ठः । वीतिहोत्रस्येति शेषः । मधुः सुत इत्यन्वयः । कथं भूतो मधुः । वृष्णिपुत्रो वृष्णिः पुत्रो यस्य स तथा । तस्य मधोः पुत्रशतं त्वासीदिति हरिवंशवचनादिति दुर्घटभावदीपोक्तेः । कीदृशं पुत्रशतं । वृष्णिज्येष्ठो यस्य स तथोक्तं । वृष्णिं प्रथममुक्त्वाऽनंतरं पुत्रशतमभूदित्यर्थः । यतो मधोर्वृष्णेः । यदोश्च हेतोरिदं कुलमुत्पन्नं । अतस्तत्कुलस्था माधवा वृष्णयमाधवाश्चेति संज्ञिता इति योज्यं ॥ २८ ॥ २९ ॥ ३० ॥ यदुपुत्रेषु चतुर्षु ज्येष्ठस्य सहस्रजितोर्वंशमुक्त्वा द्वितीयस्य वंशमाह ॥ यदुपुत्रस्येति । क्रोष्टोः क्रोष्टनामकस्य वृजिनवान्पुत्रस्ततो वाहेरशेकुः । तत इत्यस्योत्तरत्र संबंधः ॥ ३१ ॥ ततश्चित्ररथाच्छशबिंदुर्महाभोज इति नामांतरं । तं विशिनष्टि ॥ चतुर्दशेति । चतुर्दशमहारत्नानि तज्जातिश्रेष्ठवस्तूनि यस्य सः । तानि मार्कंडेयपुराणे वर्णितानि । गजवाजिरथस्त्रीषु निधिमौक्तिकविद्रुमाः । शक्तिपाशमणिछत्रविमानानि चतुर्दशेति ॥ ३२ ॥ तस्य शशबिंदोः पत्नीसहस्राणां दश आसन् । दशसहस्रसंख्याकाः पत्न्योऽभवन्नित्यर्थः । महायशाः सः शशबिंदुस्तासु भार्यासु प्रत्येकं लक्षं लक्षमेवं तासु पुत्राणां दशलक्षसहस्राणि जनयामास । शशबिंदोरनेकेषु पुत्रेषु पृथुश्रवः प्रभृतयः षट् पुत्राः प्रधानाः ॥ ॥ ३३ ॥ तत्र शशबिंदोर्ज्येष्ठपुत्रस्य पृथुश्रवसो वंशमाह ॥ तेषामिति । तेषां मध्ये धर्मो नाम पृथुश्रवस आत्मजः । तस्य धर्मस्योशना नामात्मजो हयमेधशतस्य हयमेधानां शतेन राजत इति राट् शताश्वमेधकर्त्रेत्यर्थः ॥३४॥ तस्य रुचकस्य पंचात्मजा आसन् । तानात्मजान् शृणु ॥ ३५ ॥ शैब्यानामकभार्या भयादेवैकभार्यस्य वंध्यापतेर्ज्यामघस्य राज्ञः पुत्रस्य तद्भयमेव पुत्रप्रदमभवादीति प्रदर्शयन्नाह ॥ ज्यामघस्त्विति । अन्यां भार्यां नाविंदन्न प्राप शत्रुभवनान्मार्गभ्रष्टामहर्षींदप्रहर्षीत् ॥ ३६ ॥ हे कुहक कपटयुक्त । मदावासस्थानं ॥ ३७ ॥ स्नुषा स्नुषेति वचनं कथं युज्यते ॥ ३८ ॥ अतिभयेन व्याकुलमाह ॥ जनयिष्यसीति । देवताप्रसादेनेति शेषः । भार्याभयेन कथं मनःखिन्नसर्वांगस्य राज्ञः प्राणसंकटमालोक्य कयाऽनुकंपितास्तेन पूर्वं बहुकालमाराधिता विश्वे देवाः पितरश्च तथेत्यन्वमोदंत ॥ ३९ ॥ स्नुषां पूर्वं स्नुषेत्यभिहितां ॥४०॥ इति श्रीभागवतटिप्पण्यां विंशोऽध्यायः ॥९–२०॥

॥ हरिः ॐ ॥ ज्यामघवंशं निरूपयति ॥ तस्यामिति ॥ १ ॥ यतश्चेदिश्चैद्यादयो दमघोषादयः ॥ २ ॥ कुशस्य वंशाभावाद्विदर्भसुतस्य क्रथस्य वंशमाह ॥ क्रथस्येति । ततो जीमूतसंबंधः ॥ ३ ॥ ततो दशरथात् । शकुनिः पुत्र इति ज्ञेयं । शकुनेः करंभिरित्यनुवादात् ॥ ४ ॥ तदात्मजः करंभिसुतो मधोः कुरुवंशस्तत इति ज्ञातव्यं । कुरुवंश इत्यनुवादात् ॥ ५ ॥ सात्वतस्य पुत्रानाह ॥ भजमान इति । महाभोजश्चेत्येवं सप्त । मारिष हे आर्य ॥ ६ ॥ सात्वतस्य ज्येष्ठपुत्रस्य भजमानस्य पुत्रानाह । भजमानस्येति । एकस्यां पत्न्यां निम्लोचिः । आत्मज इत्यनुषंगः । अन्यस्यां पत्न्यां शताजादित्यादयस्त्रय सुताः ॥८॥७॥ सात्वत पंचमपुत्रस्य देवावृधस्य वंशमाह ॥ बभ्रुरिति । तयोर्बभ्रुदेवावृधयोर्माहात्म्यप्रतिपादकश्लोक इत्यर्थः ।श्रुणुमः। तयोर्माहात्म्यमिति शेषः॥९॥ अथ देवावृधो बभ्रोः सकाशाच्छ्रेष्ठ इत्यर्थः। ये पंचषष्ठ्यादिसंख्यावच्छिन्नाः । बहव इति यावत् । पुरुषा वंशे बभ्रोः। देवावृधादपि तत्त्वोपदेशं प्राप्तास्ते सर्वेऽप्यमृतत्वं मोक्षं प्राप्ताः । महाभोजः सात्वतस्य सप्तमपुत्रः। भोजास्तदन्वये जाताः॥१०॥११॥ सात्वतपुत्रस्य वृष्णेर्युधाजिच्च पुत्रोऽभवत् वृष्णिसुमित्रावित्यर्थः । तस्य युधाजितः शिनिरनमित्रश्चेति पुत्रौ ॥ १२ ॥ येऽन्यपूर्वोक्ताः । निम्नादिति शेषः ॥ १३ ॥ युयुधानः सात्यकपुत्रस्तस्य युयुधानस्य जयो जयस्य कूणिस्तन्नामकः । कूणेर्युगंधरोऽनमित्रस्यैवापरः पृश्निर्नामपुत्रः अनेनानामित्रस्य निम्नः शिनिः प्रश्निश्चेति त्रयः पुत्राः आसन्नियुक्तं भवति ॥ १४ ॥ ततः प्रश्नेः सकाशात् श्वफल्किश्चैत्ररथश्चेति द्वौ पुत्रौ बभूवुतुः । अक्रूरप्रमुखः प्रधानो येषां द्वादशपुत्राणामिति । अतद्गुणसंविज्ञानो बहुव्रीहिः । तथा क्रूरादन्ये वक्ष्यमाणाश्च द्वादशपुत्राश्च श्वफल्किनो गांदिन्यां तन्नामिकायां जाता इत्यर्थः ॥ १५ ॥ अक्रूरव्यतिरिक्तात् द्वादशान्दर्शयति ॥ आसंग इति । आसंगादि प्रतिबाव्हांता द्वादशपुत्राः । उपदेवश्चेति । द्वावितः पूर्वेणान्वयः ॥ १६ ॥ १७ ॥ श्वफल्कानुजस्य चित्ररथस्य वंशमाह ॥ तथेति । विपृथुधाताद्या अन्ये बहवश्चित्ररथात्मजा इत्यन्वयः । विष्णुनंदनाः पूर्वोक्ता एते सर्वे सात्वतपुत्रवृष्णिकुलनंदनाः ॥ १८ ॥ अथ सात्वतपुत्रस्यांधकस्य वंशमाह ॥ कुक्कुर इति । कुक्कुरादयश्चत्वारो अंधकस्य सुता इति ज्ञेयं ॥ तथा चोक्तं विष्णुपराणे ॥ कक्कुरो भजमानः शुचिकंबलबर्हिषास्तस्थांऽधकपुत्रा इति । वन्हिर्वन्हिनामा । तत इत्यस्योत्तरत्रापि संबंधः ॥ १९ ॥ अनुरनुनामको यस्यानोः पुत्रो दुंदुभिर्दरिद्योतः । तस्येत्यस्यावृत्तिः । तस्य दरिद्योतस्य ॥ २० ॥ पुनर्वसो-

राहुकः पुत्र आहुकीनामकन्या चेत्यपत्यद्वयं । देवश्चोग्रसेनश्चेति द्वावाहुकजाविं संबंधः ॥ २१ ॥ तानेवाह ॥ देववानिति । शांतिदेव आदिर्यासां शांतिदेवादीनांताः सप्त ॥ २२ ॥ तासां नामान्याह ॥ शांतिर्देवेति । वासुदेवस्योत्पत्तिमनुपदमेव वक्ष्यति ॥ २३ ॥ उग्रसेनस्य वंशमाह ॥ कंस इति । औग्रसेनेया उग्रसेनपुत्राः ॥ २४ ॥ वसुदेवस्यानुजानां देवभगादीनां स्त्रियो भार्या वसुदेवानुजश्चोत्तरत्र कथ्यंते ॥ २५ ॥ कुकुरस्य वंशमुक्त्वांऽधकस्य भजमानस्य वंशमाह ॥ शूर इति । भजमानसुताद्विदूरथाच्छूर आसीदिति ज्ञेयं । अयं शूरो वसुदेवपितुः शूर इति ज्ञेयं । ततः शूराच्छिनिः ॥ २६ ॥ देवबाहुः शतधनुः कृतवर्मा देवमीढश्चेति तत्सुता हृदिकसुताश्चत्वार इति ज्ञातव्यं । देवमीढस्य शूरस्येत्युत्तरत्रानुवादात् । पुराणांतरे तथोक्तेश्च । देवमीढस्य देवमीढपुत्रस्य शूरस्य सः शूरस्तस्य मारीषायां ॥ २७ ॥ शूरपुत्राणां नामान्याह ॥ वसुदेवमिति ॥ २८ ॥ वसुदेवस्य नामांतरमस्तीत्याह ॥ देवेति । आनकाश्च नेदुः ॥ २९ ॥ कृष्णावतारस्य स्थानं स्थानभूतं वसुदेवमानकदुंदुभिमिति वदंति । पृथा चेयमेव कुंती ॥ ३० ॥ एतेषां वसुदेवादीनां । पृथायाः कन्यकावस्थायाः कर्णोत्पत्तिप्रकारमाह ॥ कुंतेरिति । पृथायाः पिता शूरः स्वसख्युरपुत्रस्य कुंतेः कुंतिभोजस्य पृथामदादित्यन्वयः ॥३१॥ देवा आहूयंतेऽनयेति देवहूती देवाव्हानकारीत्यर्थः । ता विद्यां दुर्वाससः । लेभे इति शेषः। तस्या विद्यायाः शुचिर्ऋतुस्नाता मे मया प्रत्ययार्थं मंत्रपरीक्षार्थं विद्या प्रयुक्ता ॥ ३२ ॥ भो देव । त्वं क्षमस्व स्वस्थानमेहीत्यर्थः ॥ ३३ ॥ अतो याहीत्युक्तो रविः कुंतीमाह ॥ अमोघामिति । देवसंदर्शं देवसंस्पर्शनं । अमोघं । सफलमिति शेषः । मैथुनयोग्यतारुण्यादर्शनाच्छिन्नयोनिर्दुष्टा स्यादिति पृथाया मनोगतशंकापरिहारार्थमाह ॥ योनिरिति । कन्याऽहमिति चेत्तत्राह । यथा योनिर्न दुष्येत तथाऽहं कर्ता करिष्यामीति ॥ ३४ ॥ इति समाधाय समाधानं कृत्वा गर्भं समाधाय निधाय ॥ ३५ ॥ कृच्छ्रादत्यजादित्यनुषंगः । तव प्रपितामहः पांडुः ॥ ३६ ॥ वसुदेवभागिनीनां विवाहं पुत्रांश्च कथयति ॥ श्रुतदेवमित्यादिना । कारुषः करूशदेशाधिपतिर्वृद्धशर्मा नामतः । स पूर्वं किमित्यत आह ॥ ऋषिशप्त इति । प्राक् सनकादिभिः शप्तो विजयो दितेः सुतः । स तु हिरण्यकशिपुरभूत् । स एवाधुना दंतवक्त्र इति जात इति ज्ञातव्यं ॥ ३७ ॥ कैकेयः कैकेयदेशाधिपतिर्नाम्ना धृष्टकेतुः । कैकेयदेशाधिपतित्वात्तत्सुता अपि कैकेयनामानः ॥ ३८ ॥

नयत्सेनोऽवंत्यौ विंदानुविंदावजनिष्ट जनयामास । समग्रहीत् पाणिग्रहणं चकार ॥ ३९ ॥ अयं पूर्वं क इत्यत आह ॥ कथित
ति । तस्य शिशुपालस्य संभवः । दितेः सकाशादिति शेषः । द्वारपालो जयो ऋषिशापाद्धिरण्याक्षनामकः सन् विजयवद्दितेः
सुतोऽभवदित्यस्योत्पत्तिप्रकारः पूर्वं कथित इत्यर्थः । तदेव वसुदेवस्य भगिन्यास्तत्पुत्रींश्चोक्त्वा तद्भ्रातॄणां पत्नीपुत्रांश्च कथयति ॥
देवभागस्येत्यादिना । देवभागस्य सकाशाच्चित्रकेतुर्बृहद्बलौ । जाताविति शेषः ॥ ४० ॥ देवश्रवसः सकाशात् ॥ ४१ ॥ राष्ट्रपाल्यः
तन्नामिकायां सुरभूम्यां तन्नामिकायां ॥ ४२ ॥ मित्रकेश्यां तन्नामिकायां वृको वृकनामक आदधे जनयामास । अस्य सर्वत्र
संबंधः ॥ ४३ ॥ सुदामिनी सुमित्रादीन्सुषुवे । कर्णिकायां तन्नामिकायां ॥ ४४ ॥ वसुदेवस्य पत्नीः पुत्रांश्चाह ॥ पौरवी-
येकादशभिः । देवकीप्रमुखा अन्याः प्रश्रमप्रधृतिदेवाद्या बहुपत्न्य आसन् देवकी पूर्वमदितिः ॥ ४५ ॥ बलं बलरामोऽयं शेषा-
वतारः । अत्र हरेः शुक्लकेशस्तस्मिन्नस्तीति ज्ञेयं । वसुदेवः पूर्वं कश्यपः रोहिणी पूर्वं कश्यपभार्या सुरभिः कृतधीः शिक्षितबुद्धि-
रित्यर्थः ॥ ४६ ॥ सुभद्राद्याश्चेत्येते द्वादशतनया इत्यनुषंगः ॥४७॥ मदिराया मदिरानामिकाया आत्मजाः । कौसल्यां कौसल-
राजपुत्री भद्रा ॥ ४८ ॥ यदुमुख्यांश्च ॥ ४९ ॥ त्रिपृष्ट एकः पुत्रोऽभूत् ॥ ५० ॥ उपदेव्या दशसुताश्च राजानोऽभवन् ॥५१॥
देवरक्षितया तन्नामिकया नवपुत्रा अभवन् ॥ ५२ ॥ साक्षाद्धर्मः । धर्मपुत्रव्यावृत्त्यर्थं साक्षादिति । धर्मराजो वसुनामिकायां
पत्न्यामष्टवसूनि सहदेवया सहदेवायामष्टौ सुतानादधे ॥ तदुक्तं षष्ठस्कंधे षष्ठाध्याये ॥ वसुमुहूर्ता संकल्पा धर्मपत्न्यः सुतान् शृणु ।
अष्टौ वसोः पुत्रास्तेषां नामानि शृण्विति । देहलीदीपन्यायेनोभयत्रायं दृष्टांतः । अजीजनज्जनयामास ॥ ५३ ॥ उदारधीर्महाबु-
द्धिर्वसुदेवः । संकर्षणः पूर्वं क इत्यत आह ॥ अहीश्वरमिति ॥ ५४ ॥ अष्टमस्तु स्वयमेव स्वेच्छयैवासीत् । न कर्मादिना ।
ततो हरिः । किलेति श्रुत्यादिप्रसिद्धिमाह । सुभद्रा च कन्याऽऽसीत् । पितामही । अभिमन्युमातृत्वादियं सुभद्रा पूर्वं त्रिजटा
। ५५ ॥ स्वयमेवासीन्न कर्मादिनेत्येतदुपपादयति ॥ यदेत्यादिना । आत्मानं सृजते स्वयमवतारं करोति ॥ ५६ ॥ द्रष्टुः सर्व-
स्य परस्यात्मनः परमात्मनोऽवतारस्यावतारकर्मणां चात्ममायां स्वेच्छां विना हेतुर्न हि संभवति ॥ ५७ ॥ उक्तार्थं स्पष्टयति ॥
न्मायेति । यस्येश्वरस्याधीनाया मायायास्त्रिगुणात्मिकायाः प्रकृतेश्चेष्टितं व्यापारः पुंसः पुरुषस्य । उपलक्षणमेतत् । प्रपंचस्य

स्थित्युत्पत्तिसंहाराय भवंति । भगवानेव सत्त्वादिगुणैः सृष्ट्यादिकं करोतीत्यर्थः । अनुग्रहो यस्य प्रसादस्तन्निवृत्तेर्मायानिवृत्तेः । हेतुरिति शेषः । यत्प्रसादाल्लिंगशरीररूपसंसारनिवृत्तिर्भवतीत्यर्थः । यस्य प्रसादात्परमार्तिरूपात्तस्मात्संसारान्मुच्यते नापरेणेति श्रुतेः । सा च संसारनिवृत्तिरात्मलाभाय स्वरूपानंदाविर्भावाय भवति ॥ ५८ ॥ हरेर्लोकविलक्षणत्वमुपपाद्यावतारप्रयोजनमाह ॥ अक्षौहिणीनामिति द्वाभ्यां । बह्वक्षौहिणीसंख्यातसेनानां पतिभिर्नृपलांछनैः छत्रादि लांछनं येषां तैः । नृपाभासैरिति यावत् । असुरैराक्रम्यमाणाया भुवोऽभाराय भारहृतये प्रयत्नः सन् ॥ ५९ ॥ सुरेश्वरैरपि मनसाऽपि अपरिमेयान्यवितथकर्माणि दुष्टनिग्रहादीनि कर्माणि संकर्षणसहितः ॥ ६० ॥ संकल्पमात्रेण भूभारहरणसमर्थस्यापि कर्मकरणं यशोविस्तारद्वारा भक्तानुग्रहार्थमित्याह ॥ कलाविति । यशोलक्षणं पराक्रमं दुःखशोकतमांसि नुदतीति तथा ॥ ६१ ॥ सतां करणयोरमृताय मनो यशोरूपे तीर्थवरे श्रोत्रमेवांजलिपानं साधनं यस्य स पुरुषोऽसकृदुपस्पृश्य श्रवणादिलक्षणस्नानादि कृत्वा । यद्वा । सकृदप्युपस्पृश्य दुष्कर्मसंस्कारान् धुनुते नाशयति ॥ ६२ ॥ तदेवाह ॥ भोजेति द्वाभ्यां । भोजादिभिः कौरवादिभिश्च । शश्वत् श्लाघनीयेहितः पूज्यमानचरितः ॥ ६३ ॥ स्निग्धस्मितेक्षितेनोदारैर्वाक्यैर्लीलया विक्रमविलासेन सर्वांगसुंदरस्य । मूर्त्या नृलोकं मनुष्यजनं रमयामासेत्यन्वयः ॥ ६४ ॥ नृलोकं रमयामासेत्युक्तं विशदयति ॥ यस्याननमिति । यस्याननं दृशिभिर्नेत्रैः पिबंत्यो नार्यो नराश्च न तत्पुर्नतृप्ताः । निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः । निमेषस्येति षष्ठी द्वितीयार्थे । निमेषं प्रति कुपिताः । कुतः । विकासविरोधित्वात् । कथं भूतमाननं । मकरकुंडलाभ्यां चारू च तौ कर्णौ च ताभ्यां भ्राजयंतौ च तौ कपोलौ च ताभ्यां सुभगं सुंदरं । विलासेन सहितो हासो यस्य स तथा तं नित्योत्सवं यस्य स तथा तं ॥ ६५ ॥ विदितसंक्षेपा हि प्रपंचजिज्ञासवो भवंतीति हेतोः श्रीकृष्णचरितं संक्षेपतो वर्णयति ॥ जात इत्यादि द्वाभ्यां । निजरूपेण पश्चात्पुरुषाकारः सन् गतः । अत्र लोकदृष्टयैधितः सन् रिपून् पूतनादिकंसांतसर्वशत्रून्हत्वा कृतोरुदार उद्वाहितबहुभार्यस्तेषु दारेषु सुतानां शतानि । अत्र शतशब्दो बहुत्ववचनः । तथा चोद्वाहितगोपकन्यासु दशलक्षपुत्रादीन् रुक्मिण्यादिषु प्रद्युम्नादीन् षोडशसहस्रस्त्रीष्वेकैकस्यां दशदश पुत्रांश्चैकैकां कन्यां चोत्पाद्येत्यर्थः । क्रतुभिरश्वमेधादिभिः समीजे । किमर्थं जनेषु सज्जनेष्वात्मनिगमं स्वज्ञानरूपवेदोक्तयज्ञादि-

सत्कर्मानुष्ठानमार्गं प्रथयत्सज्जनान् शिक्षयितुमित्यर्थः ॥ ६६ ॥ पृथ्व्या गुरुभरं दृष्ट्वैव दर्शनमात्रेण क्षपयन् क्षपणसमर्थः कृष्णः कुरूणां कौरवाणां पांडवानां चांतः समुत्थितेन कालिना कलहेन निमित्तेन भूपवर्यान् दुष्टराजन्यान् विधूय संहृत्य विजयेऽर्जुने जयमर्जुनः सर्वशत्रून्विजिगायेत्येवोभयमुद्विघुष्य डिंडिमघोषं कारयित्वा प्रोच्य । त्वमिति शेषः । उद्धवायोपदिश्य स्वधाम परंधाम समगाज्जगामेति सर्वं मंगलं ॥ ६७ ॥ ॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ॥ ९—२१ ॥ ॥

नवलक्षणसंपन्नो नवरत्नैर्विभूषितः॥ नवभक्तिप्रदो भूयान्नवमस्कंधगो हरिः ॥ १ ॥ नवमस्कंधगोविंदो नवलक्षणसंयुतः ॥ नवरत्नांबरधरो नवमेऽभीष्टदो भवेत् ॥ २ ॥ वेंकटेशहयग्रीवनृसिंहाद्यात्मको हरिः ॥ आनंदसंततिं कुर्यात्काले काले सुशिक्षयन् ॥ ३ ॥ इति श्रीमत्पदवाक्यप्रमाणधुरीणानां श्रीमच्छल्लारीनरसिंहाचार्याणां निजाशिष्येण शेषेण विरचितायां श्रीभागवतटिप्पण्यां मंदबोधिन्यां नवमः स्कंधः समाप्तः ॥ ९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥





श्रीमदानन्दतीर्थभगवत्पादाचार्याः ।



( श्रीमन्मध्वाचार्याः )

॥ इति श्रीमद्भागवतटिप्पणी छलारी समाप्ता ॥

॥ नवमः स्कंधः ॥